(तत्त्वप्रकाशिका)

मोक्षसाधनानि विहितानि । तेषां साधनानां अस्मिन्नध्याये विचारो वर्तिष्यत इति भावः । प्रथमपादार्थं दर्शयति ॥ **वैराग्येति** ॥ भगवत्प्रसादस्तावन्मोक्षसाधनम् । स च तदपरोक्षज्ञानाद्भवति । न च तदुभयं विधातुं शक्यम् । पुरुषप्रयत्नागोचरत्वात् । अतो ज्ञानसाधनं विधेयम् । तच्च श्रवणमनननिदिध्यासनरूपा जिज्ञासैव । जिज्ञासायां च भगवद्भक्त एवाधिकारी । अन्यस्य तदसम्भवात् । भगवद्भक्तिश्च माहात्म्यश्रवणेन सम्भवत्यपि अन्यत्र वैराग्येण दृढा भवत्यतः साधनेषु वैराग्यमेवादावपेक्षितम् । तदपि न पुरुषप्रयत्नविषयोऽतस्तदर्थं गत्यागतिस्वर्गनरकगर्भवासादिस्वरूपमत्र निरूप्यते । गत्यादेः खलु दुःखस्वरूपतां श्रुत्वा भावयतोऽधिकारिणः स्वर्गादावपि रागो विच्छिद्यत इति भावः ।

अत्र भगवत्प्राप्तिसाधनवैराग्याय जीवस्य भूतावियोगसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदाद्यसूत्रे मोक्षसाधनं भगवत्प्रसादादिवैराग्यान्तं सूचितं तद्युक्तं स्यात् यदि जीवस्य भूतावियोगो न साध्येतातः स साधनीय एव । तत्साधनमेव विषयः मुमुक्षुणाऽनुष्ठेयं न वेति सन्देहः । प्राचीनोक्तिरन्वयव्यतिरेकादर्शनं च सन्देहबीजम् । पूर्वपक्षयति ॥ **भूतेति** ॥ बन्धनिवृत्त्यर्थं हि वैराग्यादिसाधनमिष्यते । बन्धो नाम भूतसम्बन्धः । तद्विमोक्ष एव बन्धनिवृत्तिरित्यर्थः । कुत इत्यत आह ॥ **भूतेति** ॥ ततश्च किमित्यत आह ॥ **तच्चेति** ॥ भूतविमोचनं मरणे भवतीत्येतत्कुत इत्यत आह ॥ **भूतानामिति** ॥ किं चात इत्यत आह ॥ **अत इति** ॥ यतो मरणमेव मोक्षः । तच्च नियतत्वान्न साधनसापेक्षं अतो न वैराग्यादिसाधनेन कृत्यम् । तथा चोक्तमयुक्तं शास्त्रं चेदं व्यर्थमिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अपेक्षितमेव मोक्षार्थं साधनं 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ तद्विधानात् । न चोक्तदोषः । भूतविमोचनस्य मोक्षत्वेऽपि पूर्वशरीरं परित्यज्य भूतसम्परिष्वक्तस्यैव गतेर्मरणे भूतवियोगस्यैवाभावात् । न च वाच्यं भूतानां शरीरे भोगान्प्रदाय चरितार्थत्वाद् व्यर्थं जीवेन सह गमनमिति । शरीरान्तरप्राप्त्यर्थत्वादिति भावः । कुत एतदित्यत आह ॥ **वेत्थेति** ॥ यथा येन क्रमेण येन प्रकारेण च पञ्चम्यामाहुतौ हुतायामद्भिः सम्परिष्वक्तो जीवो लब्धदेहः पुरुषनामवान्भवति किं तं क्रमं प्रकारं च वेत्थेति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नात् तथा श्वेतकेतोः परिहारासामर्थ्ये तत्पित्रा पृष्टस्य प्रवाहणस्यैव परिहाराच्च जीवो भूतपरिष्वक्त एव गच्छतीति ज्ञायत इति भावः । 'भूतयुक्तः परं लोकमिमं लोकं च गच्छति' इति च । अतो मरणमात्रेण मोक्षायोगादनुष्ठेयमेव साधनमिति सार्थकमेव शास्त्रमिति सिद्धम् ।

## श्री वादिराजतीर्थविरचिता गुर्वर्थदीपिका

अथब्रह्मजिज्ञासापदाभ्यामित्यत्र अथपदं ब्रह्मजिज्ञासापदं चाथब्रह्मजिज्ञासापदे ताभ्यामिति समासः । अथपदेनाधिकारिविशेषणीभूतविरक्तिभक्त्याख्यसाधनद्वयसम्पत्त्यनन्तरमित्यर्थलाभात् पादद्वयोक्तसाधनद्वयं विहितम् । ब्रह्मजिज्ञासापदेन मननध्यानरूपोपासना तृतीयपादोक्ता विहिता । उद्देश्यतया तज्जन्यं धातुप्रकृत्यर्थभूतमपरोक्षज्ञानाख्यं चतुर्थपादोक्तसाधनं च विहितमित्यर्थः । ज्ञानसाधनं विधेयमित्यत्र ज्ञानसाधनत्वेनाभिमतश्रवणादीनां परोक्षज्ञानतया ज्ञानरूपत्वेऽपि गुरूपसत्तियुक्त्यनुसन्धानचित्तैकाग्रतादिपुरुषप्रयत्नसाध्यत्वाद्विधिदर्शनादेव विधेयत्वमिति भावः । उत्पत्तिक्रममपेक्ष्यैव वैराग्यस्य प्राथमिकत्वेऽपि साक्षान्मोक्षाङ्गत्वविवक्षायां प्रसादस्यैव प्राधान्यमिति भावेनोक्तं **भगवत्प्रसादादीति** ॥ मरणानन्तरं सूक्ष्मलिङ्गदेहाकारेणापि भूतानां जीवेन सह गमनाभावेऽपि मुक्तजीववदनावृत्तचैतन्यरूपस्य तस्य पुनश्शरीराम्भप्राप्तेरेवायोगात् तदेष्टव्यमिति भावेनोक्तं **शरीरान्तरेति** ॥ येन क्रमेण चेत्यत्र स्वर्गगमने ततोऽर्वाग्गमने च यः क्रमो यश्च प्रकारस्तेनेत्यर्थः । येन क्रमेणोर्ध्वगमनं, येन प्रकारेण ततोऽर्वाग्गमनं, येन प्रकारेण पितुरुदरप्रवेशो, येन प्रकारेण मातुरुदरप्रवेशो, येन प्रकारेण च शरीरारम्भ इति भावः । यद्यप्यापः अद्भिस्सम्परि-ष्वक्ता जीवाश्शरीरान्तरं प्राप्य पुरुषवचसो लोके पुरुष इति वचो येषां ते पुरुषवचसो यथा भवन्ति तं क्रमं प्रकारं च वेत्थेत्येव श्रुतेः पदार्थः । उपरि प्रतिवचनबलात्प्रश्नार्थककिंयोगेन वेत्थ किमिति श्रुतेः पर्यवसितोऽर्थः । तथापि जातावेकवचनविवक्षया प्रवृत्तसूत्रमनुसृत्य अद्भिस्सम्परिष्वक्तो जीव इत्यादिव्याख्यानं च युक्तमिति ज्ञेयम् । पञ्चम्यामाहुतावित्यत्र 'असौ वाव लोको गौतमाग्निः' 'पर्जन्यो वाव गौतमाग्निः' 'अयं वाव लोको गौतमाग्निः' 'पिता वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः' इति पञ्चभिर्वाक्यैः स्वर्गलोकादीनां योषिदन्तानां पञ्चानां पञ्चाग्नित्वं वर्णयित्वा तत्र तत्र देवैर्जीवस्य प्रापणमाहुतित्वेन वर्णयित्वा स्वर्गादर्वाक्क्रमेणाऽऽगतस्य जीवस्य योषिदाख्यपरमाग्नौ रेतोरूपेण जीवप्रापणरूपायां पञ्चम्यामाहुतौ कृतायां सत्यामित्यर्थः ।

## श्री रघूत्तमतीर्थविरचितः तत्त्वप्रकाशिका भावबोधः

समन्वयाविरोधप्रतिपादनानन्तरं साधनविचारस्यानन्तर्यलक्षणां सङ्गतिं प्रतिपादयितुं भाष्ये अयं तृतीयाध्याय इत्युक्तमित्यभिप्रेत्य–

(भावबोधः)

'समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये ।
किं मया कार्यमित्येव स्याद् बुद्धिरधिकारिणः ॥'

इत्यनुव्याख्यानानुसारेण भाष्याभिप्रायमाह– **अथातो ब्रह्मजिज्ञासेत्यादिना** ॥ **अथब्रह्मजिज्ञासापदाभ्यामिति** ॥ अधिकारानन्तर्यार्थकाथशब्देन तद्विशेषणतया वैराग्यभक्त्यादेः ब्रह्मजिज्ञासापदेनापरोक्षज्ञानजनकश्रवणादिरूपोपासनायाश्च प्रतिपादनमिति मोक्षसाधनज्ञानस्य पदद्वयेन प्रतिपादनादिति भावः ।

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं ततो विष्णोरिति पादक्रमो भवेत् ॥

इत्यनुव्याख्यानं मनसि निधाय प्रथमपाद इति भाष्याभिप्रायमाह **भगवत्प्रसाद** इत्यादिना ॥ **भूतावियोगसमर्थनादिति** ॥ पूर्वसूत्रे येषां भूतानां वैशेष्येण विशेषव्यवहारः समर्थितः, तेषामत्र संपरिष्वक्त इति जीवावियोगसमर्थनादनन्तरसङ्गतिरिति भावः । यद्वा पूर्वाधिकरणे प्रकृतशरीरस्य 'तदन्तरा' इति तच्छब्देन परामर्शाद्वाऽनन्तरसङ्गतिर्द्रष्टव्या ॥ **मुमुक्षुणेति** ॥ अत्र जिज्ञासासूत्रोक्तवैराग्यादिकमननुष्ठेयमुतानुष्ठेयमिति चिन्ता । तदर्थं प्रसिद्धमरणस्य मोक्षत्वं युक्तमयुक्तं वेति । तदर्थं प्रसिद्धमरणे जीवस्य भूतवियोगोऽस्त्युत नास्तीति । तदर्थं भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति ॥ **नियतत्वादिति** ॥ अनेन स्वाभाविकं मरणमेव मुक्तिरिति न्यायविवरणगतस्वाभाविकपदतात्पर्यमुक्तं भवति । 'मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशात्' इति न्यायविवरणं व्याचष्टे– **आत्मा वेति** ॥ 'भूतविमोचनस्य मोक्षत्वेऽपि' इत्यादिना 'भूतवियोगस्यैवाभावात्' इत्यन्तेन शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छतीति भाष्यस्य, मरणे भूतवियोगस्यैवाभावादिति न्यायविवरणस्य च हेतुहेतुमद्भावापन्नार्थप्रतिपादकतयाऽर्थ उक्तो भवति ॥ **शरीरान्तरप्राप्त्यर्थत्वादिति** ॥ अनेन सूत्रे तच्छब्दः पूर्वाधिकरणप्राप्तशरीरपरामर्शकः । सप्तमी च तादर्थ्य इत्युक्तं भवति ॥ **अद्भिः संपरिष्वक्त इति** ॥ अनेनापामेव पुरुषनामवत्वाभावात् श्रुतावप्शब्दो तद्युक्तजीवोपलक्षक इत्युक्तं भवति । स्पष्टं चात्र न्यायविवरणोदाहृतप्रमाणमाह– **भूतयुक्त इति** ॥

## श्रीराघवेन्द्रतीर्थविरचितः भावदीपः

अत्यादरेण यत्पादौ त्यक्तेतरसुखस्पृहाः ।
प्राज्ञा उपासते नित्यं तमुपासे श्रियः पतिम् ॥ १ ॥

वैराग्यवत्फलत्वभ्रान्तिं निराह ॥ **प्रतिपाद्यमिति** ॥ नन्वत्र साधनविचारे का पूर्वसङ्गतिः । मोक्षफलापेक्षित्वादधिकारिणो मोक्षफलेऽस्मिन् शास्त्रे तत्साधनविचारस्यादावेव कार्यत्वेनात्र करणे हेत्वभावाच्चेत्यतः 'समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये । किं मया कार्यमित्येव स्याद् बुद्धिरधिकारिणः' इत्याद्युपासनापादीयाणुभाष्यदिशा तात्पर्यमाह ॥ **अथात इति** ॥ शास्त्रार्थे साधनफलब्रह्मरूपैतच्छास्त्रार्थ इत्यर्थः ॥ **अध्यायशेषेणेति** ॥ अध्यायश्च शेषश्च सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्युक्तेः । यद्वा अध्यायसहितशेषेणेत्यर्थः । शास्त्रयोनित्वाद्यधिकरणत्रयेणानन्दमय इत्याद्यध्यायेन चेति यावत् । यद्वा तत्तु समन्वयावित्यारभ्याध्याय इति पक्षे आनन्दमय इत्याद्यध्यायशेषेणेत्यर्थः ॥ **इत्याशङ्कायामिति** ॥ तथा चात्रैवाकाङ्क्षोदयेन प्रथमं वस्तुस्वरूपस्यैवा-निर्धारणादिति भावः । अथब्रह्मजिज्ञासापदाभ्यां उक्तानीति शेषः । अध्याहृतकर्तव्यपदेन विहितानीत्यर्थः । जिज्ञासापदोक्तश्रवणाद्यपेक्षया एतदुक्तिः । यद्वा अथपदोक्तवैराग्यभक्त्यादि-रूपाधिकारानन्तरं जिज्ञासा कार्येत्युक्ते विशिष्टकर्मविधिस्थल इव विशेषणेऽपि विधिसंस्पर्शा-द्विहितानीत्युक्तम् । वैराग्यादेर्विहितत्वं च स्वसाधनद्वारेत्यग्रे व्यक्तम् । एतेन भाष्ये प्रथमं प्रतिपाद्य प्रदर्शनं व्यर्थमिति प्रत्युक्तम् । वृत्तवर्तिष्यमाण सङ्गत्यर्थत्वादिति । कतिचिन्नयार्थत्वभ्रान्तिं निराह ॥ **प्रथमपादार्थमिति** ॥

ननु कथं वैराग्यस्य प्राथम्यं येन गत्यादिनिरूपणमादौ सङ्गतं स्यात् । कथं च वैराग्यस्य मोक्षसाधनत्वं कथं च गत्याद्युक्तेर्वैराग्यार्थत्वं इत्यतो 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं ततो विष्णोरिति पादक्रमो भवेत्' इत्युपासनापादीयानुभाष्यदिशाऽभिप्रायं वक्तुमाह ॥ **भगवत्प्रसाद इति** ॥ यतो नारायणप्रसादमृते न मोक्षः तदभिध्यानादेव तु तल्लिङ्गादित्याद्युक्तेर्यस्य प्रसादादित्यादेश्चेति भावः ॥ **स चेति** ॥ प्रियो हि ज्ञानिनोऽत्यर्थं ज्ञानसंपत्त्या प्रसादस्तूत्तमो मतः न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यादित्यादेः । तथा च चतुर्थपादे तद्विचार इति भावः । तर्हि तेनैवालमित्यत आह ॥ **न च तदिति** ॥ **तच्चेति** ॥ 'आत्मा वा अरे

(भावदीपः)

द्रष्टव्यः श्रोतव्यो मन्तव्यः' इत्यादेः प्रकाशश्च कर्मण्यभ्यासादिति वक्ष्यमाणत्वाच्च । तथा च तस्य तृतीयपादे चिन्तेति भावः ॥ **भगवद्भक्त एवेति** ॥ कुत इत्यतोऽध्ययनमात्रवत इत्यत्र भक्तेर्जिज्ञासाहेतुत्वस्यास्फुटत्वात्स्वयं युक्तिमाह ॥ **अन्यस्येति** ॥ भक्तिहीनस्येतरप्रहाणेन तदेकप्रावण्यरूपजिज्ञासानुपपत्तेरित्यर्थः । तथा च भक्तेर्द्वितीये चिन्तेति भावः । यद्यपि प्रसाद इव भक्तिर्मोक्षेऽपि हेतुः । अम्बुवद्ग्रहणात्तु न तथात्वम् । परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध इति च वक्ष्यमाणत्वात् । तथाऽनुबन्धादिभ्य इति वक्ष्यमाणदिशा अपरोक्षज्ञानेऽपि हेतुरेव । तथा चान्त्यपादे वा तृतीयपादे वा भक्तिविचारः प्रसक्तः । तथापि मोक्षे ज्ञाने जिज्ञासापर-पर्यायोपासनायां च हेतुरिति तत्त्रितयचिन्तातः पूर्वं द्वितीय एव तच्चिन्ता युक्ता । अन्यथा हि जिज्ञासायामहेतुरिति शङ्का स्यादिति भावः ॥ **वैराग्येणेति** ॥ **अन्यत्र** स्वर्गादौ । 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इत्यादेः । विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः । ऊर्ध्वरेतस्सु च शब्दे हीत्यादेश्चेति भावः ॥ **तदपि न पुरुषेति** ॥ विषयसौन्दर्यासौन्दर्यज्ञानाधीनत्वाद्रागविराग-योरिति भावः ॥ **शास्त्रादिसङ्गतिरिति** ॥ एतत्सूत्राभावे वैराग्यादिकृत्स्नसाधनानामप्यननुष्ठानप्राप्त्या तदनुष्ठानसमर्थनद्वारा एतत्साधनाध्यायस्य वैराग्यादिप्रतिपादकैतच्छास्त्रस्य वैराग्यपरैतत्पादस्य चारम्भे प्रयोजकत्वादस्य नयस्य जिज्ञासासूत्रस्य शास्त्रेणेव शास्त्राध्यायपादैरौपोद्घातिकी सङ्गति-रित्यर्थः । यद्वा साधनाध्यायोपयुक्तकृत्स्नसाधनावश्यकत्वसाधकत्वात् तत्परशास्त्राध्यायपादान्तर्भाव-सङ्गतिरित्यर्थः । एवमग्रेऽपि कृतात्यय इति सूत्रपर्यन्तं शास्त्रादिसङ्गतिरित्यस्य द्वेधार्थो द्रष्टव्यः । भगवदिति शास्त्रे साधनेत्यध्याये वैराग्यायेति पादे सङ्गत्युपपादनम् । एवमग्रेऽपि ॥ **प्राप्ति-साधनेति** ॥ परम्परयेति भावः । एवमग्रेऽपि बोध्यम् । वैराग्याय वैराग्याद्यर्थमित्यर्थः । प्रसादादि-वैराग्यान्तमित्याद्युत्तरवाक्यात् । पूर्वेण सङ्गतत्वं चिन्ताफलं च व्यनक्ति ॥ **यदाद्येति** ॥ एवमग्रेऽपि । किं साधनैरिति भाष्यानुरोधादाह ॥ **भगवत्प्रसादादीति** ॥ प्रसादापरोक्षज्ञानजिज्ञासा-भक्तिवैराग्यान्तमित्यर्थः ।

नन्वेवं वैराग्यादिसर्वसाधनविचारारम्भप्रयोजकतया साधनाध्यायान्तर्भावेऽपि जिज्ञासासूत्रस्य नामपादानन्तर्भाववदस्य नयस्य वैराग्यपादानन्तर्भावः स्यादिति चेन्न । अध्यायाद्यारम्भप्रयो जकत्वेऽपि एकदेशवैराग्यप्रयोजकस्य भूतादियोगेन स्वर्गादिगतिप्रतिपादनपरत्वस्यापि सत्त्वेन स्मृतिनयवत्पादान्तर्भावसम्भवात् । अतः वैराग्यान्तमित्युक्तिः ॥ **प्राचीनेति** ॥ जिज्ञासासूत्रे

(भावदीपः)

अथब्रह्मजिज्ञासापदाभ्यामुक्तिरित्यर्थः ॥ **किं चात इति** ॥ अतश्च किमित्यर्थः । ननु मृत्यर्थमपि साधनमनुष्ठेयमेवेत्यतः स्वाभाविकं मरणमेव मुक्तिरित्यन्यत्रोक्तस्वाभाविकपदभावमाह ॥ **नियतत्वादिति** ॥ **अत इति** ॥ स्वाभाविकमृतेरेव मुक्तित्वादित्यर्थः । पादान्तर्भावद्योतनायोक्तम् ॥ **वैराग्येति** ॥ **उक्तमिति** ॥ जिज्ञासासूत्रोक्तमित्यर्थः ॥ **शास्त्रं चेदमिति** ॥ मोक्षार्थं प्रवृत्तमित्यर्थः । मुक्तेरनायासलभ्यत्वादिति भावः । नन्वेवमेतत्सूत्रस्याभावे शास्त्रारम्भासिद्ध्या जिज्ञासासूत्रस्येवास्यापि शास्त्रारम्भप्रयोजकत्वेन शास्त्रादावेव निवेशः स्यादिति चेन्न । साधनाक्षेपसमाधिद्वारैव शास्त्राक्षेपसमाधिप्रयोजकत्वादस्य जिज्ञासा सूत्रस्येव साक्षाच्छास्त्रारम्भाप्रयोजकत्वात् । अत एवास्य साधनाध्यायादौ निवेश इति ।

मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशादित्यन्यत्रोक्त्यनुरोधेन परिष्कारपूर्वं उक्तशङ्कानिवर्तकतया सूत्रभाष्ये व्याचष्टे ॥ **अपेक्षितमेवेति** ॥ **उक्तेति** ॥ यतो मरणमेवेत्यादिनोक्तेत्यर्थः । मरणे भूतवियोगस्यैवाभावादित्यन्यत्रोक्तं संयोजयति ॥ **मरण इति** ॥ तदन्तरप्रतिपत्तावित्यंशस्योपयोगं व्यनक्ति ॥ **न च वाच्यमिति** ॥ **भूतानामिति** ॥ एतेन भाष्ये भूतैस्संपरिष्वक्त इति विग्रहः सूत्रे च भूतैरिति चान्वेति । तेषां पूर्वत्र प्रकृतत्वात् । अन्यथा एकस्यानारम्भकत्वेन शरीरान्तरप्रतिपत्तावित्यस्यायोगादिति सूचितम् । एतद्भूतैः सह गमनम् । यथेत्यस्यार्थद्वयमाह ॥ **येन क्रमेणेति** ॥ व्यक्तमेतद् बृहदारण्यकेऽष्टमेऽध्याये च्छान्दोग्ये च पञ्चमे । श्रौतापूशब्दार्थमाह ॥ **अद्भिरिति** ॥ ननु भाष्योक्तश्रुतौ स्वर्गादिलोकाद्योषिद्रूपपञ्चमाग्निं प्रत्यागमन एव भूतपरिष्वङ्गो जीवस्य गम्यते न तु इतः स्वर्गादिलोकं प्रति गतौ । अत्र हि असौ वाव लोको गोतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीत्यादिना द्युपर्जन्यपृथिवीपुरुषयोषासु पञ्चसु आहुतिस्थानत्वेनाग्निशब्दितासु स्वकृतभोगप्रदित्सयोत्क्रामितेष्टादिकृत्पुरुषपरिष्वङ्गिन्य आपः क्रमेण श्रद्धासोमवर्षान्नरेतः सम्पर्कात्तच्छब्दोदितस्याबुपलक्षितजीवस्य होमशब्दितस्थापनं श्रूयते । तथा च कथं भूतपरिष्वक्त एव गच्छतीत्यर्थे साक्षिणीयं श्रुतिरित्यतो न्यायविवरणोक्तस्पष्टवचनमाह ॥ **भूतयुक्त इति** ॥ भूतानां विनिवृत्तिस्त्विति स्मृतिस्तु भागविषयेत्यग्रे व्यक्तमिति भावः ॥ **अत इति** ॥ जीवस्य भूतवियोगाभावादित्यर्थः ।

## श्रीसत्यनाथतीर्थविरचित अभिनवचन्द्रिका

वैराग्यज्ञानसिध्यर्थं रामं दिग्विजये रतम् ।
नमामि परया भक्त्या पूर्णबोधेष्टदैवतम् ॥ १ ॥

नौमि सत्यनिधिं यस्माल्लेभिरे बहवः श्रियम् ।
कोपाभावात्कोऽपि शापं न लेभे तं दयानिधिम् ॥ २ ॥

**एतदध्यायप्रतिपाद्यमिति ॥** 'ब्रह्मस्वरूपनिरूपणेऽनवशेषात्किमध्यायशेषेणे त्यत' इति वर्तते । ततश्चैवं योजना पूर्वाऽध्यायाभ्यां ब्रह्मस्वरूपस्य निरूपितत्वेन ब्रह्मस्वरूपनिरूपणेऽनवशेषात् अध्यायसंज्ञकेन किमनेन शास्त्र शेषेणेत्यत एतदध्यायप्रतिपाद्यं तावद्दर्शयतीति । साधनविचारस्यापि ब्रह्मविचाराऽनुबन्धित्वेन ब्रह्मविचारत्वात् तस्य चाऽवशिष्टत्वात् ब्रह्मविचारस्य नानवशेष इति भावः ॥ **प्रथमपादार्थमिति ॥** 'तर्ह्यध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यत' इति वर्तते 'साधनेऽप्यवान्तरभेदेन पादभेद उपपन्न इति भावेन' इति ग्राह्यम् । तस्य प्रथमपादार्थं दर्शयतीत्यनेन सम्बन्धः ॥ **भगवद्भक्तिश्चेति ॥** यद्यपि माहात्म्यश्रवणेनैव भक्तिर्भवतीति माहात्म्यमेव प्रथमतो वक्तव्यम्, तथापि माहात्म्यश्रवणेन भक्तिमात्रं भवति, वैराग्यसहितमाहात्म्यश्रवणेन तु सुदृढनिरूढैव भक्तिरुत्पद्यते । सैव च मोक्षसाधनमिति निरूढभक्त्युत्पादनार्थं वैराग्यमेवाऽऽदावपेक्षितमित्यर्थः । एतेन माहात्म्यश्रवणं भक्त्युत्पादकत्वात् प्रधानं, वैराग्यं तु उत्पन्नभक्तेर्दार्ढ्यापादकत्वादप्रधानमिति न तस्य प्राथम्यं युक्तमिति परास्तम् । माहात्म्यश्रवणवत् वैराग्यस्यापि भक्तिहेतुत्वाङ्गीकारात् । अयं भावः माहात्म्यश्रवणं भवत्येव भक्तिसाधनं, वैराग्याभावेऽपि भक्तिं जनयत्येव, किं नाम अदृढां भक्तिं जनयति, न तु वैराग्यलक्षणसहकारिसंपत्तिमपेक्षते । वैराग्यमापद्य माहात्म्यश्रवणे तु सुदृढां मोक्षपर्यवसायिनीं भक्तिं जनयतीति आदावेव वैराग्यमापादनीयम् । तद्यथा लोके दानशीलो महाराजो याचकेभ्यः प्रेरकव्यापारमनपेक्ष्यैवाऽर्थं ददाति तत्तत्स्वरूपाभिज्ञप्रेरितस्तु विशिष्टमर्थं ददाति । अत एव याचकाः प्रेरकसहभावदशायामेव राजदर्शनं कामयन्ते, न तु तदभावदशायामिति । प्राचीनोक्तिरिति ॥ प्रथमसूत्रे साधनानां कर्तव्यत्वोक्तिः । तथा वैराग्यादिसाधनसद्भावेऽपि मरणरूपमोक्षादर्शनं तदभावेऽपि मरणदर्शनं च संदेहबीजमित्यर्थः । एतेन मोक्षदर्शनायोग्यत्वेन तत्कार्यकारणभावग्रहे अन्वयव्यतिरेकयोरनुपयोगात्

**(अभिनवचन्द्रिका)**

तदभावविधानमयुक्तमिति परास्तम् । इह मरणमेव मोक्ष इति मन्यमानस्य सन्देहाङ्गीकारादिति भावः ॥ **इत्यर्थ इति** ॥ अभिप्रेतार्थ इत्यर्थः ॥ **मरणे भवतीति** ॥ अन्तर्भवति तदात्मकमिति यावत् । एतेन भाष्ये 'मरणे भवति' इति मरणभूतवियोगयोः भेदमुक्त्वा 'भूतानां विनिवृत्तिः' इति तयोरभेदे प्रमाणोदाहरणमयुक्तमिति परास्तम् । 'मरणे भवति' इति भाष्येण तयोरैक्यस्यैवाभिहितत्वात् । मरणे भूतवियोगस्यैवाऽभावादिति ॥ यावद्भूतवियोगस्य मरणत्वेऽपि यत्किञ्चिद्भूत-वियोगरूपमरणे यावद्भूत वियोगाभावादित्यर्थः । ननु सूत्रे प्रश्ननिरूपणाभ्यामित्ययुक्तं प्रश्नस्याऽसाधकत्वादित्यत आह– **क्रमं प्रकारं चेति** ॥ नाऽत्र प्रश्नो भूतपरिष्वङ्गविषयः किंनाम होमे क्रमप्रकारविषयः । ततश्च प्रश्नवाक्यस्य क्रमाद्यंशे प्रामाण्याभावेऽपि भूतपरिष्वङ्गांशे प्रामाण्यमुपपद्यत एवेति भावः ॥ **परिहाराच्चेति** ॥ परिहारवाक्यादित्यर्थः ।

पूर्वपक्षस्तु नाऽनुष्ठेयमेव साधनम् । फलार्थं हि साधनमनुष्ठेयम् । फलं च बन्धनिवृत्तिः न मरणादतिरिच्यते । 'भूतबन्धो हि बन्धः स्यान्मुक्तिस्तेभ्यो विमोचनम् । भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्' इति वचनात् । न च मरणार्थमवसाधनमनुष्ठेयम् । वैराग्याद्यननुष्ठानेऽपि मरणदर्शनात् । ततश्च शास्त्रमपीदं व्यर्थमिति ।

सिद्धान्तस्तु अनुष्ठेयमेव वैराग्यादि । बन्धनिवृत्तिरूपफलसद्भावात् । न च मरणमेव बन्धनिवृत्तिः । मरणे भूतसंपरिष्वक्तस्यैव जीवस्य गमनाङ्गीकारात् । न च तत्र प्रमाणाभावः – 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रवाहण प्रश्नवाक्ये 'इति तु पञ्चम्याम्' इति तस्यैव परिहारवाक्ये च मृतस्य भूतपरिष्वङ्गाभिधानात् । 'भूतानां विनिवृत्तिस्तु' इति वचनं तु भूतभागविनिवृत्त्यभिप्रायमिति न तद्विरोधः । अतो मरणमात्रेण मोक्षाऽयोगात् अनुष्ठेयमेव साधनमिति सार्थकमेव शास्त्रमिति सिद्धम् ।

## ताम्रपर्णी श्रीनिवासाचार्यविरचिता वाक्यार्थमुक्तावली

**भूतवियोग इति** ॥ पूर्वाधिकरणे प्रकृतभूतसम्परिष्वक्त इति परिष्वङ्गप्रतियोगित्वं परामृश्य तदवियोगसमर्थनादनन्तरसङ्गतिरिति भावः । ननु भगवत्प्रसादादिवैराग्यान्तसाधनस्यानुष्ठेयत्वसमर्थने वैराग्यपादान्तर्भाव इवास्याधिकरणस्य भक्तिपादान्तर्भावःप्राप्त इति चेन्न । साधनजातस्य

(वाक्यार्थमुक्तावली)

सार्थक्योपपादनेऽपि गतिप्रकारनिरूपणेन विरागोत्पादनाद्विशिष्य पादसङ्गत्युपपत्तेः । अनुष्ठेयं न वेति । तत्साधनं प्रयत्नेन सम्पाद्यं न वेत्यर्थः । अत्र वैराग्यादिसाधनमनुष्ठेयमुताननुष्ठेयमिति चिन्ता । तदर्थं प्रसिद्धमरणस्य मोक्षत्वं युक्तमयुक्तं वेति । तदर्थं गत्यर्थं प्रसिद्धमरणे जीवस्य भूतवियोगोऽस्त्युत नास्तीति ॥ **प्राचीनोक्तिरिति** ॥ जिज्ञासाधिकरणे साधनानामनुष्ठेयत्वोक्तिरित्यर्थः । तच्च मरणे भवतीत्यस्य तद्भूतविमोचनं मरणे मरणकाले वैराग्यादिसाधनमन्तरा मरणावस्थासामग्रीस्वभावत एव भवतीत्यर्थः । भूतानां विनिवृत्तिस्तु मरणमित्यत्र मरणपदेन मरणावस्थोच्यते । अतो न विरोधः । अनेनैव भाष्येण स्वाभाविकेति पूर्वपक्षन्यायोऽपि सूचित इति भावेनोक्तं तच्च नियतत्वान्न साधनसापेक्षमिति ॥ **शास्त्रं चेदमिति** ॥ ज्ञेयप्रतिपादनपरमध्यायद्वयात्मकं ज्ञानसाधनपरमेकाध्यायात्मकं कर्मक्षयोत्क्रान्त्यादिप्रतिपादकमेकाध्यायात्मकमित्यर्थः । सूत्रस्य बाधकोद्धारकत्वात्सिद्धान्तफलं तत्साधकं गुणाधिक्यस्येति न्यायं चाह– **तद्विधानादिति** ॥ मुक्तिसाधनत्वेन ज्ञानभक्त्यादिगुणाधिक्यस्योपदेशादित्यर्थः ॥ **अपेक्षितमेवेति** ॥ सूत्रे जीवादित्यर्थादन्वेति । तदन्तरेत्युक्तिमहिम्ना पूर्वशरीरं परित्यज्य गच्छन्निति लभ्यते । मांसादिभौममित्यादिप्रस्तुतत्वाद्भूतैरित्यन्वेति । पूर्वसूत्रादवधारणार्थकतुशब्दानुवृत्त्या सम्परिष्वक्त एवेति सिद्ध्यति । तथा च जीवः पूर्वशरीरं हित्वा गच्छन्सम्परिष्वक्त एव रंहति गच्छतीति सूत्रखण्डार्थमाह ॥ **न चोक्तेत्यादिना** ॥ तदन्तरेत्यत्र तच्छब्देन प्रकृतमूर्तिपरामर्श इति भावेन व्यावृत्तिपूर्वं व्याचष्टे ॥ **न च वाच्यमिति** ॥ पञ्चम्यामाहुतौ हुतायामिति । योषाग्नाविति ग्राह्यम् । आप इत्यस्यार्थोऽद्भिरिति । आगतौ भूतबन्धश्रवणात् गतौ च न लभ्यते । अतः स्पष्टं च प्रमाणमाह । **भूतयुक्त इति** ॥

## पाण्डुरङ्गि श्रीनिवासाचार्यविरचिता तत्त्वसुबोधिनी

समन्वयाविरोधप्रतिपादनानन्तरं साधनविचारस्यानन्तर्यलक्षणां सङ्गतिं प्रतिपादयितुं भाष्येऽयं तृतीयाध्याय इत्युक्तमित्यभिप्रेत्य तदभिप्रायमाह ॥ **अथातो ब्रह्मजिज्ञासेत्यादिना** ॥ तर्ह्यध्यायशेषवैय्यर्थ्यमित्यत आह ॥ **तदिति** ॥ ब्रह्मस्वरूपमित्यर्थः । द्वितीयप्रयोजनमाह ॥ **तत्रेति** ॥ ब्रह्मस्वरूपविषय इत्यर्थः ॥ **अथब्रह्मजिज्ञासापदाभ्यामिति** ॥ अधिकारानन्तर्यवाचकाथशब्देन तद्विशेषणतया वैराग्यभक्त्यादेः ब्रह्मजिज्ञासापदेनापरोक्षज्ञानजनकश्रवणादिरूपोपासनायाश्च प्रतिपादनादिति मोक्षसाधनजातस्य पदद्वयेन प्रतिपादनमिति भावः । नन्वस्याध्यायस्य

(तत्त्वसुबोधिनी)

साधनमात्रविचारात्मकत्वात् साक्षान्मोक्षसाधनीभूतापरोक्षज्ञानप्रसादावेव प्रथमतो निरूपणीयौ । न वैराग्यं, न वा तदर्थं गत्यादिकम् । न च तयोः पुरुषप्रयत्नागोचरत्वादविधानमिति वाच्यम् । एवं हि तत्साधनश्रवणमननरूपजिज्ञासाविधानस्यैवोचितत्वात् । न च तत्र भक्तस्यैवाधिकारित्वाद्यादृश-तादृशभक्तेश्चाधिकारानुपयोगित्वात् तद्दार्ढ्यमपेक्षितं, तस्य च वैराग्यं विनाऽयोगात् तन्निरूपणमिति वाच्यम् । तथात्वे तन्निरूपणस्योचितत्वात् गत्यादिनिरूपणस्यासङ्गतत्वादित्यत आह ॥ **भगवत्प्रसाद इति** ॥ भावयतः गत्यादेः दुःखरूपत्वं ध्यायतः ।

**भूतवियोगसमर्थनादिति** ॥ पूर्वसूत्रेण येषां भूतानां वैशेष्येण विशेषव्यवहारः समर्थितः तेषामत्र सम्परिष्वक्त इति जीवावियोगसमर्थनादनन्तरसङ्गतिरिति भावः । यद्वा पूर्वाधिकरणे प्रकृत-शरीरस्य तदन्तरेति तच्छब्देन परामर्शादनन्तरसङ्गतिर्द्रष्टव्या ॥ **प्राचीनोक्तिरिति** ॥ वैराग्यादि-साधनानां मोक्षसाधनत्वोक्तिः । सति वैराग्यादौ मोक्षः, तदभावेऽभाव इत्यन्वयव्यतिरेकादर्शनादित्यर्थः ॥ **उक्तमयुक्तमिति** ॥ वैराग्यादेर्मोक्षसाधनत्वं यदुक्तं तदयुक्तमित्यर्थः ॥ **शरीरान्तरेति** ॥ अनेन सूत्रे तच्छब्दः पूर्वाधिकरणे प्राप्तशरीरपरामर्शकः सप्तमी च तादर्थ्ये इत्युक्तं भवति । यथेत्यस्य व्याख्यानद्वयं क्रमेण प्रकारेण चेति ॥ **अद्भिस्सम्परिष्वक्त इति** ॥ अनेनापामेव पुरुषनामत्वाभावात् श्रुतावप्शाब्दः तद्युक्तजीवोपलक्षक इत्युक्तं भवति । स्पष्टं चात्र प्रमाणमाह ॥ **भूतयुक्त इति** ॥

## श्रीनिवासतीर्थविरचितम् वाक्यार्थविवरणम्

**भक्त एवेति** ॥ तथा च भक्त्यर्थं वैराग्यमपेक्षितमिति भावः । ननु भगवद्भक्तिस्तन्माहात्म्य-श्रवणेनैव भविष्यति किं वैराग्येणेत्यत आह ॥ **दृढेति** ॥ यथोक्तम् , 'वैराग्यतो भक्तिदार्ढ्यम्' इति ॥ **भावयतः** विचारं पुनः पुनः कुर्वतः ॥ **अवियोगः** सम्बन्धः । यदि जीवस्य मरणे भूतसम्बन्धो न स्यात्तदा भूतसम्बन्धमोचनस्यैव मुक्तित्वेन तस्य च मरणे स्वत एव नियमेन जायमानतया किं तदर्थं वैराग्यादिसाधनेनेति ॥ **तत्साधनमेव** वैराग्यादिसाधनमेव ॥ **प्राचीनोक्तिः** अथातो ब्रह्म-जिज्ञासेत्युक्तिः ॥ **अन्वयेति** ॥ वैराग्याद्यनुष्ठाने मोक्षः, तदभावेऽभाव इत्यन्वयव्यतिरेकयोर-दर्शनमित्यर्थः ॥ **तच्चेति** ॥ एतदपाकुर्वन्नेवोत्तरवाक्यमवतारयति ॥ **भूतविमोचनमिति** ॥ **नियतत्वादिति** ॥ 'अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः' । 'जातस्य हि ध्रुवो मृत्युः'

(वाक्यार्थविवरणम्)

इत्यादिभिर्मरणस्य नियतत्वावगमादित्यर्थः ॥ **उक्तम्** ॥ अथात इति सूत्रोक्तं वैराग्यादेरनुष्ठेयत्वम् ॥ **शास्त्रम्** ॥ वैराग्यादेरनुष्ठेयत्वप्रतिपादकम् ।

## शर्करा श्रीनिवासाचार्यविरचिता वाक्यार्थमञ्जरी

वैराग्यभक्तिश्रवणमननध्यानयोगतः ।
सद्भिर्ज्ञेयं भजे मध्ववल्लभं कमलापतिम् ॥

**शास्त्रार्थ इति** ॥ ब्रह्मणो मोक्षार्थज्ञेयत्वस्यैव सर्वशास्त्रार्थत्वादिति भावः ॥ **तदिति** ॥ द्वितीयसूत्रोक्तं जगत्कारणत्वेन गुणपूर्णत्वमित्यर्थः ॥ **अथ ब्रह्मजिज्ञासेति** ॥ अधिकारानन्तर्यार्थकाथशब्देनाधिकारिविशेषणतया वैराग्यभक्त्यादेः ब्रह्मजिज्ञासापदेनापरोक्षज्ञानजनकश्रवणादिरूपोपासनायाश्च प्रतिपादनादिति भावः । **वर्तिष्यते** प्रवर्तयिष्यते । ननु मोक्षाय वैराग्यमेव कुतः यदर्थं गत्यादिनिरूपणमित्यत आह ॥ **भगवत्प्रसाद इत्यादिना** ॥ अनेन प्रथमसाधनत्वाद्वैराग्यं प्रथमपादे निरूप्यते । तत्साध्यभक्तिर्द्वितीये, तत्साध्योपासना तृतीये, तत्साध्यज्ञानं चतुर्थ इति पादक्रमः सूचित इति ध्येयम् । **भावयतः** पुनः पुनर्विचारयतः ॥ **न साध्यतेति** ॥ अन्यथा भूतवियोगस्यैव मोक्षत्वेन तस्य मरणे सति स्वत एव लब्धत्वेन साधनवैय्यर्थ्यापत्तेरिति भावः ॥ **प्राचीनोक्तिरिति** ॥ अथब्रह्मजिज्ञासापदाभ्यां साधनस्यानुष्ठेयत्वोक्तिरित्यर्थः ॥ **अन्वयव्यतिरेकेति** ॥ सति प्रसादादिसाधने मोक्षः अन्यथा नेत्यदर्शनमित्यर्थः । उक्तं अथब्रह्मजिज्ञासापदाभ्यामिदं मोक्षफलकम् ।

जीवः मृतिकाले संपरिष्वक्तः भूतैः सम्बद्ध एव रंहति गच्छति किमर्थं तदन्तरप्रतिपत्तौ तदन्तरस्य देहान्तरस्य प्रतिपत्तौ प्राप्त्यर्थं कुतः वेत्थ यथेति प्रश्नवाक्यात्, इति त्विति परिहारवाक्याच्च तथावगमादित्यर्थः । प्रवाहणस्य राज्ञः तत्पित्रा उद्दालकेन प्रवाहणेन पृष्टः श्वेतकेतुः स्वस्य परिहारासामर्थ्ये स्वपितरमागत्य तस्मै तन्यवेदयत्, पिता च स्वेनापि तदज्ञानात् पुत्रेण सह प्रवाहणं प्राप्य श्वेतकेतुं प्रति कृतप्रश्नपरिहारं त्वमेव कुर्विति तं प्रत्युवाच । ततः प्रवाहणः स्वकृतप्रश्नोत्तरं स्वयमेव तावुभौ प्रति जगादेति छन्दोगे पञ्चमे प्रसिद्धम् । संपरिष्वक्त एव गच्छतीति गमनकाले सम्बन्धाभावे प्रश्नपरिहारोक्तगमनकालीनतत्सम्बन्धानुपपत्तेरिति भावः । अत्रैव स्पष्टं प्रमाणमाह ॥ **भूतयुक्त इति** ॥

॥ इति तदन्तराधिकरणम् ॥ १ ॥

## २. त्र्यात्मकत्वाधिकरणम्

**॥ ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ २ ॥**

अप्शब्दस्तु त्र्यात्मकत्वाद्युज्यते । भूयस्त्वाच्चापाम् । 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा' इति च भागवते ।

### तत्त्वप्रदीपिका

अपां भूयस्त्वमनाप्यशरीरेष्वपि प्रधानादन्यत्रेत्युक्तम् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं जीवस्य समस्तभूतसम्परिष्वक्तस्य गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदुक्तं न मरणमात्रेण मोक्ष इति समस्तभूतानां जीवेन सह गतावसाधितायां तदयुक्तं स्यादतः सा समर्थनीयैव । प्रकृतभूतान्येव विषयः । किं सर्वाणि जीवं परिष्वज्य गच्छन्ति उत नेति सन्देहः । भूतसम्परिष्वक्तो रंहतीति साधारणवचनं सन्देहवीजम् । आप एव गच्छन्ति न सर्वाणीति पूर्वः पक्षः । आपः पुरुषवचसो भवन्तीति प्रश्नव्याख्यानयोरपामेव गतिश्रवणात् । अन्यथा भूतानीति सामान्यप्रयोगः स्यात् न त्वाप इति विशेषप्रयोगः । अतो मृतस्य समस्तभूतपरिष्वङ्गाभावादेकभूतस्य च शरीरानारम्भकत्वान्मरण एव मोक्षसिद्धेर्व्यर्थं वैराग्यादीति ।

एवं प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **त्र्यात्मकत्वादिति** ॥ सर्वभूतपरिष्वक्त एव जीवो गच्छति नाद्भिरेव । न चैवं विशेषनामविरोधः । अपां क्षितिसलिलानलात्मकत्वेन तद्ग्रहणेनान्यभूतानामपि प्राप्तेः । 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । मिश्राणि हि भूतानि' इति श्रुतेरिति भावः । ननु यद्यापो भूतत्रयात्मिकाः कथं तर्हि तत्राप्शब्द इत्यत आह ॥ **भूयस्त्वादिति** ॥ अप्शब्दो युज्यत इति सम्बन्धः । मिश्रत्वेऽपि तत्तद्भूतस्याधिक्येन तत्तद्व्यवहार इति भावः । नन्वपामिव भूतान्तरस्यापि सर्वभूतात्मकत्वादपां ग्रहणे को विशेषहेतुरित्यतो वाऽऽह ॥ **भूयस्त्वादिति** ॥ सर्वदेहेषु सम्भूय भूतेजसोरप्यपां भूयस्त्वात्तद्ग्रहणं युज्यत इति भावः । अपां भूयस्त्वमेव कुत इत्यत आह ॥ **तापेति** ॥ यथा च सम्भूय शरीरेष्वपां भूयस्त्वं तथोक्तमध्यायान्ते । अतोऽस्ति समस्तभूतानां जीवं परिष्वज्य गमनमिति स्वाभाविकमरणेन मुक्त्यभावादनुष्ठेयं वैराग्यादीति सिद्धम् ।

## भावबोधः

**समस्तभूतसंपरिष्वक्तस्येति ॥** पूर्वाधिकरणे भूतपरिष्वक्त इति सामान्यतो भूतपरिष्वङ्गोक्तावेव. समस्तभूतपरिष्वङ्गविचारोत्थानादनन्तरसङ्गतिरिति भावः । अत्र किं सर्वाणि भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति चिन्ता । तदर्थं प्रश्नव्याख्यानयोराप इत्युक्तिरयुक्तोत युक्तेति । तदर्थ-मपामम्मात्ररूपत्वमुत भूतत्रयात्मकत्वमिति । तदर्थं भूतत्रयात्मिकास्वप्सु अप्शब्दप्रयोगो न युज्यत उत युज्यत इति । 'इति पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यत्र भूतानीति सामान्य-नामानुक्त्वा आप इति विशेषनामकथनादपामेव सहगतिरिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **आप एवेति ॥** अनेनापामेव सहगतिरिति साध्यप्रतिपादकांशो व्याख्यातः । सर्वाणीत्यनेनैवकारव्यावृत्त्यांशकथनम् । 'आप' इत्यनेन तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यत्राप इति विशेषनामकथनादित्येतद्व्याख्यातम् । अन्यथेत्यनेन भूतानीति सामान्य-नामानुक्त्वेत्यस्य तात्पर्यमुक्तं भवति ॥ **अपां क्षितिसलिलानलात्मत्वेनेति ॥** अनेन त्र्यात्मकत्वा-दपामर्थतः सर्वभूतानां गतिप्राप्तिरिति न्यायविवरणमुक्तार्थं भवति । अपामिति विशिष्योक्ति-स्वारस्यादाह– **नन्वपामिति ॥ अध्यायान्त इति ॥** 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता' इत्यादिप्रमाणानुसारेण पार्थिवशरीरे पृथिव्या भागचतुष्टयमपां भागत्रयं, तेजस एको भागः । स्वर्गस्थतैजसशरीरे तेजसो भागचतुष्टयम्, अपां भागत्रयं, पृथिव्या एको भागः । आप्यशरीरे अपां भागचतुष्टयं पृथिव्या भागत्रयं तेजस एको भाग इति कथनेन त्रिविधशरीरेषु सम्भूयापां भागदशकं पृथिव्या भागाष्टकं तेजसो भागषट्कसिद्धेरित्यर्थः ।

## भावदीपः

पूर्वेणास्यागतत्वमाह ॥ **समस्तेत्यादि** ॥ पञ्चभूतेत्यर्थः । समर्थनात् विशेषशङ्कानिरासेन समर्थनादित्यर्थः । भूतैः सह रंहतीत्ययुक्तम् । श्रुतावपामेव गतिश्रवणादित्याक्षेपादनन्तरसङ्गतिरिति भावः । चिन्ताफलमाह ॥ **यदुक्तमिति** ॥ तात्पर्यत इति भावः ॥ **भूतानामिति** ॥ एकस्य तदन्तरेत्युक्तदेहान्तरानारम्भकत्वादिति भावः ॥ **इति साधारणं वचनमिति** ॥ तस्योभयथापि सम्भवादिति भावः । यद्यपि तदन्तरप्रतिपत्तावित्युक्तेरेकस्यानारम्भकत्वादनेकैर्भूतैः परिष्वक्तो रंहतीति लाभात् विशेषवचनमेवेदम् । अत एव प्राग्भूतानां शरीरभोगान्प्रदायेति बहुवचनान्त-

(भावदीपः)

भूतपदप्रयोगः । मांसादि भौममित्यत्रानेकेषामेव प्रकृतत्वाच्च । तथापि भूतैः संपरिष्वक्तो रंहतीति सामान्यवचनं आहुतावाप इति श्रुतौ भूतानीति साधारणवचनसहकृतं संदेहबीजमित्यत्र तात्पर्यम् । भाष्ये पूर्वपक्षानुक्तावपि सङ्गम्यन्ते गुरोर्गिर इति स्वप्रतिज्ञानुरोधेन इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यत्र भूतानीति सामान्यनामान्युक्त्वा आप इति विशेषनामकथनात् अपामेव सहगतिरित्यन्यत्रोक्तं विवृणोति ॥ **आप एवेति** ॥ **गतीति** ॥ यद्यप्यागतिरेव श्रूयते न त्वितः स्वर्गादिलोकं गच्छता जीवेन सहगतिः । अत एव प्राग्भूतयुक्तः परं लोकमिति वाक्यान्तरोक्तिः । तथापि गतेरभावे तेन सहागतेरयोगात् गतिरार्थिकीति भावेन गतिश्रवणादित्युक्तम् । यद्वा पूर्वत्र रंहतीत्यनेन स्वर्गादिपरलोकगमनमेव न विवक्षितम् । किं तु शरीरप्राप्तिपर्यन्तं गमनमिति गतिश्रवणादित्युक्तम् ॥ **अत इति** ॥ अपामेव गतिश्रवणादित्यर्थः । एकस्य भूतस्यापि निवृत्त्यर्थं स्यादेव साधनानुष्ठानमित्यत आह ॥ **एकभूतस्येति** ॥ ननु कथमपामेकभूतत्वम् । पूर्वत्र यथाशब्दमित्यनेनोपात्तया विमिश्राणि हि भूतानीति श्रुत्यैव तासां मिश्रत्वसिद्धेः । तथात्वे श्रुतौ विशिष्याप इत्युक्तिरपि वैशेष्यात्त्वित्युक्तन्यायेन समाहितेति चेत्सत्यम् । तथाप्यत्र पार्थिवादिशरीरेषु पृथिव्यादीनामर्धार्धभागतः समत्वेन प्रतिशरीरमपां वैशेष्याभावात् श्रुतावाप इति विशेषोक्तेर-योगादिति तात्पर्यात् । अत एव वक्ष्यति सम्भूय शरीरेष्वित्यादि । वैराग्यादीत्यादिपदेन भक्त्यादि-साधनं शास्त्रं च गृह्यते । एवमग्रेऽपि । पूर्वस्माद्रंहति सम्परिष्वक्त इत्यनुवर्त्य त्र्यात्मकत्वादपामर्थतः सर्वभूतानां गतिप्राप्तेरित्यन्यत्रोक्त्यनुरोधेन भाष्ये अपां त्र्यात्मकत्वादित्यन्वयमुपेत्य शङ्कानिवर्तकतया सूत्रभाष्ययोरर्थमाह ॥ **सर्वेति** ॥ तेन सूत्रे त्र्यात्मकत्वादिति प्राधान्यादुक्तं भूतान्तरात्मकत्वोप-लक्षणमिति भावेन न्यायविवरणोक्तसर्वपदानुवादः कृतः ॥ **विशेषेति** ॥ श्रुतावित्यर्थः । **प्राप्तेः** गतिप्राप्तेरित्यर्थः । भूतानां त्र्यात्मकत्वे श्रुतिः तासामिति । ता इमास्तिस्रो देवता इति देवताशब्दनिर्दिष्टानां सदैव तत्तेजोऽबन्नतत्त्वानामित्यर्थः । पाञ्चभौतिकत्वेऽपि प्राधान्यात्सूत्रादौ त्र्यात्मकत्वोक्तिरिति भावेन सामान्यश्रुतिं चाह ॥ **मिश्राणीति** ॥ अत एव प्राक् तद्ग्रहणेऽन्य-भूतानामिति बहुवचनोक्तिः अन्यथाऽन्यभूतयोरित्युक्तिः स्यात् । भूतत्रयात्मिका इति बहुव्रीहिः । तेन टाबन्तत्वोपपत्तिः । भाष्ये न्यायविवरण इव त्र्यात्मकत्वादपामित्यनुक्त्या भूतानां त्र्यात्म-कत्वादपां गत्यैव सर्वभूतगतिप्राप्तेरित्यर्थलाभात् । तदनुरोधेन भूयस्त्वादपामित्यस्यार्थमाह ॥ **नन्वपामित्यादिना** ॥ एतेन सूत्रे अपामेव त्र्यात्मकत्वमुक्तं न तु भूतानामिति निरस्तम् । पूर्वसूत्रे

(भावदीपः)

अपामिव भूतानामपि प्रकृतत्वात् ॥ **सर्वभूतेति** ॥ मिश्राणीति श्रुतेरिति भावः । सूत्रे त्र्यात्मकत्व-मुपलक्षणमिति सूचितम् । प्रत्येकमभावादाह ॥ **सम्भूयेति** ॥ भूतेजसोरप्यपेक्षयेत्यर्थः ॥ **अध्यायान्त इति** ॥ पार्थिवानामित्यादिस्मृतिव्याख्यावसरे पार्थिवशरीरे अपां भागत्रयं एको भागस्तेजोऽर्धं पृथिवी । आप्यशरीरे भागचतुष्टयमापः भागत्रयं पृथिवी तेज एको भागः । तैजसशरीरे भागचतुष्टयं तेजो भागत्रयमापः एकभागः पृथिवी इत्युक्त्या अपां भागदशकं पृथिव्या भागाष्टकं तेजसो भागषट्कमित्युक्तमिति लाभादिति भावः ॥ **अत इति** ॥ अपां भूतान्तरमिश्रत्वेन श्रुतावपां गमनोक्तावन्येषामपि गमनसिद्धेरित्यर्थः ॥ **समस्तेति** ॥ पञ्चानामपि भूतानामित्यर्थः ।

## अभिनवचन्द्रिका

**समस्तभूतानामिति** ॥ ननु 'आपः पुरुषवचसो भवन्ति' इति अपां देहारम्भकत्वं श्रूयते । यदि केवलाभ्योऽभ्यः सृष्टिरनुपपन्ना तर्हि तदन्यथानुपपत्त्यैव भूतान्तरगमनमपि सिध्येदेव । अथोपपन्ना, तथापि मरणमात्रस्य मुक्तित्वाभावात् मुक्त्यर्थं वैराग्याद्यनुष्ठानसम्भवात् व्यर्थमेवेद-मधिकरणमिति चेत्, उच्यते भूतानां परिष्वङ्गो हि बन्धो न भूतस्य परिष्वङ्गः । ततश्च यदि मृतस्य न सर्वभूतैः परिष्वङ्गः, तर्ह्यसौ मुक्त एव । एकभूतपरिष्वङ्गेऽपि सर्वभूतपरिष्वङ्गाभावात् । न च मुक्तस्य पुनः संसारो युज्यत इत्युपचरितार्थम् 'आपः पुरुषवचसो भवन्ति' इति वाक्यमिति मन्यमानस्य शङ्कापरिहाराय सर्वभूतपरिष्वङ्गसाधनाय सार्थकमेवेदमधिकरणमिति । एकभूतस्य शरीरानारम्भकत्वादिति ॥ ननु मास्तु एकस्य भूतस्य शरीरारम्भकत्वं भूतान्तरसहकृतस्य तु स्यादेव शरीरारम्भकत्वम् । न हि सहकारिणा सहैव गन्तव्यमिति नियमोऽस्ति । अतथाभूतानामपि दण्डचक्रादीनां घटोत्पत्तौ मृत्सहकारित्वदर्शनात् । ततश्चाऽम्मात्रस्य सहगमनेऽपि देहोत्पत्तिसमये कर्मवशात् सहकारिसमवधानेन देहारम्भसम्भवात् । न मरणमात्रेण मोक्ष इति कर्तव्यमेव वैराग्यादीति चेत्, न ब्रूमो वयं सहकारिविरहात् एकस्य भूतस्याऽऽरम्भकत्वाऽसम्भव इति, येनाऽ-दृष्टवशात्सहकारिसमवधानेन देहोत्पादः स्यात् । न चैवं किं नाम त्वन्मते एकस्यैव भूतस्य मोक्षविरोधित्वाभावेन मृतस्य मुक्तत्वात् मुक्तस्य च संसारायोगात् आरम्भकत्वाभावं ब्रूमः । ततश्च न वैराग्यादिकमनुष्ठेयमिति ॥ **अपां क्षितीति** ॥ क्षितिसलिलाऽनलेति त्रिवृत्कृतभूतत्रये अपां प्रविष्टत्वेन शक्यसम्बन्धसद्भावेनाऽबग्रहणेन लक्षणया भूतत्रयप्राप्तेरित्यर्थः । 'तासां त्रिवृतं त्रिवृतम्' इति श्रुत्यप्रामाण्यं शङ्कते **नन्विति** ॥ यद्यपां भूतत्रयजन्यत्वं स्यात् तर्हि कार्यस्य चित्रद्रव्यत्व-

(अभिनवचन्द्रिका)

प्रसङ्गेनाऽप्शब्दवाच्यत्वं न स्यात् । अस्ति चैतत् । ततो नाऽपां भूतत्रयकार्यत्वं ततश्चाऽप्रामाण्यमेव श्रुतेरित्यतः परिहारमाहाऽऽचार्यो भाष्यकार इत्यर्थः ॥ **मिश्रत्वेऽपीति** ॥ सजातीयपरमाणूनामेव आरम्भकत्वमिति तार्किकप्रक्रियाया अप्रामाणिकत्वात् उपादानेषु पृथिव्यप्तेजस्सु यस्याऽऽधिक्यं तज्जातीयत्वमेव कार्यस्येति भावः ॥ **नन्वपामिवेति** ॥ अपामिव भूतोजसोरपि त्रिवृत्कृत-भूतत्रयकारणत्वेन तत्र प्रविष्टत्वात् पृथिव्यादिशब्देनापि सर्वग्रहणसम्भवात् किं विशिष्याऽपामेव ग्रहणेनेत्यतो वाऽऽहेत्यर्थः ।

पूर्वपक्षस्तु जीवेन सह आप एव गच्छन्ति न सर्वाणि । 'आपः पुरुषवचसो भवन्ति' इति श्रुतेः । अन्यथा भूतानीति श्रुतिः स्यात् । अतो मृतस्य समस्तभूतबन्धाभावात् मरणमेव मोक्ष इति व्यर्थमेव वैराग्यादीति ।

सिद्धान्तस्तु सर्वभूतपरिष्वक्त एव रंहति जीवः । 'आपःपुरुषवचसो भवन्ति' इति पुनरुत्पत्तिश्रवणात् । न च सर्वभूतपरिष्वङ्गाभावे पुनरुत्पत्तिर्युज्यते भूतबन्धस्यैव संसारत्वेन तदभावे मुक्तत्वापातात् । एकभूतस्य चाऽबन्धकत्वात् । न च विशेषश्रुतिविरोधः । अपां त्रिवृत्कृत-पृथिव्यप्तेजोहेतुत्वेन अब्ग्रहणेनैव सर्वेषां प्राप्तेः । न च अपामिव भूतेजसोरपि त्रिवृत्कृतभूतत्रय-काराणत्वात् शब्दान्तरमपहायाऽप्शब्दस्यैव ग्रहणे कारणाभाव इति वाच्यम् । सर्वशरीरेषु सम्भूय अपां बहुत्वस्यैव नियामकत्वात् । 'तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमाः' इति वचनात् । अतोऽस्ति समस्तभूतानां जीवं परिष्वज्य गमनमिति स्वाभाविकमरणेन मुक्त्यभावात् अनुष्ठेयं वैराग्यादि इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमेवाह ॥ **यदुक्तमिति** ॥ अत्र सर्वाणि भूतानि जीवं परिष्वज्य गच्छन्त्युत न गच्छन्तीति चिन्ता । तदर्थमापः पुरुषवचसो भवन्तीत्युक्तोऽप्शब्दस्तन्मात्रपर उतापां त्रितयात्म-कत्वेन त्रितयपर इति । अप्शब्द इति सिद्धान्तभाष्यसूचितमनामेत्युक्तन्यायं विशदयन् पूर्वपक्षयति ॥ **आप एवेति** ॥ **विशेषप्रयोग इति** ॥ विशेषनामेत्यर्थः । नाप्यं शरीरमिह विवक्षितं पुरुषवच इति श्रवणात् । येन वैशेष्यादित्युक्तन्यायावसर इति भावः । एकभूतस्य च शरीरानारम्भकत्वादिति । एकेन भूतेन परिष्वक्ततया गमनस्यौत्तरिकशरीरारम्भकं प्रत्यप्रयोजकत्वादित्यर्थः । तेन पञ्चानामपि

(वाक्यार्थमुक्तावली)

भूतानां लिङ्गशरीरावयवत्वेन स्थितानां स्थूलशरीरोपादनत्वाभावादेकस्यानारम्भकत्वादित्ययुक्तमिति निरस्तम् । सूत्रे जीवः सर्वैर्भूतैरेव सम्परिष्वक्तो रंहतीत्यनुवर्तते । तुशब्दोऽध्याहृतेनापृशब्द इत्यनेनान्वेति । चशब्दार्थस्सन् भूयस्त्वाच्चेत्यप्यन्वेति । अपामिति च शेषः । तथा च जीवः सर्वैर्भूतैरेव सम्परिष्वक्तो गच्छति । अप्शब्दस्तु अपां त्र्यात्मकत्वाद्भूयस्त्वाच्च युज्यत इति वाक्यविन्यासमभिप्रेत्य व्याचष्टे ॥ **सर्वभूतेत्यादिना** ॥ त्र्यात्मकत्वादित्यनेन सूचितमर्थतो भव इत्युक्तन्यायं दर्शयति **अपां हीति** ॥ **सलिलेति** ॥ यद्यपि जीवेन सह गतिमतीनामपां न त्र्यात्मकत्वं । नित्यतया त्रिवृत्करणशून्यत्वात् । तथापि तज्जातीयत्वादुत्तरत्र लिङ्गशरीरोपचयकाले त्रिवृत्कृतभूतैरुपचयाच्चैवमुक्तिः ॥ **भूतान्तरस्येति** ॥ जीवेन सह गम्यतयाभिमतस्येति ग्राह्यम् । सर्वभूतात्मकत्वादित्यनन्तरं मिश्रत्वेऽपि तत्तद्भूतस्याधिक्यात् पृथिव्यादिशब्देन भूतान्तरग्रहणं विहायेति वाक्यशेषः ॥ **यथा च सम्भूयेति** ॥ पार्थिवशरीरे त्रिभागिन्य आपः । आप्य-शरीरेऽर्धमापः । तैजसशरीरे त्रिभागिन्य आप इति मिलित्वा त्रिविधशरीरे अब्भागानामाधिक्य-मिति पार्थिवानां शरीराणामित्यादिना द्वितीयाध्यायान्ते उक्तमित्यर्थः ।

## तत्त्वसुबोधिनी

**समस्तभूतपरिष्वक्तस्येति** ॥ पूर्वाधिकरणे भूतपरिष्वक्त इति सामान्यतो भूतपरिष्वङ्गोक्तावेव समस्तभूतपरिष्वङ्गविचारोत्थानादनन्तरसङ्गतिरिति भावः । न प्रतिज्ञामात्रेणार्थसिद्धिरित्यतस्तत्र हेतुमाह ॥ **आप इति** ॥ **अन्यथेति** ॥ अपामेव सह गमनाभावे । साध्यप्रतिपादकानुक्तेराह ॥ **सर्वेति** ॥ अपां त्र्यात्मकत्वमयुक्तम् । प्रमाणाभावादित्यत आह ॥ **तासामिति** ॥ अपामिति विशिष्योक्तिस्वारस्यादाह ॥ **नन्विति** ॥ कथमनेन शङ्का परिहृतेत्यत आह ॥ **मिश्रस्यापीति** ॥ ननु शरीरे कथमपां भूयस्त्वमित्यत आह ॥ **यथा चेति** ॥ 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता' इत्यादिप्रमाणानुसारेण पार्थिवशरीरे पृथिव्या भागचतुष्टयं, अपां भागत्रयं, तेजस एको भागः, स्वर्गस्थतैजसशरीरे तेजसो भागचतुष्टयं, अपां भागत्रयं, पृथिव्या एको भागः आप्यशरीरे अपां भागचतुष्टयं, पृथिव्या भागत्रयं, तेजस एको भागः इति कथनेन त्रिविधशरीरेषु सम्भूयापां दशकं, पृथिव्या भागाष्टकं, तेजसो भागषट्कमिति सिद्धेरित्यर्थः ।

## वाक्यार्थविवरणम्

**तदयुक्तं स्यादिति ॥** इदं च 'अतो मृतस्य' इत्युत्तरत्र पूर्वपक्षोपसंहारे स्पष्टम् । किमनेन प्रयोगे निमित्तमुक्तमित्यत आह ॥ **मिश्रत्वेऽपीति ॥** भूतेजसोः सकाशात् पार्थिवशरीरे पृथिव्याः भागचतुष्टयं अपां भागत्रयं तेजस एको भागः । आप्यशरीरेऽपां भागचतुष्टयं पृथिव्या भागत्रयं तेजस एको भागः । स्वर्गस्थतैजसशरीरे तेजसो भागचतुष्टयं अपां भागत्रयं पृथिव्या एको भाग इति विवेकः । तथा च त्रिविधशरीरेषु सम्भूय अपां भागदशकं पृथिव्या भागाष्टकं तेजसो भागषट्कं द्रष्टव्यम् । एवमब्भागानां भूयस्त्वं द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

अपां त्र्यात्मकत्वात् भूजलाग्न्यात्मकत्वात् सर्वत्रापामेव भूतेजोऽपेक्षया बाहुल्यादाप इति विशेषोक्तिसम्भवेन सर्वभूतसम्बद्ध एव जीवो गच्छतीत्यर्थः । तत्र प्रश्नपरिहारयोः ॥ **सर्वदेहेष्विति ॥** पार्थिवशरीरे पृथिव्याः भागचतुष्टयं अपां भागत्रयं तेजस एको भागः । आप्यशरीरे अपां भागचतुष्टयं पृथिव्याः भागत्रयं तेजस एको भागः । तैजसशरीरे तेजसो भागचतुष्टयं अपां भागत्रयं पृथिव्या एको भाग इति । त्रिविधशरीरेषु सम्भूय मिलित्वा अपां भागदशकं पृथिव्याः भागाष्टकं तेजसो भागषट्कमित्यपामेव भूयस्त्वादित्यर्थः ।

॥ इति त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

## ३. प्राणगत्यधिकरणम्

**॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥**

'यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि च । नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्त' इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि सह गच्छन्तीति' सिद्धम् ।

### तत्त्वप्रदीपिका

'प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतेर्लोकतश्च प्राणगतिः प्रसिद्धा ।

### तत्त्वप्रकाशिका

अत्र पुनः परमात्मप्राप्तिसाधनवैराग्यसिद्ध्यर्थं जीवस्य भूतैः सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । भूतानां जीवेन सह गत्यसमर्थने मरणस्यैव मुक्तित्वप्राप्तेः सा समर्थनीया । प्रकृतभूतान्येव विषयः । किं जीवेन सह गच्छन्ति न वेति सन्देहः । उभयथा सम्भवः सन्देहवीजम् । न गच्छन्तीति पूर्वः पक्षः । भूतानि जीवेन सहगच्छन्तीति विशेषप्रमाणाभावात् । न च प्रश्नव्याख्याने विशेषप्रमाणम् । तयोरपि भूतैः सह गमनस्यानुक्तत्वात् । आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेणासम्भवात् । एवं च स्वाभाविकमरणमेव मुक्तिरिति कृतं वैराग्यादिभिरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **प्राणेति** ॥

गच्छन्त्येव भूतानि सह जीवेन विशेषप्रमाणस्यानुमानस्य विद्यमानत्वात् । अस्ति तावद् भूतानामिन्द्रियाणां चाविनाभावः । 'यत्र वाव भूतानि' इति श्रुतेः । प्राणानां चास्ति जीवेन सह गतिः । 'करणैर्वाव न वियुज्यत' इति श्रुतेः । अतः प्राणगतेस्तदविनाभूतभूतानां चास्ति जीवेन सह गतिरिति ज्ञायत इति भावः । चशब्दो भूताविनाभावार्थः । अत्रैवं प्रयोगो भवति 'भूतानि जीवेन सह गमनवन्ति तत्सहगन्तृप्राणाविनाभूतत्वात् । यद्येन सह गन्त्रविनाभूतं तत्तेन सह गच्छति । यथा राज्ञा सह गन्त्रमात्याविनाभूतो भृत्यः' इति । अतः समस्तभूतानां जीवपरिष्वङ्गसिद्धेर्न मरणमात्रेण मोक्षोऽतोऽपेक्षितं वैराग्यादीति सिद्धम् ।

## गुर्वर्थदीपिका

**'उभयथा सम्भवस्सन्देहबीजम्'** इत्यत्र लोके करितुरगादीनां राज्ञा कदाचित्सहगमनस्य कदाचिदसहगमनस्य च दर्शनादिति भावः । 'यत्र वाव भूतानि' इति श्रुतौ यत्रतत्रपदयोर्यत्र करणानि तत्र भूतानीति व्यत्यासेनान्वयः । अन्यथा घटादौ व्यभिचारप्रसङ्गः । प्राणानां चास्ति जीवेन सहगतिरिति टीकावचनं शिष्यमनस्समाधानायोत्तराधिकरणप्रमेयमाकृष्योक्तम् । सूत्रभाष्यकारयोस्तु प्राणानां जीवेन सहगमनात्तदविनाभूतभूतानामपि सहगमनमित्येतावत्येव तात्पर्यम् । प्राणानां जीवेन सहगमनं तूत्तराधिकरण एव प्रतिपाद्यमिति विवेक्तव्यम् । अन्यथोत्तराधिकरणानामनारम्भप्रसङ्गात् ।

## भावबोधः

**अत्र पुनरिति** ।। आर्थिककल्पनायां कृतायामेव तन्मूलभूतविशेषप्रमाणजिज्ञासोदयादनन्तरसङ्गतिरिति भावः ।। **किं जीवेनेति** ।। अत्र भूतानां जीवेन सह गतिर्नास्त्युतास्तीति चिन्ता । तदर्थं प्रश्नव्याख्यानयोः प्रतीतानामपां गमनेन सर्वभूतानि गच्छन्तीत्यार्थिककल्पनायां विशेषप्रमाणं नास्त्युतास्तीति. । तदर्थं भूतानां प्राणैरविनाभावो नास्त्युतास्तीति । एवं च भूतानां प्राणैरविनाभावाभावे तत्सहगन्तृप्राणाविनाभूतत्वरूपहेतोरसिद्ध्या विशेषप्रमाणाभावान्निर्मूलकार्थिककल्पनाया अयोगेन सर्वभूतानां जीवेन न सहगतिरिति पूर्वपक्षे, अविनाभावसत्त्वे उक्तहेतुसिद्धावुपपत्तिरूपविशेषप्रमाणमूलकार्थिककल्पनाया युक्तत्वात् सर्वभूतानां जीवेन सहगतिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ।। **न गच्छन्तीति** ।। अनेन तदभाव इति न्यायविवरणांशो व्याख्यातः ।। **भूतानीति** ।। अनेन भूतानि गच्छन्तीति सहैवानुक्तेरिति न्यायविवरणांशो व्याख्यातः ।। **तयोरपीति** ।। अनेन तयोरपीति शेषपूरणेन पूर्वोदाहृत एव न्यायविवरणभागः प्रकारान्तरेण व्याख्यातः ।

ननु पूर्वाधिकरणे सहगमने तासां त्र्यात्मकत्वेन भूतानामपि सहगमनसिद्धिरित्युक्तत्वात् कथमनुक्तिरित्यत आह– **आर्थिककल्पनाया इति** ।। नन्वत्र 'भूतयुक्तः परं लोकमिमं लोकं च गच्छति' इति विशेषप्रमाणस्योक्तत्वात् कथमेतच्छङ्कावकाश इति चेत्, न; सूत्रकारेण तस्यानुक्तत्वात् । भाष्यकारैस्तु शिष्यहितैषणया न्यायविवरणे तदुदाहृतमिति । अनुमानं दर्शयितुं

(भाववोधः)

हेतुसिद्ध्यर्थमाह ॥ **अस्तीति** ॥ अतः प्राणगतेरित्यनेन 'प्राणगतेरुपपत्तेः उक्तत्वात्' इति न्यायविवरणं व्याख्यातं भवति । ननु प्राणगतिरित्यनेन तत्सहगन्तृप्राणेत्यस्य विशेषणस्योक्तत्वेऽपि तदविनाभूतत्वरूपं विशेष्यं नोक्तमित्यत आह ॥ **चशब्द इति** ॥

## भावदीपः

**गतिसमर्थनादिति** ॥ अनुमानरूपप्रमाणोक्त्येति भावः । तेन न पूर्वेणास्य ऐकार्थ्यम् । पूर्वोक्तसमस्तभूतगतौ विशेषप्रमाणनिरूपणादनन्तरसङ्गतिश्चेति ध्येयम् ॥ **उभयथा सम्भव इति** ॥ उक्तदिशा अपां गतिश्रवणेऽपि तासां त्र्यात्मकत्वेनार्थात्सर्वभूतगतिसिद्धिरिति कल्पनायां विशेष-प्रमाणाभावेनेति भावः । तेनार्थिकगतेरुक्तत्वात् उभयथा सम्भवशङ्कानुदय इति न शङ्क्यम् । भूतानि गच्छन्तीति सहैवानुक्तेस्तदभाव इत्यन्यत्रोक्तपूर्वपक्षं हेतुसाध्यव्युत्क्रमेण व्यनक्ति ॥ **न गच्छन्तीत्यादिना** ॥ तत्र सहैवेत्यस्याध्याहृतजीवपदेनान्वयः । अनुक्तेरित्येतद्विशेषप्रमाणा-भावमात्रोपलक्षणं चोपेत्यैकमर्थमुक्त्वाऽर्थान्तरं वक्तुमाह ॥ **न चेति** ॥ भूतानीति पदमेव सहेत्यत्र भूतैरिति विपरिणम्यानुवर्त्य गच्छन्तीति प्रकृतं गमनमेव गमनस्येत्यन्वेति । अनुक्तेरिति च यथाश्रुतमेवेत्युपेत्यार्थमाह ॥ **तयोरपीति** ॥ प्रश्नव्याख्यानयोरपीत्यर्थः । भूतैस्सह गमनस्येत्युक्त्यैव 'भूतयुक्तः परं लोकम्' इत्यत्र तथोक्तिरस्तीत्यपि निरस्तम् । भूतयुक्त इत्यत्र भूतेन भूतैरिति वा इत्युभयथापि सम्भवात् । मानाभावेनैव मेयाभावो न तूक्त्यभावमात्रेणेति शङ्काव्युदासाय पूर्वमुपलक्षणव्याख्यानोक्तिः । एतेन तदन्तरेत्यनेनागतत्वं दर्शितम् । तस्यैवाक्षेपात् । उक्त्यभावेऽपि आर्थिकसिद्धेरुक्तत्वात् व्यर्थमेवेदमित्यतोऽनुक्तेरित्युक्तिपदस्वारस्यसूचितं पूर्वसूत्रोक्ताक्षेपं च दर्शयति ॥ **आर्थिकेति** ॥ एतेन भूतयुक्त इत्यत्र भूतेन युक्त इति विग्रहेणैकभूतयुक्तत्वोक्त्याप्यर्था-त्सर्वभूतगतिः सिद्धेत्यपि प्रत्युक्तम् । अत एवार्थिककल्पनाया इति सामान्योक्तिः । अन्यथा अपां गतिरार्थिकेत्याद्येव ब्रूयात् । यद्वा प्रश्नव्याख्यानयोरापः पुरुषवचसो भवन्तीत्येव श्रूयते न तु गमनं गच्छन्तीति गमनस्यानुक्तेरिति पूर्ववाक्यार्थः । अबुपलक्षितजीवस्याऽऽप इत्युक्तेरपां सहगत्यभावे अयोगात्तासां त्र्यात्मकत्वाच्चार्थादबादिभूतगतिस्सिद्धेत्यत आह ॥ **आर्थिकेति** ॥ भूतगत्य-प्रतिपादकस्यापि प्रश्नादिरूपवाक्यस्याद्यसूत्रे साक्षित्वेनोपादानं तु त्र्यात्मकत्वप्राणगत्यादिना सर्वभूतगतिपरत्वरूपमर्थं वक्तुमिति भावः ॥ **एवमिति** ॥ एवं सति भूतानां जीवेन सह गतौ

(भावदीपः)

विशेषप्रमाणाभावे सतीत्यर्थः । यद्वा एवं प्राप्त इत्यन्वयः । यद्वा एवं मृतस्य भूतपरिष्वङ्गाभावादिति पूर्वोक्तरीत्येत्यर्थः । सूत्रे रंहति संपरिष्वक्त इत्यनुवृत्तस्य भावार्थमाह ॥ **गच्छन्त्येवेति** ॥ यत्र वावेति व्याप्त्युक्तेरुपयोगाय प्राणगतेरुपपत्तित उक्तत्वादित्यन्यत्रोक्त्यनुरोधेन सूत्रादिभावमाह ॥ **विशेषेति** ॥ यत्रेत्यादिभाष्यार्थमाह ॥ **अस्तीति** ॥ किं चात इत्यत आह ॥ **प्राणानां चेति** ॥ तस्य च नित्यत्वादित्यत्र भाष्योक्तां श्रुतिमाह ॥ **करणैर्वावेति** ॥ तत्वप्रदीपे तु 'प्राणा अनूत्क्रामन्ति' इति श्रुतेः लोकतश्च प्राणगतिः प्रसिद्धेत्युक्तम् । एवं परिष्कृत्य प्राणगते-रित्यादिभाष्यं व्याचष्टे ॥ **अत इत्यादि** ॥ श्रुतिबलादित्यर्थः । यत्र वावेति भाष्यमुत्सूत्रमिति भ्रमं निराह ॥ **चशब्द इति** ॥ ननु भूतानि जीवेन सह गच्छन्ति तेन सह प्राणानां गतेरिति प्रयोगे वैयधिकरण्यमप्रयोजकत्वं च । यत्र प्राणगतिस्तत्र भूतगतिरिति व्याप्तौ दृष्टान्ताभावश्चेत्यत आह ॥ **अत्रैवमिति** ॥ रंहति संपरिष्वक्त इत्यनुवृत्तस्य तात्पर्यं भूतानीत्यादि । तस्य च नित्यत्वादिति प्रागुक्तसूत्रलब्धार्थः ॥ **तत्सहेति** ॥ प्राणगतेरित्यस्यार्थः गन्तृप्राणेति । चशब्दार्थः अविनाभूतत्वादिति । अत्र सामान्यव्याप्तिरेवाभिमता न विशेषव्याप्तिरिति भावेनाह ॥ **यदिति** ॥ भाष्योक्तश्रुतौ नित्यानि ह वा इत्यादिशेषोक्तेरुपयोगं सूचयन् प्राणगतेरिति सौत्रपञ्चम्या रंहति संपरिष्वक्त इत्यनेनान्वयं च सूचयन् फलोक्त्योपसंहरति ॥ **अत इति** ॥ भूताविनाभूतप्राण-गत्याख्यानुमानरूपविशेषप्रमाणभावादित्यर्थः । पूर्वत्र सिद्धस्य अनुवादः समस्तेति । यद्वा 'यत्र वाव भूतान्ति' इति बहुवचनेन सर्वभूतानां प्राणव्याप्तत्वोक्तेः प्राणगत्या सर्वभूतगतिरपि सिद्धेति भावेन समस्तेत्युक्तिः । तेन भूतगतिश्च द्वयमपि न केवलमार्थिकं किं तु विशेषप्रमाणवदेवेति दर्शितम् । परिष्वंग इत्युक्त्या नित्यानि ह वा इत्यादिश्रुत्या भूतकरणसम्बन्धस्य नित्यत्वा-त्करणैर्वावेति श्रुत्या करणजीवसम्बन्धस्यापि नित्यत्वात् । आमोक्षं जीवस्य भूतैः सम्बन्धः एव न कदाचित्तद्वियोग इति सूचितम् । यथोक्तं तत्त्वप्रदीपे तदन्तरप्रतिपत्ताविति सूत्रे सम्परिष्वक्त इति वचनात् मुक्तिपर्यन्तं परिष्वक्त एवेति ।

## अभिनवचन्द्रिका

**अत्र पुनरिति** ॥ ननु शास्त्रादिसङ्गतिव्युत्पादनं व्यर्थम् । पूर्वाधिकरण एव निरूपितत्वात् अस्याऽधिकरणस्य प्राक्समर्थितसमर्थनार्थं प्रवृत्तत्वात् । न ह्यभ्यधिकाशङ्कया पुनरधिकरणप्रवृत्तौ

(अभिनवचन्द्रिका)

अनन्तर्भावशङ्काऽस्ति । येन तद्वचनं सार्थकं स्यादिति चेत्, सत्यम्, पूर्वनिरूपितसङ्गत्यैव चारितार्थ्यमिति । तथापि इमान्यधिकरणानि प्रत्येकमनेकवेदवाक्यविचाररूपत्वादवान्तर ब्रह्मविद्या इति सूचयितुं पुनः सङ्गतिनिरूपणम् । एवमन्यत्रापि द्रष्टव्यम् ॥ **विशेषप्रमाणाभावादिति** ॥ विस्पष्टप्रमाणाभावादित्यर्थः ॥ **विशेषप्रमाणस्येति** ॥ निरवकाशस्याऽनुमानस्य सत्त्वादित्यर्थः । ननु प्राणगत्या भूतगतिसाधनमयुक्तं, व्याप्त्यभावादित्यत आह– **अस्ति तावदिति** ॥ परस्परमिति शेषः । दृष्टान्ताभावात्कथं व्याप्तिग्रह इत्यत आह ॥ **यत्र वावेति** ॥ 'नैतानि कदाचिद्वियुज्यन्ते' इति परस्परमविनाभावस्य श्रुतिसिद्धत्वात् न तत्र दृष्टान्ताऽपेक्षेति भावः ॥ **तदविनाभूतेति** ॥ ते प्राणाः, अविनाभूताः, यैः तानि तदविना भूतानि । तेषां जीवेन सह गतिर्ज्ञायत इत्यर्थः । एतेन प्राणगत्या भूतगतिं साधयता प्राणानामेव भूतव्याप्यत्वस्य वक्तव्यत्वात् भूतानां प्राणव्यापकत्वकथनमयुक्तमिति परास्तम् ॥ **चशब्द इति** ॥ प्राणानां भूतैरविनाभावार्थ इत्यर्थः ॥ **तत्सहगन्त्रिति** ॥ तत्सहगन्तृप्राणा अविना भूताः, यैस्तानि तेषां भावः तस्मात् तत्सहगन्तृ-प्राणव्यापकत्वादिति यावत् ॥ **अमात्याविनाभूतेति** ॥ अमात्यव्यापकभृत्य इत्यर्थः ।

पूर्वपक्षस्तु न भूतानि सहगच्छन्ति प्रमाणाभावात् । न च प्रश्नव्याख्याने प्रमाणम् । तयोरपि भूतैः सह गमनाऽप्रतीतेः । आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेणाऽसम्भवात् । अतः स्वभाविकमरणमेव मुक्तिरिति अलं वैराग्यादिभिरिति ।

सिद्धान्तस्तु गच्छन्त्येव भूतानि जीवेन सह । भूतानि जीवेन सहगतिमन्ति, तत्सहगन्तृ-प्राणव्यापकत्वादिति अनुमानसद्भावात् । न च व्याप्त्यभावः । 'यत्र वाव भूतानि' इति श्रुत्या भूतानां प्राणानां च परस्परं व्याप्यव्यापकभावाभिधानात् । अतः समस्तभूतानां जीव परिष्वङ्ग-सिद्धेर्न मरणमात्रेण मोक्षः । अतोऽपेक्षितं वैराग्यादीति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अत्र पुनरिति** ॥ आर्थिककल्पनायां मूलप्रमाणाकाङ्क्षायां पुनर्विशेषप्रमाणेन समर्थनादित्य-नेनान्तरसङ्गतिरुक्ता ज्ञेया ॥ **किं जीवेनेति** ॥ भूतानां जीवेन सह गतिर्नास्त्युतास्तीति । ननु प्राणगतेश्चेति सूत्रं भूतानां जीवेन सह गमने प्रमाणान्तरोपन्यासपरमिति पूर्वेणैकाधिकरण्यं युक्तम् । अन्यथा हेत्वन्तरपरसूत्राणां सर्वत्रैकाधिकरणत्वप्रसङ्गः । चतुर्थमप्यधिकरणं हेत्वसिद्धिमाशङ्क्य

(वाक्यार्थमुक्तावली)

परिहारकतयैकाधिकरणं भविष्यतीति चेन्न एतेषां अधिकरणानां पृथक्पृथक् न्यायसूचकत्वात् । पृथक् पृथक् वाक्यविचाररूपत्वाच्च अधिकरणान्तरत्वोपपत्तेः । पूर्वतन्त्रे हेतुदर्शनाच्चेति सूत्रस्य शेषत्वदर्शनादिति प्रागेव प्रत्यपादि । वक्ष्यते च टीकाकारैः । पृथक्पृथक् विचारत्वात्सन्देहानुत्पादो न मन्तव्य इति । अत्र सहभावेति पूर्वपक्षन्यायस्य सहगमने प्रमाणाभाव इत्यर्थं मनसि निधाय पूर्वपक्षयति ॥ **न गच्छतीत्यादिना** ॥ प्रथमाधिकरणेन गतार्थतामाशङ्क्य परिहरति ॥ **न चेति** ॥ **भूतैरिति** ॥ आप इति वचनेऽपि भूतैरित्यनुक्तत्वादागतिकाले अद्भिः परिष्वङ्गस्य श्रुतत्वेऽपि सहगमनस्याश्रुतत्वादित्यर्थः । द्वितीयाधिकरणेन गतार्थतां परिहरति ॥ **आर्थिकेति** ॥ अपां सहगमने तासां त्र्यात्मकत्वेन भूतानामपि सहगमनसिद्धिरित्यार्थिककल्पनाया इत्यर्थः । आगमने सहभावेन गतावपि सहभाव इत्यार्थिककल्पनाया इत्यर्थः । भूतयुक्तः परं लोकमिति सहगतिः स्पष्टं श्रूयत इति चेन्न । भूतयुक्तस्य गमने स्पष्टप्रमाणत्वेऽपि भूतेन युक्तो भूतयुक्त इत्यर्थसम्भवेन सर्वभूतगमने विशेषप्रमाणभावादिति भावः ।

प्राणगतेः सम्परिष्वक्तो रंहतीति सूत्रार्थं हृदि निधाय प्रवृत्तं प्राणगतेर्भूतानामपीति भाष्यभावमाह ॥ **गच्छन्त्येवेति** ॥ **विशेषप्रमाणेति** ॥ एतेन प्राणगतेरित्येतदुपपत्तिरित्युक्त न्यायप्रदर्शकमित्युक्तं भवति ॥ **श्रुतिरिति** ॥ एतेन व्याप्तेरागमिकत्वान्न दृष्टान्तापेक्षेत्युक्तं भवति । 'यत्र वाव भूतानि' इति श्रुतौ यत्रैव भूतानि तत्र करणानीत्यर्थः । तेन वह्निमत एव धूमवत्वमिति-वद्भूतानां व्यापकत्वं सिद्ध्यति । अनेन दैशिकी व्याप्तिरुक्ता । नित्यानि वा एतानीति कालिका । आद्यस्योपपादनं नैतानीति । वियुज्यन्ते परस्परपरिहारेण भिन्नदेशे वर्तन्त इत्यर्थः । द्वितीयोपपादनं न च विलीयन्त इति । असिद्धिं परिहरति ॥ **प्राणानां चेति** ॥ **तदविनाभूतेति** ॥ ते प्राणा अविनाभूता यैस्तानि तदविनाभूतानि । तदविनाभूतानि च तानि भूतानि च । तेषां तद्व्यापकानां भूतानां चेत्यर्थः । हेत्वन्तरत्वाभावाच्चशब्दवैय्यर्थ्यम् । प्राणानां भूताविनाभावश्चोत्सूत्रित इत्यत आह ॥ **चशब्द इति** ॥ **तत्सहगन्त्रिति** ॥ तत्सहगन्तृप्राणाः अविनाभूता यैस्तानि तेषां भावस्तस्मात् तत्सहगन्तृप्राणाव्यापकत्वादिति यावत् । यद्वा समस्तव्याप्यविवक्षया भूतानां प्राणाविनाभावोक्तिः । अत एव भूताविनाभावार्थ इति प्राणाविनाभूतत्वादित्यादि द्वेधोक्तिः ॥ **अमात्याविनाभूत इति** ॥ अमात्यव्यापको भृत्यो राज्ञा सह गच्छतीत्यर्थः ।

## तत्त्वसुबोधिनी

**अत्र पुनरिति ॥** आर्थिककल्पनायां कृतायामेव तन्मूलभूतविशेषप्रमाणजिज्ञासोदयादनन्तर-सङ्गतिरिति भावः । कुतो नेत्यत आह ॥ **भूतानीति** ॥ ननु वेत्थ यथा पञ्चम्येत्यादि-प्रश्नव्याख्यानयोः भूतानां जीवेन सह गतेस्समर्थितत्वात् कथं विशेषप्रमाणाभाव इत्यत आह ॥ **न चेति** ॥ ननु पूर्वाधिकरणेऽपां सह गमने तासां त्र्यात्मकत्वेन भूतानां सहगमनसिद्धिरित्युक्तत्वा-त्कथमनुक्तिरित्यत आह ॥ **आर्थिककल्पनाया इति** ॥ न च भूतयुक्तः परं लोकमिति विशेषप्रमाणस्योक्तत्वात् कथमेतदिति वाच्यम् । सूत्रकारेण तस्यानुक्तत्वात् । भाष्यकारादिभिस्तु शिष्यहितैषणयोक्तत्वादिति भावः । अनुमानं प्रदर्शयितुं हेतुसिद्ध्यर्थमाह ॥ **अस्तीति** ॥ कुत इत्यतस्तत्र प्रमाणमाह ॥ **यथेति** ॥ किञ्चात इत्यत आह ॥ **प्राणानां चेति** ॥ ननु प्राण-गतेरित्यनेन तत्सहगन्तृप्राणेत्यस्य विशेषणस्योक्तत्वेऽपि तदविनाभूतत्वरूपविशेष्यं केनोक्तमित्यत आह ॥ **चशब्द इति** ॥ एवं सिद्धमनुमानमाह ॥ **अत्रैवमिति** ॥

## वाक्यार्थविवरणम्

**तयोः** ॥ प्रश्नव्याख्यानयोः । भृत्यः राज्ञा सह गत इति शेषः ।

## वाक्यार्थमञ्जरी

ननु पूर्वनयेऽपां सहगमने तासां त्र्यात्मकत्वेन भूतानामपि सहगमनसिद्धिरित्युक्तत्वात् कथमनुक्तिरित्यत आह ॥ **आर्थिककल्पनाया इति** ॥ **ॐ प्राणगतेश्च ॐ** ॥ प्राणानामिन्द्रियाणां जीवेन सहगतिश्रुतेस्तदविनाभूतभूतानामपि तेन सह गतिसिद्धिरित्यर्थः । भृत्य इत्यनन्तरं राज्ञा सह गच्छतीति शेषः ।

॥ इति प्राणगत्यधिकरणम् ॥ ३ ॥

## ४. अग्न्याद्यधिकरणम्

**॥ ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ४ ॥**

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण' (बृ.उ.५-२-१३) इत्यादि श्रुतेर्न प्राणानां जीवेन सह गतिरिति चेन्न भागतोऽग्न्यादिप्राप्तेः ।

'पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु ।
अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ।
पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च' ॥ इति ब्राह्मे ।

ब्रह्माण्डे च—

'मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च ।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वश' ॥ इति ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय प्राणानां जीवेन सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । प्राणगत्या समर्थिता भूतगतिः प्राणगत्यभावे न स्यादतः सा समर्थनीया । प्रकृतप्राणा एव विषयः । जीवेन सह गच्छन्ति न वेति सन्देहः । अनिर्णयः सन्देहवीजम् । सूत्र एव पूर्वपक्षस्योक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद् व्याचष्टे ॥ **अग्नीति** ॥ न प्राणा जीवेन सह गच्छन्ति । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्' इति प्राणानामग्न्यादीन्प्रति गतिश्रुतेः । तथा च प्राणानां जीवेन सह गत्यभावे भूतानामपि तदभावान्मरणमेव मोक्षोऽतः साधनवैयर्थ्यमिति भावः ।

सिद्धान्तांशं व्याचष्टे ॥ **नेति** ॥ नैतच्छ्रुतिवलेन प्राणानां जीवेन सह गतिर्वक्तव्या । प्राणानां भागेनाग्न्यादीन्प्रति गतेर्विद्यमानत्वेन श्रुतेस्तद्विषयत्वादिति भावः । कुतोऽयं विशेष इत्यत आह ॥ **पुरुषस्येति** ॥ एवं प्रतिमरणं भागापगमे कालतः सर्वापगमः स्यात्तथा च सर्वभूतापगम इत्यत आह ॥ पुनरिति ॥ ननु भागतोऽग्न्यादीन्प्रति गच्छद्भिः प्राणैः सह भूतानां गतिरस्ति न वा । अस्ति चेन्न जीवेन सह गतिः । न चेदविनाभाव इत्यत आह ॥ **ब्रह्माण्डे चेति** ॥ अनेन भूतानां

(तत्त्वप्रकाशिका)

**विनिवृत्तिरिति वाक्यं च व्याख्यातं भवति । अतोऽस्ति प्राणानां जीवेन सह गतिस्ततो भूतानामपीति न मरणमेव मोक्षोऽतोऽनुष्ठेयं साधनमिति सिद्धम् ।**

## गुर्वर्थदीपिका

वातं प्राण इत्यत्रेन्द्रियपङ्क्तौ पठितत्वात्प्राणपदेन त्वगिन्द्रियमुच्यते ।

## भावबोधः

**प्राणगत्येति** ॥ तथा च पूर्वोक्तप्राणगतिसमर्थनादन्तरसङ्गतिरिति भावः ॥ **जीवेन सहेति** ॥ अत्र प्राणानां जीवेन सहगतिर्नास्त्युतास्तीति चिन्ता । तदर्थं 'अग्निं वागप्येति' इत्यादिश्रुतिः कार्त्स्न्येन प्राणानामग्न्यादीन् प्रति गतिं प्रतिपादयति उत भागत इति ॥ **यत्रास्येति** ॥ भाष्यव्याख्यानपरेणानेनाग्निं वागप्येतीत्यन्यथोक्तेः प्राणानां च न सहगतिरिति न्यायविवरणमप्युक्तार्थं भवति ॥ **प्राणानां भागेनेति** ॥ अनेन प्राणानां द्विरूपत्वादिति न्यायविवरणं व्याख्यातं भवति ॥ **अनेनेति** ॥ भूतनिवृत्तिर्नामाग्न्यादिमूलरूपाणि प्रति गच्छद्भिः प्राणभागैः सह भूतानामेव गमनम् । न तु सर्वेषां भूतानाम् । तत्संप्रयोगो नाम पुनस्तैः सह तेषां शरीरे प्रवेश एवेति व्याख्यातं भवतीत्यर्थः ।

## भावदीपः

समर्थनफलमाह ॥ **प्राणगत्येति** ॥ **अनिर्णय इति** ॥ करणैर्वावेत्यवियोगश्रुतेः अग्निं वागप्येतीति वियोगश्रुतेश्च निर्णायकादृष्टिप्रयुक्तनिर्णयाभाव इत्यर्थः । यद्वा पूर्वत्र प्राणानां जीवेन सह गतौ श्रुतेरनुक्तेः प्राणा जीवेन सह गच्छन्तीत्यत्र वा नेत्यत्र वा निर्णायकादर्शनकालीनो निर्णयाभावः । भाष्यमाकाङ्क्षाक्रमेण व्याचष्टे ॥ **न प्राणा इति** ॥ सूत्रे नेत्यावर्तते । पूर्वस्माद्विपरिणामेन प्राणगतिपदानुवृत्तिः । प्रकृतत्वाज्जीवेनेत्यन्वेतीति भावः । एतेन प्रागुक्तहेतौ तत्सहगन्तृत्वरूपविशेषणाक्षेपेण पूर्वपक्षकरणादाक्षेपिकी सङ्गतिः सूचिता । आदिपदार्थं व्यनक्ति ॥ **चक्षुरिति** ॥ अग्निं वागप्येतीत्याद्यन्यथोक्तेः प्राणानां च न सहगतिरित्यन्यत्रोक्त्यनुरोधेनान्यथा शब्दार्थं वदन्नेव शेषोक्त्या भाष्यस्य सूत्रव्याख्यानपरतां व्यनक्ति ॥ **इति प्राणानामिति** ॥ करणैर्वावेति श्रुतिस्तु यावद्देहपातं तदवियोगपरेति भावः । किं चात इत्यतः पूर्वाक्षेपद्वारा फलमाह

(भावदीपः)

॥ **तथा चेति** ॥ अग्न्यादीन् प्रतिगतौ सत्यामित्यर्थः । भाष्ये चेन्नेति नञः प्रतियोगितया प्राचीनभाष्यं कृत्स्नमन्वेतीति भावेनाह ॥ **नैतच्छ्रुतीति** ॥ भागत इत्यादि व्याचष्टे ॥ **प्राणानामिति** ॥ **तद्विषयत्वादिति** ॥ एतेन सूत्रे भागवाचिभक्तिशब्दात्तस्येदमिति सम्बन्धमात्रेऽण्प्रत्ययमुपेत्य भाक्तत्वाद्भागविषयत्वादित्यर्थो दर्शितः । अयं भागविषयत्वरूपः ॥ **सर्वभूतेति** ॥ प्राणव्याप्तत्वात्तेषामिति भावः ॥ **अनेनेति** ॥ पश्चापि भूतानि भागतो भागैरेनं जीवं जहति त्यजन्तीति कथनेन भागविषयं व्याख्यातमित्यर्थः ॥ **अत इति** ॥ अग्न्यादिगतिश्रुतेर्भागविषयत्वात्करणैर्वावेति श्रुतेरविरोधादित्यर्थः ।

## अभिनवचन्द्रिका

**अनिर्णय इति** ॥ 'प्राणैर्वाव न वियुज्यत' इति श्रुत्यर्थानिर्णयः सन्देह बीजमित्यर्थः । जीवनदशायां प्राणैर्न वियुज्यत इत्यप्यर्थसम्भवात् श्रुत्यर्थानिर्णय इति भावः । अतोऽस्ति **प्राणानामिति** ॥ ननु न प्राणगत्या भूतगतिसमर्थनं युज्यते । मुक्तावपि प्राणगतिसद्भावेन भूतगतिप्रसङ्गात् । न च मुक्तौ न प्राणगतिरिति शक्यते वक्तुम् । मुक्तावपीन्द्रियसद्भावश्रवणात् अन्यथा दर्शनाद्यभावप्रसङ्गेन मुक्तेरपुरुषार्थत्वप्रसङ्ग इति चेत्, सत्यं सत्येव मुक्तावपीन्द्रियाणि । किंनाम चित्स्वरूपाण्येव तानीन्द्रियाणि । अस्माभिस्तु प्राकृतेन्द्रियाणामेव भूतैर्व्याप्तिरुक्तेति न कश्चिद्दोषः । ननु प्रलयकाले भूतानि जीवसम्बद्धानि न वा । नेति पक्षे तस्यैव मुक्तित्वप्राप्त्या वैराग्यादिवैयर्थ्यम् । आद्ये प्रलयत्वव्याघातः । भूतभौतिकादिविलयस्य प्रलयशब्दार्थत्वादिति चेत् । न जीवबन्धक भूतेन्द्रियव्यतिरिक्तानामेव लयः न तु तद्बन्धकानामित्यङ्गीकारात् । तदुक्तं ब्रह्मतर्के 'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च । कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् । संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत्' इति । न च प्राणे भूतसद्भावानुक्तिः । इन्द्रियाणां सद्भावोक्त्या तदविनाभावबलेन तस्यापि सिद्धेः ।

पूर्वपक्षस्तु न प्राणाः जीवेन सह गच्छन्ति' तत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति' इत्यादिना प्राणानामग्न्यादौ गतिश्रवणात् । तथा च प्राणानां गत्यभावेन साधकाभावात् भूतानामपि न सहगतिरिति मरणमेव मोक्ष इति व्यर्थं वैराग्यादीति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु प्राणा जीवेन सह गच्छन्ति 'एतैर्वाव न वियुज्यत' इति श्रुतेः । न चा'ऽग्निं वागप्येति' इति विशेषश्रुतिविरोधः प्राणानां भागेन अग्न्यादौ गत्यङ्गीकारेण श्रुतेस्तत्परत्वात् । तदुक्तं पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्' इति । ननु प्रतिमरणं भागापगमे कालतः सर्वापगमः स्यादिति चेन्न । पुनः शरीरसम्प्राप्तिसमये अग्न्यादौ प्रविष्टानां भागानां जीवसहगतभागेषु प्रवेशाङ्गीकारात् । एवं भूतानामपि मरणकाले भागेन जीवेन सह गतिः भागेन अग्न्यादिगतिर्भवति । पुनः शरीरप्राप्तौ जीवेन सहगतेषु भूतभागेषु अग्न्यादीन्प्रति गतानां भूतभागानां प्रवेशो भवतीति बोध्यम् । अतोऽस्ति प्राणानां सहगतिः । ततो भूतानामपीति न मरणमात्रेण मोक्षः । अतोऽनुष्ठेयं साधनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र प्राणानां जीवेन सह गतिर्नास्त्युतास्तीति चिन्ता । तदर्थं अग्निं वागप्येतीत्यादिश्रुतिः कात्स्न्र्येन प्राणानामग्न्यादिगतिं प्रतिपादयत्युत भागत इति ॥ **अनिर्णय इति** ॥ निर्णायक-प्रमाणादर्शनमित्यर्थः । ननु पूर्वटीकायां 'प्राणैर्वाव न वियुज्यत' इति प्राणानां सहगमने प्रमाण-स्योपन्यस्तत्वात्कथं तदभाव इति चेन्न । प्रतिपक्षश्रुतिसद्भावेन तस्यानिर्णायकत्वादित्यर्थः । यद्वैतदधिकरणं मनसि निधाय तत्र शिष्यहितार्थमसिद्धिः परिहृतेति ज्ञेयम् । सूत्रे नेत्यावर्तते । प्राणगतेरित्येतद्विभक्तिविपरिणामेन प्राणगतिरित्यन्वीयते । प्राणानामिति बुद्ध्या विवेकेनानुषज्यते । जीवेन सह प्राणगतिः प्राणानां अग्न्यादिश्रुतेरिति पूर्वपक्षखण्डार्थं मनसि निधायान्यथोक्तिरिति न्यायप्रदर्शकं भाष्यं व्याचष्टे ॥ **न प्राणेनेत्यादिना** ॥ यत्र यस्यामवस्थायाम् । अस्य पुरुषस्य मृतस्य म्रियमाणस्य सत इत्यर्थः ॥ **द्विरूपत्वमिति** ॥ सिद्धान्तन्यायप्रदर्शकं न भाक्तत्वादिति सूत्रं प्राणानां भाक्तत्वादिति तदनुवृत्तिमभिप्रेत्य व्याकुर्वद्भाष्यं व्याचष्टे ॥ **प्राणानामिति** ॥ अग्न्यादि-गतिश्रुतेर्भाक्तत्वात् भागतोऽग्न्यादिविषयत्वादित्यप्यनुवृत्तिंमभिप्रेत्य व्याचष्टे ॥ **श्रुतेस्तद्विषय-त्वादिति** ॥ अस्मिन्पक्षे भागतोऽग्न्यादिप्राप्तेरिति भाष्यस्य प्राप्तिविषयत्वादित्यर्थः ॥ **अनेनेति** ॥ भूतनिवृत्तिर्नामाग्न्यादिमूलरूपाणि प्रति गच्छद्भिः प्राणभागैस्सह भूतभागानामेव गतिर्न सर्वेषां । तत्संप्रयोगो नाम पुनस्तैस्सह तेषां देहे प्रवेश एवेति भारतवाक्यं व्याख्यातं भवतीत्यर्थः ।

## तत्त्वसुबोधिनी

**प्राणगत्येति** ॥ तथा च पूर्वोक्तप्राणगतिसमर्थनादनन्तरसङ्गतिरिति भावः । कुतो नेत्यत आह ॥ **यत्रास्येति** ॥ तर्हि यत्रास्येति श्रुतेः का गतिरित्यत आह ॥ **प्राणानामिति** ॥ **अनेनेति** ॥ भूतनिवृत्तिर्नामाग्न्यादिमूलरूपाणि प्रति गच्छद्भिः प्राणभागैः सह भूतभागानामेव गमनम् । न तु सर्वेषां भूतानाम् । तत्संप्रयोगो नाम पुनस्तैस्सह तेषां शरीरे प्रवेश एवेति व्याख्यातं भवतीत्यर्थः ।

## वाक्यार्थविवरणम्

भाष्ये 'तमेवानुविशन्ति' इत्यत्र येऽधिदैवं प्राप्ता भागास्त इति शेषः ॥ **न चेदिति** ॥ भूतानां प्राणैर्विनाभाव एव प्राप्त इत्यर्थः ।

## वाक्यार्थमञ्जरी

**अनिर्णयः** निर्णायकाभावः ॥ अग्निं वागप्येतीत्यादिना प्राणानामग्न्यादीन् प्रति गमनश्रवणान्न जीवेन सह तेषां गतिरिति चेन्न । अग्न्यादीन् प्रति गतिश्रुतेर्भाक्तत्वात् भागेनाग्निगतिविषयत्वात् भागान्तरेण जीवेन सहगतिरुपपन्नेत्यर्थः । दिशो दिग्देवताः ॥ **अनेनेति** ॥ भूतनिवृत्तिर्नामाग्न्यादि-मूलरूपाणि प्रति गच्छद्भिः प्राणभागैः सहभूतभागगमनमेव गमनं न तु सर्वेषां भूतानाम् । तत्संयोगो नाम पुनस्तैःसह तेषां शरीरप्रवेश एवेति व्याख्यातं भवतीत्यर्थः ।

॥ इति अग्न्याद्यधिकरणम् ॥ ४ ॥

## ५. प्रथमश्रवणाधिकरणम्

**।। ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ।। ५ ।।**

'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छां.उ.५-४-२) इति प्रथमाऽग्नौ श्रूयते न भूतानि जुह्वतीति । अतो नेति चेन्न । ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां.उ.५-९-१) इत्युपसंहारोपपत्तेः ।

### तत्त्वप्रदीपिका

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।। 'असौ वाव लोको गौतमाग्निः' इत्युक्त्वा 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रुतेः प्रथमाग्नौ श्रद्धा हूयते, भूतगतिपक्षे भूतानि जुह्वतीति भाव्यम् । ततो भूतैरनुपक्रमणान्नात्र भूतगतिरिति चेन्न । ता एव 'आपः पुरुषवचसो भवन्ति' इति प्रस्तुता आपः श्रद्धावदिष्टादिकारिसंयुक्ताः श्रद्धाशब्देनोच्यन्ते । अत्यन्ताविविक्तत्वात्, अयो दहतीत्यादिवत् । अत एव च सम्परिष्वक्त इत्याह । तथोक्तिः श्रद्धाप्रधानत्वं पुण्यानां शंसति । 'श्रद्धया हूयते हविः' इति हि श्रुतिः ।

'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह' ।। इति च भगवद्गीतासु ।

'श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धस्स एव स' इति च ।।

'श्रद्धा स्वरूपं ज़ीवस्य तस्माच्छ्रद्धाविभेदतः ।
उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक्पृथक्' ।। इति ब्रह्मवैवर्ते ।

अतः श्रद्धामयः पुण्यकर्ता प्रधानैः भूतैः सम्परिष्वक्तः स्वर्गं नीयत इति श्रद्धां जुह्वतीत्याह । स्वर्गादीनामग्नित्वं देवानां भोगस्थानत्वात् । श्रद्धादीनां होम्यत्वं देवभोग्यत्वात् । तं चन्द्रलोकस्थं ज्योतिर्मयाह्लादकरदेहं सोमशब्दवाच्यं पुण्यभोगावसाने क्षीयमाणदेहं पर्जन्ये क्षिपन्ति । ततो वर्षेण सह पृथिवीं नयन्ति । तं च व्रीह्यादिशरीरस्थं पुरुषे क्षिपन्ति । ततो रेतस्स्थं योषायाम् । एवं पञ्चाहुतयः । इमास्त्वापादपरिसमाप्तेस्सप्रमाणं प्रपञ्चयति ।

'नारायणादयः पञ्च क्रमात्पञ्चाग्नयः स्मृताः ।
अदनादगनेतृत्वान्नितरामचलत्वतः ।।

(तत्त्वप्रदीपिका)

असौ लोकः प्रकाशत्वात्प्राणस्थत्वाच्च केशवः ।
पर्जन्यो जनको यस्मात्पृथिवी प्रथितत्वतः ॥
पुरुषः पुरु यस्मात्स योषा जोष्यत्वतोऽखिलैः' ॥ इति च साम्यसंहितायाम् ।

'पञ्च पञ्च स्वरूपेण सूर्यादौ संस्थितो हरिः ।
स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परे' ॥ इति च ।

## तत्त्वप्रकाशिका

अत्र पुनर्भगवत्प्राप्तिसाधनवैराग्याय भूतानां जीवेन सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । भूतानां जीवेन सह गत्यभावे मरणस्योक्तो मोक्षत्वाभावो न स्यादतस्तत्समर्थनमावश्यकम् । भूतान्येव विषयः । किं जीवेन सह गच्छन्ति न वेति सन्देहः । उभयविधवस्तुदर्शनं सन्देहबीजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तत्पठित्वा पूर्वपक्षांशं तावद् व्याचष्टे ॥ **प्रथम इति** ॥ न जीवेन सह गतिर्भूतानाम् । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युत्क्रान्तस्य श्रद्धयेष्टवतः श्रद्धासहितस्यैव द्युयाख्ये प्रथमाग्नौ होमश्रवणात् । भूतानामपि सहगतावुपक्रमे तथोक्तिप्रसङ्गात् । अतो भूतानां सहगत्यभावेन मरणस्यैव मोक्षत्वात् व्यर्थं वैराग्यादीति भावः ।

सिद्धान्तांशं व्याचष्टे ॥ **नेति** ॥ प्रथमाग्नौ भूतसहितस्य होमाश्रवणान्न भूतानामसहगतिः कल्पनीया । यतः प्रथमाग्नावप्यापो होम्यतया श्रूयन्ते श्रद्धाशब्दार्थरूपतया । अयं खलु शब्दोऽजहल्लक्षणया श्रद्धयाऽद्भिश्च युक्तं जीवमाह । तत्कुतः । उपसंहारेऽपां जीवेन सह गतिश्रवणात् । तदनुसारेणैवमुपक्रमार्थकल्पने तदुपपत्तेः । अन्यथा विरोधेनाप्रामाण्यप्रसङ्गादिति भावः । न चागमनमात्रविषयत्वमुपसंहारस्य वाच्यम् । भूतानि त्यजन्तीत्यनुक्त्वा सोमो राजा सम्भवतीत्यादिवदापो भवन्तीति चानुक्त्वापः पुरुषवचस इत्यनुवादात् । तथाप्युपसंहारानुसारित्वमुपक्रमस्य कुतः । उपसंहारस्योपक्रमव्याख्यानरूपत्वेन प्राबल्यादुपक्रमप्रामाण्योपपत्त्यर्थमुपसंहारानुसारित्वस्य आवश्यकत्वात् । [1]व्याख्यानाननुसारिव्याख्येयस्य तदर्थेऽप्रामाण्यदर्शनात् । न च वाच्यमुपक्रमपूर्वकत्वादुपसंहारस्य न प्राबल्यमिति स्वरूपेणोपसंहारस्योपक्रमसापेक्षत्वेऽप्यर्थप्रतीतौ वैपरीत्यादिति । अतो भूतानां जीवेन सह गतिसद्भावान्मरणस्य मुक्तित्वाभावेनापेक्षितं वैराग्यादिसाधनमिति सिद्धम् ।

---

१. व्याख्यानानुसारिव्याख्येयस्य तदर्थे प्रामाण्यदर्शनात् । (पाठान्तर)

## गुर्वर्थदीपिका

यद्यपि 'वेत्थ यथा' इति प्रश्नवाक्ये आप इति भूतानि श्रूयन्ते । तथाऽपि होमोपक्रमवाक्ये नास्तीति भावेनाऽऽह– **उपक्रम इति ॥** उपक्रमे होमोपक्रमवाक्ये । न चागमनमात्रविषयत्वमित्यत्र आगमनमप्सु प्राप्तिः । 'सोमो राजा सम्भवति' इति वाक्ये सोमं राजानं स्वर्गतः पुरुषः प्राप्नोतीति यथाऽर्थः कथ्यते । एवमत्रापि आपः पुरुषवचसो भवन्ति' इति वाक्ये अप्शब्दोपलक्षितपञ्चभूतानि जीवः प्राप्नोतीत्यर्थोऽस्तु । तथा चाप्सु आगमनमात्रविषयमुपसंहारवाक्यमिति भावः । प्रश्नवाक्ये परिहारवाक्ये चेति स्थलद्वयेऽपि विसदृशप्रयोगादर्थभेदोऽप्यस्तीति दर्शयितुं अनुवादादित्युक्तम् । यद्वा 'पुरुषवचसो भवन्ति' इति शरीरसंज्ञाविधानाय आप इति प्राक्सिद्धानामनुवादान्न नूतनतया तत्प्राप्तिरित्यर्थः ।

## भावबोधः

**अत्र पुनरिति ।** 'त्र्यात्मकत्वात्' इत्युक्तार्थिककल्पनायाः कल्पनामूलभूतविशेषप्रमाणं विना स्वरूपं न निर्वहतीति 'प्राणगतेश्च' इत्याद्यधिकरणद्वयेन स्वरूपनिर्वाहकोपपत्तिरूपविशेष-प्रमाणोक्त्यनन्तरमवसरप्राप्तमब्गातिरूपं कल्पकं विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किं जीवेनेति ॥** अत्र भूतानां जीवेन सहगमनं नास्त्युतास्तीति चिन्ता । तदर्थमुपपत्तिमूलकतयोक्तं भूतगमनकल्पकमपां जीवेन सहगमनं नास्त्युतास्तीति । तदर्थमुपक्रमे श्रुतः श्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणाबाद्युपलक्षक इति । तदर्थमुपक्रमादुपसंहारो दुर्बलः प्रबलो वेति । एवं च 'अपः पुरुषवचसः' इत्युपसंहारस्य दौर्बल्ये बाधकाभावेनोपक्रमगतश्रद्धाशब्दस्य स्वार्थ-मात्रपरत्वे अब्गत्यसिद्धौ कल्पकाभावेन भूतगत्यसिद्धिरिति पूर्वपक्षे उपसंहारस्याधिक्ये तदनुसारे-णोपक्रमगतश्रद्धाशब्दस्याब्लक्षकतयाऽपां जीवेन सहगतिरूपकल्पकसिद्धौ भूतगतिसिद्धिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ॥ **न जीवेनेति ॥** एतेन भूतानामसहगतिरिति न्याय-विवरणगतसाध्यप्रतिपादकांशो व्याख्यातः ॥ **प्रथमाग्नौ होमश्रवणादिति ॥** अनेन 'प्रथमेऽ-श्रवणात्' इति सूत्रांशः अकारप्रश्लेषं विना प्रथमाग्नौ श्रूयत इति भाष्येण व्याख्यात इत्युक्तं भवति ॥ **भूतानामपीति ॥** 'न भूतानि जुह्वति' इति भाष्य आख्यानपरेणानेन प्रथमतो न भूतानि जुह्वतीति विशेषानुक्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति । तथोक्तिप्रसङ्गादित्यनेन प्रथमे

(भाववोधः)

श्रवणादिति सूत्रांश अकारप्रश्लेषेण प्रथमे उपक्रमे तथा प्रथमे अग्नौ भूतानि जुह्वतीति विशेषश्रवणादिति न भूतानि जुह्वतीति भाष्येण विशेषानुक्तेरिति न्यायविवरणेन च व्याख्यात इत्युक्तं भवति । अत एव वक्ष्यति ॥ **प्रथमाग्नौ भूतसहितस्य होमाश्रवणादिति** ॥

नन्वश्रवणमात्रस्य 'प्राणगतेः' इत्युक्तयुक्तिबाधकत्वायोगात् कथं 'प्राणगतेश्च' इत्येतदनन्तर-मेतदधिकरणोत्थानमिति चेन्न । यस्यामार्थिककल्पनायां प्राणगतिरूपोपपत्तिर्मूलत्वेनोच्यते । साऽनुपपन्ना । प्रथमे श्रवणे नावादिरूपं कल्पकासिद्धेरित्याक्षेपसमाधानार्थस्यास्य तदनन्तर-मप्युत्थानसम्भवादिति । नन्वपां श्रद्धारूपत्वाभावात् कथं श्रद्धारूपेणेत्युक्तमित्यतः श्रद्धाशब्दस्यापि ता एवार्थ इति न्यायविवरणं मनसि निधाय तदर्थमाह– **श्रद्धाशब्दार्थरूपतयेति** ॥ ननु श्रद्धा-शब्दस्याप्सु योगरूढ्योरभावात् कथं तदर्थत्वमित्यत आह ॥ **अयं खल्विति** ॥ यथा श्रद्धामात्रस्य होम्यत्वाभावात् श्रद्धाशब्दस्य तन्मात्रार्थत्वानुपपत्त्या श्रद्धायुक्तजीवोपलक्षकत्वं तथोपसंहारान्यथानु-पपत्त्यावुपलक्षकत्वमप्यङ्गीकार्यमिति भावः ॥ **उपसंहार इति** ॥ अनेनोपसंहारोपपत्तेरिति भाष्यव्याख्यानपरेण भूतानि जुह्वतीत्युपक्रमादपि 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारस्याधिक्यात् तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्युपपत्तेरिति न्यायविवरणमप्युक्तार्थं भवति । अन्यथा विरोधेनेत्यनेनोपक्रमविरोधेनोपसंहारानुपपत्तेरुपक्रम-प्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यमिति न्यायविवरणं व्याख्यातं भवति ।

ननु स्यादियमुपसंहारानुसारेणोपक्रमार्थकल्पना । यद्युपसंहारेऽपां जीवेन सहगतिश्रवणमेव स्यात् । न चैवम् । आप इति सामान्योक्तेरागमनमात्रविषयत्वोपपत्तेरित्याशङ्क्य प्रतिषेधति ॥ **न चेति** ॥ कुत इत्यत आह ॥ **भूतानीति** ॥ यद्युपसंहारस्य आगमनमात्रविषयत्वं तर्हि मरणानन्तरं भूतानां जीवेन सहगमनाभावसिद्ध्यर्थमुत्क्रान्तो भूतानि त्यजतीति वक्तव्यं स्यात् । आगमनकाले जीवस्याद्भिः साहित्यसिद्ध्यर्थं तस्या आहुतेः 'सोमो राजा सम्भवति, वर्षः सम्भवति, अन्नं सम्भवति, रेतः सम्भवति' इतिवत् आपः सम्भवन्तीत्यपि वक्तव्यं स्यात् । न चैवमुक्तिरस्ति । तथा चाप्राप्तस्यानुवादायोगादाप इत्यनुवादबलान्मरणानन्तरं सहगतानामेवापां पुनरागमनमिति ज्ञायत इति भावः ।

ननु रेतः सम्भवतीत्यत्र रेतःशब्दस्यापदत्वसम्भवेनापां प्रकृतत्वादाप इत्यनुवादोपपत्तिरिति चेन्न । तस्याहुते रेतः सम्भवतीति रेतसोऽन्नकार्यत्वोक्तेः । न ह्यपामन्नकार्यत्वमस्ति । एवं चेत्यनेन

(भाववोधः)
प्रकरणे रेतोरूपायां पञ्चम्यामाहुतौ योषाग्नौ हुतायां मरणानन्तरं जीवेन सहागताः पुनः भूतत्रयात्मिका आपः पुरुषवचसो भवन्तीत्यर्थः सम्पद्यत इति ज्ञातव्यम् । व्याख्यानस्य पश्चात्तनत्व-नियमादिति न्यायविवरणं व्याख्यातुं तन्निवर्तनीयामाशङ्कामाह ॥ **तथापीति** ॥ वैपरीत्यस्यापि सम्भवादिति भावः । उदाहृतन्यायविवरणाभिप्रायमाह ॥ **उपसंहारस्येत्यादिना** ॥ उपक्रमानु-सारित्वनियमेऽप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायत इति न्यायविवरणं व्याख्याति ॥ **न च वाच्यमिति** ॥

## भावदीपः

फलिताभिप्रायेणाह ॥ **भूतानामिति** ॥ फलितोक्तिरपि सङ्गत्युक्तिसौकर्याय । एवमग्रेऽपि । श्रद्धाशब्दस्य सर्वभूतात्मकाबुपलक्षकत्वकथनेनेति योज्यम् । तेन न प्राणगतेश्चेत्यादिना पौनरुक्त्यमिति ध्येयम् । एतेन 'अग्निं वाक्' इत्यादिश्रुतेर्भाक्तत्वोक्तिप्रसङ्गात् श्रद्धाशब्दस्याप्य-मुख्यत्वरूपभाक्तत्ववर्णनाद्वा श्रद्धाशब्दस्य श्रद्धावज्जीवविषयत्वस्येव जीवेनात्यन्ताविविक्ततया जीवभागवज्जीवसंश्लिष्टभूतविषयत्वस्यापि वर्णनाद्वा अनन्तरसङ्गतिरपि सूचिता । यथोक्तं तत्त्वप्रदीपे श्रद्धावदिष्टादिकारिसंयुक्ता आपः श्रद्धाशब्देनोच्यन्ते अत्यन्ताविविक्तत्वात् अयो दहतीतिवत् । अत एव सम्परिष्वक्त इत्याहेत्यादि । यद्वा एवं त्रिभिर्नयैराद्यसूत्रोक्तप्रश्नादिस्थाप्शब्दस्य त्र्यात्मकत्वादिनोपसंहारस्य सर्वभूतगतिपरत्वमुक्त्वा इदानीमुपक्रमस्य तदुच्यत इति सङ्गतिः ॥ **उभयविधेति** ॥ लोके राजादिना सहगन्तृवस्तूनामसहगन्तृवस्तूनां च दर्शनमित्यर्थः । ननु प्राणगत्यादिरूपविशेषप्रमाणस्योक्तत्वात् लोकदृष्टिमात्रेण कथं सन्देह इति चेन्न । तदनिर्णय-दशायामेवास्य सन्देहबीजत्वाशयात् । तन्निर्णयेऽपि प्राणगत्यादिना भूतान्यपि सह गच्छन्त्युत प्रथमे श्रवणाभावान्न गच्छन्ति लोके द्विविधवस्तूनामपि दर्शनादिति तात्पर्यात् । भूतानामसहगतिरित्य-न्यत्रोक्त्यनुरोधेन नेति चेदिति प्रतिज्ञाभाष्यं व्याचष्टे ॥ **न जीवेनेति** ॥ सूत्रे नञावर्तते । प्रकृतत्वा-ज्जीवो भूतैः सम्परिष्वक्त इति चानुवर्तत इति भावः । हेतुपरात इतिपदान्वयेन श्रूयत इत्यन्तभाष्यार्थमाह ॥ **तस्मिन्निति** ॥ 'वेत्थ यथेमाः प्रजा प्रयत्यो विप्रतिपद्यन्त' इति श्वेतकेतुं प्रति प्रवाहणकृतप्रश्नवाक्यानुरोधादाह ॥ **उत्क्रान्तस्येति** ॥ अथ 'ये यज्ञेन दानेन तपसा लोकान् जयन्ति' इति पञ्चाग्निविद्यागतोपरितनवाक्यं मनसि निधायाऽऽह ॥ **श्रद्धयेष्टवत इति** ॥ एतेन

(भावदीपः)

श्रद्धापदेन यज्ञादिकृज्जीवस्योक्त्या क्रियमाणयज्ञादेः श्रद्धापूर्वकत्वशंसनं फलमिति दर्शितम् । यथोक्तं तत्त्वप्रदीपे । तथोक्तिः श्रद्धाप्रधानत्वं पुण्यानां शंसतीत्यादि । श्रद्धामित्यस्यार्थः श्रद्धासहितस्येति । 'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः' इति जीवस्य श्रद्धामयत्वोक्तेरिति भावः । तस्मिन्नेतस्मिन्नग्नावित्यस्यार्थमाह ॥ **द्व्याख्य इति** ॥ 'असौ वाव लोको गौतमाग्निः' इति द्युलोकस्य पूर्वं प्रकृतत्वादिति भावः ॥ **प्रथमेति** ॥ द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चाग्निषु प्रथमाग्नावित्यर्थः । स्वर्गादीनामग्नित्वं देवानां भोगस्थानत्वात् । श्रद्धादीनां भोग्यत्वं देवभोग्यत्वादिति तत्त्वप्रदीपोक्तं बोध्यम् । श्रवणादित्यनेन सूत्रे प्रथमे श्रद्धायुक्तजीवहोमश्रवणादित्यर्थः उक्तः । न भूतानि जुह्वतीत्यत इत्यस्य भाष्यस्य भूतानां होमाश्रवणादित्यर्थकस्य भूतहोमाश्रवणं श्रुतौ निमित्तान्तरप्रयुक्तमस्तु न भूतानामसहभावप्रयुक्तम् । येनादावश्रवणमात्रेण गत्यभावो ज्ञायेतेत्याशङ्कानिवृत्त्यर्थं भूतहोमानुक्तौ निमित्तान्तराभावसूचनाय व्यतिरेकमुखेनार्थमाह ॥ **भूतानामपीति** ॥ एतेन प्रथमतो भूतानि जुह्वतीति विशेषानुक्तेरित्यन्यत्राप्युक्तहेतोरप्रयोजकत्वं निरस्तं बोध्यम् । एतेन सूत्रे प्रथमे उपक्रमे भूतानां होमाश्रवणादित्यप्यर्थ उक्तो भवति । फलोक्त्योपसंहरति ॥ **अत इति** ॥ प्रथमे उपक्रमे, श्रद्धासहितस्यैव होमश्रवणाद्भूतयुक्तस्याश्रवणादित्यर्थः । प्राणगत्या भूतगत्यनुमानं आपः पुरुषवचस इति पञ्चमाग्नावुक्त्या अर्थादपां सहगतिकल्पनं तासां त्र्यात्मकत्वेनार्थात्सर्वभूतगतिकल्पनं चानन्यनिमित्तकश्रौतोपक्रमविरोधादयुक्तमिति भावः । भाष्ये नेति नञः प्रथमाग्नौ श्रूयते न भूतानीत्यादिप्राचीनवाक्यार्थः प्रतियोगितया अन्वेतीति भावेन अर्थमाह ॥ **प्रथमेति** ॥ तत्र हेतुतया ता एवेत्यादिभाष्यं व्याचष्टे ॥ **यत इति** ॥ सूत्रे हिर्हेताविति भावः । हूयन्त इत्यस्य व्याख्या होम्यतयेत्यादि । उपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्यन्यत्रोक्त्यनुरोधेन श्रद्धारूपतयेत्यस्यार्थमाह ॥ **श्रद्धेति** ॥ तद्व्यनक्ति ॥ **अयमिति** ॥ अजहती स्वार्थमत्यजन्ती या लक्षणा तयेत्यर्थः । काकेभ्यो दधि रक्ष्यतामित्यत्र काकशब्द इवेति भावः । इति त्वित्यादिभाष्यमवतार्य व्यनक्ति ॥ **तत्कुत इति** ॥ **गतिश्रवणादिति** ॥ अर्थादिति भावः । उपक्रमविरोधेनोपसंहारानुपपत्तेरित्यन्यत्रोक्तिमनुरुध्य भावमाह ॥ **अन्यथेति** ॥ उपसंहारानुरोधेनोपक्रमस्यार्थकल्पने प्रक्रमविरोधेनोपसंहारस्याप्रामाण्यप्रसङ्गादित्यर्थः । तच्चानिष्टम् । वक्ष्यमाणादिशा तस्य प्राबल्यादिति भावः ।

ननूपसंहारस्यान्यपरत्वान्न तदनुसारित्वं प्रक्रमस्य येन लक्षणाश्रीयेतेति भावेनाशङ्कते ॥ **न चेति** ॥ द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निषु प्रथमाग्न्यादिहोमानन्तरं यथाक्रमं 'तस्या आहुतेः

(भावदीपः)

सोमो राजा भवति तस्या आहुतेः वर्षं भवति अन्नं भवति रेतो भवति' इति स्वर्गादिषु भोगावसाने योनिं प्राप्तुमागन्तुप्रस्थितस्य जीवस्य मध्ये सोमवर्षादिष्ववस्थानबोधकतया तस्यागमनद्वारविषयाणि श्रुतानि चत्वारि वाक्यानि । एवं 'आपः पुरुषवचसो भवन्ति' इति वाक्यस्यापि रेतोद्वारा योषिदाख्यपञ्चमाग्निं प्राप्तस्य पुनरन्यत्प्रत्यागच्छतोऽपां द्वारत्वबोधनपरत्वमेव न तु जीवेन सहापां गतिविषयत्वमित्यर्थः । यद्वा जीवस्य स्वर्गादागमनदशायामेव चन्द्रवर्षादिसाहित्योक्तिवदापः पुरुषवचस इति वाक्येऽप्साहित्यमुच्यते न त्वितः प्रेत्य स्वर्गं गच्छतः तद्गमनदशायाम् । अतो जीवस्यागमन एवाप्साहित्यपरत्वमुपसंहारस्य न तु गमनेऽप्यप्साहित्यपरत्वमिति न वाच्यमित्यर्थः । आगमनमात्रविषयत्वे कल्पकाभावोक्तिपूर्वं गतिविषयत्वे कल्पकमाह ॥ **भूतानीति** ॥ एवं कल्पनायां हि कल्पकं भवत् द्विविधं भवति । आदौ गतिकाले भूतानि त्यजतीत्युक्तिर्वा मध्ये सोमादिसायुज्यभवनोक्तिवत् आपो भवन्तीत्यप्साहित्यभवनोक्तिर्वा नोभयथोक्तिरस्ति । प्रत्युत या आपः योऽद्भिरुपेत इति यावत् । पुरुषवचसः पुरुषशब्दवाच्यो भवतीत्यनुवादेन देहत्यागानन्तरमपि जीवेन सहैव स्थित इत्यवगमात् गतिविषयत्वमप्यवश्यं वाच्यमिति भावः । 'सोमो राजा सम्भवति' इत्यादि तु तत्स्वाभाव्यापत्तिरित्यत्र व्याख्यास्यते । उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्व-मङ्गीकर्तव्यं व्याख्यानस्य पश्चात्तनत्वनियमादित्यन्यत्रोक्तं शङ्कापूर्वं व्यनक्ति ॥ **तथापीति** ॥ उपसंहारस्य भूतगतिविषयत्वेऽपीत्यर्थः । व्याख्यानत्वोक्तेरुपयोगमाह ॥ **उपसंहारस्येति** ॥ विवृतमेतत्समन्वयसूत्रचन्द्रिकायाम् । प्रपञ्चितं च गुरुपादकृतोपसंहारविजये ॥ **अप्रामाण्येति** ॥ 'तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपोवधीन्त्वेषं वचो अपोवधीँ स्वाहा' इति मन्त्रव्याख्येयस्य उग्रं वच इत्यस्य क्रूरं वचनमित्यर्थे 'अशनापिपासे ह वा उग्रं वच' इति व्याख्यानाननुसारिण्य-प्रामाण्यदर्शनात् । तथा तत्सत्यमिति व्याख्येयस्य सत्यशब्दस्य सदिति प्राणेऽस्तीत्यन्नमित्यादि-व्याख्यानाननुसारिणि पारमार्थिकत्वादिरूपेऽर्थे अप्रामाण्यदर्शनादुपसंहारानुसारित्वमावश्यकमिति पूर्वेणान्वयः । उपक्रमानुसारित्वनियमेऽपि उपसंहारस्य उपसंहारेणैव उपक्रमार्थो ज्ञायत इति अन्यत्रोक्तं शङ्कागर्भं वाक्यं बीजोक्तिपूर्वं व्यनक्ति ॥ **न च वाच्यमित्यादिना** ॥ यत्तु मीमांसकैरुपक्रमस्य प्राबल्यमुक्तम् । यच्च नवीनोपक्रमपराक्रमे स्वकृतग्रन्थे उपक्रमप्राबल्यं प्रपञ्चितं तत्तु तर्कताण्डवे गुरुपादकृतोपसंहारविजये च निपुणतरं निराकृतमिति नेहास्माभिः प्रपञ्च्यते ॥ **अत इति** ॥ उक्तदिशा प्रथमेऽपि त्र्यात्मिकानामपां गतिश्रवणादित्यर्थः ।

## अभिनवचन्द्रिका

**उभयविधवस्तुदर्शनमिति** ॥ संयुक्तेषु अनेकेषु धूमाग्निपाषाणेषु अग्निगतौ धूमस्य गतिः पाषाणस्यागतिरिति उभयविधवस्तुदर्शनं सन्देहबीजमित्यर्थः । यद्यपि पूर्वाधिकरणोक्तमत्र यथासम्भवादिकमेवेहापि सन्देहबीजं सम्भवतीति तदेव वक्तव्यम्, तथापि अधिकारिभेदेनेमान्यधिकरणानि प्रवृत्तानीति ज्ञापनाय सन्देहबीजान्तरमुक्तम् । अत एव पूर्वाधिकरणेषु निर्णायकानामुक्तत्वेन सन्देहानुत्पादो न मन्तव्यः ॥ **मरणस्यैव मोक्षत्वादिति** ॥ ननु भूतानां सहगत्यभावेऽपि न मरणमात्रस्य मोक्षत्वं युज्यते । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धा जुह्वति' इति सृष्ट्यर्थं होमश्रवणात् । 'आपः पुरुषवचसो भवन्ति' इति सृष्टिश्रवणाच्च, तदन्यथानु पपत्यैव भूतगत्यभावेऽपि मुक्तत्वाभावसिद्धेः । ततश्च कर्तव्यमेव वैराग्यादीति चेत् न ब्रूमो वयं वस्तुतः मरणमेव मुक्तिरिति । येनोक्तदोषः स्यात्, किंनाम 'भूतबन्धो हि बन्धः । स्यात् मुक्तिस्तेभ्यो विमोचनम्' इति वदतः सिद्धान्ततो मरणमेव मोक्षः स्यात् । ततश्च व्यर्थं वैराग्यादीति ॥ **सोमो राजा सम्भवतीति** ॥ जीवः सोमो राजा चन्द्रः तदन्तर्गतो भवतीति यावत् ।

पूर्वपक्षस्तु भूतानि न जीवेन सहगच्छन्ति । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युपक्रमे श्रद्धासहितस्यैव होमाभिधानात् । भूतानामपि सहगतौ उपक्रमे तथोक्तिप्रसङ्गात् । अतो भूतानां सहगत्यभावेन भूतानां विनिवृत्तिरेव मोक्ष इति वदतो मरणस्यैव मोक्षत्वप्रसङ्गात् व्यर्थं वैराग्यादीति ।

सिद्धान्तस्तु प्रथमाग्नौ भूतसहितस्य होमाश्रवणात् न भूतानामसहगतिर्वक्तव्या श्रद्धाशब्दस्याऽजहत्स्वार्थलक्षणयाऽप्श्रद्धाविशिष्टजीववाचित्वात् । उपसंहारे अपां जीवेन सह गतिश्रवणात् उपसंहारानुसारेणैव उपक्रमस्य नेयत्वात् । न चाऽऽगमनमात्रविषयत्वमुपसंहारस्येति वाच्यम् । मरणकाले तत्परित्यागानुक्तेः । मध्ये संयोगमनभिधाय 'आपः पुरुषवचसो भवन्ति' इत्यनुवादेन सहगमनस्यैव कल्प्यत्वात् । अतो भूतानां जीवेन सहगतिसद्भावात् मरणस्य मुक्तित्वाभावेनाऽपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ।

### वाक्यार्थमुक्तावली

**अत्र पुनरिति** ॥ त्र्यात्मकत्वादित्यार्थिककल्पनाया मूलभूतमनुमानं तृतीये निरूपितम् । तदसिद्धमिति शङ्का तृतीये निरस्ता । इदानीमनुमानस्य तर्कबाधनिरासादनन्तरसङ्गतिरिति भावः ।

(भावदीप:)

सोमो राजा भवति तस्या आहुते: वर्षं भवति अन्नं भवति रेतो भवति' इति स्वर्गादिषु भोगावसाने योनिं प्राप्तुमागन्तुप्रस्थितस्य जीवस्य मध्ये सोमवर्षादिष्ववस्थानबोधकतया तस्यागमनद्वारविषयाणि श्रुतानि चत्वारि वाक्यानि । एवं 'आप: पुरुषवचसो भवन्ति' इति वाक्यस्यापि रेतोद्वारा योषिदाख्यपञ्चमाग्निं प्राप्तस्य पुनरन्यत्रप्रत्यागच्छतोऽपां द्वारत्वबोधनपरत्वमेव न तु जीवेन सहापां गतिविषयत्वमित्यर्थ: । यद्वा जीवस्य स्वर्गादागमनदशायामेव चन्द्रवर्षादिसाहित्योक्तिवदाप: पुरुषवचस इति वाक्येऽप्साहित्यमुच्यते न त्वित: प्रेत्य स्वर्गं गच्छत: तद्गमनदशायाम् । अतो जीवस्यागमन एवाप्साहित्यपरत्वमुपसंहारस्य न तु गमनेऽप्यप्साहित्यपरत्वमिति न वाच्यमित्यर्थ: । आगमनमात्रविषयत्वे कल्पकाभावोक्तिपूर्वं गतिविषयत्वे कल्पकमाह ॥ **भूतानीति** ॥ एवं कल्पनायां हि कल्पकं भवत् द्विविधं भवति । आदौ गतिकाले भूतानि त्यजतीत्युक्तिर्वा मध्ये सोमादिसायुज्यभवनोक्तिवत् आपो भवन्तीत्यप्साहित्यभवनोक्तिर्वा नोभयथोक्तिरस्ति । प्रत्युत या आप: योऽद्भिरुपेत इति यावत् । पुरुषवचस: पुरुषशब्दवाच्यो भवतीत्यनुवादेन देहत्यागानन्तरमपि जीवेन सहैव स्थित इत्यवगमात् गतिविषयत्वमप्यवश्यं वाच्यमिति भाव: । 'सोमो राजा सम्भवति' इत्यादि तु तत्स्वाभाव्यापत्तिरित्यत्र व्याख्यास्यते । उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्व-मङ्गीकर्तव्यं व्याख्यानस्य पश्चात्तनत्वनियमादित्यन्यत्रोक्तं शङ्कापूर्वं व्यनक्ति ॥ **तथापीति** ॥ उपसंहारस्य भूतगतिविषयत्वेऽपीत्यर्थ: । व्याख्यानत्वोक्तेरुपयोगमाह ॥ **उपसंहारस्येति** ॥ विवृतमेतत्समन्वयसूत्रचन्द्रिकायाम् । प्रपञ्चितं च गुरुपादकृतोपसंहारविजये ॥ **अप्रामाण्येति** ॥ 'तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपोवधीन्त्वेषं वचो अपोवधीं॰स्वाहा' इति मन्त्रव्याख्येयस्य उग्रं वच इत्यस्य क्रूरं वचनमित्यर्थे 'अशनापिपासे ह वा उग्रं वच' इति व्याख्यानाननुसारिण्य-प्रामाण्यदर्शनात् । तथा तत्सत्यमिति व्याख्येयस्य सत्यशब्दस्य सदिति प्राणेऽस्तीत्यन्नमित्यादि-व्याख्यानाननुसारिणि पारमार्थिकत्वादिरूपेऽर्थे अप्रामाण्यदर्शनादुपसंहारानुसारित्वमावश्यकमिति पूर्वेणान्वय: । उपक्रमानुसारित्वनियमेऽपि उपसंहारस्य उपसंहारेणैव उपक्रमार्थो ज्ञायत इति अन्यत्रोक्तं शङ्कागर्भं वाक्यं बीजोक्तिपूर्वं व्यनक्ति ॥ **न च वाच्यमित्यादिना** ॥ यत्तु मीमांसकैरुपक्रमस्य प्राबल्यमुक्तम् । यच्च नवीनोपक्रमपराक्रमे स्वकृतग्रन्थे उपक्रमप्राबल्यं प्रपञ्चितं तत्तु तर्कताण्डवे गुरुपादकृतोपसंहारविजये च निपुणतरं निराकृतमिति नेहास्माभि: प्रपञ्च्यते ॥ **अत इति** ॥ उक्तदिशा प्रथमेऽपि त्र्यात्मिकानामपां गतिश्रवणादित्यर्थ: ।

## अभिनवचन्द्रिका

**उभयविधवस्तुदर्शनमिति ॥** संयुक्तेषु अनेकेषु धूमाग्निपाषाणेषु अग्निगतौ धूमस्य गतिः पाषाणस्यागतिरिति उभयविधवस्तुदर्शनं सन्देहबीजमित्यर्थः । यद्यपि पूर्वाधिकरणोक्तमत्र यथासम्भवादिकमेवेहापि सन्देहबीजं सम्भवतीति तदेव वक्तव्यम्, तथापि अधिकारिभेदेनेमान्यधिकरणानि प्रवृत्तानीति ज्ञापनाय सन्देहबीजान्तरमुक्तम् । अत एव पूर्वाधिकरणेषु निर्णायकानामुक्तत्वेन सन्देहानुत्पादो न मन्तव्यः ॥ **मरणस्यैव मोक्षत्वादिति ॥** ननु भूतानां सहगत्यभावेऽपि न मरणमात्रस्य मोक्षत्वं युज्यते । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धा जुह्वति' इति सृष्ट्यर्थं होमश्रवणात् । 'आपः पुरुषवचसो भवन्ति' इति सृष्टिश्रवणाच्च, तदन्यथानु पपत्यैव भूतगत्यभावेऽपि मुक्तत्वाभावसिद्धेः । ततश्च कर्तव्यमेव वैराग्यादीति चेत् न ब्रूमो वयं वस्तुतः मरणमेव मुक्तिरिति । येनोक्तदोषः स्यात्, किंनाम 'भूतबन्धो हि बन्धः । स्यात् मुक्तिस्तेभ्यो विमोचनम्' इति वदतः सिद्धान्ततो मरणमेव मोक्षः स्यात् । ततश्च व्यर्थं वैराग्यादीति ॥ **सोमो राजा सम्भवतीति ॥** जीवः सोमो राजा चन्द्रः तदन्तर्गतो भवतीति यावत् ।

पूर्वपक्षस्तु भूतानि न जीवेन सहगच्छन्ति । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युपक्रमे श्रद्धासहितस्यैव होमाभिधानात् । भूतानामपि सहगतौ उपक्रमे तथोक्तिप्रसङ्गात् । अतो भूतानां सहगत्यभावेन भूतानां विनिवृत्तिरेव मोक्ष इति वदतो मरणस्यैव मोक्षत्वप्रसङ्गात् व्यर्थं वैराग्यादीति ।

सिद्धान्तस्तु प्रथमाग्नौ भूतसहितस्य होमाश्रवणात् न भूतानामसहगतिर्वक्तव्या श्रद्धाशब्दस्याऽजहत्स्वार्थलक्षणयाऽप्श्रद्धाविशिष्टजीववाचित्वात् । उपसंहारे अपां जीवेन सह गतिश्रवणात् उपसंहारानुसारेणैव उपक्रमस्य नेयत्वात् । न चाऽऽगमनमात्रविषयत्वमुपसंहारस्येति वाच्यम् । मरणकाले तत्परित्यागानुक्तेः । मध्ये संयोगमनभिधाय 'आपः पुरुषवचसो भवन्ति' इत्यनुवादेन सहगमनस्यैव कल्प्यत्वात् । अतो भूतानां जीवेन सहगतिसद्भावात् मरणस्य मुक्तित्वाभावेनाऽपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अत्र पुनरिति ॥** त्र्यात्मकत्वादित्यार्थिककल्पनाया मूलभूतमनुमानं तृतीये निरूपितम् । तदसिद्धमिति शङ्का तृतीये निरस्ता । इदानीमनुमानस्य तर्कबाधनिरासादनन्तरसङ्गतिरिति भावः ।

(वाक्यार्थमुक्तावली)

अत्र भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति चिन्ता । तदर्थं प्राणगतेरित्यनुमानं भूतानां यदि सहगतिः स्यात्तर्हि प्रथमाग्नौ श्रूयत इति तर्कबाधितं न वेति । तदर्थमुपक्रमस्थः श्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणाबाद्युपलक्षक इति ॥ **उभयविधेति** ॥ तत्पूर्वकर्मादेः सहगमनात् स्थूलशरीरादेरसहगमनादिति । सूत्रे नेत्यावर्तते । रंहति सम्परिष्वक्त इत्यनुवर्तते । श्रवणा-दश्रवणादिति द्वेधा पदच्छेदः । होमस्येति शेषः । प्रथम इत्यस्य प्रथमाग्नौ उपक्रमवाक्ये चेत्यर्थ इति भावेनाविशेष इत्युक्तपूर्वपक्षन्यायं भाष्यारूढं कुर्वन् व्याचष्टे ॥ **न जीवेनेत्यादिना** ॥ श्रद्धामित्यस्यार्थद्वयम् ॥ **श्रद्धयेष्टवतः श्रद्धासहितस्येति** ॥ **अत इति** ॥ भूतानि जुह्वतीति विशेषानुक्तेरित्यर्थः । न च वाच्यमपामागतिश्रवणाद्गतिरप्यर्थात् कल्प्यत इति । उपक्रमाश्रवण-विरोधेन कल्पनाया निर्मूलत्वेन तस्यागमनमात्रविषयत्वात् । न च मृतिकाले 'जहात्येनं प्राणा भूतानि पञ्च च' इति प्राणभूतानां गतिरुक्तेति वाच्यम् । प्राणा भूतानीत्ययं समुदायो मृतिकाले भूताख्यभागतस्त्यजति । प्राणाख्यभागतोऽनुगच्छतीत्यपि तदर्थोपपत्तेः । विशेषाश्रवणविरोधाच्च । अनुमानं तु तर्कविरुद्धमिति भावः । यद्यपि श्रद्धां जुह्वतीति सृष्ट्यर्थं होमश्रवणात् 'आपः पुरुषवचसः' इति सृष्टिश्रवणाच्च न मरणमात्रस्य मोक्षत्वं युज्यत इति पूर्वपक्षे फलाभावः । तथापि 'भूतबन्धो हि बन्धःस्यान्मुक्तिस्तेभ्यो विमोचनम्' इति वदतः सिद्धान्तिनो मरणमेव मोक्षः स्यात् । ततश्च 'व्यर्थं वैराग्यादि स्यात्' इति परन्यायेन परदूषणान्न दोष इति ज्ञेयम् ।

नेति नञर्थमाह ॥ **प्रथमाग्नाविति** ॥ कुतो नेत्यतः श्रूयन्त इत्यतः परं नञो न कल्पनीये-त्यन्वयो बोध्यः । हिशब्दस्य यत इत्यर्थत्वं प्रथम इत्यस्यानुवृत्तिं होमाश्रवणादिति होम्यतया श्रूयन्त इति तात्पर्यतोऽनुवृत्तिं च मत्वा व्याचष्टे ॥ **यतः प्रथमाग्नाविति** ॥ श्रूयन्त इत्यतः परमतो न कल्पनीयेत्यन्वयो बोध्यः । अपां श्रद्धारूपत्वाभावाच्छ्रद्धाशब्दस्यापि 'ता एवार्थे' इति न्याय-विवरणानुरोधेनाह ॥ **श्रद्धाशब्दार्थेति** ॥ योगरूढ्योरभावात् कथमपां श्रद्धाशब्दार्थत्वमित्यत आह ॥ **अयं खल्विति** ॥ यथा श्रद्धामात्रस्य होम्यत्वाभावात् श्रद्धाशब्दार्थस्य तन्मात्रत्वानुपपत्त्या श्रद्धायुक्तजीवोपलक्षकत्वं तथोपलक्षकत्वमिति भावः ॥ **तत्कुत इति** ॥ अपामुपलक्षणत्वं कुतः मुख्यार्थानुपपत्त्यभावादित्यर्थः । तदुत्तरत्वेनोपपत्तेरित्यंशं उपसंहाराख्योपपत्तेर्युक्तेरिति व्याकुर्वन्भाष्यं व्याचष्टे ॥ **उपसंहार इति** ॥ उपसंहारे तथा श्रवणेऽप्युपक्रमे उपलक्षणं कुत इत्यत उपसंहारानु-सारेणोपक्रमार्थकल्पने उपक्रमोपपत्तेरिति प्रकारान्तरेण व्याकुर्वन्भाष्यार्थमाह ॥ **तदनुसारेणेति** ॥

(वाक्यार्थमुक्तावली)

तेनोपपत्तेरित्यन्वयमभिप्रेत्यानुपपत्तेरित्यर्थमाह ॥ **अन्यथेति** ॥ ननूपक्रमस्य गमनकाले भूतत्यागविषयत्वादुपसंहारस्यागमनकालेऽद्भिस्सह गमनविषयत्वाद्भिन्नविषययोर्न विरोध इत्याशङ्क्य परिहरति ॥ **न चेति** ॥ स्यादेतद्भिन्नविषयं यदि भूतानि त्यजतीत्यादावुक्तिस्स्यात् । अन्ते वा यथा जीवः सोमराजान्तर्गतो भवतीति प्रागभूतभवनमुच्यते तथा जीव आपो भवतीत्युक्तिः स्यात् । न चैवमुभयत्र ज्ञापकमस्ति । येनोपक्रमस्य भूतत्यागविषयत्वं प्रत्येमः । प्रत्युतोपसंहारे 'आपः पुरुषवचसो भवन्ति' इत्यद्भिः सम्परिष्वक्तो जीव इत्यनूद्य पुरुषनामकत्वं विधीयते । अनुवादश्च सिद्धस्यैवेति गमनकालेऽद्भिः सह गमनमेव सिद्ध्यतीति भावः । एतेनानुवादरूपोपसंहारोपपत्तेर्नोपसंहारस्य आगमनमात्रविषयत्वमिति प्रकारान्तरेण व्याख्यातं भवति । ननूपक्रमविरोधेनोपसंहाराप्रामाण्यं किं न स्यादित्यत आधिक्यमित्युक्त न्यायप्रदर्शकमुपसंहारोपपत्तेरिति भाष्यं उपसंहारस्योपपत्तिसिद्धत्वादित्याशयेन व्याचष्टे ॥ **तथापीत्यादिना** ॥ एषा चावृत्त्या योजना श्रीमद्भिः टीकाकारैर्न्यायविवरणानुसारेण कृता बोध्या ।

## तत्त्वसुबोधिनी

**अत्र पुनरिति** ॥ त्र्यात्मकत्वादित्युक्तार्थिककल्पनायाः कल्पनामूलभूतविशेषप्रमाणं विना स्वरूपं न निर्वहतीति प्राणगतेश्चेत्याद्यधिकरणद्वयेन स्वरूपनिर्वाहकोपपत्तिरूपविशेषप्रमाणोक्त्यनन्तरं अवसरप्राप्तमब्गतिरूपं कल्पकं विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **प्रथमाग्नौ होमश्रवणादिति** ॥ अनेन प्रथमे श्रवणादिति सूत्रांशोऽकारप्रश्लेषं विना प्रथमाग्नौ श्रूयते इति भाष्येण व्याख्यात इत्युक्तं भवति ॥ **तथोक्तिप्रसङ्गादिति** ॥ भूतानि जुह्वतीत्युक्तिप्रसङ्गादित्यर्थः । न चाश्रवणमात्रस्य प्राणगतेरित्युक्तयुक्तिबाधकत्वायोगात् कथं प्राणगतेरित्यनन्तरमेतदुत्थानमिति वाच्यम् । यस्यामार्थिककल्पनायां प्राणगतिरूपोपपत्तिर्मूलत्वेनोच्यते सानुपपन्ना । प्रथमेऽश्रवणेनाब्गतिरूपकल्पकासिद्धेरित्याक्षेपसमाधानार्थं तस्य तदनन्तरमप्युत्थानसम्भवादिति । नन्वपां श्रद्धारूपत्वाभावात्कथं श्रद्धारूपेणेत्यतस्तदर्थमाह ॥ **श्रद्धाशब्दार्थरूपतयेति** ॥ ननु श्रद्धाशब्दस्याप्सु योगरूढ्योरभावात् कथं तदर्थत्वमित्यत आह ॥ **अयं खल्विति** ॥ तथा च यथा श्रद्धामात्रस्य होम्यत्वाभावात् श्रद्धाशब्दस्य तन्मात्रत्वानुपपत्त्या श्रद्धायुक्तजीवोपलक्षकत्वं तथोपसंहारानुपपत्त्याप्युपलक्षकत्वमप्यङ्गीकार्यमिति भावः ॥ **तदुपपत्तेः** ॥ उपक्रमोपपत्तेः । **अन्यथेति** ॥ उपसंहारानुसारेणोपक्रमार्थकल्पनाभावे उपसंहारविरोधेनाप्रामाण्यं स्यादित्यर्थः ।

(तत्त्वसुबोधिनी)

ननु स्यादियमुपसंहारानुसारेणोपक्रमार्थकल्पना यद्युपसंहारेऽपां जीवेन सहगतिश्रवणमेव स्यात्। न चैवम्। आप इति सामान्योक्तेरागमनमात्रविषयत्वोपपत्तेरित्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुत इत्यत आह ॥ **भूतानीति** ॥ यद्युपसंहारस्यागमनमात्रविषयत्वं तर्हि मरणानन्तरं भूतानां जीवेन सह गमनाभावसिद्ध्यर्थं उत्क्रान्तो भूतानि त्यजतीति वक्तव्यं स्यात्। आगमनकाले जीवस्याद्भिस्साहित्यसिद्ध्यर्थं च तस्या आहुतेः सोमो राजा सम्भवति वर्षस्सम्भवति रेतः सम्भवतीतिवत् आपस्सम्भवन्तीति वक्तव्यं स्यात्। नैतदस्ति, प्रत्युतापः पुरुषवचस इत्यनुवादोऽस्ति। अप्राप्तस्यानुवादायोगात् आप इत्यनुवादबलात् मरणानन्तरं सहगतानामेवापां पुनरागमनमिति विज्ञायत इति भावः। न च रेतः सम्भवतीत्यत्र रेतःशब्दस्याप्परत्वसम्भवेनापां प्रकृतत्वात् आप इत्यनुवादोपपत्तिरिति वाच्यम्। तस्या आहुते रेतःसम्भवतीति रेतसोऽन्नकार्यत्वोक्तेः। न ह्यपामन्नकार्यत्वमस्ति। एवमित्यनेन प्रकारान्तरेण रेतोरूपायां पञ्चम्यामाहुतौ योषाग्नौ हुतायां मरणानन्तरं जीवेन सह गता भूतत्रयात्मिका आपः पुरुषवचसो भवन्तीत्यर्थस्सम्पद्यत इति भावः। शङ्कते ॥ **तथापीति** ॥ वैपरीत्यस्यापि सम्भवादिति भावः। अस्तूपक्रमव्याख्यानरूपत्वमुपसंहारस्य, तथाप्युपक्रमस्य तदनुसारित्वं कुत इत्यत आह ॥ **व्याख्यानेति** ॥ ननूपक्रमस्यानुपसञ्जातविरोधित्वेन प्रबलत्वादुपक्रमानुसारेणैवोसंहारो व्याख्यातव्य इत्याशङ्क्य निषेधति ॥ **न चेति** ॥

## वाक्यार्थविवरणम्

**तदर्थे** व्याख्यातार्थे ॥ **पूर्वकत्वादिति** ॥ उपक्रान्तस्यैवोपसंहार इति भावः ॥ **अर्थप्रतीतौ** अर्थबोधकत्वविषये ॥ **वैपरीत्यादिति** ॥ उपसंहारप्रवृत्तेरुपक्रमसापेक्षत्वेन। उपसंहारसापेक्षस्यैवोक्रमस्यार्थबोधकत्वम्। उपक्रमव्याख्यानरूपत्वादुपसंहारस्य। अन्यथा व्याख्यानरूपोपसंहारविरुद्धत्वेन तद्व्याख्येयरूपोपक्रमस्याप्रामाण्यप्राप्तेरिति भावः।

## वाक्यार्थमञ्जरी

**उभयविधेति** ॥ मृतसहासहगन्तृकर्मधनदर्शनमित्यर्थः ॥ **ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ** ॥ अत्र प्रथम इत्यस्यावृत्तिः श्रवणादश्रवणादित्युभयथापि पदच्छेदः। तथा च प्रथमेऽग्नौ श्रवणात् श्रद्धां जुह्वतीति श्रद्धाविशिष्टजीवस्य होमश्रवणान्निमित्तात् प्रथमे उदाहृतोपक्रम-

(वाक्यार्थमञ्जरी)

वाक्येऽश्रवणात् भूतसाहित्यस्याश्रवणात् जीवस्य भूतैःसहागमनमिति चेन्न हि यस्मात्ता एव प्रस्तुता आप एव श्रद्धाशब्देनोच्यन्ते । कुतः? उपपत्तेः । तथात्वे आपः पुरुषवचसो भवन्तीत्युपसंहारोपपत्तेः अन्यथा तद्विरुद्धत्वेनोपक्रमाप्रामाण्योपपत्तेरित्यर्थः ॥ **तस्मिन्निति** ॥ 'तस्मिन्नसौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमाङ्गारानक्षत्राणि विष्फुलिङ्गाः' इत्यनेनोक्त एतस्मिन्द्युस्थनारायणाख्ये अग्नौ देवाः द्युलोकाधिपतयः श्रद्धां श्रद्धयेष्टवन्तं उत्क्रान्तयजमानं जुह्वतीत्यर्थः ॥ **प्रथमाग्नाविति** ॥ द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यपञ्चाग्निषु प्रथमाग्नावित्यर्थः । अपां श्रद्धारूपत्वाभावादाह ॥ **श्रद्धाशब्दार्थरूपतयेति** ॥

ननु श्रद्धाशब्दस्याप्सु योगरूढयोरभावात्कथं तदर्थत्वमित्यत आह ॥ **अयं खल्विति** ॥ **अजहदिति** स्वार्थमजहदित्यर्थः । यथा श्रद्धामात्रस्य होम्यत्वाभावात् श्रद्धाशब्दस्य श्रद्धायुक्तजीवलक्षकत्वं तथोपसंहारान्यथानुपपत्त्यांबूपलक्षकत्वं चाङ्गीकार्यमिति भावः ॥ **आगमनमात्रेति** ॥ आप इति सामान्येनोक्तत्वादिति भावः ॥ **भूतानीति** ॥ यद्युपसंहारस्यागमनमात्रविषयत्वं तर्हि मरणानन्तरं भूतानां जीवेन सह गमनाभावसिद्ध्यर्थमुत्क्रान्तो भूतानि त्यजतीति वक्तव्यं स्यात् । तथा 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षः सम्भवति । तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति । तस्मिन्नेतस्मिन्नग्नौ देवाः अन्नं जुह्वति तस्या आहुते रेतः सम्भवति । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति' इति वद्गमनकाले जीवस्याद्भिः साहित्यसिद्ध्यर्थं तस्मिन्नेतस्मिन्नग्नौ देवा आपो जुह्वति तस्या आहुतेरापो भवन्तीति वक्तव्यत्वात् । अन्यथा आपः पुरुषवचसो भवन्तीत्यनुवादायोगात् । न चैवमस्ति । तथा चाप इत्यनुवादबलान्मरणानन्तरं सहगतानामेवापो पुनरागमनमिति ज्ञायत इति भावः । एवं द्युलोके देवैर्निक्षिप्तो यजमानः स्वपुण्यावसाने मर्त्यलोकोन्मुखस्तस्या आहुतेः सकाशात्सोमो राजा सोमलोकान्तर्गतः सम्भवति । वर्षं वृष्ट्यन्तर्गतमन्नमन्नान्तर्गन्तं रेतस्तदंतर्गतो गर्भो गर्भस्थ इत्युदाहृतवाक्यशेषार्थः । **तदर्थे** व्याख्यातार्थे ॥ **दर्शनादिति** ॥ यत्क्षौममित्युपसंहारानुसारेण वासः परिधत्त इत्युपक्रमस्य पीताम्बररूपार्थे प्रामाण्यदर्शनादित्यर्थः । **स्वरूपेण** स्वरूपलाभाय ।

॥ इति प्रथमश्रवणाधिकरणम् ॥ ५ ॥

## ६. अश्रुतत्वाधिकरणम्

**॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥**

अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणान्न युक्तमिति चेन्न । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' इति कौण्ठरव्य (कौण्डिन्य) श्रुतौ प्रतीतेः ।

### तत्त्वप्रदीपिका

इष्टापूर्तादिकारिणां भूतैः सहैव प्रत्यक्षतः श्रुत्या गतिप्रतीतेर्नाश्रुतत्वम् ॥

### तत्त्वप्रकाशिका

अत्र पुनर्भगवत्प्राप्तिसाधनवैराग्याय जीवस्य भूतैः सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । मरणमात्रं न मुक्तिरित्युक्तम् । भूतानां जीवेन सह गत्यभावेऽयुक्तं स्यादतोऽसौ समर्थनीया । प्रकृतभूतान्येव विषयः । जीवेन सह गच्छन्ति न वेति सन्देहः । पूर्वोक्तमेव सन्देहबीजम् । पृथक् पृथग्विचारत्वात्सन्देहानुत्पादो न मन्तव्यः । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद् व्याचष्टे **॥ अश्रुतत्वादिति ॥** न भूतानां जीवेन सह गमनं युक्तम् । तथा श्रुत्यभावात् । न च वाच्यमपां प्राणानां च श्रूयते सहगतिरतोऽर्थाद् भूतानामप्यस्तीति । यथा खलु प्राणानामग्न्यादिगतिः साक्षात् श्रूयते यथा श्रुत्यभावात् । आर्थिकश्रवणादपि नियमेन प्रत्यक्षश्रुत्यभावस्य बलवत्त्वात् । सति हि विशेषश्रवणे वैदिकार्थे युक्तयोऽपि प्रवर्तन्ते । अतोऽत्र प्राणानामग्न्यादिगतिवद्भूतानां जीवेन सह गतेः प्रत्यक्षाश्रवणादभावस्ततो मरणस्यैव मुक्तित्वान्न वैराग्यादिना कृत्यमिति भावः । अतः शब्दस्तथार्थे । तेन यथेत्यादौ सिद्ध्यति । हेत्वर्थे च । 'अतःशब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते । उभयार्थे च भवति यथा शब्दविदो विदुः' । इति वचनात् ।

सिद्धान्तांशं व्याचष्टे **॥ नेति ॥** न प्रत्यक्षाश्रवणादसहगतिर्भूतानाम् । आर्थिकश्रवणस्याप्यश्रवणबाधकत्वात् । न हि कदन्नभुजोऽनशित्वं भवति । युक्तेरपि व्याप्तिलिङ्गग्राहकप्रमाणेनैव भवितव्यं तच्चास्ति । यदा चैवमार्थिकश्रवणमश्रवणबाधेनाभीष्टसिद्ध्यै भवति तदा सुतरामथैनमित्यादिविशेषश्रवणमिति भावः । अतोऽस्त्येव भूतानां जीवेन सह गतिरिति मरणे मोक्षाभावादनुष्ठेयमेव तदर्थं वैराग्यादिसाधनमिति सिद्धम् ।

## गुर्वर्थदीपिका

पृथक्पृथग्विचारत्वादित्यस्य पूर्वोक्तविचारादभ्यधिकाशङ्कया प्राप्तस्योत्तरोत्तराधिकरणस्य पृथक्पृथग्विचारत्वात् प्रत्येकं प्रत्येकमभिनवपूर्वपक्षे सिद्धान्तरूपत्वादित्यर्थः । सन्देहानुत्पाद इत्यस्य 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्' इत्यधिकरणे भूतैस्सहगतत्वस्य निर्णीतत्वादुत्तराधिकरणेषु सह गच्छन्ति न वेति सन्देहानुत्पादो न मन्तव्य इत्यर्थः । यद्यपि 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' इति सूत्रे भाष्ये च भागतो जीवगतेरार्थिकत्वेनाभिप्रेतत्वेऽपि साक्षाद्भागतोऽग्न्यादिप्राप्तेरेवोक्तत्वात्पुनराशङ्का । स्मृतौ भागतो जीवेन सहगतेस्स्पष्टमुक्तत्वेऽपि श्रुतावनुक्तत्वाच्च श्रुतिमीमांसायां प्रवृत्तस्य सूत्रकारस्य पुनरारम्भ इति भावेनोक्तं प्रत्यक्षाश्रवणादिति ।

ननु 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' इति साक्षाद्भूतानां जीवेन सह गतिप्रतिपादकमिदमेवाधिकरणमादावुदाहर्तव्यं समस्ताशङ्कापरिहारकत्वात् । किमधिकरणान्तरेणेति चेत्सत्यम् । युक्त्या श्रुतिविचारात्मकमीमांसायां प्रवृत्तस्सूत्रकारः युक्तिरसिकत्वाद्युक्त्या 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुतेः पूर्वोत्तराविरोधं परिहृत्यार्थसमर्थनाय 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्' 'त्र्यात्मकत्वात्तु भूयस्त्वात्' 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः' इति त्रिसूत्रीमसूत्रयत् । तत्सहगन्तृप्राणाविनाभूतत्वादिति श्रौतयुक्त्या च भूतानां विनैव जीवेन सहगतिसमर्थनार्थं 'प्राणगतेश्च' 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' इत्यधिकरणद्वयं मध्ये निबबन्ध । एवं च स्वस्य यौक्तिकशिरोमणित्वप्रदर्शनायाऽऽदावधिकरणपञ्चकं प्रपञ्चितवानिति समाधानसम्भवान्न कश्चित्क्षुद्रोपद्रवः । इष्टादिकारिणामित्यत्रादिपदेन दानपूर्तादीनि काम्यकर्माणि सङ्गृह्यन्ते । इदं च यज्ञकर्तृमात्रे प्रसिद्धश्रौतयजमानपदस्य 'यजदेवपूजासङ्गतिकरणदानेषु' इत्यनुशासनेन बह्वर्थकत्वसूचनार्थम् । अन्यथाऽल्पाक्षरत्वाद्यजमानस्येत्यवक्ष्यदिति ज्ञेयम् ।

## भावबोधः

अत्र **पुनरिति** ॥ मूलभूतोपपत्तिरूपविशेषप्रमाणसहितार्थिककल्पनाक्षेपसमाधानादनन्तरसङ्गतिरिति भावः ॥ **जीवेन सहेति** ॥ अत्र भूतानां जीवेन सहगतिर्नास्त्युतास्तीति चिन्ता ।

(भावबोधः)

तदर्थं प्राणगतिरूपोपपत्त्युपोद्बलितमार्थिकश्रवणमसाधकं साधकं वेति । तदर्थं भूतानि जीवेन सह गच्छन्तीति विशेषतः साक्षाच्छ्रवणं नास्त्युतास्तीति ।

ननु 'तदन्तरप्रतिपत्तौ' इत्यनेनैव भूतानां जीवेन सहगतेः समर्थितत्वेन भूतानि गच्छन्ति न वेति सन्देहस्यैवानुदयात् कथमेषामधिकरणानामुत्थानमित्यत आह ॥ **पृथक् पृथग्विचारत्वादिति** ॥ अयं भावः । अत्राद्येऽधिकरणे भूतसंपरिष्वक्तो रंहतीति प्रतिज्ञाय तत्र प्रमाणत्वेनोदाहृतयोः प्रश्ननिरूपणयोरप्शब्दस्यैव श्रवणात् कथं ताभ्यां सकलभूतानां जीवेन सहगतिसिद्धिरित्याशङ्कानिरासाय तयोः श्रूयमाणाप्शब्दः किमम्मात्रपर उत सकलभूतपर इति सन्देहे नायमप्शब्दोऽम्मात्रपरः किं त्वपां त्र्यात्मकत्वात् सकलभूतपरः । अप् शब्दप्रयोगाय भूयस्त्वनिमित्तत्वादिति प्रवृत्तस्य द्वितीयाधिकरणस्य पृथग्विचारपरत्वम् । नन्वपां त्र्यात्मकत्वेन तासां जीवेन सहगत्या सकलभूतानां सहगतिकल्पना तदा भवेत्, यदि भूतानां जीवेन सहगतौ विशेषप्रमाणं स्यात् । आर्थिककल्पनाया विशेषप्रमाणानुरोधित्वादित्याशङ्कानिरासाय किमार्थिककल्पनामूलभूतविशेषप्रमाणमस्ति न वेति सन्देहे न विशेषप्रमाणाभावः, किं तु भूतानि जीवेन सह गच्छन्ति तत्सहगन्तृप्राणाविनाभूतत्वादित्युपपत्तिरूपविशेषप्रमाणमस्ति । ततश्च निर्णयोपपत्तिरिति प्रवृत्तस्य तृतीयाधिकरणस्य पृथग्विचारपरत्वम् ।

नन्वेवं सत्येतदुपपत्तिबलादेव प्रश्नव्याख्यानगताप्शब्दस्य सकलभूतपरत्वसम्भवे द्वितीयाधिकरणं व्यर्थमिति चेत्, न; उपपत्तिबलादपि सम्भावितमेव कल्पनीयमित्यपां त्र्यात्मकत्वभूयस्त्वाभ्यामप्शब्दस्य सकलभूतपरत्वसम्भावकतया तत्सार्थक्योपपत्तेरिति । ननु 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति' इत्यादिश्रुत्या वागादिप्राणानां स्वमूलरूपाग्न्यादीन् प्रति गमनप्रतीत्या जीवेन सह गत्यभावात्तत्सहगन्तृप्राणाविनाभूतत्वरूपहेतुरसिद्ध इत्याशङ्कानिरासाय प्रवृत्तस्य चतुर्थाधिकरणस्य स्पष्टं पृथग्विचारपरत्वम् । ननूक्तोपपत्तिबलादपि भूतत्रयात्मिकानामपां जीवेन सहगत्यार्थात् सकलभूतानामपि सहगमनमिति कल्पना तदा स्यात्, यद्यपामेव जीवेन सहगतिः स्यात् । नैतदस्ति । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युपक्रमे प्रथमाग्नौ होम्यतयापामश्रवणादिति शङ्कानिरासायोपक्रमगतश्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणापामप्युपलक्षक इति सन्देहे न स्वार्थमात्रपरः किं तूपसंहारमात्रस्योपक्रमव्याख्यानपरत्वेन प्राबल्यात् । तदनुसारेणोप-

(भावबोधः)

क्रमस्य नेतव्यत्वात्तद्गतश्रद्धाशब्दस्यापामुपलक्षकत्वमप्यस्तीति प्रतिपादयितुं प्रवृत्तस्य पञ्चमाधिकरणस्य पृथग्विचारपरत्वम् । ननूक्तोपपत्त्यार्थिककल्पनाभ्यां सर्वभूतानां जीवेन सहगतिर्न सिद्ध्यति । 'अग्निं वागप्येति' इतिवत् 'भूतानि जीवेन सह गच्छन्ति' इति विशेषरूपप्रत्यक्षश्रुत्यभावादित्याशङ्कानिरासाय भूतानां जीवेन सह गमनस्य प्रतिपादिका श्रुतिर्नास्त्युतास्तीति सन्देहे न नास्ति; किं त्वस्ति । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरवगच्छन्ति' इति विशेषश्रुतेः प्रत्यक्षतः श्रवणादिति प्रतिपादयितुं प्रवृत्तस्य षष्ठाधिकरणस्य पृथग्विचारपरत्वमिति ।

नन्वेवं सन्देहादिनैषामधिकरणानां पृथक्पृथग्विचारपरत्वे 'अग्न्यादिगतिश्रुतेः' इत्यधिकरणव्यतिरिक्तेषु चतुर्ष्वधिकरणेषु भूतानि जीवेन सह गच्छन्ति न वेति सन्देहः कथं टीकायामेव प्रदर्शित इति चेत् । सत्यम् । अपामेव सहगतिः भूतानि सहगच्छन्तीति सहैवानुक्तेस्तदभावो भूतानामसहगतिरिति न्यायविवरणानुसारेण तस्या मूलसन्देहप्रदर्शनपरत्वादिति ज्ञातव्यम् । अतीताधिकरणेषु प्रथमद्वितीयपञ्चमैर्भूतानां जीवेन सहगतावार्थिकश्रवणं युक्तितयोक्तम् । तृतीयचतुर्थाभ्यां प्राणगतिस्तत्र युक्तितयोक्ता । तदुभयोपमर्देनेहाधिकरणे पूर्वपक्षोऽभिप्रेत इत्याह ॥ **न च वाच्यमिति** ॥ न्यायविवरणानुसारेणार्थिकश्रवणोपमर्दनायापामित्युक्तम् । अग्न्यादिगतिरिति भाष्यानुसारेण प्राणगत्युपमर्दनाय प्राणानां चेत्युक्तमिति ज्ञेयम् । भाष्यगतप्रत्यक्षपदाभिप्रायमाह ॥ **साक्षादिति** ॥ विशेषाश्रवणनियम एव बलवानिति न्यायविवरणाभिप्रायमाह ॥ **आर्थिकश्रवणादिति** ॥

ननु प्राणगतिरूपोपपत्तिमूलकत्वेनार्थिकश्रवणमपि बलवदित्यत आह ॥ **सति हीति** ॥ वैदिक इत्यनेन प्रत्यक्षामूलकत्वमुक्तम् । तथा चोपाधिप्रतिपक्षनिरासकप्रत्यक्षागममूलकत्वाभावादुपपत्तिरपि न साधिकेत्यर्थः । अग्न्यादिगतिरित्यादिभाष्यस्य यथा खल्वित्यादिव्याख्यानमुपपादयति ॥ **अतःशब्द इत्यादिना** ॥ **उभयार्थे चेति** ॥ एकत्रोच्चारणे उभयार्थे इत्यर्थः । अक्षादिशब्दवन्नानार्थत्वस्य पूर्वार्धेनैव सिद्धत्वात् । एतावन्मात्रस्यैव प्रकृतोपयोगेऽप्यतः शब्दस्योत्तरार्धेऽश्रवणात् पूर्वार्धोदाहरणमिति द्रष्टव्यम् । आर्थिकश्रवणमप्यनुक्तिं बाधत एवेति न्यायविवरणोक्तां युक्तिमाह ॥ **आर्थिकश्रवणस्यापीति** ॥ यत्किञ्चिद्विशेषवति सामान्याभावसम्भवे दृष्टान्तमाह ॥ **न हीति** ॥ प्रत्यक्षागमसमानार्थत्वाभावेऽपि युक्तेर्व्याप्त्यादिग्राहिप्रत्यक्षागममूलकत्वमात्रेण साधकत्वमित्याह ॥

(भावबोधः)

**युक्तेरपीति ॥ तच्चास्तीति ॥** 'यत्र वा व भूतानि तत्र करणानि' इति व्याप्तिग्राहकं 'करणैर्वा व न वियुज्यत' इति पक्षधर्मताग्राहकं च प्रमाणमस्तीत्यर्थः । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वा-दार्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव 'नेष्टादि-कारिणां प्रतीतेः' इति परिहारान्तरमुक्तमिति न्यायविवरणोक्तं सूत्रसिद्धान्तांशतात्पर्यमाह ॥ **यदा चैवमिति ॥**

## भावदीपः

**गतिसमर्थनादिति ॥** प्रत्यक्षश्रुत्युक्त्येति योज्यम् । तेन न पूर्वाभेद इति बोध्यम् । तेनैव पूर्वं चरमानुरोधेन पूर्वाश्रवणस्यास्वारस्येऽपि न बहिरङ्गप्रबलप्रत्यक्षाश्रवणस्येति शङ्कनाद्वा चरमानुरोधेन प्रथमस्यास्वारस्यमयुक्तं चरमस्यैव प्रत्यक्षाश्रवणविरोधेन भूतगतिपरत्वायोगादिति शङ्कनाद्वाऽनन्तर-सङ्गतिरपि सूचितेति ध्येयम् ॥ **पूर्वोक्तमिति ॥** उभयविधवस्तुदर्शनमित्यर्थः । नन्वपां प्राणानां च गत्युक्त्या भूतगतेः सिद्धत्वाल्लोकदृष्टिमात्रेण कथं सन्देहोत्पाद इत्यत आह ॥ **पृथगिति ॥** पूर्वमबादिगत्युक्त्या भूतानां गतिरुक्ता प्रत्यक्षश्रवणं च भूतगतौ नास्तीति जानतो विशेषमजानतो लोकदृष्टिवशाद्भवति संशय इति भावः । सूत्रे जीवो भूतै रंहति सम्परिष्वक्त इति प्रकृतस्यानु-वृत्तिर्नञ आवृत्तिरित्युपेत्य अतः प्रत्यक्षश्रवणान्न युक्तमिति भाष्यस्थप्रतिज्ञाहेत्वोरर्थमाह ॥ **न भूतानामिति ॥** अत इत्यस्यार्थस्तथेति । तथाशब्दार्थं विवृण्वन् अग्न्यादीत्यादिभाष्यवाक्यस्य सार्थक्याय तस्य पूर्वाक्षेपकत्वरूपफलं दर्शयन् शङ्कापूर्वं भाष्यं व्याचष्टे ॥ **न च वाच्यमिति ॥ श्रूयत इति ॥** पञ्चम्यामाहुतावाप इति करणैर्वाव न वियुज्यते इति च श्रूयत इत्यर्थः । आप इति वाक्यस्य न चागमनमात्रविषयत्वमित्यादिना गतिविषयत्वसमर्थनादिति भावः ॥ **अर्थादिति ॥** अपामनेकभूतात्मकत्वात्प्राणानां भूताविनाभावाच्चेति भावः ॥ **यथेति ॥** अत इत्यस्य तथेत्यर्था-द्यथेति लाभादित्यग्रे व्यक्तम् । श्रूयतेऽग्निं वागप्येतीत्यादिनेत्यर्थः । तथा प्रत्यक्षत इत्यर्थः । ततश्च किमित्यतः विशेषाश्रवणनियम एव बलीयानित्यन्यत्रोक्तं संयोजयति ॥ **आर्थिकेति ॥** प्राणानां चेत्युक्तमपि प्रत्याह ॥ **सति हीति ॥ वैदिकार्थ इति ॥** शास्त्रयोनिसूत्रे कामाच्चेति सूत्रे श्रुतेस्त्विति सूत्रादौ च तथोक्तेरिति भावः ॥ **अत इति ॥** आर्थिकश्रवणादपि प्रत्यक्षाश्रवणस्य बलवत्त्वात् अश्रुते वैदिकार्थे युक्त्यप्रवृत्तेश्चेत्यर्थः । यद्वा भाष्यस्थमतःपदं तथेत्यर्थं व्याख्याय हेत्वर्थक-

(भावदीपः)

तयाऽप्यनूद्य व्याचष्टे ॥ **अत इत्यादिना** ॥ न युक्तमित्यस्य तात्पर्यमभाव इति । भूतानां जीवेन सहगतेरित्यन्वयः । फलमाह ॥ **तत इति** ॥ भूतगत्यभावादित्यर्थः । स्वकृतव्याख्यानस्योद्भाष्यत्व-भ्रमनिरासायाह ॥ **अतश्शब्द इति** ॥ **हेत्वर्थे चेति** ॥ भाष्येऽत इत्यस्य व्याख्यानं प्रत्यक्षाश्रवणा-दितीति भावः । श्रुतिगीतातात्पर्योक्तवचनमाह ॥ **अतश्शब्दस्त्विति** ॥ उभयार्थे सकृदुच्चरितो हेत्वर्थं तथेत्यर्थं च वक्तीत्यर्थः । भाष्ये नञः प्रत्यक्षेत्यादिप्राचीनवाक्यार्थस्य प्रतियोगितयान्वयमाह ॥ **न प्रत्यक्षेति** ॥ तत्र हेत्वाकाङ्क्षायामार्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव नेष्टादिकारिणां प्रतीतेरिति परिहारान्तरमुक्तमित्यन्यत्रोक्त्यनुरोधेन भाष्यभावं वक्तुमार्थिकश्रवणपदेनापां गत्युक्त्या प्राणगत्युक्त्या च प्राप्तमार्थिकश्रवणं ग्राह्यमिति भावेनान्यत्रोक्तं संयोजयति ॥ **आर्थिकेति** ॥ द्वेधापि लब्धस्येत्यर्थः । ननूक्तं वैदिकेऽर्थे युक्तप्रवृत्तिरिति तत्राह ॥ **युक्तेरपीति** ॥ **तच्चेति** ॥ 'यत्र वाव भूतानि' इति 'करणैर्वाव न वियुज्यत' इति च व्याप्तिलिङ्गग्राहकं प्रमाणमस्तीत्यर्थः । श्रुत्याद्यनुपजीवियुक्तेरेवादृष्टेऽर्थे प्रवृत्त्य-भावः प्रागुक्त इति भावः । इदानीं भाष्यभावमाह ॥ **यदा चेत्यादिना** ॥ **अत इति** ॥ प्रत्यक्षश्रवणस्यापि भावादित्यर्थः । साधनमित्युपलक्षणं शास्त्रं चेत्यपि ग्राह्यम् ।

## अभिनवचन्द्रिका

ननु 'तदन्तरप्रतिपत्तौ' इत्यनेनैव भूतानां जीवेन सहगतेस्समर्थितत्वेन भूतानि गच्छन्ति न वेति सन्देहस्यैवाऽनुत्पादात् कथं सन्देहोद्धाटनमित्यत आह– **पृथक्पृथग्विचारत्वादिति** ॥ अस्य विचारस्य पृथक्पृथगधिकारिकत्वात् सन्देहानुत्पादो न मन्तव्य इत्यर्थः । एकस्यैव संशयस्य निरासाय बहूनि समाधानानि इति सन्देहानुत्पादो न मन्तव्य इति वाऽर्थः । अयं भावः अस्त्वेक एवाऽधिकारी सर्वेष्वधिकरणेषु तथापि पूर्वपक्षरूपमिथ्याज्ञानबाहुल्यात् तन्निरासाय प्रवृत्तान्येता-न्यधिकरणानि प्रथमाधिकरणनिवृत्तसंशयस्यापि विरोधित्वान्निवर्त्तकानीति दर्शयितुमेव अस्माभिः प्रत्यधिकरणं सन्देहः प्रदश्यते, न तु पूर्वाधिकरणप्रवृत्त्युत्तरकालमपि सन्देहो भवतीत्याशयेन । दृश्यन्ते हि पर्वते वह्निसन्देहनिवृत्तये धूमवत्वात्प्रकाशविशेषवत्वाच्चेति हेतुद्वय माचक्षाणा लौकिकाः परीक्षकाश्च । तत्र यथा लिङ्गद्वयमपि एकस्यैव संशयस्य निवर्त्तकं भवति, एवमिहापि इमान्यधि-करणानि एकस्यैव संशयस्य निवर्त्तकानि भवन्तीति । अस्तु तथाश्रुत्यभावः । आर्थिकश्रवणात्तु

(भावबोधः)

**युक्तेरपीति** ॥ **तच्चास्तीति** ॥ 'यत्र वा व भूतानि तत्र करणानि' इति व्याप्तिग्राहकं 'करणैर्वा व न वियुज्यत' इति पक्षधर्मताग्राहकं च प्रमाणमस्तीत्यर्थः । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वादार्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव 'नेष्टादिकारिणां प्रतीतेः' इति परिहारान्तरमुक्तमिति न्यायविवरणोक्तं सूत्रसिद्धान्तांशतात्पर्यमाह ॥ **यदा चैवमिति** ॥

## भावदीपः

**गतिसमर्थनादिति** ॥ प्रत्यक्षश्रुत्युक्त्येति योज्यम् । तेन न पूर्वभेद इति बोध्यम् । तेनैव पूर्वं चरमानुरोधेन पूर्वाश्रवणस्यास्वारस्येऽपि न बहिरङ्गप्रबलप्रत्यक्षाश्रवणस्येति शङ्कनाद्वा चरमानुरोधेन प्रथमस्यास्वारस्यमयुक्तं चरमस्यैव प्रत्यक्षाश्रवणविरोधेन भूतगतिपरत्वायोगादिति शङ्कनाद्वाऽनन्तरसङ्गतिरपि सूचितेति ध्येयम् ॥ **पूर्वोक्तमिति** ॥ उभयविधवस्तुदर्शनमित्यर्थः । नन्वपां प्राणानां च गत्युक्त्या भूतगतेः सिद्धत्वाल्लोकदृष्टिमात्रेण कथं सन्देहोत्पाद इत्यत आह ॥ **पृथगिति** ॥ पूर्वमबादिगत्युक्त्या भूतानां गतिरुक्ता प्रत्यक्षश्रवणं च भूतगतौ नास्तीति जानतो विशेषमजानतो लोकदृष्टिवशाद्भवति संशय इति भावः । सूत्रे जीवो भूतै रंहति सम्परिष्वक्त इति प्रकृतस्यानुवृत्तिर्नत्र आवृत्तिरित्युपेत्य अतः प्रत्यक्षश्रवणान्न युक्तमिति भाष्यस्थप्रतिज्ञाहेत्वोरर्थमाह ॥ **न भूतानामिति** ॥ अत इत्यस्यार्थस्तथेति । तथाशब्दार्थं विवृण्वन् अग्न्यादीत्यादिभाष्यवाक्यस्य सार्थक्याय तस्य पूर्वाक्षेपकत्वरूपफलं दर्शयन् शङ्कापूर्वं भाष्यं व्याचष्टे ॥ **न च वाच्यमिति** ॥ **श्रूयत इति** ॥ पञ्चम्यामाहुतावाप इति करणैर्वाव न वियुज्यते इति च श्रूयत इत्यर्थः । आप इति वाक्यस्य न चागमनमात्रविषयत्वमित्यादिना गतिविषयत्वसमर्थनादिति भावः ॥ **अर्थादिति** ॥ अपामनेकभूतात्मकत्वात्प्राणानां भूताविनाभावाच्चेति भावः ॥ **यथेति** ॥ अत इत्यस्य तथेत्यर्थाद्यथेति लाभादित्यग्रे व्यक्तम् । श्रूयतेऽग्निं वागप्येतीत्यादिनेत्यर्थः । तथा प्रत्यक्षत इत्यर्थः । ततश्च किमित्यतः विशेषाश्रवणनियम एव बलीयानित्यन्यत्रोक्तं संयोजयति ॥ **आर्थिकेति** ॥ प्राणानां चेत्युक्तमपि प्रत्याह ॥ **सति हीति** ॥ **वैदिकार्थ इति** ॥ शास्त्रयोनिसूत्रे कामाच्चेति सूत्रे श्रुतेस्त्विति सूत्रादौ च तथोक्तेरिति भावः ॥ **अत इति** ॥ आर्थिकश्रवणादपि प्रत्यक्षाश्रवणस्य बलवत्त्वात् अश्रुते वैदिकार्थे युक्त्यप्रवृत्तेश्चेत्यर्थः । यद्वा भाष्यस्थमतःपदं तथेत्यर्थं व्याख्याय हेत्वर्थक-

(भावदीपः)

तयाऽप्यनूद्य व्याचष्टे ॥ **अत इत्यादिना** ॥ न युक्तमित्यस्य तात्पर्यमभाव इति । भूतानां जीवेन सहगतेरित्यन्वयः । फलमाह ॥ **तत इति** ॥ भूतगत्यभावादित्यर्थः । स्वकृतव्याख्यानस्योद्भाष्यत्व-भ्रमनिरासायाह ॥ **अतश्शब्द इति** ॥ **हेत्वर्थे चेति** ॥ भाष्येऽत इत्यस्य व्याख्यानं प्रत्यक्षाश्रवणा-दितीति भावः । श्रुतिगीतातात्पर्योक्तवचनमाह ॥ **अतश्शब्दस्त्विति** ॥ उभयार्थे सकृदुच्चरितो हेत्वर्थं तथेत्यर्थं च वक्तीत्यर्थः । भाष्ये नञः प्रत्यक्षेत्यादिप्राचीनवाक्यार्थस्य प्रतियोगितयान्वयमाह ॥ **न प्रत्यक्षेति** ॥ तत्र हेत्वाकाङ्क्षायामार्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव नेष्टादिकारिणां प्रतीतेरिति परिहारान्तरमुक्तमित्यन्यत्रोत्त्यनुरोधेन भाष्यभावं वक्तुमार्थिकश्रवणपदेनापां गत्युक्त्या प्राणगत्युक्त्या च प्राप्तमार्थिकश्रवणं ग्राह्यमिति भावेनान्यत्रोक्तं संयोजयति ॥ **आर्थिकेति** ॥ द्वेधापि लब्धस्येत्यर्थः । ननूक्तं वैदिकेऽर्थे युक्तप्रवृत्तिरिति तत्राह ॥ **युक्तेरपीति** ॥ **तच्चेति** ॥ 'यत्र वाव भूतानि' इति 'करणैर्वाव न वियुज्यत' इति च व्याप्तिलिङ्गग्राहकं प्रमाणमस्तीत्यर्थः । श्रुत्याद्यनुपजीवियुक्तेरेवादृष्टेऽर्थे प्रवृत्त्य-भावः प्रागुक्त इति भावः । इदानीं भाष्यभावमाह ॥ **यदा चेत्यादिना** ॥ **अत इति** ॥ प्रत्यक्षश्रवणस्यापि भावादित्यर्थः । साधनमित्युपलक्षणं शास्त्रं चेत्यपि ग्राह्यम् ।

## अभिनवचन्द्रिका

ननु 'तदन्तरप्रतिपत्तौ' इत्यनेनैव भूतानां जीवेन सहगतेस्समर्थितत्वेन भूतानि गच्छन्ति न वेति सन्देहस्यैवाऽनुत्पादात् कथं सन्देहोद्घाटनमित्यत आह– **पृथक्पृथग्विचारत्वादिति** ॥ अस्य विचारस्य पृथक्पृथगधिकारिकत्वात् सन्देहानुत्पादो न मन्तव्य इत्यर्थः । एकस्यैव संशयस्य निरासाय बहूनि समाधानानि इति सन्देहानुत्पादो न मन्तव्य इति वाऽर्थः । अयं भावः अस्त्वेक एवाऽधिकारी सर्वेष्वधिकरणेषु तथापि पूर्वपक्षरूपमिथ्याज्ञानबाहुल्यात् तन्निरासाय प्रवृत्तान्येता-न्यधिकरणानि प्रथमाधिकरणनिवृत्तसंशयस्यापि विरोधित्वान्निवर्तकानीति दर्शयितुमेव अस्माभिः प्रत्यधिकरणं सन्देहः प्रदर्श्यते, न तु पूर्वाधिकरणप्रवृत्त्युत्तरकालमपि सन्देहो भवतीत्याशयेन । दृश्यन्ते हि पर्वते वह्निसन्देहनिवृत्तये धूमवत्वात्प्रकाशविशेषवत्वाच्चेति हेतुद्वय माचक्षाणा लौकिकाः परीक्षकाश्च । तत्र यथा लिङ्गद्वयमपि एकस्यैव संशयस्य निवर्त्तकं भवति, एवमिहापि इमान्यधि-करणानि एकस्यैव संशयस्य निवर्त्तकानि भवन्तीति । अस्तु तथाश्रुत्यभावः । आर्थिकश्रवणात्तु

**(अभिनवचन्द्रिका)**

भूतगतिसिद्धिरित्यत आह ॥ **आर्थिकश्रवणादपीति** ॥ स एव हि श्रुतेरार्थिकोऽर्थः यो नियमेन क्वचित्प्रत्यक्षश्रुतिबोधितः, यस्तु क्वापि न प्रत्यक्षश्रुतिबोधितः नाऽसौ श्रुतेरार्थिकोऽर्थ इति भावः । मा भूत् आर्थिकश्रवणाद्भूतगतिसिद्धिः प्राणगतियुक्त्या तु सिध्यतीत्यत आह– **सति हीति** ॥ वैदिकेऽर्थे युक्तयोऽपि प्रवर्तन्ते, यदि सोऽर्थः यत्र क्वचित् विशेषेण श्रुतः स्यात् । नाऽन्यथेति भावः । भाष्यस्थाऽतःशब्दं व्याचष्टे **अतःशब्द इति** ॥ **उभयार्थे चेति** ॥ पुष्पवंतावित्यादिशब्दवत् एकयोक्त्या अर्थद्वयोपस्थापको भवतीत्यर्थः ॥ **न प्रत्यक्षेति** ॥ प्रत्यक्षाऽ श्रवणादश्रवणमेवाऽङ्गीकृत्य भूतानामसहगतिर्न वक्तव्येत्यर्थः ॥ **आर्थिक श्रवणस्येति** ॥ आर्थिकश्रवणसद्भावे श्रवणसामान्याभावायोगादिति भावः ॥ **तदेवोपपादयति** ॥ **न हीति** ॥ न हि केनापि सदशनाभावं दृष्ट्वा कदशनमेवापोद्यते येनेहाऽऽर्थिकश्रवणाऽपवादः स्यात् । किंतु प्रतीतंकदशनत्वमङ्गीकृत्य अनशनत्वमेवाऽपोद्यते इति भावः । युक्त्याप्येतमर्थं साधयति– **युक्तेरपीति** ॥ नन्वार्थिकश्रवणेन सिद्धान्तकरणमयुक्तं सूत्रकृता विशेषश्रुतेरेवाभिहितत्वेन तदनभिप्रेतत्वादित्यत आह– **यदा चैवमिति** ॥

पूर्वपक्षस्तु न भूतानि जीवेन सहगच्छन्ति तथा श्रुत्यभावात् । न चाऽपां प्राणानां च सहगतिः श्रूयतेऽतोऽर्थाद्भूतगतिरपि श्रुता भवतीति वाच्यम् । साक्षाच्छ्रवणाभावेनाऽऽर्थिकश्रुतेरपालनीयत्वात् । वैदिकेऽर्थे साक्षाच्छ्रवणसद्भाव एव युक्तीनां प्रवृत्तेर्युक्त्यापि न तत्सिद्धिः । ततश्च मरणस्यैव त्वन्मते मोक्षत्वप्रसङ्गादननुष्ठेयमेव वैराग्यादीति ।

सिद्धान्तस्तु न प्रत्यक्षश्रुत्यभावेनाश्रवणमङ्गीकृत्य भूतानामसहगतिर्मन्तव्या । आर्थिकश्रवणस्याप्यश्रवणबाधकत्वात् यजमानमरणे भूतानां सहगतेः विस्पष्टमभिहितत्वेन तद्दृष्टान्तेन सर्वत्रापि भूतगतिसिद्धेश्च । अतोऽस्त्येव भूतानां जीवेन सह गतिरिति मरणे मोक्षाभावात् अनुष्ठेयमेव वैराग्यादीति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अत्र पुनरिति** ॥ त्र्यात्मकत्वात् प्राणगतेश्चेत्युक्तार्थिककल्पनातन्मूलोपपत्याऽक्षेपपरिहारादनन्तरसङ्गतिरिति भावः । भूतानां जीवेन सह गतिर्नास्त्युतास्तीति चिन्ता । तदर्थं प्राणगतिरूपोपपत्त्युपोद्बलितमार्थिकश्रवणं न साधकमुत साधकं वेति । तदर्थं भूतानि गच्छन्तीति

(वाक्यार्थमुक्तावली)

विशेषतः साक्षात् श्रवणं नास्त्युतास्तीति । ननु तदन्तरप्रतिपत्तावित्यनेनैव भूतानां जीवेन सह गतेः समर्थितत्वेन भूतानि जीवेन सह गच्छन्ति न वेति नाधिकरणेष्वेतेषु सन्देहावकाश इत्यत आह ॥ **पृथक्पृथगिति** ॥ आद्येऽधिकरणे प्रश्नव्याख्यानबलात् भूतसम्परिष्वक्तो गच्छतीति साधिते द्वितीये किं अप्शब्दः सकलभूतपरः किमम्मात्रपर इति सन्दिह्य विचारः । तृतीये किमार्थिक-कल्पनामूलभूतं विशेषप्रमाणमस्ति न वेति सन्दिह्य विचारः । चतुर्थे विशेषप्रमाणतयोपन्यस्त-प्रमाणानां जीवेन सह गमनाख्यमनुमानमसिद्धमुत सिद्धमिति सन्दिह्य अग्न्यादिगतेर्भाक्तत्वोक्त्या विचारः । पञ्चमे अनुमानस्य यदि भूतानि सह गच्छन्ति तर्ह्युपक्रमे श्रूयेत न च श्रूयतेऽतो भूतानि न गच्छन्तीति तर्कविरोधोऽस्ति न वेति सन्दिह्य श्रद्धाशब्दस्य अबाद्युपलक्षकत्वविचारः । षष्ठे चात्र भूतानां जीवेन सह गमनपराप्रत्यक्षश्रुतिरस्ति न वेति सन्दिह्य विचार इति पृथक्पृथगवान्तरसन्देहपूर्वं विचारत्वात् सर्वत्र तात्पर्यावसन्नप्रधाने सन्देहसम्भवात्तदनुत्पादो न मन्तव्य इत्यर्थः । एतेनाश्रुतत्वादित्येकमेवाधिकरणं कर्तुं शक्यत इति निरस्तम् । अवान्तर-बहुविचारसम्बद्धत्वेन पूर्वपक्षसिद्धान्तन्यायभेदादिति प्रागेव प्रत्यभाणि ।

सूत्रे नेत्यावर्तते । तत्रैकस्य रंहति सम्परिष्वक्त इत्यनुवृत्तेनान्वय इति भावेन प्रवृत्तं न युक्तमिति भाष्यांशं व्याचष्टे ॥ **न भूतानामिति** ॥ तत्र हेत्वाकाङ्क्षायामश्रुतत्वादित्यंशं व्याकुर्वदतोऽ-श्रवणादिति भाष्यं व्याचष्टे ॥ **तथा श्रुत्यभावादिति** ॥ अत्रातःशब्दार्थस्तथाशब्दः प्रकारार्थः । भूतानि जीवेन सह गच्छन्तीत्येवमर्थकश्रुत्यभावादित्यर्थः । द्वितीयतृतीयाभ्यां गतार्थतामाशङ्क्य परिहरति ॥ **न चेति** ॥ आद्ये अपां त्र्यात्मकत्वादित्यर्थवत् द्वितीये प्राणगत्यन्यथानुपपत्तिरूपा-दनुमानादित्यर्थः । कुतो नेत्यतस्तत्परिहारकत्वेनाविशेष इत्युक्तन्यायप्रदर्शकं सूत्रखण्डं प्रकारान्तरेण व्याकुर्वदग्न्यादिगतिरित्यादिभाष्यं व्याचष्टे ॥ **यथा खल्विति** ॥ **आर्थिकश्रवणादिति** ॥ अगतिश्रवणरूपात् प्राणगतिश्रवणरूपाच्चेत्यर्थः । नियमेन बलवत्वात् बलवत्वनियमादित्यर्थः । यद्वा नियमेन प्रत्यक्षश्रुत्यभावस्य प्रत्यक्षश्रुत्यभावनियमस्य सर्वथा तदभावस्येत्यर्थः । ननु सार्वज्ञादौ सर्वकर्तृत्वादिहेतवः सर्वैरभ्युपेयन्ते । तद्वत् प्रकृतेऽपि युक्तिभिः प्रमेयसिद्धिः किं न स्यादित्यत आह ॥ **सति हीति** ॥ 'यः सर्वज्ञ' इत्यादिविशेषश्रवणे सतीत्यर्थः । वैदिकार्थ इति प्रत्यक्षामूलकत्व-मुक्तम् । तथा चोपाधिप्रतिपक्षनिरासकप्रत्यक्षागममूलकत्वाभावादुपपत्तिरपि न साधिकेत्यर्थः । यथा तथेति व्याख्यानमुद्भाष्यमित्यत आह ॥ **अतश्शब्द इति** ॥ आर्थिकश्रवणादपि नियमेन

(वाक्यार्थमुक्तावली)

प्रत्यक्षश्रुत्यभावस्य बलवत्वादिति हेतूपन्यास उद्भाष्य इत्यत आह ॥ **हेत्वर्थे चेति** ॥ **उभयार्थे चेति** ॥ उभयार्थविवक्षायामैक्योक्त्यार्थद्वयोपस्थापको भवतीत्यर्थः । नानार्थत्वस्य पूर्वार्धेनैव सिद्धत्वात् । तथा चात्र उभयार्थत्वमिति भावः ॥ **यथाशब्दविद इति** ॥ यथाशब्दस्वरूपविद इत्यर्थः । नेत्यंशं व्याचष्टे ॥ **न प्रत्यक्षेति** ॥ कुतो नेत्यतः प्रतीतेरित्यंशं व्याकुर्वत् श्रुतौ प्रतीतेरिति भाष्यखण्डं व्याचष्टे ॥ **आर्थिकेति** ॥ एतेनापः पुरुषवचस इति श्रुतावपां त्र्यात्मकत्वात् अर्थात् भूतानां गतिप्रतीतेः । 'करणैर्वाव न वियुज्यते' इति श्रुतौ करणगत्युक्त्या अर्थात् भूतानां गति-प्रतीतेरित्यर्थ उक्तो भवति । ननु युक्तेः सजातीयप्रमाणासंवादाभावात् कथं वैदिकेऽर्थे युक्त्युपन्यास इत्याशङ्कापरिहारकत्वेनापि श्रुतौ प्रतीतेरिति भाष्यं व्याचष्टे ॥ **युक्तेरपीति** ॥ न तु स्वविषय-विषयकश्रुतिसंवादेन भाव्यमिति नियम इत्येवार्थः । 'यत्र वाव भूतानि' इति श्रुतौ 'करणैर्वाव न वियुज्यत' इति च श्रुतौ व्याप्तिपक्षधर्मतयोः प्रतीतेरिति भाष्यार्थ उक्तो भवति । नन्वेवं प्रतीतेरित्यंशसूचितार्थिकश्रवणेनैव सिद्धान्तस्थापनसम्भवात् इष्टादिकारिणां प्रतीतेरिति परिहारान्तरं व्यर्थमित्याशङ्कां परिहरन् अनुरूपतेत्युक्तन्यायप्रदर्शकं समग्रभाष्यं व्याचष्टे ॥ **यदा चैवमिति** ॥ तदुक्तं न्यायविवरणे । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वादार्थिकश्रवणमप्यनुक्तिं बाधते एव । किमुत स्थानान्तरगतस्पष्टश्रवणमिति कैमुत्यार्थमेव नेष्टादिकारिणां प्रतीतेरिति परिहारान्तरमुक्तमिति ॥ **अथैनमिति** ॥ स्थानान्तरगतैतदनुरूपश्रुताविष्टादिकारिणां यागादिकारिणां भूतैस्सह गति-प्रतीतेरिति सूत्रखण्डार्थः । पापकारिणां मरणे भूतवियोगः सुतरां सिद्ध इति भावः ।

## तत्त्वसुबोधिनी

**अत्र पुनरिति** ॥ मूलभूतोपपत्तिरूपविशेषप्रमाणसहितार्थिककल्पनाक्षेपसमाधानादनन्तरसङ्गति-रिति भावः । ननु तदन्तरप्रतिपत्तावित्यनेनैव भूतानां जीवेन सह गतेः समर्थितत्वेन भूतानि गच्छन्ति न वेति सन्देहस्यैवानुदयात् कथमेषामधिकरणानामुत्थानमित्यत आह ॥ **पृथक्पृथ-ग्विचारत्वादिति** ॥ अयं भावः । आद्येऽधिकरणे 'भूतसम्परिष्वक्तो रंहति'ति प्रतिज्ञाय प्रमाणत्वेनोदाहृतयोः प्रश्ननिरूपणयोरप्शब्दस्यैव श्रवणात् कथं ताभ्यां सकलभूतानां जीवेन सहगतिसिद्धिरित्याशङ्कानिरासाय तयोः श्रूयमाणोऽप्शब्दः किमम्मात्रपर उत सकलभूतपर इति सन्देहे नायमप्शब्दोऽम्मात्रपरः, किन्तु अपां त्र्यात्मकत्वात् सकलभूतपरः । अप्शब्दप्रयोगस्य

(तत्त्वसुबोधिनी)

भूयस्त्वनिमित्तत्वादिति द्वितीयाधिकरणस्य पृथग्विचारपरत्वम् । नन्वपां त्र्यात्मकत्वेन तासां जीवेन सह गत्या सकलभूतानां सह गतिकल्पना तदा भवेत् । यदि भूतानां जीवेन सह गतौ विशेषप्रमाणं स्यात् । आर्थिककल्पनाया विशेषप्रमाणानुरोधित्वादित्याशङ्कानिरासाय किमार्थिककल्पनायां मूलभूतविशेषप्रमाणमस्ति न वेति सन्देहे न विशेषप्रमाणाभावः, किन्तु भूतानि जीवेन सह गच्छन्ति तत्सहगन्तृप्राणाविनाभूतत्वादित्युपपत्तिरूपविशेषप्रमाणमस्ति । ततश्च निर्णयोपपत्तिरिति प्रवृत्तस्य तृतीयाधिकरणस्य पृथग्विचारपरत्वम् । न चैवं सत्येतदुपपत्तिबलादेव प्रश्नव्याख्यानगता-प्शब्दस्य सकलभूतपरत्वसम्भवे द्वितीयाधिकरणं व्यर्थमिति वाच्यम् । उपपत्तिबलादपि सम्भावितमेव कल्पनीयमिति अपां त्र्यात्मकत्वभूयस्त्वाभ्यामप्शब्दस्य सकलभूतपरत्वसम्भावकतया तत्सार्थक्यो-पपत्तिरिति ।

ननु यत्रास्य पुरुषस्याग्निं वागप्येतीत्यादिश्रुत्या वागादिप्राणानां स्वमूलरूपाग्न्यादीन् प्रति गमनप्रतीत्या जीवेन सह गत्यभावात् तत्सहगन्तृप्राणाविनाभूतत्वरूपहेतुरसिद्ध इत्याशङ्कानिरासाय प्रवृत्तस्य चतुर्थाधिकरणस्य स्पष्टं पृथग्विचारपरत्वम् । ननूक्तोपपत्तिबलादपि भूतत्रयात्मकानामपां जीवेन सह गत्यर्थात् सकलभूतानामपि सहगमनमिति कल्पना तदा स्यात् यद्यपामेव जीवेन सह गतिस्स्यात् । नैतदस्ति । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युपक्रमे प्रथमाग्नौ होम्यतया श्रवणादिति शङ्कानिरासायोपक्रमस्थः श्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणा-पामप्युपलक्षक इति सन्देहे न स्वार्थमात्रपरः, किन्तूपसंहारस्योपक्रमव्याख्यानरूपत्वेन प्राबल्यात् तदनुसारेणोपक्रमस्य नेतव्यत्वात् तद्गतश्रद्धाशब्दस्योपलक्षकत्वमस्तीति प्रतिपादयितुं प्रवृत्तस्य पञ्चमस्य पृथग्विचारपरत्वम् ।

ननूक्तोपपत्त्याऽर्थिककल्पनाभ्यां सर्वभूतानां जीवेन सह गतिर्न सिद्ध्यति । अग्निं वागप्येतीति-वत् भूतानि सहगच्छन्तीति विशेषरूपप्रत्यक्षश्रुत्यभावात् इत्याशङ्कानिरासाय भूतानां जीवेन सहगमनस्य प्रतिपादिका श्रुतिरस्त्युत नास्तीति सन्देहे न नास्ति, किन्त्वस्ति । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छन्तीति विशेषश्रुतेः प्रत्यक्षतः श्रवणादिति प्रतिपादयितुं प्रवृत्तस्य षष्ठस्य पृथग्विचारपरत्वमिति । न चैवं सन्देहादिना एषामधिकरणानां पृथग्विचारपरत्वे अग्न्यादीत्येतद्व्यतिरिक्तेषु चतुर्ष्वप्यधिकरणेषु टीकायां कथं भूतानि जीवेन सह गच्छन्ति न वेति सन्देहः प्रदर्शित इति वाच्यम् । तस्या भूतसन्देहमात्रपरत्वादिति भावः ।

**(तत्त्वसुबोधिनी)**

अतीताधिकरणेषु प्रथमद्वितीयपञ्चमैः भूतानां जीवेन सह गतावार्थिकश्रवणं युक्तितयोक्तम् । तृतीयचतुर्थाभ्यां प्राणगतिस्तत्र युक्तितयोक्ता । तदुभयोपमर्देनेहाश्रवणपूर्वपक्षोभिप्रेत इत्याह ॥ **न च वाच्यमिति** ॥ आर्थिकश्रवणोपमर्दनायापामित्युक्तम् । प्राणगत्युपमर्दनाय प्राणानां चेत्युक्तमिति ज्ञेयम् । भाष्यगतप्रत्यक्षपदाभिप्रायमाह ॥ **साक्षादिति** ॥ नन्वार्थिकश्रवणात् सहगतिः किं न स्यादित्यत आह ॥ **आर्थिकेति** ॥ ननु प्राणगतिरूपोपपत्तिमूलत्वेनार्थिकश्रवणमपि बलवदित्यत आह ॥ **सति हीति** ॥ वैदिकेत्यनेन प्रत्यक्षामूलकत्वमुक्तम् । तथा चोपाधिप्रतिपक्षनिरासकप्रत्यक्षागममूलकत्वाभावादुपपत्तिरपि न साधिकेत्यर्थः । अग्र्यादिरिति भाष्यस्य यथा खल्वित्यादिव्याख्यानमुपपादयति ॥ **अतः शब्द इत्यादिना** ॥ **उभयार्थे चेति** ॥ एकत्रोच्चारणे उभयार्थ इत्यर्थः । अक्षादिशब्दवत् नानार्थत्वस्य पूर्वार्धेनैव सिद्धत्वात् । एतावन्मात्रस्य प्रकृतोपयोगेऽपि अतः-शब्दस्योत्तरार्धेऽश्रवणात्पूर्वोदाहरणमिति द्रष्टव्यम् । कुतो नेत्यतो युक्तिमाह ॥ **आर्थिकेति** ॥ यत्किञ्चिद्विशेषवति सामान्याभावसम्भवे दृष्टान्तमाह ॥ **न हीति** ॥ किञ्च युक्तियुक्तत्वेनापि आर्थिकश्रवणस्य बलवत्वम् । प्रत्यक्षागमसमानार्थत्वाभावेऽपि युक्तेः प्रत्यक्षागममूलत्वमात्रेण साधकत्वमित्याह ॥ **युक्तेरपीति** ॥ **तच्चास्तीति** ॥ 'यत्र वाव भूतानि तत्र कारणानि' इति व्याप्तिग्राहकं, 'करणैर्वा व न वियुज्यत' इति पक्षधर्मता ग्राहकं च प्रमाणवाक्यमस्तीत्यर्थः । सूत्रसिद्धान्तांशतात्पर्यमाह ॥ **यदा चैवमिति** ॥

## वाक्यार्थविवरणम्

नन्वेषां प्राणानां च गत्युक्त्या भूतगतेः सिद्धत्वात् लोकदृष्टिमात्रेण कथमयं निर्णय इत्यत आह ॥ **पृथगिति** ॥ पूर्वमबादिगत्युक्त्या भूतानां गतिरुक्ता । प्रत्यक्षश्रवणं च भूतगतौ नास्तीति जानतो विशेषमजानतो लोकदृष्टिवशाद्भवति सन्देह इत्यर्थः । भावबोधे तु कृतं व्याख्यानान्तरमिति न तद्विरोधः ॥ **अर्थादिति** ॥ अपां पृथिव्यादिभूतात्मकत्वात् प्राणाविनाभूतत्वाद्भूतानामतोऽपां प्राणानां गतौ भूतानामपि गतिरर्थात्प्राप्तैवेति भावः । आर्थिकश्रवणस्यापि प्राणगतिरूपयुक्तियुक्तत्वेन बलवत्त्वमेवेत्यत आह ॥ **सति हीति** ॥ **विशेषश्रवणम्** ॥ प्रत्यक्षतः श्रवणम् ॥ **तथार्थ इति** ॥ एवं चाग्र्यादिगतिर्यथा प्रत्यक्षतः श्रूयते । अतस्तथा भूतानां जीवेन यादृशतादृशसहगतिः प्रत्यक्षतो न श्रूयत इति शेषः । अतस्तस्मात् प्रत्यक्षाश्रवणान्न युक्तमिति भाष्ययोजना द्रष्टव्या

(वाक्यार्थविवरणम्)

॥ **न हीति** ॥ यत्किञ्चिद्विशेषसद्भावे सामान्यभावायोग इति सामान्यमात्रेऽयं दृष्टान्त इति ज्ञेयम् । प्रत्यक्षश्रवणस्यैव मृष्टान्नस्थानीयतया आर्थिकश्रवणस्य कदन्नस्थानीयत्वमिति द्रष्टव्यम् । भाष्ये भूतैरित्यनन्तरं सम्बन्ध इति शेषः ।

## वाक्यार्थमञ्जरी

पूर्वोक्तमुभयविधवस्तुदर्शनम् । ननु तदन्तरप्रतिपत्तावित्यनेनैव भूतानां जीवेन सहगतेः समर्थितत्वेन पुनर्भूतानि गच्छन्ति न वेति संदेहस्यैवानुदयात्कथमेतेषामधिकणानामुत्थानमित्यत आह ॥ **पृथक्पृथग्विचारत्वादिति** ॥ तत्प्रकारश्चतत्तदधिकरणे एव व्यक्त इति भावः ॥ **ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ** ॥ अश्रुतत्वाद्विशिष्य जीवेन सह भूतगतेर-श्रवणान्न तस्य तैः सहागमनमिति चेन्न । इष्टादिकारिणामिष्टापूर्तादिकारिणां भूतैरेव गच्छतीति श्रुत्या भूतैःसहगतिप्रतीतेरित्यर्थः ॥ **अर्थादिति** ॥ अपां त्र्यात्मकत्वेन प्राणानां भूताविनाभूतत्वेन तदुभयगमने तेषामपि गमनप्राप्तेरिति भावः । प्रत्यक्षशब्दार्थः ॥ **साक्षादिति** ॥ ननु प्राणगति-रूपोपपत्तिमूलकत्वेनार्थिकश्रवणमपि बलवदित्यत आह ॥ **सति हीति** ॥ अन्यथा प्रतिपक्षसम्भवेन प्रामाण्यानिश्चयादिति भावः । यथार्थ इत्यादियोजनाप्रकारश्च यथा खल्वित्यादिना प्रागेव दर्शित इति भावः ॥ **उभयार्थे चेति** ॥ एकत्रोच्चारणे उभयार्थ इत्यर्थः । यत्किञ्चिद्विशेषवति सामान्याभावासम्भवे दृष्टान्तमाह ॥ **न हीति** ॥ **तच्चास्तीति** ॥ 'यत्र वाव भूतानि तत्र करणानि' इति व्याप्तिग्राहकं 'करणैर्वाव न युज्यत' इति पक्षधर्मताग्राहकं च प्रमाणमस्तीत्यर्थः । तथा चार्थिकश्रवणस्य युक्तिमूलत्वेन प्राबल्यमिति भावः ।

॥ इति अश्रुतत्वाधिकरणम् ॥ ६ ॥

## ७. भाक्ताधिकरणम्

'अपाम सोमममृता अभूम' (ऋ. सं. ८-४-३) इत्यादिश्रुतिविरोध इत्यतो वक्ति –

**॥ ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ७ ॥**

भागतस्तदमृतत्वम्। 'नान्यः पन्था अयनाय विद्यत' (तै.आ.३-१३) इति श्रुतेरात्मविद एव हि मुख्यम्। वाशब्दात्पारम्पर्येणाऽऽत्मविदपेक्षया वा। तथा हि श्रुतिः– 'स एनमविदितो न भुनक्ति यथा वेदो वाऽऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजते' (बृ.उ.३-४-१५) 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः'। 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि यत एनममृतं (एनममृतत्वं) नयन्ति' इति च।

### तत्त्वप्रदीपिका

यद्येवमिष्टादिकारिणां धूमादिमार्गेण स्वर्गं गतानां पुनरावृत्तिरिष्यते, 'अपाम सोमममृता अभूम' 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' इत्यादि श्रुतिविरोधः स्यात्। अत्र हि कर्मणैव मोक्षो ज्ञायते। युज्यते च नित्यनैमित्तिककर्मानुष्ठानेन क्षपितकल्मषाणामभूतप्रत्यवायानां काम्यप्रतिषिद्धवर्जनेनासञ्जातप्रजननहेतूनाम्। यथाऽऽहुः केचिदित्यत आह– **भाक्तं वेत्यादि सूत्रम् ॥** कालभागतस्तस्यां श्रुतावुक्तममृतत्वमल्पकालीनम्। 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'न चेदिहावेदीन्महती विनष्टिः' इत्यादिश्रुतेरात्मविद एव ह्यनन्तकालीनममृतत्वम्। पारम्पर्येणाऽत्मविदपेक्षया वा तदमृतत्वम्। तथाचायमर्थः स्यात्। सोमममपाम, देवानविदाम, ज्योतिरगन्म, अमृता अभूमेति। ज्योतिर्ब्रह्मेत्युदितम्। न भुनक्ति न पालयति। अन्ततः स्वल्पफलदानान्ततः। 'महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत्' इति हि भारते। 'निष्फल' इति स्वल्पफलापेक्षया। य आत्मानमेव आश्रयमुपास्ते दर्शनपर्यन्तं न हास्य कर्म क्षीयते। वाशब्दादित्यादेरन्योऽर्थः। वाशब्दात्पारम्पर्येण कर्मणाऽमृतत्वं ज्ञानोत्पत्तिद्वारेण। तथाहि दर्शयति 'कर्मणा ज्ञानमातनोति'त्यादि। आत्मविदपेक्षया वा तदमृतत्वं आत्मविदां कर्मापेक्षयेत्यर्थः। तथा हि दर्शयति 'स य आत्मानम्'

(तत्त्वप्रदीपिका)

इत्यादि । न च कर्मणैव सर्वकर्मक्षयः प्रमातुं शक्यते । प्रमाणाभावात् । न च काम्यप्रतिषिद्धवर्जनं सर्वात्मना शक्यते । अमात्यादिना प्रसङ्गात् । न च पुण्यानां प्रायश्चित्तविधिः । न च पापानामनन्तानां निष्कृतिः शक्या । अतो न कर्मणा मोक्षः ।

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्त्यर्थं वैराग्यादेरेवावश्यकसाधनत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि वैराग्यादेर्नावश्यानुष्ठेयत्वं तर्हि नास्य शास्त्रस्यावश्यमारम्भणीयत्वं स्यादतस्तत्साधनीयम् । वैराग्यादिसाधनमेव विषयः । किं मुमुक्षुणावश्यमनुष्ठेयमुत नेति सन्देहः । उभयविधसाधनदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **अपामेति** ॥ न मुमुक्षुणावश्यमनुष्ठेयं वैराग्यादि । तद्विनापि कर्मणैव मोक्षसम्भवात् । 'अपाम सोमममृता अभूम' इत्यादिश्रुतेः । अन्यथैतच्छ्रुतिविरोधात् । अतो 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' । इति न्यायेन सुशकेन कर्मणा मोक्षसिद्धौ वैराग्यादिना कृत्याभावाद्व्यर्थमिदं शास्त्रमिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि । तद्विना मोक्षासिद्धेः । न चैवं श्रुतिविरोधः । तस्या अन्यार्थत्वात् । तथा हि । कर्म द्विविधम् । काम्यमकाम्यं च । तत्र यद्यस्यां श्रुतौ सोमयागः काम्यो भवेत् तदा तत्साध्यममृतत्वं नाम किंचित्कालीनमिति गौणार्थतया श्रुतिरुपपन्नेति भावः । मुख्यामृतत्वमेव श्रुत्यर्थः किं न स्यादित्यत आह ॥ **नान्य इति** ॥ न कर्मणा मुख्यामृतत्वं लभ्यं येन तत् श्रुत्यर्थः स्यात् । काम्यकर्मिणामनात्मवित्त्वात् । 'तमेवं विद्वान्' इति श्रुत्याऽऽत्मविदो मुख्यामृतत्वस्यान्येषां तदभावस्यैवोक्तत्वादिति भावः । काम्यकर्मणा तत्फलस्यैव हि सिद्धिः । अथाकाम्यकर्म विवक्षितं तदप्युभयथा । जिज्ञासूनां ज्ञानिनां चेति । द्विविधमपि न मोक्षसाधनं साक्षादित्याह ॥ **वाशब्दादिति** ॥ इति सूचितमिति शेषः । यद्यत्र जिज्ञासूनामकाम्यं कर्म विवक्षितं तदामृतपदेन मुख्यामृतत्वमेव । किं नाम तच्च कर्मणा न साक्षाद्भवति । कर्मभिः शुद्धान्तःकरणस्य वैराग्यादि तद्वतो जिज्ञासा तस्य ज्ञानं तस्य मोक्ष इति पारम्पर्येणैव 'अगन्म ज्योतिः' इति । अथ ज्ञानिनोऽकाम्यं कर्म तथापि न तेन मोक्षः किं त्वात्मविदमपेक्ष्यैव । आत्मज्ञानलब्धे मोक्षेऽकाम्यकर्मणा अतिशयो भवति । सर्वथा न कर्मणा संसारनिवृत्तिरिति भावः । एवमस्याः श्रुतेरुक्तार्थत्रयसमर्थनाय श्रुतीरुदाहरति ॥ **तथा हीति** ॥ आत्मविदामेव मुख्यामृतत्वं नानात्मविदामित्यर्थे 'स एनम्' इति श्रुतिः प्रमाणम् । 'आत्मानमेव

(तत्त्वप्रकाशिका)

**लोकमुपासीत' इत्यादि श्रुत्यैवाऽऽत्मविदपेक्षयेत्यर्थसिद्धिः । न भुनक्ति नामृतत्वं भोजयति । उपास्ते जानाति च स मुक्तो यद्यत्कामयते तत्तत्परमात्मप्रसादद्वारा कर्म सृजतीत्यर्थः । भागतस्तदमृतत्वमित्यस्मिन्नर्थेऽमृत इति श्रुतिः । पारम्पर्येणेत्यत्र कर्मणेति श्रुतिः । अतो वैराग्याद्यनुष्ठानमन्तरेण मोक्षासिद्धेर्न तत्प्रतिपादकशास्त्रवैयर्थ्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

किञ्चित्कालीनमिति वदता भागत इति भाष्यकारीयभागशब्दस्य मुक्तिकालापेक्षया अल्पकालभाग एवार्थ इति सूचितम् । न च वाच्यं 'तमेवं विद्वानमृत' इति श्रुतावप्यमृत इत्येवोक्तेः कथं मुख्यामृतत्वलाभ इति । 'यावदिन्द्र' इत्यादिवदवध्यनुक्तेः । 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः' इति वचनादमृतपदेन मुख्यामृतमेव लभ्यते । 'नान्यः पन्था अयनाय विद्यते' इति श्रुतिशेषेऽयनपदेन मुख्यामृतत्वरूपमोक्षस्यैव प्रस्ताव्यमानत्वाच्च । 'श्रेयो निःश्रेयसामृतम्' इति मुख्यामृत एवामृतशब्दानुशासनात् । सर्वथा मृतिराहित्यरूपार्थस्य तत्रैव सम्भवाच्च । अगन्म ज्योतिरित्यस्य ज्योतिः ज्योतीरूपपरमात्मानं अगन्म गत्यर्थानां ज्ञानार्थत्वात् अजानीम देवानप्यविदाम । तारतम्येनाविदाम अजानीमेत्यर्थः । अविदितस्तु परमात्मा एनं कर्मकर्तारं न भुनक्तीति यथाश्रुतक्रियाया असङ्गतेरर्थमाह न भुनक्ति न भोजयतीति ।

## भावबोधः

**वैराग्यादेरावश्यकसाधनत्वसमर्थनादिति** ॥ तथा चात्र प्रथमाधिकरणे 'सम्परिष्वक्त' इत्यनेन न मरणमात्रे भूतवियोगः । किं तु मुक्तिरूपमरण एवेत्यत्र ज्ञानसदसद्भावे एव नियामक इति यत्सूचितं तद्युक्तम् । मोक्षस्य कर्मसाध्यत्वोक्तेरिति शङ्कापरिहारादनन्तरसङ्गतिरिति भावः । न चैवं तदानन्तर्यं स्यादिति वाच्यम् । प्रश्ननिरूपणरूपहेतुसमर्थनपराधिकरणपञ्चकस्यावश्यकत्वेन तदनन्तरमेवावसरप्राप्तत्वादिति भावः । किं मुमुक्षुणावश्यमनुष्ठेयं न वेति सन्देह इति । अत्र वैराग्यादि किं मुमुक्षुणा अवश्यमनुष्ठेयमुत नेति चिन्ता । तदर्थं मोक्षः कर्मसाध्यो न वेति । तदर्थं 'अपामसोमम्' इत्याद्यर्थवादः कर्मणो मोक्षसाधनत्वप्रतिपादक उत नेति । तदर्थममृतशब्दः साक्षात्कर्मसाध्यमोक्षरूपमुख्यार्थपर उत गौण्यादिनार्थान्तरपर इति ॥ **उभयविधसाधनेति** ॥ यत्र कार्येऽनेकेषां साधनता तत्रैकैकस्यावश्यानुष्ठेयत्वाभावः । यत्र त्वेकमेव साधनं तस्यावश्यमनुष्ठेयत्वमिति भावः । कर्मैवैतत्साधनमिति न्यायविवरणस्याभिप्रायमाह ॥ **तद्भिनेति** ॥ कुत इत्यत आह ॥

(भावबोधः)

**अपामेति** ॥ अनेन 'अपाम सोमममृता अभूम' इति विशेषत एव मोक्षफलस्याप्युक्तेरिति न्यायविवरणमुक्ततात्पर्यकं भवति । इत्यादिश्रुतिविरोध इत्यादिभाष्यं न्यायविवरणैकवाक्यतया योजयति ॥ **अन्यथेति** ॥

नन्वेवमपि कर्मवद्वैराग्यादिसाध्यज्ञानस्यापि मोक्षसाधनत्वाद्यथारुचि तस्याप्यनुष्ठानसम्भवान्न वैराग्यादेर्वैयर्थ्यमित्यत आह ॥ **अत इति** ॥ तत्र यद्यस्यामिति भागतस्तदमृतत्वमिति भाष्य-व्याख्यानपरेणानेनामृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरिति न्यायविवरणं तावदेकेन प्रकारेण व्याख्यातं भवति ॥ **किञ्चित्कालीनमिति** ॥ मन्वन्तराद्यवच्छिन्नकालेषु मरणरहितत्वरूपगुण-योगेनामृता इवामृता इति गौणार्थतयेत्यर्थः । काम्यकर्मिणामनात्मवित्त्वादिति । तथा चात्मविद एव हि मुख्यमिति भाष्येण 'अनात्मवित्त्वात्' इति सौत्रो हेतुः 'भाक्तम्' इत्यत्रैव योजित इति भावः ॥ **तमेवं विद्वानितीति** ॥ अनेन 'नान्यः पन्था अयनाय विद्यते' इति न्यायविवरण-मप्युक्तार्थं भवति । कुतोऽन्येषां तदभावस्योक्तिरित्यत आह ॥ **काम्यकर्मणेति** ॥ 'हि'शब्दो यस्मादित्यर्थे ॥ **मुख्यामृतत्वमिति** ॥ अमृतशब्दस्य मोक्षे योगरूढिलक्षणमुख्यवृत्तेः सद्भावादिति भावः । कर्मनिर्णयटीकायां तु तत्साधनज्ञानलक्षणयेत्यस्मिन्नेव पक्षे प्रकारान्तरमुक्तमित्यवधेयम् ।

यद्यमृतपदेन मुख्यामृतत्वमेवोच्यते तर्ह्यङ्गीकृतं कर्मणो मोक्षसाधनत्वमित्यभिप्रेत्य पृच्छति ॥ **किं नामेति** ॥ **तच्चेति** ॥ अनेनामृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरिति न्यायविवरणं प्रकारान्तरेण व्याख्यातं भवति ॥ **तथा हि वाक्यशेष इति** ॥ तथा चायं श्रुत्यर्थः 'सोममपामामृता अभूम' इति कर्ममोक्षयोः कार्यकारणभाव उक्तः । स न साक्षात् किं तु परम्परयेत्युच्यते । अगन्म ज्येतिरिति प्रकाशरूपं ब्रह्मागन्म जानीमः । ज्योतिः ज्ञानमगन्म प्राप्नुम इति वा । ततः किमित्यत उच्यते ॥ **अविदामेति** ॥ मार्गरूपानर्चिरादि देवानविदाम प्राप्नुम इति । न चैवं सत्याद्यान्तिमपक्षयोरेतद्वाक्यशेषविरोधेन कथं पूर्वश्रुतिस्तदर्थपरेति वाच्यम् । अत्राद्ये पक्षे– कथं कर्मणा स्वर्ग इत्यत उच्यते ॥ **अगन्मेति** ॥ चन्द्रमसं ज्योतिरगन्म मार्गरूपान् धूमादि-देवानविदामेत्यस्य तृतीये च सोमयागेन (पानेन) कथमानन्दातिशय इत्यत उच्यते ॥ **अगन्मेति** ॥ यतः पूर्वं ज्योतिरपरोक्षज्ञानमगन्म ततो देवान् यथायोग्यं देवादित्वमविदामेत्यर्थस्य सम्भवेन तद्विरोधाभावादिति भावः ॥ **आत्मज्ञानलब्ध इति** ॥ तथा च मोक्षलक्षणमुख्यामृतवाचकस्यामृत-

शब्दस्य तदेकदेशानन्दातिशये लक्षणया प्रवृत्तिरिति भावः । अनेनामृतशब्दस्य यथायोग्यमेवार्थ-कल्पनोपपत्तेरिति न्यायविवरणं प्रकारान्तरेण व्याख्यातं भवति ।

ननु यदि कर्मण आनन्दातिशयहेतुत्वं तर्ह्यङ्गीकृतमेव मोक्षसाधनत्वम् । तस्यैव मोक्षत्वात् । तद्व्यतिरिक्तस्य कर्मासाध्यस्य ज्ञानमात्रसाध्यस्य मोक्षस्याश्रवणात् । तथा च न तेन मोक्ष इति । आत्मज्ञानलब्धमोक्ष इति च कथमुक्तमित्यत आह ॥ **सर्वथेति** ॥

यच्चोक्तम्–

'सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्याद्यानन्दचित्रता' ॥ इति ।

इत्यादिश्रुत्यैवेति । आत्मविदामेव मुख्यामृतत्वमित्यर्थान्तरप्रतिपादनायोदाहृतयैवेत्यर्थः । आदिपदेन तत्तदसृजत इत्येतस्य ग्रहणम् । अविदितोऽपि परमात्मा स्वर्गादि भोजयत्येवेत्यतो न भुनक्तीत्येतस्य तात्पर्यमाह ॥ **नामृतत्वमिति** ॥ ननूपासककर्मणो ज्ञानहेतुत्वात् कथमात्मविद-पेक्षयेत्यत्रार्थे 'आत्मानमेव' इति श्रुतिः प्रमाणमित्यत आह ॥ **ज्ञानाति चेति** ॥ परमात्मनः सकाशाद्यद्यत् प्राप्तुमिच्छति तत्सर्वं कर्म स्वयं सृजतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ **स मुक्तो यद्यदिति** ॥ 'आत्मविदपेक्षया' इति, 'भागतस्तदमृतत्वमित्यस्मिन्नर्थः' इति 'पारम्पर्येणेत्यत्र' इति वाक्यत्रयेण न्यायविवरणोदाहृतयोः 'स य आत्मानमेव लोकमुपास्ते' 'यावदिन्द्रो यावन्मनुः' इति श्रुत्योरादिपदोपात्तायाः 'कर्मणा ज्ञानमातनोति' इत्यादिश्रुतेश्च तत्तदर्थपरत्वमप्युक्तं भवति ।

## भावदीपः

**वैराग्यादेरिति** ॥ आदिपदेन भक्तिजिज्ञासाज्ञानानां ग्रहः । कर्मणामस्थिरफलकत्वोक्त्येति योज्यम् । एतेनातीतनयैर्जीवस्यामुक्तिभूतपरिष्वंगभावान्न मृतिमात्रेण मुक्तिरिति तदर्थं वैराग्यादिकमपेक्षितमित्युक्तम् । इदानीमस्तु आमुक्ति भूतबन्धस्तथापि तन्निवृत्तिः कर्मणैवास्तु किं वैराग्यादिनेत्याशङ्कानिरासेन वैराग्यादेरेवावश्यकत्वं न तु कर्मण इति अत्र समर्थनादनन्तर-सङ्गतिरगतार्थत्वं चेति सूचितम् । तत्त्वप्रदीपे तु यदीष्टादिकारिणां भूतबन्धेन पुनरागमनं तर्हि 'अपामसोमममृता अभूम' 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' इत्यादिश्रुतिविरोध इत्युक्तम् ।

(भावदीपः)

तद्रीत्या पूर्वाक्षेपात् सङ्गतिः स्पष्टैव । यद्वा इष्टापूर्तादिकारिणो भूतपरिष्वङ्गेन गतिश्रवणवन्मोक्षस्यापि श्रवणात्किं वैराग्यादिनेत्याक्षेपात्सङ्गतिः । तदुक्त न्यायविवरणे मोक्षफलस्याप्युक्तेरिति ॥ **उभयविधेति** ॥ लोके तृप्त्यर्थं भोजनादिसाधनमवश्यानुष्ठेयं दृश्यते । रसायनसेवनादिरूपं तु अवश्याननुष्ठेयं दृष्टं तथेहापि पूर्वोक्तरीत्या वैराग्यादिकमनुष्ठेयं किं वाऽपामेत्यादिश्रुत्याऽवश्याननुष्ठेयमिति भवति सन्देह इत्यर्थः । 'सङ्गम्यन्ते गुरोर्गिर' इति प्रतिज्ञानुरोधाद्भाष्यवाक्यमन्यत्रोक्तवाक्येन सङ्गमयितुं 'अपाम सोमममृता अभूम' इति विशेषत एव मोक्षफलस्याप्युक्तेः कर्मैव तत्साधनमित्यन्यत्रोक्तमत्र फलोक्तिपूर्वमर्थतो योजयति ॥ **न मुमुक्षुणेत्यादिना** ॥ नन्वनादिप्रतिबन्धकदुरितस्य जन्महेतुकर्मणां च भावात्कथं सोमयागादिकर्ममात्रेण मोक्षः । कथं च 'अथ हैनं यजमानं किं न जहाति' इति भूतावियोगश्रुतिश्चेत्यतो विपक्षे बाधकोक्तिपरतया भाष्यं तत्सङ्गतत्वेन योजयति ॥ **अन्यथेति** ॥ कर्मणा मोक्षानङ्गीकार इत्यर्थः । नित्यनैमित्तिककर्मानुष्ठानेन क्षपितकलुषाणामभूतप्रत्यवायानां काम्यप्रतिषिद्धवर्जनेनासञ्जातजन्महेतूनामिष्टापूर्तादिकारिणां कर्मणैव मोक्षोपपत्तेः । अत एव प्राक्कर्मणैवेत्येवकारः । प्राचीनश्रुतिस्तु प्रतिबन्धकवदिष्टादिकारिपरा वा अप्रमाणं वेति भावः । कोऽत्र विशेषः । येन वैराग्यादित्यागः कर्मण्यादरश्चेत्यत आह ॥ **अत इति** ॥ कर्मणो मुक्तिहेतुत्वस्य श्रौतत्वादित्यर्थः । अर्के अर्कतरौ । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेदित्युत्तरार्धशः ॥ **वैराग्यादिनेति** ॥ अनेनाध्यायाक्षेपोऽपि सूचितः । तदर्थं वैराग्यभक्तिजिज्ञासाज्ञानार्थमित्यर्थः । अस्य शास्त्राद्यारम्भप्रयोजकत्वेऽपि पूर्वषडधिकरणीव वैराग्यप्रयोजकत्वमप्यस्तीत्यत्र पादे निवेश इति भावः । यद्यपि शास्त्रं न वैराग्यभक्त्यर्थं 'ब्राह्मणो निर्वेदमायात्,' 'यमेवैष वृणुते,' 'भक्तिमान्परमे विष्णौ' इत्यादिजिज्ञासासूत्रभाष्योक्तश्रुतिस्मृतिभिः, ऊर्ध्वरेतस्सु चशब्दे हि । अध्ययनमात्रवतः । अनुबन्धादिभ्यः । भूयस्त्वात्त्वनुबन्ध इत्यादिसूत्रैश्च वैराग्यभक्त्यादेः शास्त्राधिकारिविशेषणत्वोक्त्या तस्य शास्त्रात्पूर्वमेवौपदेशिकवाक्यार्थज्ञानरूपश्रवणादिनैव सिद्धेः । अन्यथा अन्योन्याश्रयात् । तथा न्यायनिबन्धनात्मकशास्त्रस्य न्यायानुसन्धानरूपमननार्थत्वेन तदनन्तरभाविनिदिध्यासनार्थत्वस्य तद्द्वारा वा 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा च' इत्युक्तदिशा चित्तनिरोधद्वारा साक्षादेव वा कथञ्चिदपरोक्षज्ञानार्थत्वसम्भवेऽपि न श्रवणार्थत्वम् । तस्योपनिषद्भाष्यादिरूपोपदेशजन्यवाक्यार्थज्ञानरूपत्वेन न्यायशास्त्रात्पूर्वभावित्वात् । विवक्षितं च जिज्ञासापदेन त्रितयं

(भावदीपः)

एतत्पादसङ्गतिटीकायां श्रवणमनननिदिध्यासनरूपा जिज्ञासैवेत्युक्तेः । तथापि यत्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितमिति न्यायेन प्राक्सिद्धस्यापि न्यायैरुपपादनेन दार्ढ्यार्थतया वैराग्य-भक्त्यर्थत्वोपपत्तेः । श्रवणेन विना मननायोगेन मननार्थस्य शास्त्रस्यार्थात्तदंगश्रवणाद्यर्थत्वमप्यस्तीति भावेन तदर्थं शास्त्रमित्युक्तमनवद्यमिति । यद्वा तदर्थं वैराग्यादिप्रतिपादकमित्यर्थः । श्रुत्यर्थोक्तिपरतया सूत्रभाष्ये व्याकरिष्यन् श्रुत्यर्थोक्तेरसांगत्यव्युदासाय परिष्करोति ॥ **अवश्येति** ॥ इत्यादिश्रुतिबलादमृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरित्यन्यत्रोक्तिविवरणपरतया कर्म-विभागोक्तिपूर्वं भाष्यार्थमाह ॥ **कर्मेति** ॥ 'प्रवृत्तं च निवृत्तं च द्विविधं कर्म चोच्यते' इत्यादेरिति भावः । काम्यो भवेत् स्वर्गरूपफलोद्देशेन कृतो भवेदित्यर्थः ॥ **तत्साध्यमिति** ॥ एतेन भाष्ये तदमृतत्वमिति तच्छब्दस्य तस्यां श्रुतौ श्रुतकाम्यसोमयागसाध्यमित्यर्थो दर्शितः । भागतः कालभागत इत्युपेत्यार्थमाह ॥ **किञ्चिदिति** ॥ **गौणार्थतया** अमुख्यार्थतया । नान्य इत्यादिभाष्योक्तहेतुसाध्ययोरसांगत्यव्युदासाय श्रुतिपूर्वांशोक्त्या अर्थं वदन् सूत्रार्थं चाह ॥ **न कर्मणेति** ॥ सूत्रे तदमृतत्वमिति शेषः । तदमृतत्वं भाक्तममुख्यमित्यंशस्य भावार्थो न कर्मणा मुख्यानृतत्वं लभ्यमिति । तथा हि दर्शयतीत्यस्यार्थः **तमेवमिति** ॥ भाष्यस्थैवकाराशयमाह ॥ **अन्येषामिति** ॥ **उक्तत्वादिति** ॥ अनेन हिर्हेताविति सूचितम् । भाष्यस्थहिशब्दसूचितमाह ॥ **काम्येति** ॥ पारम्पर्येणेति भाष्ये तदमृतत्वमित्यस्यानुवृत्त्यान्वयलब्धममृतत्वस्वरूपं वदन् तद्वाक्यं व्याचष्टे ॥ **यद्यत्रेत्यादिना** ॥ **अत्र** श्रुतौ । यत्तु कर्मनिर्णयटीकायां अमृता इति वा मृता इति गौण्या वृत्त्या मन्वन्तरापेक्षयाऽमृतशब्दस्य तत्साधनज्ञानलक्षणया तदेकदेशलक्षणया चेत्यमृत-शब्दस्य त्रेधाऽप्यमुख्यत्वरूपं भाक्तत्वमुक्तं तत्तु प्रशंसादीनां च तात्पर्यं वाचनिकार्थात्यागेनैव कथितं स्वयं भगवतेत्याचार्योक्तेः वाचनिकपदेन मुख्यार्थ एव नाभिमत इति द्योतनाय ॥ **न साक्षादिति** ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति वक्ष्यमाणन्यायादिति भावः । पारंपर्येणात्मविद-पेक्षयेत्यात्मज्ञानजननेऽपि कर्मणः सूचितं पारंपर्यं व्यनक्ति ॥ **कर्मभिरिति** ॥ वैराग्यादीत्यादिपदेन भक्तिशमदमादिग्रहः । प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य इत्याद्युक्तदिशेति भावः ॥ **तद्वत इति** ॥ ऊर्ध्वरेतस्सु चशब्दे हि अध्ययनमात्रवत इत्यादिवक्ष्यमाणदिशेति भावः ॥ **तस्येति** ॥ श्रवणादि-रूपजिज्ञासावत इत्यर्थः । प्रकाशश्च कर्मण्यभ्यासात् । तन्निर्धारणार्थनियमस्तदृष्टेः **पृथग्घ्य-प्रतिबन्धः** फलमित्यत्र ज्ञानार्थं श्रवणादित्रितयकर्तव्यत्वस्य वक्ष्यमाणत्वादिति भावः ॥ **तस्येति** ॥

(भावदीपः)

ज्ञानवत इत्यर्थः । विद्यैव तु निर्धारणादिति न्यायादिति भावः । विस्तृतमेतत्तृतीये गीताभाष्ये कर्मणैव हि संसिद्धिमित्यत्र । कर्म कृत्वैव ततो ज्ञानं प्राप्य वेत्यादिना कर्म तु तत्साधनमेवेत्यन्तेन ।

ननु सामान्यवाक्यस्य किं बलादेवं निर्णय इत्यत आह ॥ **तथा हीति** ॥ बह्वृचाः पठन्ति । 'अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्' इति । तस्यार्थः । सोममपाम । तेन अमृता अभूम । कथं यस्माद्देवानविदाम व्यज्ञासिष्म । ज्योतिश्चरणाभिधानादित्याद्युक्तदिशा ज्योतिश्शब्दितं ब्रह्म अगन्म अगमाम । अद्राक्ष्मेत्यर्थः । गत्यर्थस्य ज्ञानार्थत्वात् । तथा च याजुषशाखायां पाठः । 'अपाम सोमममृता अभूम अदर्श्म ज्योतिरविदाम देवान्' इति । तदुक्तं तत्वप्रदीपे । तथा चायमर्थः स्यात् । सोममपाम देवान् अविदाम । ज्योतिरदर्श्म अमृता अभूमेति ज्योतिर्ब्रह्मेत्युदितमिति च । तथा लोके द्वारपालदर्शनानन्तरं राजदर्शनवदतस्तद्व्यपेक्षयेति अन्तरनयोक्तदिशा वाक्यशेषे पूर्ववदिति देवताप्रसादोपचितेश्वरज्ञानस्योक्त्या तद्द्वारैव कर्म मुक्तिहेतुरिति ज्ञायते । उक्तश्चायं वाक्यशेषाधीनो निर्णयः सन्दिग्धे तु वाक्यशेषादिति जैमिनिसूत्रे । अत्राप्युक्तः पूर्वं प्राणादयो वाक्यशेषात् धर्मान्तरेण वाक्यशेषादिति । तथा प्रथमे श्रवणादित्यत्रापि चरमानुरोधेन पूर्वश्रद्धाशब्दस्यास्वारस्यमुक्तं यदा तदा किमु वाच्यम् 'अपाम सोमममृता अभूम' इति वाक्यास्वारस्यमिति भावः । एतेन सूत्रे वा अथवा जिज्ञासोस्तदमृतत्वमकाम्यकर्मणा श्रुतममृतत्वं भाक्तं ज्ञानद्वारकत्वरूपं गौणम् । कुतः तथा हि दर्शयति । अगन्म ज्योतिरिति वाक्यशेषे यतो ज्ञानप्राप्तिमाहेति च योजना सूचिता । अत एव तथा हीति सूत्रांशानुकृतिरिति आत्मानमेवेत्यादिश्रुत्यनुसाराच्च । आत्मविदपेक्षयेत्यस्यार्थान्तरमाह ॥ **अथ ज्ञानिन इति** ॥ यद्वा भाष्ये पारम्पर्येण वा आत्मविदपेक्षया वेति वाशब्दस्य प्रत्येकमन्वयमुपेत्य पारंपर्येणेत्यंशं व्याख्यायात्मविदपेक्षयेत्येतद्व्याचष्टे ॥ **अथ ज्ञानिन इति** ॥ **अतिशय इति** ॥ शमदमाद्युपेतस्स्यात्तथापि त्विति अग्निहोत्रादि तु तत्कार्यायैवेत्यादौ च वक्ष्यमाणदिशेति भावः । नन्वेवं सति कर्मणो मुक्तिहेतुता प्राप्तैवेत्यत आह ॥ **सर्वथेति** ॥ तथा च वक्ष्यति । अत एवाग्नीन्धनाद्यनपेक्षेति सूत्रकार इति भावः ॥ **श्रुतीरिति** ॥ भाष्योक्तवाक्यानामनेकश्रुतित्वद्योतनाय बहुवचनम् । आत्मानमेवेति वाक्योक्तेरुपयोगाप्रतीतेराह ॥ **आत्मानमेवेति** ॥ उपासककर्मणोऽक्षय्य फलकत्वपरतया प्रतीतयैव श्रुत्येत्यर्थः । कथमित्यतोऽर्थोक्त्या व्यनक्ति ॥ **न भुनक्तीति** ॥ न पालयतीत्यर्थः । भुजोनवन इति अभ्यवहारार्थ एवात्मनेपदस्मृतेः । तस्य फलितार्थमाह ॥ **नामृतत्वमिति** ॥ **जानाति चेति** ॥ यदि

(भावदीपः)

ह वा इति पूर्ववाक्ये अज्ञकर्मणोऽन्ततः स्वल्पफलदानात्पश्चात्क्षीयत एवेति निन्दानुसारात् । उपास्त इत्युपलक्षणम् । अन्यथाऽसङ्गतिः स्यात् । ज्ञानिकर्मस्तुत्यर्थमेवाज्ञकर्मनिन्दारम्भादिति भावः । श्रुतौ लोकमाश्रयमित्यर्थः । तदुक्तं बृहद्भाष्ये प्रथमेऽध्याये चतुर्थब्राह्मणे । अग्निविप्रार्च-कोऽप्येवं यो न वेद हरिं परम् । आश्रयं सर्वजीवानां हरिस्तं नैव भोजयेत्' इत्यादिना ब्रह्माण्ड इत्यन्तेन । श्रुतिः प्रमाणमित्यनुषङ्ग । एतेष्वर्थेषु सूत्रयोजना तन्त्रदीपिकायां व्यक्ता । श्रुतावधेत्यस्य तस्मादित्यर्थः । नन्वेवं श्रुत्यादिबलादपामेत्यादिवाक्यस्य त्रेधा स्वार्थपरत्वोक्तौ, यानि तीर्थादि-वाक्यानि कर्मादिविषयाणि च । तावकान्येव तानि स्युरज्ञानां मोहकानि चेत्यादिगीता-भाष्योक्तिविरोध इति चेन्न । अल्पाधिकार्यपेक्षया तथोक्त्युपपत्तेः । स्तुतिवाक्यानामपि स्वार्थ-परत्वस्य कर्मनिर्णये प्रतिपादनात् । उक्तं तत्रैव प्रशंसादीनां तात्पर्यं वाचनिकार्थात्यागेनैवोक्तं स्वयं भगवता भाक्तं वानात्मवित्त्वात्तथा हि दर्शयतीति ॥ **अत इति** ॥ कर्मणः साक्षान्मोक्षाहेतुत्वा-द्वैराग्यभक्तिजिज्ञासाज्ञानद्वारैव मोक्षहेतुत्वादित्यर्थः । अस्य विद्यैव त्वित्यतोऽगतार्थत्वं तत्रैव वक्ष्यते ।

## अभिनवचन्द्रिका

ननु सोमयागवत् वैराग्यादेरपि साधनत्वात्, तत्र यस्य रुचिः तं प्रति तच्छास्त्रमत्युपादेयमेव । न हि सर्वाधिकारिकं किमपि शास्त्रमस्तीत्यत आह– **अत इति** ॥ वैराग्यादिना कृत्याभावादिति ॥ तत्फलस्याऽन्यत एव सिद्धत्वेन कृत्याभावादिति भावः । व्यर्थमिदं तदर्थं **शास्त्रमिति** ॥ पिपासितं प्रति गीर्वाणतरङ्गिणीसमीपे कूपखननप्रकारोपदेशवत् व्यर्थमित्यर्थः । ननु 'अपामसोम' इति श्रुतेरन्यार्थत्वाभिधानमयुक्तं सोमयागस्यापि मुख्यामृतत्वसाधनत्वात् । मुख्यासम्भवेऽमुख्यस्य ग्राह्यत्वादित्यत आह– **कर्मेति** ॥ ननु 'भाक्तम्' इति भाक्तार्थत्वमुक्त्वा, 'वा' इति मुख्यार्थत्व-कथनमयुक्तं, वस्तुनो द्वैरूप्याऽसम्भवदित्यतो वा आह– **कर्मेति** ॥

पूर्वपक्षस्तु न मुमुक्षुणाऽनुष्ठेयं वैराग्यादि । कर्मणैव मोक्षसिद्धेः । अपामसोमममृता अभूम' इति श्रवणात् । न च उभयोरपि साधनत्वात् वैराग्यादिकमनुष्ठेयमिति वाच्यम् । सति हि लघीयस्युपाये गुरूपायस्याऽनादर्तव्यत्वात् । अतः सुशकेन कर्मणा मोक्षसिद्धौ वैराग्यादिना कृत्याभावात् व्यर्थमिदं तदर्थं शास्त्रमिति ।

सिद्धान्तस्तु अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि । तद्विना मोक्षाऽसिद्धेः । न चैवं श्रुतिविरोधः । द्विविधं हि कर्म । काम्यमकाम्यश्च । अकाम्यमपि द्विविधम् ज्ञानात्पूर्वभावि,

(अभिनवचन्द्रिका)

पश्चाद्भावि चेति । तत्सर्वमपि श्रुत्यर्थ एव अधिकारिभेदात् । तद्यदा काम्यकर्मपरा श्रुतिः, न तदा मुख्यामृतत्वमाह किंतु बहुकालजीवनरूपं भाक्तमर्थमाह । यदा तु ज्ञानात् पूर्वभाव्यकाम्यकर्मपरा तदा मुख्याऽमृतत्वसाधनत्वमेवाह, किंनाम न साक्षात् किंतु कर्मणा शुद्धसत्वस्य वैराग्यादिद्वारा मोक्षसाधनत्वमाह । यदा तु ज्ञानोत्तरकर्मपरा तदा ज्ञानेन सिध्यति मोक्षेऽतिशयाधायकत्व मेवाऽऽहेति कथमपि कर्मणां साक्षान्मुख्यमोक्षसाधनत्वाऽनभिधायकत्वात् । अतो वैराग्याद्यनुष्ठान-मन्तरेण मोक्षाऽसिद्धेः न तत्प्रतिपादकशास्त्रवैयर्थ्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अत्र पुनरिति** । इह कर्मफलस्वर्गस्य पुरुषार्थत्वोक्त्या वैराग्योत्पादनादनन्तरसङ्गतिरवसेया । यद्येवमिष्टादिकारिणां स्वर्गं गतानामपि भूतापरित्यागेन बन्धस्तर्हि 'अपाम सोमममृता अभूम' अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतम्' इत्यादिश्रुतिविरोध इति तत्त्वप्रदीपोक्तरीत्या पूर्वाक्षेपेण प्रवृत्तेरनन्तरसङ्गतिः । भावबोधे तु रीत्यन्तरेणोक्ता । अत्र वैराग्यादिकं किमनुष्ठेयमुताननुष्ठेयमिति चिन्ता । तदर्थं किं मोक्षः कर्मसाध्यो न वेति । तदर्थमपाम सोमम्' इति श्रुतिः किं मुख्यामृतत्व-विषयिण्युत गौणार्थेति । विशेष इत्युक्तन्यायप्रदर्शकं पूर्वपक्षभाष्यं व्याचष्टे । न मुमुक्षुणेत्यादिना ॥ **श्रुतेरिति** ॥ विशेषश्रुतेरित्यर्थः । नन्वेवमपि कर्मवत् वैराग्यादेरपि ज्ञानद्वारा मोक्षसाधनत्वात् यथारुचि तस्याप्यनुष्ठानसम्भवान्न वैराग्यादेर्वैय्यर्थ्यमित्यत आह ॥ **अर्क इति** ॥ अर्के स्वगृह-समीपस्थेऽर्कवृक्षे । अक्के चेदिति कचित्पाठः । अत्राक्कशब्देन गृहे भाण्डनिधानार्थो दीर्घदारु-रित्याहुः । ननु श्रुतेरन्यार्थकथनमयुक्तं सोमयागस्यापि मुख्यामृतत्ववाचकत्वात् । अन्यथा वाशब्देन मुख्यार्थकथनविरोधादित्यत आह ॥ **कर्मेति** ॥ पूर्वसूत्रे इष्टादिकारिणामिति सोमयागस्य प्रकृतत्वा-दमृतत्वमित्यत्र लभ्यते । अतश्च तदमृतत्वं तत्साध्यममृतत्वं सार्वकालिकं न भवति किन्तु भाक्तं कालैकदेशनिष्ठतयैव मुख्यमिति सूत्रार्थं मत्वा योग्यतेत्युक्तन्यायप्रदर्शकं भागतस्तदमृतत्वमिति भाष्यं व्याचष्टे ॥ **तदा तत्साध्यममृतत्वमिति** ॥ **गौणार्थत्वमिति** ॥ मन्वन्तराद्यवच्छिन्नकाले मरण-रहितत्वगुणयोगेन मृता इव मृता इति यथायोग्यार्थतया श्रुतिरुपपन्नेत्यर्थः । तथा च सोमं सोमरसमपाम धूमादिमार्गदेवान् विदाम । चान्द्रमसं ज्योतिरगन्म । किञ्चित्कालममृता अभूम इति श्रुत्यर्थः ॥ **इत्यत आहेति** ॥ इत्यतः आत्मविदिति सूत्रखण्डं च व्याचष्ट इत्यर्थः । आत्मविद एव

(भावदीपः)

ह वा इति पूर्ववाक्ये अज्ञकर्मणोऽन्ततः स्वल्पफलदानात्पश्चात्क्षीयत एवेति निन्दानुसारात् । उपास्त इत्युपलक्षणम् । अन्यथाऽसङ्गतिः स्यात् । ज्ञानिकर्मस्तुत्यर्थमेवाज्ञकर्मनिन्दारम्भादिति भावः । श्रुतौ लोकमाश्रयमित्यर्थः । तदुक्तं बृहद्भाष्ये प्रथमेऽध्याये चतुर्थब्राह्मणे । अग्निविप्रार्च-कोऽप्येवं यो न वेद हरिं परम् । आश्रयं सर्वजीवानां हरिस्तं नैव भोजयेत्' इत्यादिना ब्रह्माण्ड इत्यन्तेन । श्रुतिः प्रमाणमित्यनुषङ्ग । एतेष्वर्थेषु सूत्रयोजना तन्त्रदीपिकायां व्यक्ता । श्रुतावधेत्यस्य तस्मादित्यर्थः । नन्वेवं श्रुत्यादिबलादपामेत्यादिवाक्यस्य त्रेधा स्वार्थपरत्वोक्तौ, यानि तीर्थादि-वाक्यानि कर्मादिविषयाणि च । तावकान्येव तानि स्युरज्ञानां मोहकानि चेत्यादिगीता-भाष्योक्तिविरोध इति चेन्न । अल्पाधिकार्यपेक्षया तथोक्त्युपपत्तेः । स्तुतिवाक्यानामपि स्वार्थ-परत्वस्य कर्मनिर्णये प्रतिपादनात् । उक्तं तत्रैव प्रशंसादीनां तात्पर्यं वाचनिकार्थात्यागेनैवोक्तं स्वयं भगवता भाक्तं वानात्मवित्त्वात्तथा हि दर्शयतीति ॥ **अत इति** ॥ कर्मणः साक्षान्मोक्षाहेतुत्वा-द्वैराग्यभक्तिजिज्ञासाज्ञानद्वारैव मोक्षहेतुत्वादित्यर्थः । अस्य विद्यैव त्वित्यतोऽगतार्थत्वं तत्रैव वक्ष्यते ।

## अभिनवचन्द्रिका

ननु सोमयागवत् वैराग्यादेरपि साधनत्वात्, तत्र यस्य रुचिः तं प्रति तच्छास्त्रमत्युपादेयमेव । न हि सर्वाधिकारिकं किमपि शास्त्रमस्तीत्यत आह– **अत इति** ॥ वैराग्यादिना कृत्याभावादिति ॥ तत्फलस्याऽन्यत एव सिद्धत्वेन कृत्याभावादिति भावः । व्यर्थमिदं तदर्थं **शास्त्रमिति** ॥ पिपासितं प्रति गीर्वाणतरङ्गिणीसमीपे कूपखननप्रकारोपदेशवत् व्यर्थमित्यर्थः । ननु 'अपामसोम' इति श्रुतेरन्यार्थत्वाभिधानमयुक्तं सोमयागस्यापि मुख्यामृतत्वसाधनत्वात् । मुख्यासम्भवेऽमुख्यस्य ग्राह्यत्वादित्यत आह– **कर्मेति** ॥ ननु 'भाक्तम्' इति भाक्तार्थत्वमुक्त्वा, 'वा' इति मुख्यार्थत्व-कथनमयुक्तं, वस्तुनो द्वैरूप्याऽसम्भवदित्यतो वा आह– **कर्मेति** ॥

पूर्वपक्षस्तु न मुमुक्षुणाऽनुष्ठेयं वैराग्यादि । कर्मणैव मोक्षसिद्धेः । अपामसोमममृता अभूम' इति श्रवणात् । न च उभयोरपि साधनत्वात् वैराग्यादिकमनुष्ठेयमिति वाच्यम् । सति हि लघीयस्युपाये गुरूपायस्याऽनादर्तव्यत्वात् । अतः सुशकेन कर्मणा मोक्षसिद्धौ वैराग्यादिना कृत्याभावात् व्यर्थमिदं तदर्थं शास्त्रमिति ।

सिद्धान्तस्तु अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि । तद्विना मोक्षाऽसिद्धेः । न चैवं श्रुतिविरोधः । द्विविधं हि कर्म । काम्यमकाम्यञ्च । अकाम्यमपि द्विविधम् ज्ञानात्पूर्वभावि,

(अभिनवचन्द्रिका)
पश्चाद्भावि चेति । तत्सर्वमपि श्रुत्यर्थ एव अधिकारिभेदात् । तद्यदा काम्यकर्मपरा श्रुतिः, न तदा मुख्यामृतत्वमाह किंतु बहुकालजीवनरूपं भाक्तमर्थमाह । यदा तु ज्ञानात् पूर्वभाव्यकाम्यकर्मपरा तदा मुख्याऽमृतत्वसाधनत्वमेवाह, किंनाम न साक्षात् किंतु कर्मणा शुद्धसत्वस्य वैराग्यादिद्वारा मोक्षसाधनत्वमाह । यदा तु ज्ञानोत्तरकर्मपरा तदा ज्ञानेन सिध्यति मोक्षेऽतिशयाधायकत्व मेवाऽऽहेति कथमपि कर्मणां साक्षान्मुख्यमोक्षसाधनत्वाऽनभिधायकत्वात् । अतो वैराग्याद्यनुष्ठान-मन्तरेण मोक्षाऽसिद्धेः न तत्प्रतिपादकशास्त्रवैयर्थ्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अत्र पुनरिति** । इह कर्मफलस्वर्गस्य पुरुषार्थत्वोक्त्या वैराग्योत्पादनादनन्तरसङ्गतिरवसेया । यद्येवमिष्टादिकारिणां स्वर्गं गतानामपि भूतापरित्यागेन बन्धस्तर्हि 'अपाम सोमममृता अभूम' अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतम्' इत्यादिश्रुतिविरोध इति तत्त्वप्रदीपोक्तरीत्या पूर्वाक्षेपेण प्रवृत्तेरनन्तरसङ्गतिः । भावबोधे तु रीत्यन्तरेणोक्तां । अत्र वैराग्यादिकं किमनुष्ठेयमुताननुष्ठेयमिति चिन्ता । तदर्थं किं मोक्षः कर्मसाध्यो न वेति । तदर्थमपाम सोमम्' इति श्रुतिः किं मुख्यामृतत्व-विषयिण्युत गौणार्थेति । विशेष इत्युक्तन्यायप्रदर्शकं पूर्वपक्षभाष्यं व्याचष्टे । न मुमुक्षुणेत्यादिना ॥ **श्रुतेरिति** ॥ विशेषश्रुतेरित्यर्थः । नन्वेवमपि कर्मवत् वैराग्यादेरपि ज्ञानद्वारा मोक्षसाधनत्वात् यथारुचि तस्याप्यनुष्ठानसम्भवान्न वैराग्यादेर्वैय्यर्थ्यमित्यत आह ॥ **अत इति** ॥ अर्के स्वगृह-समीपस्थेऽर्कवृक्षे । अके चेदिति क्वचित्पाठः । अत्राकशब्देन गृहे भाण्डनिधानार्थो दीर्घदारु-रित्याहुः । ननु श्रुतेरन्यार्थकथनमयुक्तं सोमयागस्यापि मुख्यामृतत्ववाचकत्वात् । अन्यथा वाशब्देन मुख्यार्थकथनविरोधादित्यत आह ॥ **कर्मेति** ॥ पूर्वसूत्रे इष्टादिकारिणामिति सोमयागस्य प्रकृतत्वा-दमृतत्वमित्यत्र लभ्यते । अतश्च तदमृतत्वं तत्साध्यममृतत्वं सार्वकालिकं न भवति किन्तु भाक्तं कालैकदेशनिष्ठतयैव मुख्यमिति सूत्रार्थं मत्वा योग्यतेत्युक्तन्यायप्रदर्शकं भागतस्तदमृतत्वमिति भाष्यं व्याचष्टे ॥ **तदा तत्साध्यममृतत्वमिति** ॥ **गौणार्थत्वमिति** ॥ मन्वन्तराद्यवच्छिन्नकाले मरण-रहितत्वगुणयोगेन मृता इव मृता इति यथायोग्यार्थतया श्रुतिरुपपन्नेत्यर्थः । तथा च सोमं सोमरसमपाम धूमादिमार्गदेवान् विदाम । चान्द्रमसं ज्योतिरगन्म । किञ्चित्कालममृता अभूम इति श्रुत्यर्थः ॥ **इत्यत आहेति** ॥ इत्यतः आत्मविदिति सूत्रखण्डं च व्याचष्ट इत्यर्थः । आत्मविद एव

(वाक्यार्थमुक्तावली)

हि यस्मान्मुख्यं न त्वनात्मनो मुख्यमिति भाष्यलब्धमर्थमाह ॥ **काम्यकर्मणामनात्मवित्त्वादिति** ॥ एतेनेष्टादिकारिणामनात्मवित्त्वादमृतत्वं भाक्तमिति सूत्रार्थ उक्तो भवति ।

तथा हि दर्शयतीत्येतद्विवरणपरं नान्यःपन्थेति भाष्यं व्याचष्टे ॥ **तमेवमिति** ॥ अन्येषां काम्यकर्मिणां मोक्षाय कर्मणो मार्गत्वविधानादिति भावः । ननु ज्ञानं मोक्षैकफलकमिति अयनाय ज्ञानादन्योऽसाधारणहेतुर्नास्तीति तदर्थः । काम्यं कर्म तु मोक्षं तदतिरिक्तं च साधयतीत्यविरोध इत्यत आह ॥ **काम्यकर्मणेति** ॥ **तत्फलस्यैव** क्षयिष्णुफलस्यैव न कदाचिन्मुक्तिफलस्येत्यर्थः । न मोक्षसाधनं साक्षादिति । जिज्ञासुः कर्मणः परम्पराया मोक्षसाधनत्वाज्ज्ञानिकर्मणोऽमृतैकदेशानन्दसाधकत्वात् साक्षान्मोक्षसाधनं नेत्यर्थः । वाशब्दात्पारंपर्येणेत्युक्तसूचनाप्रकारमाह ॥ **अत्रेति** ॥ वाशब्दो व्यवस्थित विकल्पे । यदि जिज्ञासूनामकाम्यं कर्म विवक्षितं तदा तदमृतत्वं वा अभाक्तं वा मुख्यमेवेति सूचयतीत्यर्थः । तर्ह्यङ्गीकृतं कर्मणो मोक्षसाधनत्वमिति पृच्छति ॥ **किन्नामेति** ॥ तदुत्तरत्वेन पारम्पर्येणेत्येतत् योग्यतेत्युक्तन्यायं रीत्यन्तरेण सूत्रभाष्यारूढं कुर्वन् योजयति ॥ **तच्चेति** ॥ अत्रामृतशब्दस्य मुख्यामृतत्वमभ्युपेत्याप्यस्य पक्षस्य वापक्षत्वग्रहणेन सोमयागस्य मुख्यामृतवाचित्वमभ्युपेत्य हेतुत्वमात्रं पारंपरिकत्वादमुख्यमिति सूचितमिति भावः । पारंपरिकत्वं श्रुत्यभिप्रेतं चेत्याह ॥ **तथा हीति** ॥ तथा च सोममपाम । अन्तःकरणशुद्धिद्वारा ज्योतिर्ब्रह्मापरोक्षतः परोक्षतश्चागन्म जानीमः । अर्चिरादिदेवान् अविदाम । अमृता अभूमेति श्रुत्यर्थः । कर्मनिर्णयटीकायां त्वमृतशब्दस्य तत्साधनज्ञानसाधनलक्षकत्वमुक्तम् । व्याख्यानान्तरत्वादविरोधः । वाशब्दादात्मविदपेक्षयेति सूचयतीत्युक्तं सूचनाप्रकारमेवाह ॥ **अथ ज्ञानिन इति** ॥ आत्मविदपेक्षयेत्यस्य प्रतिपदं दत्वार्थमाह ॥ **किन्त्विति** ॥ एतेन भाक्तं वेत्यस्य तदमृतत्वं वा प्रकारान्तरेण भाक्तम् । आद्यपक्षे किञ्चित्कालीनमृत्यभावरूपपरत्वेन तृतीये अस्मिन्पक्षे यावदनिष्टनिवृत्तिविशिष्टप्रचुरानन्दानुभवात्मको यो मोक्षः तद्गतानन्दातिशयरूपत्वेन मुख्यमपि भागतस्तदमृतत्वमिति योजनोक्ता भवति ॥ **सर्वथेति** ॥ आद्ये क्षयिष्णुफलत्वेन संसाररूपस्वर्गफलकत्वेन, द्वितीये कर्मणा साक्षात्तदभावेन, तृतीये मुक्तिगतातिशयहेतुत्वेन पक्षत्रयेऽपि न कर्मणा संसारनिवृत्तिरिति भावः । एतेन देवान् तारतम्येन अविदाम । ज्योतिरगन्म । सोममपाम । अमृता आनन्दातिशयवन्तोऽभूमेति श्रुत्यर्थ उक्तो भवति । योग्यतान्यायोऽपि यथायोग्यफलान्तरकल्पनया प्रकारान्तरेण विवृता भवति ॥ **एनमिति** ॥ **श्रुतिरिति** ॥ तत्तत्सृजतेत्यन्तेति भावः ।

(वाक्यार्थमुक्तावली)

इत्यादिश्रुत्यैवेति । आत्मविदामेव मुख्यामृतत्वमित्यर्थान्तरप्रतिपादनाय उदाहृतश्रुत्यैवेत्यर्थः । आदिपदेन तत्तत्सृजत इत्यन्तस्य ग्रहणम् । यथा वेदेनानुक्तः यथाविध्यपठितः फलप्रदो न, अन्यद्वा दृष्टान्तः, यथा वा अकृतं कर्म न फलप्रदं तथा विष्णुरविदित एनं जीवममृतत्वं न भोक्षयतीत्यर्थः । उपासकस्य कर्मक्षयवचनाज्ज्ञानिकर्मणो क्षयफलकत्वे किमायातमित्यत आह ॥ **जानाति चेति** ॥ परमात्मनस्सकाशात् यद्यत्प्राप्तुमिच्छति तत्सर्वं कर्म स्वयं सृजतीत्यन्यथा-प्रतीतिनिरासाय व्याचष्टे ॥ **मुक्तो यद्यदिति** ॥

## तत्त्वसुबोधिनी

**वैराग्यादेरावश्यकेति** । तथा चात्र प्रथमाधिकरणे सम्परिष्वक्त इत्यनेन न मरणमात्रे भूतवियोगः, किन्तु मुक्तिरूपमरण एवेत्यत्र ज्ञानसदसद्भावो नियामक इति यत्सूचितं तद्युक्तम् । मोक्षस्य कर्मसाध्यत्वोक्तेरिति शङ्कापरिहारादनन्तरसङ्गतिरिति भावः । न च तदानन्तर्यमेव स्यादिति वाच्यम् । प्रश्ननिरूपणरूपहेतुसमर्थनपराधिकरणपञ्चकस्यावश्यकत्वेन तदन्तरमेवावसर-प्राप्तत्वादिति भावः ॥ **उभयविधेति** ॥ यत्र कार्येऽनेकेषां साधनता तत्रैकैकस्यावश्यानुष्ठेयत्वाभावः । यत्र त्वेकमेव साधनं तस्यावश्यानुष्ठेयत्वमिति भावः । कुतो नावश्यं वैराग्याद्यनुष्ठेयमित्यत आह ॥ **अपामेति** ॥ **अन्यथेति** ॥ कर्मणो मोक्षसाधनत्वानङ्गीकार इत्यर्थः । नन्वेवं कर्मवत् वैराग्यादिसाध्यज्ञानस्यापि मोक्षसाधनत्वात् यथारुचि तस्याप्यनुष्ठानसम्भवात् न वैराग्यादे-र्वैय्यर्थ्यमित्यत आह ॥ **अत इति** ॥ कुत इत्यत आह ॥ **तद्विनेति** ॥ वैराग्यादि विनेत्यर्थः ।

नन्वेवं कर्मणो मोक्षसाधनत्वप्रतिपादकापामेति श्रुतिविरोध इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ कथमन्यार्थत्वमित्यतस्तद्दर्शयति ॥ **तथा हीति** ॥ **किञ्चित्कालीनमिति** ॥ मन्वन्तराद्यवच्छिन्न-कालेषु मरणरहितत्वरूपगुणयोगेनामृत इवामृत इति गौणार्थतयेत्यर्थः । कुतो न कर्मणा मुख्या-मृतत्वमिति तत्राह ॥ **काम्यकर्मिणामनात्मवित्त्वादिति** ॥ तथा चात्मविदामेव हि मुख्यमिति भाष्येणानात्मवित्त्वादिति सौत्रो हेतुः भाक्तमित्यत्रैव योजित इति भावः । काम्यकर्मिणामनात्म-त्त्वेऽपि कुतो न मुख्यामृतत्वमित्यत आह ॥ **तमेवमिति** ॥ कुतोऽन्येषां तदभावस्योक्तिरित्यत आह ॥ **काम्यकर्मणेति** ॥ हिशब्दो यस्मादित्यर्थे ॥ **मुख्यामृतत्वमिति** ॥ अमृतशब्दस्य मोक्षे योगरूढिलक्षणमुख्यवृत्तेः सद्भावादिति भावः । यद्यमृतपदेन मुख्यामृतत्वमेवोच्येत तर्ह्यङ्गीकृतं कर्मणो मोक्षसाधनत्वमित्यभिप्रेत्य पृच्छति ॥ **किन्नामेति** ॥ तथा हि वाक्यशेष इति ।

(तत्त्वसुबोधिनी)

तथा चायं श्रुत्यर्थः । सोममपाम अमृता अभूमेति कर्ममोक्षयोः कार्यकारणभाव उक्तः । स न साक्षात् किन्तु परम्परयेत्युच्यते ॥ **अगन्म ज्योतिरिति** ॥ प्रकाशरूपं ब्रह्म अगन्म जानीमः । ज्योतिर्ज्ञानमगन्म प्राप्नुम इति वा । ततःकिमित्यत उच्यतेऽविदामेति । मार्गरूपानार्चिरादिदेवान-विदाम प्राप्नुम इति । न चैवं सत्याद्यान्तिमपक्षयोरेतद्वाक्यविशेषविरोधेन कथं पूर्वश्रुतेस्तदर्थ-परत्वमिति वाच्यम् । अत्राद्ये पक्षे कथं कर्मणा स्वर्ग इत्यत उच्यतेऽगन्मेति । चन्द्रमसं ज्योति-रगन्म मार्गरूपान् धूमादिदेवानविदामेत्यर्थस्य, तृतीये सोमयागेन कथं आनन्दातिशय इत्यत उच्यतेऽगन्मेति । यतः पूर्वं ज्योतिरपरोक्षज्ञानमगन्म ततः देवान् यथायोग्यं देवादिमत्वम-विदामेत्यर्थस्य सम्भवेन तद्विरोधाभावादिति भावः ॥ **आत्मज्ञानलब्ध इति** ॥ तथा च मोक्षलक्षणमुख्यामृतवाचकस्यामृतशब्दस्य तदेकदेशानन्दातिशये लक्षणया प्रवृत्तिरिति भावः । ननु यदि कर्मण आनन्दातिशयहेतुत्वं तर्ह्यङ्गीकृतमेव मोक्षसाधनत्वम् । तस्यैव मोक्षत्वात् । तद्व्यतिरिक्तस्य च कर्मासाध्यस्य ज्ञानमात्रसाध्यस्य मोक्षस्याश्रवणात् । तथा च न तेन मोक्ष इति आत्मज्ञानलब्धे मोक्ष इति च कथमुक्तमित्यत आह ॥ **सर्वथेति** ॥ तच्चोक्तं 'सर्वदुःखनिवृत्तिश्च ब्रह्मणो निश्चितैव हि । उपासया कर्मभिश्च भक्त्या चानन्दचित्रता' इत्यादि श्रुत्यैवेति । आत्मविदामेव मुख्यामृतत्वमित्यर्थान्तरप्रतिपादनायोदाहृतयैवेत्यर्थः । आदिपदेन तत्तत्सृजत इत्येतस्य ग्रहणम् । अविदितोऽपि परमात्मा स्वर्गादिकं भोजयत्येवेत्यतो न भुनक्तीत्यस्य तात्पर्यमाह ॥ **नामृतत्वमिति** ॥ ननूपासककर्मणो ज्ञानहेतुत्वात् कथमात्मविदपेक्षयेत्यत्रार्थे आत्मानमेवेति श्रुतिः प्रमाणमित्यत आह ॥ **जानाति चेति** ॥ परमात्मनः सकाशात् यत्प्राप्नु-मिच्छति तत्सर्वं कर्म स्वयं सृजति इत्यन्यथा प्रतीतिनिरासाय व्याचष्टे ॥ **स मुक्तो यद्यदिति** ॥

## वाक्यार्थविवरणम्

भोजनादिसाधनमवश्यानुष्ठेयं दृश्यते । रसायनादिसेवनादि त्ववश्याननुष्ठेयं दृष्टम् । तथेहापि पूर्वोक्तरीत्या वैराग्यादिकमनुष्ठेयं वाऽपामेत्यादिश्रुत्याऽननुष्ठेयं वेति भवति सन्देह इति भावः । अन्येषाम् अनात्मविदां कर्मिणाम् । नन्वत्र कथं तदभावोक्तिरित्यत आह ॥ **काम्येति** ॥ कर्मणा काम्यकर्मणा तत्फलस्य स्वर्गादेरेव सिद्धिर्हि यस्मात् प्रसिद्धा न मोक्षस्य । अतो ज्ञानिनां 'तमेवम्' इति मोक्षोक्तावन्येषां तदभावोऽर्थादुक्त एवेति भावः ॥ **साक्षादितीति** ॥ तत्र ज्ञानिकृतस्य

(वाक्यार्थविवरणम्)

साक्षान्मोक्षसाधनत्वाभावो नामेतरासहकृतस्य केवलस्य तदभाव इति व्याख्येयम् । तर्हि जितं मया, कर्मणो मोक्षसाधनत्वप्राप्तेरित्याशयेन शङ्कते ॥ **किन्नामेति** ॥ उत्तरयति ॥ तच्च ॥ **अमृतत्वमिति** ॥ **जिज्ञासा** ॥ श्रवणादिरूपा ॥ **ज्योतिः** ॥ अपरोक्षज्ञानम् । तथा च सोमममपाम पश्चाज्ज्योतिरगमन्म पश्चादर्चिरादिदेवानविदाम प्राप्ताः स्मः पश्चादमृता अभूमेति वाक्यार्थो द्रष्टव्यः ॥ **न तेनेति** ॥ इतरासहकृतेन केवलेन तेनानन्दाभिवृद्धिरूपो मोक्षो नेत्यर्थः ॥ **आत्म-विदाम्** ॥ भगवदपरोक्षज्ञानमपेक्ष्य सहकारीकृत्य तदंशे समुच्चयसाध्यत्वाङ्गीकारादिति द्रष्टव्यम् । **संसारनिवृत्तिः** लिङ्गदेहभङ्गरूपमोक्षः । तस्य ज्ञानमात्रसाध्यत्वादिति ध्येयम् । अस्मिन्पक्षे ज्योतिरगन्म पश्चात् सोमममपाम पश्चादमृता आनन्दाभिवृद्धिरूपमुक्तिमन्तोऽभूमेति श्रुत्यर्थो द्रष्टव्यः ॥ **भोजयति** ॥ अनुभावयति ।

## वाक्यार्थमञ्जरी

**उभयविधसाधनेति** ॥ यत्र कार्येऽनेकसाधनानि तत्रैकस्यावश्यानुष्ठेयत्वाभावः । यत्र त्वेकमेव साधनं तत्र तस्यानुष्ठेयत्वमिति भावः । **अर्के** प्राङ्गणे ॥ **ॐ भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॐ** ॥ कर्मसाध्यममृतत्वं भाक्तं भागविषयं गौणं किंचित्कालीनमिति यावत् । कुतः ? अनात्म-वित्त्वात् कर्मिणः आत्माज्ञानित्वात् । हि यस्मात्तमेवं विद्वानिति श्रुतिः आत्मज्ञानिन एव मुख्यामृतत्वं अन्यस्य त्वमुख्यमिति दर्शयतीत्यर्थः ॥ **किञ्चित्कालीनमिति** ॥ मन्वन्तराद्य-वच्छिन्नकालेषु मरणरहितत्वरूपगुणयोगेनामृता इवामृता इति गौणार्थतयेत्यर्थः । कुतोऽन्येषां तदभावस्योक्तिरित्यत आह ॥ **काम्यकर्मणेति** ॥ हि यस्मात्काम्यकर्मणः तत्फलस्य स्वर्गादेरेव सिद्धिः तस्मात्कर्मिणां मुख्यामृतत्वमेवोच्येत तर्ह्यङ्गीकृतकर्मणो मोक्षसाधनत्वमित्यभिप्रेत्य पृच्छति ॥ **किं नामेति** ॥ **अगन्मेति** ॥ तथा च सोमममपाम तेन ज्योतिर्ज्ञानमगन्म प्राप्नुमः । ततो मार्गस्थानर्चिरादिदेवानविदाम आप्नुमः । ततोऽमृता मुक्ताऽभूमेत्यर्थः । काम्यकर्मपक्षे चान्द्रमसं ज्योतिरगन्म । ततो मार्गस्थान्धूमादिदेवानविदामेत्यर्थः ॥ **आत्मज्ञानलब्ध इति** ॥ आत्मज्ञानेना-विद्यावरणाद्यनिष्टनिवृत्तिर्भवति । स्वरूपानन्दस्यापि कतिपयस्याभिव्यक्तिः । ज्ञानोत्तरकर्मादिना तत्कालविषयभोगेन यावत्स्वरूपानन्दो व्यज्यते अयमेवातिशयवृद्ध्यादिशब्दार्थः । 'सर्वदुःख-निवृत्तिस्तु ज्ञानिनो निश्चितैव हि । उपासया कर्मभिश्च भक्त्या चानन्दचित्रता' इत्युक्तेः । उक्तं च

(वाक्यार्थमञ्जरी)

प्रमेयदीपिकायां, ननु मुक्तः किमर्थं विषयानिच्छेत् । न तावत्सुखार्थं ज्ञानेनावरणरूपाविद्यानिवृत्तावात्मस्वरूपसुखस्याभिव्यक्तत्वात् । पृथक्सुखस्यानङ्गीकारात् । नापि दुःखनिवृत्त्यर्थं अविद्यानिवृत्त्यैव तत्सिद्धिरिति । मैवम् । नाविद्यैवात्मस्वरूपावरणं किं त्वीश्वरेच्छापि । तथा च वक्ष्यति तथा चाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरं व्यज्यते न तु सर्वम् । ज्ञानोत्तरमनुष्ठितेन कर्मणा प्रसन्नपरमेश्वरः मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति । अत्र भाष्यकृतैव प्रमाणान्युक्तानि । अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यत इति । अत एवातिशयातिरिक्तमोक्षसाधनसूचनाय संसारनिवृत्तिरित्युक्तम् । बन्धनिवृत्तिरूपमोक्ष इत्यर्थः । अस्मिन्पक्षे पूर्वं ज्योतिरगन्म ततः सोममपाम ततोऽमृताऽभूमेत्यर्थः ॥ **इत्यादिश्रुत्यैवेति** ॥ आत्मविदामेव मुख्यामृतत्वमित्यर्थान्तरप्रतिपादनायोदाहृतमेवेत्यर्थः । आदिपदेन तत्तत्सृजतेत्येतस्य ग्रहणम् । अविदितस्यापि स्वर्गादिभोजकत्वादाह ॥ **नामृतत्वमिति** ॥ ननूपासनाकर्मणो ज्ञानहेतुत्वात्कथमात्मविदपेक्षयेत्यत्रात्मानमेवेति श्रुतिः प्रमाणमित्यत आह ॥ **जानातीति** ॥ परमात्मनः सकाशात् यत्प्राप्तुमिच्छति तत्सर्वं स्वयं सृजतीति निरासायाह ॥ **स मुक्त इति** ॥

॥ इति भाक्ताधिकरणम् ॥ ७ ॥

## ८. कृतात्ययाधिकरणम्

कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह —

॥ ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥

'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति' इति श्रुतेः–

'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः ।
कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥
आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति'

इत्यादिस्मृतेश्च शेषवानेवाऽऽयाति ।

### तत्त्वप्रदीपिका

ननु कृतस्य कर्मणो भोगेन क्षयान्मुक्तिः । यत्पूर्वकृतं सुकृतं तद्भुक्त्वा क्षपयति । दुष्कृतं निष्कृत्या भुक्त्या वा । पुनश्च न करोति स्वर्गी स्थानादिराहित्यात् । अतः संसृतिहेत्वभावान्मुच्यत एवेत्यत आह । ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ॥ कृतानां मध्ये कतिपयात्ययेऽपि कर्मशेषवानेव भवति । तत आयाति । न ह्यनादितः कृतानां कर्मणां भोगेन क्षपणं मनसाऽपि शक्यते । न च भोगस्थाने स्थितिरपि नियन्तुं शक्यते । परतन्त्रस्यानन्तजन्मचीर्णस्य पापसञ्चयस्य क्षपणार्थं द्राघिष्ठं कालमतिदारुणेषु नरकेषु विवशं निवासाच्चामुक्तिरेव चतुरचेतसां रोचते ।

### तत्त्वप्रकाशिका

अत्रापि भगवत्प्राप्त्यर्थं वैराग्यादिसाधनस्यावश्यानुष्ठेयत्वसाधनादस्ति शास्त्रादिसङ्गतिः । वैराग्यदेर्मुमुक्षूणामनपेक्षितत्वे शास्त्रवैयर्थ्यापत्तेस्तस्यावश्यानुष्ठेयत्वं साधनीयमेव । वैराग्यादिकं विषयः । मुमुक्षुणाऽवश्यमनुष्ठेयं न वेति सन्देहः । उक्तन्यायस्तदनपेक्षफलनिष्पत्तिदर्शनं च सन्देह-बीजम् । पूर्वपक्षयति ॥ कृतस्येति ॥ कर्मनिबन्धनो हि बन्धः । कर्मणा वध्यते जन्तुरित्यादेः । कर्मणश्च क्षयो भोगेन भवति । न च भोगकाले कर्मान्तरापादनेनासमाप्तिः । स्वर्गादिष्वेव कर्मणां

(तत्त्वप्रकाशिका)

**सहागतत्वेन क्षेप्तुं शक्यत्वात् । तत्र कर्मान्तरापादनस्याभावात् । कर्मणां च क्षये तन्मूलस्य संसारस्योच्छेदः स्वयमेव भवतीति किं वैराग्यादिना । अतो व्यर्थमिदं शास्त्रमिति भावः ।**

**सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ कृतस्य कर्मणः सहागतत्वेन भोगेन क्षयः स्वत एवेति न युक्तम् । 'ततः शेषेण इति' श्रुत्या 'भुक्तशेषानुशयवान्' इति स्मृत्या च स्वर्गं गतस्य यथायोग्यं कर्म सहागतमपि किंचिद्भुक्तवतः कर्मशेषयुक्ततयैवागमनस्योक्तत्वात् । एवं द्वित्रा वर्तनेष्वशेषकर्मसमाप्तिः स्यादिति चेन्न । 'पुनः कर्म कुरुते' इति श्रुतौ 'कर्म कृत्वा' इति स्मृतौ चागतस्य पुनः कर्मसम्पादनोक्तेरिति भावः । अल्पापादने कर्मसमाप्तिः स्यादिति शङ्कानिरासायाह ॥ आचतुर्दशमादिति ॥ चतुर्दशमवर्षमारभ्येत्यर्थः । दशावरा येषु ते तथा । अतो वैराग्यादि-साधनमन्तरेण मोक्षाभावात्तदर्थं वैराग्यादिविधायकशास्त्रस्य न वैयर्थ्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

फलनिष्पत्तिदर्शनमित्यत्र तदनपेक्षे कृषीवलादौ सस्यादिफलनिष्पत्तिदर्शनमित्यर्थः । फलत्वा-विशेषान्मोक्षोऽपि वैराग्यं विनैव भवतीति शङ्कितुरभिप्रायः । कर्मान्तरापादनाभावादित्यत्र कर्मान्तररूपापादनं सम्पादनमित्यर्थः । भारतवर्षस्यैव कर्मभूमित्वादिति भावः । अनु अनन्तरमपि येन संसार एव शेत इति व्युत्पत्त्या सूत्रेऽनुशयपदं कर्मशेषवाचकमिति भावेनोक्तं शेषवानिति ।

## भावबोधः

**अत्रापीति** ॥ पूर्वाधिकरणे 'भाक्तम्' इत्यनेन कर्मणो 'यावदिन्द्रो यावन्मनुः' इत्यादि-श्रुत्यनुसारेण पुनरावृत्तिस्वर्गफलकत्वोक्तावेव पुनरागच्छन् जीवः किं स्वर्ग एव सर्वं कर्म क्षपयित्वा गच्छति, उत कर्मशेषवानिति जिज्ञासोदयादेतधिकरणप्रवृत्तिरित्यनन्तरसङ्गतिरिति भावः ॥ मुमुक्षुणाऽवश्यमिति ॥ अत्र वैराग्यादिकं मुमुक्षुणाऽवश्यमननुष्ठेयमुतानुष्ठेयमिति चिन्ता । तदर्थं स्वर्गादौ सहागतस्य कृत्स्नस्य बन्धककर्मणः किं भोगेन क्षय उत नेति । तदर्थं पुनः कर्म न करोत्युत करोतीति । तथा च पुनः पुनः कर्माकरणे द्वित्रावर्तनेन पूर्वं संपादितस्य सर्वस्यापि कर्मणः स्वर्ग एव भोगेन क्षेप्तुं शक्यत्वात् न मोक्षार्थं वैराग्याद्यनुष्ठेयमिति पूर्वपक्षे पुनः, पुनः कर्मकरणे बहुत्वात् स्वर्ग एव भोगेन क्षेप्तुमशक्यत्वात् तदर्थं वैराग्यादिकमनुष्ठेयमिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ।

(भावबोधः)

ननु भोगेन कर्मणां क्षयेऽपि बन्धनिवृत्तिलक्षणा मुक्तिः कथमित्यत आह– **कर्मनिबन्धन इति** ॥ अनुशयस्यापि सहभावात् स्वर्ग एव फलदत्वमिति न्यायविवरणं संयोजयितुं तन्निवर्तनीयामाशङ्कां प्रतिषेधति– **न च भोगकाल इति** ॥ इदानीमुदाहृतं न्यायविवरणं योजयति– **स्वर्गादिष्विति** ॥

ननु स्वर्गादावपि कर्मान्तरापादनसम्भवात् कथं भोगेन सर्वकर्मक्षय इत्यत आह– **तत्रेति** ॥ तस्य भोगमात्रस्थानत्वादिति भावः । ततः शेषेणेति । अनेन मुक्तशेषानुशयवानित्यादि-वचनाद्यथायोग्यमेव फलदानोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यकं भवति । अत्र आङो मर्यादार्थत्वभ्रमनिरासायाह– **चतुर्दशमेति** ॥ मर्यादार्थत्वस्य 'जीवंश्चतुर्दशादूर्ध्वम्' इत्यादिप्रमाण-विरुद्धत्वादिति भावः । दशाभ्योऽवरा इत्यल्पार्थत्वप्रतीतिनिरासार्थमाह– **दशावरा येष्विति** ॥

## भावदीपः

फलोक्त्याऽन्तर्भावसङ्गतिमाह ॥ **अत्रापीति** ॥ **अवश्यमिति** ॥ जीवस्य भोगावशिष्ट-कर्माविभागाद्युक्त्येति योज्यम् । तेन पूर्वस्माद्भेदः । यद्यन्ततः क्षीयत इति महतोऽपि कर्मणोऽल्पकालीनाभोगदानेन क्षयस्तर्हि तत एव बन्धकनिवृत्त्या मुक्तिरपि सेत्स्यतीति शङ्कोत्थानात्सङ्गतिश्च सूचितेति बोध्यम् । आवश्यकत्वस्य साधितत्वात्कथं सन्देह इत्यतो बीजमाह ॥ **उक्तन्याय इति** ॥ मृतिमात्रेण वा कर्ममात्रेण वा मोक्षाभावादित्युक्तन्यायः । कर्मक्षयकृतवैराग्याद्यनपेक्षमोक्षरूपफलनिष्पत्तिदर्शनमित्यर्थः । कर्मणः क्षयान्मुक्तिरिति भाष्योक्त-हेतोरप्रयोजकत्वं निराह ॥ **कर्मेति** ॥ **इत्यादेरिति** ॥ गीतायामसिद्धिनिरासकं भोगेनेत्येत-दित्युपेत्याह ॥ **कर्मणश्चेति** ॥ भाष्ये कृतस्येति सौत्रपदानुवादेन कर्मण इति व्याख्येति भावः ॥ **भोगेनेति** ॥ 'नाभुक्तं क्षीयते कर्म' इत्यादेरिति भावः । एतच्च प्रायिकत्वाशयेन । दुष्कृतकर्मणो निष्कृत्यापि क्षयसम्भवात् । अनुशयस्य सहभावात्स्वर्ग एव फलदत्वमित्यन्यत्रोक्तं शङ्कापूर्वं व्यनक्ति ॥ **न चेत्यादिना** ॥ भाष्योक्तहेतुहेतुमद्भावमुपपादयति ॥ **कर्मणां चेति** ॥ **फलमाह** ॥ **किमिति** ॥ **इदमिति** ॥ वैरोग्यादिप्रतिपादकमित्यर्थः ॥ शेषवानेवायातीति प्रतिज्ञाभाष्यस्थैवकारव्यावर्त्यमाह ॥ **कृतस्येति** ॥ भुक्तशेषानुशयवानित्यादिवचनाद्यथायोग्यमेव फलदानोपपत्तेरित्यन्यत्रोक्तयथा-योग्यपदान्वयं दर्शयन्नेव कृत्स्नभाष्यभावार्थमाह ॥ **ततः शेषेणेति** ॥ स्वर्गं गतस्येत्यर्थलब्धोऽर्थः । श्रुतिस्मृत्योश्शेषोक्तेरुपयोगमाह ॥ **एवमिति** ॥ स्मृतौ शेषान्तरोक्तेः फलमाह ॥ **अल्पेति** ॥ एतेन

(भावदीपः)

सूत्रादौ स्मृत्युक्तिरप्यर्थवतीति सूचितम् । जन्मारभ्य चतुर्दशवर्षपर्यन्तमित्यर्थभ्रमं निराह ॥ **चतुर्दशमेति** ॥ 'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु । स्त्री वाप्यनूनदशकं देहं मानुषमार्जत' इत्यादेरिति भावः । दशाभ्योऽवरा इति भ्रमनिरासायाह ॥ **दशेति** ॥ सप्तदशावरो सत्रमासीरन्नित्यादाविवेति भावः ॥ **अत इति** ॥ जीवस्य भूतावियोगवत्कर्मणोऽप्यवियोगादित्यर्थः ।

## अभिनवचन्द्रिका

**स्वर्गादिष्वेवेति** ॥ ननु कर्माणि नानाविधानि । कानिचिदिह लोके कालविशेषभोगसाधनानि । कानिचित्स्वर्गे कालविशेषे । कानिचिन्नरके । यान्यपि इह लोके फलसाधनानि न तान्येकदेशैककालावच्छेदेन । किंनाम प्रदेशभेदन, कालभेदेनैव । न हि यो हि भवति स्रुघ्ने राजा स भवति पाटलिपुत्रे । नापि य इदानीं भवति राजा स भवति कालान्तरे इति अवश्यं देशकालविशेषसहकृतानामेव कर्मणां भोगहेतुत्वमभ्युपेयम् । सति चैवं न स्वर्गादावेव सर्वकर्मक्षयः सहकारिविरहात् । ततश्चेह लोके भोगकाले पुनरनन्तकर्मानुष्ठानेनाऽसमाप्तिरेव कर्मण इति स्वर्गादौ भोगेन क्षयाभिधानमयुक्तमिति चेत्, सत्यं भिन्नदेशकालविपाकान्येव कर्माणि, तथापि कर्मणाऽऽराधितो भगवान् भिन्नदेशकालविपाकान्यपि कर्माणि स्वर्गादावेव युगपदेव फलोन्मुखानि कुर्यात्, । तद्यथा महाराजः पाटलिपुत्र एव ब्राह्मणान् संस्थाप्य, अन्नपानादिकं दद्यामिति सङ्कल्पयितापि, ब्राह्मणैराशिषांऽऽराधितः त्वया दीयमानमेव अन्नपानादिकं काश्यादिसुक्षेत्रेषु देहि । तत्र स्थित्वा भगवन्तमाराधयाम इति प्रार्थितः तथैव करोति । उक्तम् विशिष्टोद्गातृलाभे कामितलाभः । 'तस्मादु तेषु वरं वृणीय यं कामं कामयेत तं स एष एवं विदुद्गाता आत्मने, यजमानाय वा यं कामं कामयते तमगायत' इति एवं च स्वर्गादावेव सर्वकर्मभोगोऽस्त्विति कामनायां सोऽपि भवेदिति युक्तं स्वर्गादौ भोगेन क्षयाभिधानमिति ॥ **कर्मशेषयुततयैवेति** ॥ स्वर्गापादकस्यैव कर्मणो न सामस्त्येन क्षयः । किमु सर्वेषां कर्मणां क्षयो न भवतीति वक्तव्यमिति भावः । ब्रह्मपदयोग्या अपि उद्गातारो यजमानस्य योग्यमेव कामं प्रापयन्ति वैराग्यादिसाधनशून्यस्य यजमानस्य सर्वकर्मक्षयोऽयोग्य एवेति तं कामं न ते पूरयन्तीति बोध्यम् । तथेश्वरोऽपि अयोग्यानामाराधनेन प्रसन्नो न भवतीति ज्ञेयम् ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु न वैराग्यादिकमावश्यकं, कृतस्य कर्मणो भोगेनैव क्षये बीजाभावेन संसाराऽभावसम्भवात् । न च भोगकाले पुनः कर्मान्तरानुष्ठानसम्भवेन संसारानिवृत्तिरिति वाच्यम् । इह लोके भोगसमये कर्मानुष्ठाननियमेऽपि स्वर्गादौ तदभावात् । तत्रैव सर्वकर्मणां भोगेन क्षये संसारनिवृत्तिसम्भवात् । कर्मणां भिन्नदेशकालविपाकत्वेऽपि यज्ञाद्याराधितभगवत्प्रसादेन भवन्मते सौभर्यादिवत् स्वर्गादावेव सर्वकर्मक्षयो नाऽनुपपन्नः । ततश्च वैराग्यादेरनावश्यकत्वात् व्यर्थमिदं शास्त्रमिति ।

सिद्धान्तस्तु अपेक्षितमेव वैराग्यादि । 'ततःशेषेणेमं लोकमायाति' इति श्रुतेः । 'भुक्तशेषानुशयवान्' इति स्मृतेश्च स्वर्गाद्यापादककर्मण एव सामस्त्येन क्षयाभावेन सुतरां सर्वक्षयाऽसम्भवात् । न च द्वित्राऽऽवर्तनेषु सर्वक्षयो भविष्यतीति वाच्यम् । एकस्य कर्मणो भोगावसरे पुनरनन्तकर्मानुष्ठानेन भोगेनाऽसमाप्तेः । तदुक्तम् 'आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम्', अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति' इति । अतो वैराग्यादिसाधनमन्तरेण मोक्षाभावात् वैराग्यादिविधायकशास्त्रस्य न वैयर्थ्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वाधिकरणे तदमृतत्वं काम्यकर्मसाध्यममृतत्वं किञ्चित्कालीनमिति यदुक्तं तद्युक्तम् । स्वर्गसम्बन्धस्य किञ्चित्कालीनत्वेऽपि सर्वस्यापि कर्मणः सह गतत्वेन भोगेन क्षये बन्धकाभावेन संसाराभावस्य सार्वकालिकत्वोपपत्तेः । वैराग्येण किं प्रयोजनमित्याक्षेपेणोत्थानादनन्तरसङ्गतिः । अत्र वैराग्याद्यवश्यं नानुष्ठेयमुतानुष्ठेयमिति चिन्ता । तदर्थं स्वर्गे सर्वेषां सह गतानां कर्मणां भोगोऽस्ति **न वेति** ॥ **उक्तन्यायेति** ॥ स एनमविदितो न भुनक्तीति दृष्टान्तपूर्वं पूर्वाधिकरणोपात्तश्रुत्युक्तन्याय इत्यर्थः ॥ **तदनपेक्षेति** ॥ 'कर्मणा बध्यते जन्तुः' । 'नाभुक्तं क्षीयते' कर्म कल्पकोटिशतैरपीति कर्मणां बन्धकत्वस्य भोगेन क्षयस्य चोक्तेः । वैराग्याद्यनपेक्षमेव फलनिष्पत्तिदर्शनं चेत्यर्थः । न च भोगकाल इति । 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' । तत्तत्कर्मभोगकाले कर्मान्तरापादनवैय्यर्थ्यात् भोगेनासमाप्तिरक्षय इति न च वाच्यमित्यर्थः । कुतो न वाच्यमित्यतो भाष्ये कृतस्येत्यधिकोक्त्या कृतस्य संचितस्य सहगतस्यैव कर्मणो भोगेन तत्र कर्माजननमिति सूचितं सहभाव इत्युक्तन्यायं व्यनक्ति ॥ **स्वर्गादिष्वेवेति** ॥ स्वर्गादिषु

(वाक्यार्थमुक्तावली)

भोगभूमिष्वेव कर्मणः सहगतत्वेन क्षेप्तुं शक्यत्वात् । कथं शक्यत्वमित्यत उक्तं **तत्रेति ॥** साधनभूमिष्वेव कर्मान्तरापादनात् भोगभूमिषु कर्मान्तराभावादित्यर्थः ।

स्यादेतद्यदि कर्मणां मानुष्ये भोगेन क्षयं ब्रूमः । येन पुनरार्जनेनासमाप्तिस्स्यात् । किन्तु स्वर्गादौ पुण्यलोके सहागतस्य पुण्यकर्मणो भोगेन क्षयः, नरके पापस्य भोगेन क्षय इति । तत्र च भोगस्थाने न कर्मान्तरापादनमिति भावः । ननु स्वर्गादौ येन कर्मणा भोगः प्राप्यः तस्यैव कर्मणो भोगेन क्षयः । न सर्वेषां कर्मणाम् । अनियतदेशकालविपाकत्वात् । तथा च न तत्र सर्वकर्मक्षय इत्यतः कृतस्य यद्यत् कृतं तस्य सर्वस्यापि जीवेन सहागतस्य भोगेन क्षय इति भाष्येण सूचितं सहभावन्यायं प्रकारान्तरेण व्यनक्ति ॥ **स्वर्गादिष्वेवेति** ॥ भोगभूतस्वर्गादावेव सर्वस्यापि कर्मणस्सहगतत्वेन लोकमहिम्ना क्षेप्तुं शक्यत्वादित्यर्थः । अनुशयवान् भुक्तशेषकर्मानुसरणवानित्यनेन सूचितं योग्यतेत्युक्तसिद्धान्तन्यायं व्यञ्जयन्नर्थमाह ॥ **कृतस्येत्यादिना** ॥ सहागतमपि कर्म यथायोग्यं किञ्चिद्भुक्तवत इत्यन्वयः । यस्य कर्मणोऽस्मिन् देशे काले च भोगयोग्यता तस्यैव भोगः न त्वनियतदेशकालविपाकस्यान्यकर्मणः । एकस्यापि कर्मणो यत्फलं तस्य न सर्वस्य भोगः । ब्राह्मणादिदेहस्य स्वर्गस्य च एकयागादिफलत्वेन स्वर्गे समग्रभोगासम्भवेन भोगान् भुक्त्वा देहापादककर्मशेषेण अवश्यमागमनस्य वक्तव्यत्वादिति भावः । कृतमिति कर्मोच्यते । तदर्थं वा कृतस्य कर्मण इत्युक्तम् । कर्मण इति प्रसिद्धं विहाय कृतग्रहणं तु भोगदेहलक्षणफलद्वयार्थम् । कृतस्य भोगमात्रं प्रदाय चारितार्थ्यायोगात् तदनुशय आवश्यक इति सूचयितुम् । सूत्रे जीव इत्यस्ति । अनुशयवानित्यावर्तते । तत्रैकस्य संसारीत्यर्थः । 'कर्मानुशयनाच्चैव संसार्यनुशयी स्मृतः' इति वचनात् । अपरस्य भुक्तशेषकर्मसङ्ग्रहवानित्यर्थः । रंहतीत्यनुवर्तते । आगच्छतीत्यर्थः । अत्यये भोगेन क्षपणे दृष्टश्रुतिः, पुनः कर्म कुरुते कर्म कृत्वेति श्रुतिस्मृत्यधिकांशव्यावर्त्यं वदन् दृष्टस्मृतिभ्यामिति सूत्रखण्डं रीत्यन्तरेण व्याचष्टे ॥ **एवमिति** ॥ दशभ्योऽवरा इत्यल्पार्थत्वप्रतीतिनिरासायार्थमाह ॥ **दशावरा येष्विति** ॥ दशसङ्ख्याका देहा अवरपक्षा येषु ते एकादशादयो दशावरा इत्यर्थः । एकादशादिदेहानां कारणानि करोति । दशदेहान् नार्जित इत्यवरोऽयं पक्षः । तदूनार्जनं नास्त्येव । अनूनं दशकं देही देहं मानुषमार्जयेत्' इत्यन्यत्रोक्तेः । अन्यथा तद्विरोधः ।

## तत्त्वसुबोधिनी

**अत्रापीति** ॥ पूर्वाधिकरणे भाक्तमित्यनेन कर्मणो यावदिन्द्रो यावन्मनुरिति श्रुत्यनुसारेण पुनरावृत्तिस्वर्गफलत्वोक्तावेव पुनरागच्छन् जीवः किं स्वर्ग एव सर्वं कर्म क्षपयित्वाऽऽगच्छति उत कर्मशेषवानिति जिज्ञासोदयात् एतदधिकरणप्रवृत्तिरित्यनन्तरसङ्गतिरिति भावः । **तदनपेक्षफलनिष्पत्तिदर्शनं चेति** ॥ वैराग्याद्यनपेक्षमोक्षरूपफलनिष्पत्तिदर्शनमित्यर्थः । ननु भोगेन कर्मणां क्षयेऽपि बन्धनिवृत्तिलक्षणा मुक्तिः कथमित्यत आह ॥ **कर्मनिबन्धनेति** ॥ किमत्र प्रमाणमित्यत आह ॥ **कर्मणेति** ॥ ततः किमित्यत आह ॥ **कर्मणश्चेति** ॥ ननु स्वर्गादावपि स्वकर्मान्तरापादनसम्भवात् कथं भोगेन सर्वकर्मक्षय इत्यत आह ॥ **तत्रेति** ॥ तस्य भोगमात्रस्थानत्वादिति भावः । अस्तु कर्मान्तरापादनात्कर्मक्षयः । ततः किमित्यत आह ॥ **कर्मणां चेति** ॥ आङो मर्यादार्थत्वभ्रमनिरासायाह ॥ **चतुर्दशमेति** ॥ मर्यादार्थत्वस्य जीवंश्चतुर्दशादूर्ध्वं इत्यादिप्रमाणविरुद्धत्वादिति भावः । दशभ्योऽवरा इत्यन्यथाप्रतीतिनिरासायाह । दशावरा येष्विति ।

## वाक्यार्थविवरणम्

आवश्यकत्वस्य साधितत्वात् कथं सन्देह इत्यतो बीजमाह ॥ **उक्तन्याय इति** ॥ मृतिमात्रेण वा कर्ममात्रेण वा मोक्षाभावादित्युक्तन्यायः । कर्मक्षयकृतवैराग्याद्यनपेक्षरूपमोक्षफलनिष्पत्तिदर्शनमित्यर्थः ॥ **तदनपेक्षेति** ॥ भोगेनेति शेषः ॥ **अभावात्** ॥ तस्य भोगस्थानत्वादिति भावः । स्वर्गं गतस्यागमनस्योक्तत्वादित्यन्वयः । भुजेः सकर्मकत्वेन कर्मापेक्षायां यथायोग्यमित्याद्युक्तम् । तत्र यथायोग्यं किञ्चित् भुक्तवत इत्यन्वयो न तु यथायोग्यं सहागतमिति । सर्वकर्मणामपि जीवेनैव सह सत्त्वात् । अतोऽपि यद्यपि सहागतं कर्म यथेष्टमस्ति तथापि तन्मध्ये यथायोग्यं किञ्चिदेव भुज्यत इति व्याख्येयम् । अनुशयशब्दः कर्मवाची । न्यायविवरणे अनुशयस्यापि सहभावादित्युक्तेः । टीकायां च न्यायविवरणस्थानुशयपदस्य स्वर्गादिष्वेव कर्मणः सहागतत्वेनेति कर्मवाचकत्वेन व्याख्यानात् । तथा च सूत्रे कृतस्य कर्मणो भोगेनात्ययेऽनुशयवान् भोगविशिष्टकर्मवानेवायातीत्यर्थः । भाष्ये भुक्तशेषेत्यत्र भुक्तं भोगः भावे क्तः । शेषशब्दः शिष्टार्थकः । तथा च भोगशिष्टकर्मवानित्यर्थः । शेषवानेवेति भाष्यस्यापि भोगावशिष्टकर्मशेषवानित्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तन्याय इति** ॥ वैराग्यादेरवश्यानुष्ठेयत्वसाधकतत्तदधिकरणोक्तं प्रमाणमित्यर्थः । फलं धनादि । ननु भोगेन कर्मणां क्षयेऽपि बन्धनिवृत्तिलक्षणमुक्तिः कथमित्यत आह ॥ **कर्मनिबन्धन इति** ॥ **क्षेप्तुं** भोगेन नाशयितुम् । ननु स्वर्गादावपि कर्मान्तरापादनसम्भवात्कथं भोगेन सर्वकर्मक्षय इत्यत आह ॥ **तत्रेति** ॥ तस्य भोगमात्रस्थानत्वादिति भावः ॥ **ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ** ॥ कृतस्य कर्मणोऽत्यये स्वर्गादिभोगेन क्षये अनुशयवान् भुक्तकर्मशेषवानेवायाति । कुतः? दृष्टस्मृतिभ्यां ततःशेषेणेमं लोकं भुक्तशेषानुशयवानिति श्रुतिस्मृतिभ्यामित्यर्थः । देवदैत्यानामपि जीवकृतकर्मभागित्वाद्यथायोग्यमित्युक्तम् । जन्मारभ्य चतुर्दशवर्षपर्यन्तमित्यर्थप्रतीतिनिरासायाह ॥ **चतुर्दशमेति** ॥ मर्यादार्थत्वस्य, जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु । स्त्री वाप्यनूनदशकं देहं मानुषमार्जयेदित्यादिविरुद्धत्वादिति भावः । दशाभ्योऽवरा इत्यल्पत्वप्रतीतिनिरासायाह ॥ **दशाऽवरा येष्विति** ॥

॥ इति कृतात्ययाधिकरणम् ॥ ८ ॥

## ९. यथेताधिकरणम्

'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तत' इति गतिप्रकारेणाऽऽगतिः प्रतीयते । अतो ब्रूते—

**॥ ॐ यथेतमनेवं च ॐ ॥ ९ ॥**

'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति काषायणश्रुतेर्यथागतमन्यथा च ।

### तत्त्वप्रदीपिका

पूर्वमन्यैः स्वेन वा यथेतं तथैव गच्छति । यथा च गतं तथैवाऽकाशपर्यन्तमागच्छति । ततोऽर्वागन्यथा ॥

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय स्वर्गादागतिप्रकारनिरूपणादस्ति शास्त्रादिसङ्गतिः । यद्यागमनस्य क्लेशिष्ठता न प्रतिपाद्येत तर्हि न स्वर्गेऽतिवैराग्यं स्यादिति सा निरूपणीया । प्रकृतमागमनं विषयः । तत्किं गतिप्रकारेणैवान्यथा वेति सन्देहः । लौकिकागमनेषूभयथा दर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **यथेति** ॥ गमनप्रकारेणैवागमनम् । यथेतमागच्छतीति श्रुतेः । येन च पथा गतस्तस्य स्मृतिविषयत्वेन मनसि सहभावाच्च । न हि विज्ञातं पन्थानं विहायाविज्ञातेनागमने प्रयोजनमस्ति । अतः स्वर्गफलस्यातिक्लेशानुषङ्गाभावान्न तत्र वैराग्यमापादनीयमिति भावः । यथा स्वर्गादिमं लोकं प्रति स्वयमितं तथा गच्छति यथाऽस्माल्लोकात्स्वर्गमितं तथाऽऽगच्छतीत्यर्थः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ गमनप्रकारादन्यथागमनम् । न चैवं श्रुतिविरोधः । क्वचिद्गमनप्रकारेणागमनस्याङ्गीकृतत्वेन श्रुतेस्तद्विषयत्वात् । कुत एतत् । 'धूमादभ्रम्' इति विशेषश्रुतेरेव । न च युक्तिविरोधः । आगमने जीवस्यास्वातन्त्र्येण तत्स्मरणस्यागमनानुपयोगित्वादिति भावः । तस्मादागमनादावतिक्लेशयुक्तत्वेन स्वर्गफलेऽपि विरक्तेन भवितव्यमिति सिद्धम् ।

## गुर्वर्थदीपिका

स्वयमितमित्यत्र स्वयं स्वेनेतं प्राप्तं तथा गच्छति स्वर्गं प्रतिगच्छतीत्यर्थः । यथेतमाकाशमिति श्रुतेः । यथाऽऽकाशाच्चन्द्रलोकं प्रति स्वेनेतं स्वेन गतं तथैव पुनराकाशं प्रत्यायाति । तदनन्तरमेवमिति सूत्रोक्तप्रकारेण वाय्वादिक्रमेण यातीति योजनामभिप्रेत्योक्तं क्वचिद्गमन-प्रकारेणेति । क्वचिदंशे । अन्यथा कदाचिदित्यवक्ष्यत् ।

## भावबोधः

**प्रकृतमागमनमिति** ॥ शेषवानायातीति भाष्योक्तरीत्या 'अनुशयवान्' इति पूर्वसूत्रप्रकृत-मित्यर्थः । तथा चात्र पूर्वाधिकरणोपक्षिप्त आगमनरूपविषये किं गमनप्रकारेणोतान्यथा वेति प्रकारविचारादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र स्वर्गादागमनं किं गतिप्रकारेणैवो-तान्यथा वेति चिन्ता । तदर्थं 'यथेतमागच्छति' इति श्रुतिर्गमनप्रकारेणैवागमनमिति नियमप्रति-पादिकोत क्वाचित्कागमनविषयेति । तदर्थं मार्गस्मरणरूपोपपत्तिरुदाहृतश्रुत्युपोद्बलिका न वेति । मार्गस्य सहभावाद्यथागतमेवागमननियम इति न्यायविवरणोक्तयुक्तिं श्रुत्युपोद्बलकत्वेनाह– **येन पथेति** ॥ उभयत्र तथाशब्दाध्याहारेण 'यथेतम्' इति श्रुतिवाक्यद्वयं व्याख्याति– **यथेति** ॥ सूत्रे हेत्वनुक्तेर्न्यूनत्वमित्याशङ्कापरिहारायाऽनेवं चेत्यंशेनैव प्रतिज्ञाभागसिद्धौ आकाशाच्चन्द्रलोकं 'यथेतमाकाशम्' इति श्रुतिमनुकुर्वता 'यथेतम्' इति सूत्रांशेन विशेषुश्रुतिरेव हेतुत्वेनोपात्तेत्यभिप्रेत्य प्रवृत्तं धूमादभ्रमित्यादिभाष्यं व्याचष्टे– **कुत एतदित्यादिना** ॥ वचनबलाद्यथायोग्यमेवागमनो-पपत्तेरिति न्यायविवरणेन मार्गस्मरणरूपोपपत्तेर्यदप्रयोजकत्वं सूचितं तदाह– **न च युक्तिविरोध इत्यादिना** ॥

## भावदीपः

**आगतीति** ॥ तस्याः क्लेशतरत्वद्योतनायेति भावः । एतेन पूर्वत्र शेषवानायातीत्युक्तौ कथमागतिरिति जिज्ञासोदयाद्वा एवमष्टभिर्नयैः वैराग्यादिसाधनानामावश्यकत्वोक्त्यैतच्छास्त्रे-तदध्यायैतत्पादानामावश्यकत्वेऽत्रावसरप्राप्तस्य वैराग्यार्थे गत्यादीत्याद्युक्तदिशा वैराग्यप्रयोजकस्या-गतिप्रकारस्य निरूपणाद्वाऽनन्तरसङ्गतिः सूचिता । यद्वा पूर्वत्र श्रुतिस्मृत्योः पुनर्गच्छति

(भावदीपः)

पुनरागच्छतीत्याद्युक्तगमनागमनयोः परिचितैकमार्गसाध्यत्वेनापरिचितमार्गकृतक्लेशाभावात्किं वैराग्येणेति शङ्कनात्सङ्गतिः । टीकादावागमनमात्रचिन्ता तु आगमनचिन्तयैव गतिचिन्तार्थसिद्धेति वा आगताविव गतौ वक्तव्यप्रकारद्वैविध्याभावाद्वा अव्यवधानेन सूत्रे प्रकृतत्वाद्वा कृता । अत एवोपसंहारटीकायां आगमनादाविति वक्ष्यति ॥ **शास्त्रादीति** ॥ पूर्वत्रेव सर्वनयानां फलतः शास्त्रान्तर्भावेऽपि कृत्स्नसाधनावश्यकत्वसाधकत्वेन साक्षादध्यायान्तर्भावः । तदेकदेशवैराग्यप्रयोजकत्वद्वारा तु स्मृतिनयवत्पादान्तर्भावः । अत्र तु वैराग्यरूपसाधनैकदेशद्वाराऽध्यायान्तर्भावः । साक्षादेव तु पादान्तर्भावसङ्गतिरिति भावः । निरूपणस्य फलमाह ॥ **यदीति** ॥ **न स्वर्ग इति** ॥ तथा चाद्यसूत्रे अथपदेनाधिकारिविशेषणतया न तत्सूचनमर्थवदिति भावः ॥ **प्रकृतमिति** ॥ शेषवानायातीति पूर्वत्र प्रकृतमित्यर्थः । गतेरपि प्रकृतत्वेऽप्यागताविव गतौ वक्तव्यप्रकारभेदाभावात्तत्त्याग इति भावः । मार्गस्य सहभावाद्यथागतमेवागमनमिति नियम इत्यन्यत्रोक्त्यनुरोधेन गतिप्रकारेणेति भाष्यं सावधारणं व्याचष्टे ॥ **गमनेति** ॥ धूमादभ्रमित्यादिसिद्धान्तश्रुतितोऽस्याः श्रुतेः प्राबल्याय मार्गस्य सहभावादित्यन्यत्रोक्तयुक्तिं च स्फुटीकुर्वन्नाह ॥ **येन चेति** ॥ अप्रयोजकत्वं हेतोर्निराह ॥ **न हीति** ॥ **अत इति** ॥ गत्यागत्योः श्रुतियुक्तिबलेनैकप्रकारत्वादित्यर्थः । यथान्यैरितं तथैव स्वयं गच्छतीत्यन्यगत्यादिप्रकारेण स्वगत्यादिरुच्यत इति भ्रमं निराह ॥ **यथेति** ॥ **इमं लोकं** भूलोकम् । यथेति श्रवणात्तथेति लाभ इति भावः । यथेतमागच्छतीत्यादिनैव पूर्तौ यथेतमेव गच्छतीत्यागतिप्रकारेण गत्युक्त्यंशोक्तिः । गतिप्रकारेणागतिरित्यस्य दार्ढ्याय । अत एव गतिप्रकारेणैवागमनमिति सावधारणं व्याख्यातम् । अत एव च यथा स्वर्गादिकं प्रत्यन्यैरितं तथा स्वयं गच्छतीत्यर्थो नोक्तः अनुपयोगात् । पूर्वत्र श्रुतौ पुनर्गच्छतीति स्मृतौ पुनर्गच्छेदिति च । स्वर्गादागतस्य पुनर्गत्युक्त्या गतावपि क्लेशो नास्ति । आगमनेऽपि परिचितमार्गेणैव स्वर्गगमनादित्यपि शङ्कासूचनाय । अतो भाष्यादावागतिरित्युक्तिरुपलक्षणम् । अत एवोपसंहारटीकायामागमनादावित्यादिशब्दः । सिद्धान्ते आगतेरन्यथात्वोक्तौ गतेस्तदन्यथात्वस्य स्वतःसिद्धत्वात्पृथगनुक्तिः । स भुङ्क्त इत्यादिशेषोक्तिः श्रुतेर्जीवपरत्वद्योतनायेति भावः । यथागतमन्यथा चेति भाष्यं व्याहतिनिरासाय । क्वचिद्यथागतमागमनं क्वचिदन्यथा चागमनमिति शेषपूर्त्याऽर्थमाह ॥ **गमनेति** ॥ एतेन यथायोग्यमागमनोपपत्तेरित्यन्यत्रोक्तयथाशब्दार्थो विवृतः ॥ **श्रुतीति** ॥ प्रागुक्तश्रुतीत्यर्थः । एतेन सूत्रे यथेतमायात्यनेवं चायातीति

(भावदीपः)

योजना । अनेवमित्यत्र यथेतमित्येतदेव प्रतियोगि यथेतमित्युक्तेरुपयोगश्च सूचितः । श्रुतौ यथेतं चन्द्रलोकपर्यन्तं स्वयमितं तथैवाकाशपर्यन्तमागच्छति ततोऽर्वागन्यथेत्यर्थः । वायुर्भूत्वेत्यादेस्तत्स्वाभाव्यापत्तिरित्यत्राग्रेऽर्थो व्यक्तः ॥ **युक्तीति** ॥ स्मृतिविषयत्वयुक्तीत्यर्थः ॥ **तस्मादिति** ॥ गमनप्रकारादन्यथाप्यागमनादित्यर्थः । आदिपदेन पुनः स्वर्गं प्रति गमन इति गृह्यते ॥ **फलेऽपीति** ॥ यद्यपि सुखं फलरूपं तथापीति वा न केवलं साधने कर्मणीति वाऽपेरर्थः ।

## अभिनवचन्द्रिका

**यद्यागमनस्येति** ॥ नन्वागमनस्य क्लिष्टत्वाभावेऽपि आगतस्य गर्भवासाद्यतिक्लेशसद्भावात् स्यादेवातिशयेन वैराग्यमिति व्यर्थमागमनस्य क्लिष्टता प्रतिपादनमिति चेत् । उच्यते । गर्भवासादेः स्वर्गापादककर्मफलत्वाभावेन स्वर्गानन्तर्भावात् तत्र क्लेशदर्शनं न स्वर्गे वैराग्यहेतुः, अपि तु गमनागमनयोः स्वर्गापादककर्मफलत्वेन स्वर्गान्तर्भावात् तत्र क्लेशाव्युत्पादनं स्वर्गवैराग्यहेतुरिति तत्प्रतिपादनमावश्यकमिति । श्रुतिं व्याख्याति **यथास्वर्गादिति** ॥ यस्तु स्वर्गादागमनं वेत्ति न तु गमनं, तं प्रति आगमनदृष्टान्तेन गमनमुच्यते । यस्तु स्वर्गगमनं वेत्ति न त्वागमनप्रकारं वेत्ति, तं प्रति गमनदृष्टान्तेन आगमनमुच्यत इति भावः । एतेन आगमनज्ञाने तद्दृष्टान्तेन गमनज्ञानं, तज्ज्ञाने च तद्दृष्टान्तेनाऽऽगमनज्ञानमित्यन्योन्याश्रय इति परास्तम् । अधिकारिभेदेन श्रुतेः प्रवृत्त्यङ्गीकारात् । याज्ञवल्क्यवत्प्रतिज्ञामात्रेणैव सिद्धान्तसिद्धेः सूत्रे प्रमाणाऽनुपन्यासेऽपि शिष्यहितैषिणा भाष्यकृता श्रुत्युपन्यासः कृत इति बोध्यम् ॥ **विशेषश्रुतेरिति** ॥ आकाशपर्यन्तं गत्यनुसारेणाऽऽगमनमुक्त्वा, तदनन्तरमन्यथागमनप्रतिपादकविशेषश्रुतेरेवेत्यर्थः ।

पूर्वपक्षस्तु गमनप्रकारेणैवाऽऽगमनं, 'यथेतमागच्छति' इति श्रुतेः । येन पथा स्वर्गं प्रति जीवो गतः स मार्गस्तावत् जीवस्य स्मृतिविषयः । न च स्मृतमार्गपरित्यागेन मार्गांतरेणाऽऽगमने कारणमस्तीति तेनैवाऽऽयातीति वक्तव्यम् । ततश्चाऽतिक्लेशाऽभावान्न स्वर्गे वैराग्यमापाद नीयमिति ।

सिद्धान्तस्तु न जीवो यथा गतस्तथाऽऽयाति किंत्वन्यथा, 'धूमादभ्रम्' इति विशेषश्रुतेः । न च प्राचीनश्रुतिविरोधः । आकाशपर्यंतं गत्यनुसारेणाऽऽगमनस्याङ्गीकारेण श्रुतेस्तत्परत्वात् । नापि युक्तिविरोधः । आगमने जीवस्य स्वातन्त्र्याभावेन युक्तेरप्रयोजकत्वात् । तस्मादागमनादावतिक्लेशायुक्तत्वेन स्वर्गफलेऽपि विरक्तेन भवितव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृतमिति** ॥ तथा च पूर्वाधिकरणोपक्षिप्तागमनविचारादनन्तरसङ्गतिरिति भावः । अत्र स्वर्गादागमनं किं गतिप्रकारेणोतान्यथापि वेति चिन्ता । तदर्थं यथेतमागच्छतीति श्रुतिर्गतिस्मरणस्यावश्यकत्वयुक्तियुक्ततया गमनप्रकारेणैवागमननियमप्रतिपादिकोत क्वाचित्कविषयेति । गतिप्रकारेणागतिरिति भाष्यांशं साध्यप्रदर्शनपरतया व्याचष्टे ॥ **गमनप्रकारेणेति** ॥ इति श्रुतौ गतिप्रकारेणागतिः प्रतीयत इति समग्रभाष्यं व्याचष्टे ॥ **यथेतमागच्छतीति श्रुतेरिति** ॥ गतिप्रकारेणैवागतिर्यतो गतिप्रकारेण येन पथा गतः स एव प्रतीयते स्मर्यत इति सहभाव इत्युक्तन्यायप्रदर्शकतयापि व्याचष्टे ॥ **येन च पथेति** ॥ **यथेतं** यथागमनम् । अनेवं ततोऽन्यथा आगतमागमनमिति साध्यप्रदर्शनपरतया सूत्रं व्याख्याय यथागतमन्यथा चेति भाष्यं व्याचष्टे ॥ **गमनप्रकारादिति** ॥ श्रुतिविरोधपरिहारकतयापि व्याकुर्वत्तदेव भाष्यं व्याचष्टे ॥ **न चैवमित्यादिना** ॥ एतेन यथेतं येन पथा स्वर्गं प्रत्यस्माल्लोकादितं गतं तथाऽकाशपर्यन्तं रंहति आगच्छति । ततोऽर्वाक् मार्गप्रभागेनैवमन्यथा गच्छतीति सूत्रभाष्ययोरर्थ उक्तो भवति । योग्यतेत्युक्तन्यायोऽप्यागमनसमये यथायोग्यमेवागमनमिति विवृतो भवति । यथेतमाकाशमिति श्रुतिमनुकुर्वता सूत्रांशेनागमनप्रकारस्यान्यथात्वे विशेषश्रुतिर्हेतुत्वेनोक्तेति भावेन प्रवृत्तं धूमादभ्रमिति भाष्यं व्याचष्टे **कुत एतदिति** ॥ विशेषवचने धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव चेत्यादिवक्ष्यमाणप्रकारेण गमने जीवस्यास्वातन्त्र्योक्त्या स्मरणासहभावस्य पूर्वपक्षन्यायाप्रयोजकत्वं लब्धमिति भावेनाह ॥ **न चेति** ॥

## तत्त्वसुबोधिनी

**प्रकृतमागमनमिति** ॥ शेषवानायातीति भाष्योक्तरीत्याऽनुशयवानिति पूर्वसूत्रप्रकृतमित्यर्थः । तथा चात्र पूर्वाधिकरणोपक्षिप्तागमनविषये किं गमनप्रकारेणोतान्यथा वेति प्रकारविचारादनन्तरसङ्गतिरिति भावः । ननु विपरीतापि श्रुतिरस्तीति कथं गतिप्रकारेणागतिनिर्णय इति चेन्न । विमतो गतमार्गेणैवायाति तस्य पूर्वानुभूतत्वेन तद्विषयस्मृतिमत्त्वादिति युक्तियुक्तत्वेन प्रबलत्वादस्याः श्रुतेः गतमार्गेणैवागमनमित्याह ॥ **येन चेति** ॥ ननु प्रयोजनान्तरवशादन्येन मार्गेणागमनं भविष्यतीत्यत आह ॥ **न हीति** ॥ उभयत्र तथाशब्दाध्याहारेण यथेतमिति वाक्यद्वयं व्याख्याति **यथेति** ॥ सूत्रे हेत्वनुक्तेर्न्यूनत्वमित्याशङ्कापरिहाराय अनेवं चेत्यंशेनैव प्रतिज्ञासिद्धौ आकाशाच्चन्द्रलोकं यथे-

(तत्त्वसुबोधिनी)

तमाकाशमिति श्रुतिमनुकुर्वता यथेतमिति सूत्रांशेन विशेषश्रुतिरेव हेतुत्वेनोपात्तेत्यभिप्रेत्य प्रवृत्त-धूमादभ्रमित्यादिभाष्यं व्याचष्टे ॥ **कुत एतदित्यादिना** ॥ **न च युक्तिविरोध इति** ॥ मार्गस्मरणरूपयुक्तिविरोधो नेत्यर्थः ।

## वाक्यार्थविवरणम्

सौत्रचशब्दार्थमाह ॥ **कचिदिति** ॥ पुण्यवत्पुरुषविशेषे । ननु तर्ह्यस्य पुरुषस्यागमने क्लेशाभावान्न स्वर्गेऽतिवैराग्यं स्यादिति चेन्न । आगमने क्लेशाभावेनैतत्प्रयुक्तवैराग्याभावेऽपि स्वर्ग-फलस्य नश्वरत्वाद्यनुसन्धानेन प्रकारान्तरेण तस्य तत्र वैराग्यसम्भवादिति ध्येयम् ॥ **स्वर्गफले** ॥ स्वर्गलक्षणफले ।

## वाक्यार्थमञ्जरी

**क्लेशिष्टता** क्लेशसाधनता । सहभावात् विषयतया विद्यमानत्वादुभयत्र तथा शब्दद्वयाध्याहारेण यथेतमिति श्रुतिवाक्यद्वयं व्याचष्टे ॥ **यथेति** ॥ **ॐ यथेतमनेवं च ॐ** ॥ यथा येन मार्गेण स्वर्गादिकं प्रति इतं गतं तेनायाति । अनेवं च ततोऽन्येन च मार्गेण यातीत्यर्थः ॥ **युक्तीति** ॥ मार्गस्मरणयुक्तीत्यर्थः ।

॥ इति यथेताधिकरणम् ॥ ९ ॥

## १०. चरणाधिकरणम्

**॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥ १० ॥**

'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्' (छां.उ.५-१०-७) इति श्रुतेश्चरणफलमेव गमनागमने न यज्ञादिकृतः ।

'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः ।
अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतम्' ॥ इति ।

स्मृतेरिति चेन्न । यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ।

### तत्त्वप्रदीपिका

न यज्ञादिकृतो यज्ञादिफलं गमनागमनम् । चरणशब्दस्य यज्ञाद्यतिरिक्तविषयत्वात् । तत्र प्रमाणमाह– **आचार इत्यादि पूर्ववादी ॥** उत्तरभाष्यस्यायमर्थः । यज्ञादिपुण्योपलक्षणार्था रमणीयचरणश्रुतिः । पापोपलक्षणार्था कपूयचरणश्रुतिः ।

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनवैराग्यार्थं गतागतस्य कर्मफलत्वसाधनादस्ति शास्त्रादिसङ्गतिः । यदि गतागतक्लेशस्य न कर्मसाध्यत्वं न तर्हि काम्ये कर्मण्ययं विरज्येतातस्तत्समर्थनीयम् । प्रकृतं गतागतं विषयः । यज्ञादिकर्मफलं न वेति सन्देहः । तन्निमित्तानिमित्तयोरुभयोरपि सहभावदर्शनं सन्देहबिजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद् व्याचष्टे **॥ चरणादिति ॥** न यज्ञादिकर्मफलं गतागतम् । किं नाम चरणफलमेव । 'तद्य इह रमणीयचरणा' इति श्रुतेः । न च वाच्यं यज्ञादिकर्मण एव चरणत्वाच्छून्यमभिधानं चरणफलमेव गमनागमनं न यज्ञादिकृत इतीति । 'स यथाकारी यथाचारी तथा भवति' इति श्रुतेः 'आचार इति कर्मणोऽन्यस्य चरणस्य प्रतीतेः । अथापि स्यात् । 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्युपक्रम्य तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्त' इति श्रुतेर्गतागतस्य यज्ञादिफलत्वप्रतीतेरयुक्तं चरणफलत्वकल्पनमिति । मैवम् । तत्रापि गतागतस्य चरणफलत्वेनैवाङ्गीकारात् । न च तत्र चरणशब्दो नास्ति । 'इष्टापूर्ते दत्तमित्युपासते' इत्युपशब्दस्यैव तद्वाचकत्वात् । स हि

(तत्त्वप्रकाशिका)

**समीपवर्ति वक्ति । चरणमेव यज्ञादिसमीपवर्ति । तत्र येयं गतागतस्य कर्मफलत्वप्रतीतिरुपजायते शब्दात् सा च करणचरणे सहैवोक्ता स्वर्गगतागतयोश्च सहोक्तिनिमित्ता भ्रान्तिरेव । न च मन्तव्यं कुत एतत्कल्प्यत इति चरणश्रुतेर्विषयान्तराभावेनाप्रामाण्यभयात्सावकाशश्रुतेरर्थान्तरकल्पनस्य न्यायप्राप्तत्वात् । अतो गतागतस्यान्यफलत्वात्कर्मणा पुनरावृत्तिशून्यस्वर्गासिद्धेर्न तत्र वैराग्यमापाद्यमिति भावः ।**

**सिद्धान्तांशं व्याचष्टे ॥ नेति ॥ न गतागतस्य कर्मफलत्वाभावः । 'नान्यः पन्थाः' इति श्रुत्या गतागतशून्यफलस्य कर्मसाध्यताया निषिद्धत्वात् । 'इष्टापूर्तं मन्यमाना' इति श्रुत्या 'त्रैविद्या माम्' इत्यादिस्मृत्या च गतागतस्य कर्मफलत्वोक्तेश्च । न च 'तद्य इह रमणीयचरणाः' इति श्रुतिविरोधः । तस्या उदाहृतश्रुत्याद्यनुरोधेनाजहल्लक्षणया यज्ञार्थत्वोपपत्तेरिति कार्ष्णाजिनिराचार्यो मन्यत इति भावः । एतेन यदेतत् श्रुत्यवष्ठम्भेनादिवाक्यस्यार्थान्तरपरिकल्पनं तदपि परास्तं भवति । अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति' इत्यादिसमाख्याविरुद्धं च ।**

## गुर्वर्थदीपिका

तन्निमित्तानिमित्तयोरित्यत्र तद्यज्ञाख्यं कर्म निमित्तं यस्य तत् तन्निमित्तं पुण्यं तदनिमित्तं लिङ्गदेहादिकमित्यर्थः । न यज्ञादिकृत इत्यस्य यज्ञादिकृतः पुरुषस्येत्यर्थः । शब्दादित्यस्य साक्षात्कर्मप्रतिपादकेष्टापूर्तादिशब्दश्रवणादित्यर्थः । कर्मणा पुनरावृत्तिशून्यस्वर्गसिद्धेरित्यत्र यद्यपि स्वर्गात्पुनरावृत्तिरस्ति तथाऽपि तस्य उक्तविधयाऽऽचारफलत्वेन कर्मफलत्वाभावात्पुनरावृत्तिं विहाय केवलस्वर्गस्यैव कर्मणा सिद्धेरिति भावः । कर्मणः पुनरावृत्त्यहेतुत्वेन ज्ञानसाम्यमिति शङ्कितुराशयः । वस्तुतस्तु ज्ञानजन्यफले मोक्षे केनापि निमित्तेन पुनरावृत्तिरेव नास्ति । कर्मफले स्वर्गे तु येन केनचित्प्रकारेणास्त्येव पुनरावृत्तिरिति न ज्ञानसाम्यम् । अतो मन्दाशङ्केयमिति ज्ञेयम् । इह लोके तं परमात्मानं एवं सहस्रशीर्षत्वाद्याकारेण विद्वानमृतो भवति पुनर्मृतिरहितो भवति । 'जातस्य हि ध्रुवो मृत्युः' इति वचनेन पुनर्जन्मनि पुनर्मरणस्यापि ध्रौव्यात् । पुनर्भवान्नावर्तत इति 'तमेवं विद्वानमृत इह भवति' इति श्रुतेरर्थभावात् ज्ञानं पुनरावृत्तिशून्यमोक्षफलकमिति तावत्सिद्धम् । अयनायेद्दशमोक्षाय अन्यः कर्मादिरूपः पन्थाः नेति पुनरावृत्तिशून्यफलजनकत्वं 'नान्यः पन्थाः' इति श्रुत्यंशेन कर्मणो निषिद्ध्यत इति भावेनाऽऽह **नान्यः पन्था इति ॥** गतस्यैव पुनरागतमागमनं गतागतम् ।

(गुर्वर्थदीपिका)

त्रैविद्या मामित्यादीत्यत्राऽऽदिपदेन 'एवं त्रैविद्यमनुप्रपन्ना गतागतं कामकामा लभन्त' इत्यन्तं वाक्यं गृह्यते । त्रैविद्यं त्रिविद्यासम्बन्धियज्ञादिकर्म, त्रिविद्यासम्बन्धिज्ञानव्यावर्तनाय यज्ञै-रिष्ट्वेत्यत्रोक्तयज्ञमेव परामर्ष्टुमेवमित्युक्तम् । निवृत्तिकर्मरूपयज्ञादिव्यावर्तनाय कामकामा इत्युक्तम् । त्रैविद्यमनुप्रपन्ना गतागतं लभन्त इति वचनात्फलीभूतगतागतस्य कारणान्तरानुक्तेः अकारणकार्यो-त्पत्त्ययोगाच्चाश्ववान् गच्छतीत्यादाविवाधिकारिविशेषणीभूतयज्ञादिकर्मैव साधनमिति लभ्यते । किञ्च त्रैविद्यपदोक्तयज्ञस्य स्वर्गसाधनतायाः 'ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्' इति पूर्वश्लोक एवोक्तत्वात्पुनरारम्भो गतागतहेतुत्वकथनायैवेति कथं न लभ्यते । निरवकाशैतत्स्मृतिसमाख्यया 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' इति प्रागुक्तश्रुतिरपि स्वर्गादर्वाग्गतेः कर्मफलतामाहेति भावः । सुष्ठुकृते नाकस्य पृष्ठेऽनुभूत्वा पुण्यफलमनुभूत्वेति श्रुतेरर्थः पराभिमतः ।

'तद्यदिह रमणीयचरणा' इत्यादिश्रुतिषूक्तविधया निरवकाशबहुतरश्रुतिस्मृत्यनुरोधायाजह-त्स्वार्थलक्षणया रमणीयचरणकपूयचरणपदाभ्यां सदाचारदुराचारसहितौ यज्ञावेव ब्रूते । तत्रापि सदसद्योगिसदाचारदुराचारफले, गतागतं तु यज्ञादिरूपकर्मण एव फलम् । न तु योनिप्राप्तिरपि । पुण्यरूपयज्ञकर्मणः तामसयोनिप्रापकत्वायोगात् । एवं च कपूययोनिप्राप्तेः दुराचारफलत्वे समान-न्यायत्वात् रमणीययोनिप्राप्तिरपि सदाचारस्यैव फलम् । न तु यज्ञस्य । अत एव स्मृतिः 'गतागतं कामकामा लभन्ते' इत्येवाह । सदाचारस्यापि पुण्यरूपत्वात्पुण्ययोनौ प्रवेश एव तत्फलम् । 'गर्भवासादिदुःखं तु पुनः पापान्तरात्' इति ज्ञेयम् । किञ्च सदसद्योनिप्रापकसदाचारदुराचार-योरागमनमात्रफलकत्वे सम्भवेऽपि स्वर्गं प्रति गमनस्य यज्ञैकफलता परेणापि वक्तव्या । तत्र चरणश्रुतेरभावात् । एवं चार्धचरतीयायोगादुक्तसयुक्तिकस्मृत्यादिबलात् 'कृतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म' इति भागवतोक्त्या काम्यकर्मरूपयज्ञस्यातिदुर्बलाश्ववद्गमनहेतुतायाः कदाचित्पतन-हेतुताया अपि न्यायप्राप्तत्वात्पतनस्यापि वाय्वादिदेवानुप्रवेशेन सुखहेतुत्वात् व्रीह्यादिभावाभावेन तच्छेदादिजनितदुःखहेतुत्वादागमनमपि यज्ञस्यैव फलमिति भावेनाह– **उदाहृतेति** ॥ अतीताधि-करणे टीकाकृतोक्तमागमनस्य क्लेशित्वं तु परिभ्रमणादिनिमित्तमीषत्क्लेशित्वमेव । न तु मध्ये जनन-मरणादिरूपमहाक्लेशित्वम् । सुखसाधनतया वेदोपदिष्टकर्मिणां व्रीह्यादिभावेन दुःखित्वे वेदविहित-वैराग्यादावपि तच्छङ्का स्यादिति स्वयमेव वक्ष्यमाणत्वात् । तर्हि पुण्यफले गमने ईषत्क्लेशिताऽपि

(गुर्वर्थदीपिका)

कथमिति चेत्सत्यम् । आत्यन्तिकदु:खनिवृत्तिसहितसुखसाधनं ज्ञानमेव । न तु दुर्बलसाधनरूपं कर्म । स्वर्गेऽपि चिन्तेर्ष्यादिजनितेषद्दु:खस्य सत्त्वात् । अत एव स्वर्गेऽपि वैराग्यं मुमुक्षूणामाह सूत्रकार: । आदिवाक्यस्येत्यस्य 'तद्य इह' इति वाक्यादप्यादौ विद्यमानस्य 'अथ इमे ग्रामा:' इति वाक्यस्येत्यर्थ: ।

## भावबोध:

**प्रकृतं गतागतं विषय इति ॥** तथा च 'यथेतमनेवं च' इत्युक्तगतागतस्य कर्मफलत्व-समर्थनादनन्तरसङ्गतिरिति भाव: । यज्ञादिफलं न वेति । अत्र गतागतं यज्ञादिकर्मफलं न भवत्युत भवतीति चिन्ता । तदर्थं 'रमणीयचरणा' इति श्रुतिगतश्चरणशब्द: कर्मपरो न भवत्युत भवतीति । तदर्थम् 'अथ य इमे ग्रामा:' इत्यादिवाक्यजन्या गतागतस्य यज्ञादिकर्मफलत्वप्रतीति: करण-चरणस्वर्गगतागतरूपसाधनफलसहोक्तिनिमित्ता भ्रान्तिरुत प्रमेति । तदर्थं 'रमणीयचरणा' इति श्रुतेर्निर्विषयत्वरूपं बाधकमस्त्युत लक्षणादिना कर्मपरत्वेन सविषयत्वाद्बाधकं नास्तीति । तदर्थमुपलक्षकत्वे चरणशब्दस्य वैयर्थ्यं प्राप्नोत्युत नेति । तथा च रमणीयचरणशब्दस्य यज्ञाद्युपलक्षकत्वे रमणीया इत्येतावता पूर्तौ चरणशब्दस्य वैयर्थ्यप्रसङ्गेनोपलक्षणासम्भवेन चरण-श्रुतेर्निर्विषयत्वरूपबाधकात्; गतागतस्य कर्मफलत्वप्रतीते: सहोक्तिनिबन्धनभ्रमत्वात् चरणशब्दस्य कर्मपरत्वाभावेन गतागतस्य कर्मफलत्वमिति पूर्वपक्षे यज्ञादिकारिणामपि रमणीयकपूयचरणाभ्यामेव रमणीयत्वादिति ज्ञापकतया चरणशब्दस्य सप्रयोजनत्वेनोपलक्षणत्वसम्भवात् चरणश्रुते: सविषयत्वेन बाधकाभावात् गतागतस्य कर्मजन्यत्वप्रतीते: प्रमात्वसम्भवात् चरणशब्दस्य कर्म-परत्वेन गतागतस्य कर्मफलत्वमेवेति सिद्धान्ते च फलफलिभावो ज्ञातव्य: ॥ **तन्निमित्ता-निमित्तयोरपीति ॥** न केवलमेकस्य निमित्तस्यैवेत्यपेरर्थ: । एकस्मिन् देशे काले च पटादिना कार्येण तन्निमित्तानिमित्तयोस्तन्त्वादिरासभादिकयो: सहभावदर्शनमित्यर्थ: ।

ननु निमित्तानिमित्तयो: सहभावदर्शनस्य सन्देहबीजत्वे साधारणधर्म इत्युक्तं स्यात् । तथा च कर्म गतागतफलकं न वेति सन्देह: स्यान्न तु गतागतं यज्ञादिकर्मफलं न वेति चेत्, न; निमित्तानिमित्तयो: कार्येण सहभावदर्शनोक्त्या कार्यस्यापि निमित्तानिमित्ताभ्यां सहभावदर्शन-लाभात् । तथा च फलस्य निमित्तानिमित्तोभयसहभूतत्वदर्शनाद्गतागतरूपं फलं यद्यपि यज्ञादि-

(भावबोधः)

सहभूतं तथापि तत्फलं न वेति सन्देहो भवतीति भावः । 'सुकृतदुष्कृते एवेति तु बादरिः' इति सूत्रनिवर्तनीयाशङ्काप्रदर्शनार्थं भाष्ये 'आचार इति स प्रोक्तः' इति स्मृतिरुदाहृतेत्यभिप्रेत्य तदुदाहरणनिवर्तनीयाशङ्काप्रतिषेधपूर्वकं तदभिप्रायमाह– **न च वाच्यमित्यादिना** ॥ इष्टापूर्ते दत्तमित्युपासत इत्युपशब्देनेष्टादिभिराचारस्य सहपाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद्वदन्तीति न्यायविवरणं संयोजयितुं तदुपयोगिशङ्कामाह– **अथापि स्यादित्यादिना** ॥ 'उपशब्दस्यैव' इत्यादिना 'चरणमेव यज्ञादिसमीपवर्ति' इत्यन्तेनेष्टापूर्ते दत्तमित्युपासत इत्युपशब्देनेत्येतदुक्ततात्पर्यं भवति । तत्र येयमित्यादिना चरणफलं पुनरावृत्तिं कर्मकरणफलत्वेन भ्रमाद्वदन्तीत्येतदुक्ततात्पर्यम् ॥ **सा चेति** ॥ अनेनेष्टादिभिराचारस्य सहपाठात् भ्रमाद्वदन्तीत्येतदन्वयप्रदर्शनपूर्वकमुक्ततात्पर्यकं भवति । स्वर्गगतागतयोरित्यनेनेष्टादिभिराचारस्य सहपाठादित्युक्तस्य साधनसहोक्तिमात्रस्य गतागतस्य कर्मफलत्वभ्रमजनकत्वायोगात् साधनसहपाठेन यावत्संपातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्त इति स्वर्गेण गतागतस्यापि सहपाठाच्चेति फलसहपाठोऽप्युपलक्षणीय इत्युक्तं भवति । चरणश्रुतेः सविषयत्वं प्रतिपादयता तदुपलक्षणार्थेत्यनेन सूचितम् । भ्रमत्वकल्पकं निर्विषयत्वरूपं बाधकमाह– **चरणश्रुतेरिति** ॥ 'नान्यः पन्था' इति न्यायविवरणांशनिरसनीयमाह– **कर्मणा पुनरावृत्तिशून्यस्वर्गसिद्धेरिति** ॥

चरणशब्दस्याचारमात्रार्थत्वरूपमुख्यार्थानुपपत्तिप्रदर्शनपरत्वेन 'नान्यः पन्थाः' इत्यादिवचनादेवेति न्यायविवरणं योजयति– **नान्यः पन्था इतीत्यादिना** ॥ गतागतशून्यफलस्य कर्मसाध्यताया निषिद्धत्वादिति । कर्मणो गतागतफलकत्वाभावे विहितस्य निष्फलत्वायोगात् परिशेषेण गतागतशून्यफलकत्वाभावे विहितस्य निष्फलत्वायोगात् परिशेषेण गतागतशून्यफलकत्वमेव सिद्ध्यतीत्यभिप्रेत्यैवमुक्तमिति । नन्वनया श्रुत्या कर्मणो गतागतशून्यफल कत्वाभावसिद्धावपि गतागतफलकत्वं कुत इत्यतो न्यायविवरणगतादिपदोपात्ते श्रुतिस्मृती आह– **इष्टापूर्तमिति** ॥ तस्या उदाहृतश्रुतिविरोधेनेति । यज्ञाद्युपलक्षणार्थेति भाष्यव्याख्यानपरेणानेनोभयोरपि चरणशब्देनैवोक्तेर्योग्यत्वादिति न्यायविवरणमप्युक्ततात्पर्यकं भवति । 'तदपेक्षत्वात्' इत्युत्तरसूत्रांशानुसारेणाजहल्लक्षणयेत्युक्तम्– **एतेनेति** ॥ 'नान्यः पन्थाः' इत्यादिश्रुतिस्मृत्यनुसारेण चरणशब्दस्य कर्मोपलक्षकतया 'रमणीयचरणा' इति श्रुतेः कर्मणो गतागतफलकत्वप्रतिपादकतया सविषयत्वप्रतिपादनेन निर्विषयत्वाभावादेतत् श्रुत्यवष्टम्भेन 'अथ य इमे' इत्युपक्रमवाक्यस्य 'तत्रापि

(भावबोधः)

गतागतस्य चरणफलकत्वेनाङ्गीकारात्' इत्यादिना यदर्थान्तरमुक्तं तदपि निरस्तमिति भावः ॥ **अथ ये यज्ञेनेति** ॥ यद्यप्यत्र 'नान्यः पन्थाः' 'इष्टापूर्ते' 'त्रैविद्या माम्' इत्यादिश्रुति-स्मृतिविरुद्धं चेत्यपि वक्तुं शक्यम्; तथापि 'अथ ये यज्ञेन' इत्यादिश्रुतेः 'अथ य इमे ग्रामा इष्टापूर्ते दत्तं इत्युपासते' इति श्रुत्या शब्दतोऽपि समाख्यात्वलक्षणविशेषोऽस्तीति ज्ञापयितुं तद्विरोध एव दर्शितः । अत एव न्यायविवरणगतादिपदोपात्तत्वाविशेषेऽपि अस्या व्यवधानेनात्रो-दाहरणमिति ज्ञातव्यम् ।

## भावदीपः

प्राप्तिसाधनेत्युक्तार्थम् । **वैराग्यार्थं** कर्मादौ वैराग्यार्थमित्यर्थः । **गतागतस्य** गमनागमनस्येति समाहारद्वन्द्वः ॥ **कर्मफलत्वेति** ॥ एतेनागमनादावतिक्लेशयुतत्वेन स्वर्गे कर्मणि च विरक्तेन भाव्यमित्ययुक्तम् । गत्यादेश्चरणफलत्वेन तन्मात्रवैराग्येण गत्यागत्योरभावे पुनरागमनहीनस्वर्गफले तद्धेतुकर्मणि च वैराग्यहेत्वभावादिति शङ्कनादनन्तरसङ्गतिरिति सूचितम् ॥ **प्रकृतमिति** ॥ यथैतमायातीत्यनेन प्रकृतमित्यर्थः ॥ **तन्निमित्तेति** ॥ तदिति गतागतपरामर्शः । गतागत-निमित्तानिमित्तयोः यथाक्रमं कर्मचरणयोर्द्वयोरपि गतागतरूपकार्येण सहभावस्य अथ य इमे ग्रामा इति श्रुतौ च दर्शनमित्यर्थः । तथा च चरणाफलस्यापि चरणेन सहोक्तिवत् कर्मसहोक्त्युपपत्त्या विशेषादर्शनात्सन्देह इति भावः । यद्वा तन्निमित्तानिमित्तयोः गतागतनिमित्तानिमित्तयोः । 'अथ य इमे ग्रामाः' इति श्रुतौ वक्ष्यमाणदिशा इष्टापूर्तादिशब्दोपशब्दाभ्यामुक्त्या तयोरुभयोरपि श्रुतौ सहभावदर्शनमित्यर्थः । तथा च दण्डपटाभ्यां घट इत्युक्ते अनिमित्तपटसहभावेन दण्डस्य घटं प्रति निमित्तत्वसन्देहवत् तस्मिन् यावत्संपातमिति चरमवाक्यश्रुतगतागतं प्रत्यनिमित्तचरणसहभावदर्शने-नेष्टापूर्तादिकर्मणोऽपि विशेषादर्शनदशायां भवति निमित्तानिमित्तत्वसन्देह इति गतागतं कर्मफलं न वेति सन्देहो युक्त इति भावः । सूत्रे चरणशब्दोऽस्यैव चोपपत्तेरूष्मेत्यादावूष्मादिशब्दवच्चरण-श्रुतिपरश्चरणपरश्च गतागतमिति प्रकृतस्यान्वय इति भावेन भाष्यस्थहेतुप्रतिज्ञे व्युत्क्रमेण व्याचष्टे ॥ **न यज्ञादीति** ॥ न यज्ञादिकृत इत्युक्तिलब्धोऽर्थोऽयम् ॥ **इति श्रुतेरिति** ॥ छान्दोग्ये पञ्चमे श्रवणादित्यर्थः । भाष्ये स्मृत्युक्तेरुपयोगं शङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ स्मृत्युक्ति-रूपलक्षणमिति भावेनाह ॥ **स यथेति** ॥ करणचरणयोरेकत्वे श्रुतौ पुनरुक्तिः स्यादिति भावः ।

(भावदीपः)

भेददार्ढ्यार्थं श्रुतेरप्युक्तिः । अथ य इति **स्पष्टकर्मफलत्वश्रुतिविरोधाद्यथाश्रुतसूत्रभाष्याभ्यां** पूर्वपक्षानुदयमाशङ्क्य 'अथ य' इति श्रुतेरिष्टापूर्ते दत्तमित्युपासत इत्युपशब्देनेष्टादिभिराचारस्य सहभावापाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद्वदन्तीत्यन्यत्रोक्तान्यथानयनप्रकारं व्यनक्ति ॥ **अथापीत्यादिना** ॥ करणचरणयोर्भेदेऽपीत्यर्थः । **ग्रामा** इति ग्रामस्थाः । **इष्टं** यागः । **पूर्तं** तटाकादि । 'अन्येभ्योऽपि दृश्यत' इति दीर्घः । **दत्तं** दानम् ॥ **इत्युपक्रम्येति** ॥ छान्दोग्ये पञ्चमे । **तस्मिन्** चन्द्रलोके । आकाशाच्चन्द्रमसमिति तस्य पूर्वत्र प्रकृतत्वात् ॥ **गतागतस्येति** ॥ धूममभिसम्भवतीति गमनस्य पुनरावर्तत इत्यागमनस्य च प्रतीतेरिति भावः ॥ **समीपवर्तीति** ॥ **सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः** सङ्ख्येय इत्यत्रोपशब्दस्य समीपसमीपिरूपद्व्यर्थत्वस्य मञ्जर्यादावुक्तेः । भाष्ये यथासूत्रं चरणफलमेव गमनागमनमिति वाच्ये सौत्रपदस्योपलक्षणत्वमुपेत्य इति श्रुतेरित्युक्तिः अन्यत्रोक्तकर्मफलत्वश्रुतेरन्यथानयनस्य निर्बीजत्वशङ्काव्युदासार्थेति भावेन भाष्यभावार्थमाह ॥ **न चेत्यादिना** ॥ **विषयान्तराभावेनेति** ॥ एतेन 'इष्टापूर्तम् मन्यमाना' इत्यादिवाक्यमपि कथञ्चिदन्यथा योज्यमिति वा तदज्ञानेन वा पूर्वपक्ष इति सूचितम् ॥ **अत इति** ॥ गतागतस्य चरणफलत्वश्रवणात्कर्मफलत्वाश्रवणाच्चेत्यर्थः ॥ **पुनरावृत्तिशून्येति** ॥ चरणवैराग्यमात्रेण तत्फलरूपगतागतस्याभावे कर्मणा सिद्ध्यन् स्वर्गः पुनरावृत्तिशून्य एव सिद्ध इति भावः । भाष्ये नेति नञः न यज्ञादिकृत इति पूर्वभाष्यलब्धार्थेनान्वयमाह ॥ **न गतागतस्येति** ॥ ननु सूत्रभाष्ययोश्चरणश्रुतेरमुख्यार्थत्वोक्तिरयुक्ता । निर्निमित्तं मुख्यार्थत्यागायोगादित्यतः 'सङ्गम्यन्ते गुरोर्गिर' इति स्वप्रतिज्ञामनुरुध्य 'नान्यः पन्थाः' इत्यादिवचनादेवोभयोरपि चरणशब्देनोक्तेर्योग्यत्वादित्यन्यत्रोक्तं वचनादेवेति हेतुं न गतागतस्येत्याद्युक्तसाध्येनान्विततया लक्षणाबीजतया च व्यनक्ति ॥ **नान्यः पन्था इति** ॥ तावता गतागतस्य कर्मफलत्वाप्राप्तिरित्यन्यत्रोक्तादिपदोपात्तश्रुत्यादिना तदाह ॥ **इष्टापूर्तमिति** ॥ 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' इत्याथर्वणश्रुत्येत्यर्थः । न्यायविवरणे श्रुतेरित्यनुक्त्वा वचनादित्युक्त्या स्मृतिरप्यभिमतेति भावेनाह ॥ **त्रैविद्येति** ॥ 'त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्त' इति गीतास्मृत्येत्यर्थः । एवमन्यत एव गतागतस्य कर्मफलत्वसिद्धौ चरणश्रुतेरुपलक्षणत्वं किमर्थं वाच्यमित्यतो विरोधनिरासाय न तु कर्मफलत्वसिद्ध्यर्थमिति भावेन सूत्रभाष्ययोः श्रुतिविरोधनिरासकतयाऽर्थमाह ॥ **न चेत्यादिना** ॥

(भावदीपः)
उभयोरपि चरणशब्देनोक्तेरित्यन्यत्रोक्तोभयशब्दानुरोधेनार्थमाह ॥ **अजहल्लक्षणयेति** ॥ पूर्वत्र श्रद्धाश्रुतेरिवेति भावः । एतेनोक्तेरजहल्लक्षणया प्रतिपादनस्य योग्यत्वादुपपत्तेरुपपन्नत्वादित्यर्थ उक्तो भवति ॥ **यज्ञादीति** ॥ रमणीयश्रुतेर्यज्ञादिपुण्यार्थत्वस्य कपूयश्रुतेः पापार्थत्वस्य चोपपत्तेरित्यर्थः ॥ **एतेनेति** ॥ चरणश्रुतेर्यज्ञादिपरतया सावकाशत्वकथनेनेत्यर्थः ॥ **आदिवाक्यस्येति** ॥ 'अथ य इमे ग्रामाः' इत्यादिवाक्यस्येत्यर्थः ॥ **अर्थान्तरेति** ॥ चरणपरत्वरूपेत्यर्थः ॥ **इत्यादीति** ॥ बृहदारण्यकेऽष्टमस्थवाक्ये स्पष्टं गतागतस्य कर्मफलत्वोक्तेस्तद्विरुद्धं चार्थान्तरकल्पनं न केवलं कल्पकशून्यमिति चार्थः । एतेन न्यायविवरणस्थादिपदेनैतदपि वाक्यं ग्राह्यमिति सूचितम् । इष्टापूर्तादिवाक्येऽत्रेव धूममभिसम्भवतीत्यादिरूपसामान्योक्त्यभावादियमेव समाख्यात्वेनोक्ता । यद्वाऽऽदिपदेनेष्टापूर्तादिवाक्यमपि ग्राह्यम् ।

## अभिनवचन्द्रिका

**तन्निमित्तानिमित्तयोरिति** ॥ कर्तुस्तावत्कुलालादेः निमित्तेन दण्डादिना अनिमित्तेन रासभादिना सहभावो दृश्यते । प्रकृते च गमनागमनकर्तुर्जीवस्य कर्मादिना सहभावो दृश्यत इति तद्दर्शनं निमित्तत्वात् कर्ता कर्मसहभूतः उताऽवर्जनीयतयेति सन्देहजननद्वारा, गतागतं कर्मफलं न वेति सन्देहबीजमिति भावः ॥ **तद्य इह रमणीयेति** ॥

ननु 'तद्य इह' इति श्रुतिबलात् रमणीयादियोनिप्राप्तेः चरणफलत्वासिद्धावपि न गतागतस्य तत्फलत्वं सिध्यतीति नैतत्प्रत्युदाहरणायुक्तम् । अस्तु वा आगमनस्य चरणफलत्वं तत्फलयोनिप्राप्त्यनुबन्धित्वात् । न तु गमनस्य कर्मफलस्वर्गप्राप्त्यनुबन्धित्वेन योनिप्राप्त्यननुबन्धित्वात् इति चेत्, न । भावानवबोधात् । न ह्यस्माभिः केवलयोर्गमनागमनयोश्चरणफलत्वसाधनाय एतच्छ्रुत्युदाहरणं क्रियते येनोक्तदोषः स्यात्, किं नाम स्वर्गलोकगमनमारभ्य योनिप्राप्त्यन्तस्य सर्वस्यापि चरणफलत्वसाधनाय एतच्छ्रुत्युदाहरणं क्रियते, 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्त' इति श्रुत्या च योनिप्राप्त्यन्तस्य गमनस्वर्गभोग पुनरागमनादे सर्वस्यापि चरणफलत्वप्रतिपादनं क्रियते । गत्यादेः सर्वस्य योनिप्राप्त्यनुबन्धित्वात् । तद्यथा 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इति श्रुतिबलात् पूर्णाहुतिसंज्ञकस्य यागस्य स्तोकं स्तोकं सर्वफलकत्वं, यथा वा 'तरति मृत्युं, तरति पाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उचैनमेव वेद' इति श्रुतिबलात्, अश्वमेधफलत्वेन

(अभिनवचन्द्रिका)

श्रुतमपि मृत्युतरणादिकं साङ्गोपाङ्गाऽश्वमेधज्ञानफलम् । तथा चरणस्यापि स्तोकस्वर्गफलकत्वात् गतिस्वर्गभोगपुनरागमनानां योनिप्राप्त्यनुबन्धित्वम् । अयमत्र विवेकः साङ्गज्योतिष्टोमानुष्ठाने आदौ चरणफलं भवति तच्च स्वर्गं प्रति गमनं, स्वर्गे वासः, पुनरागमनं, योनिप्राप्तिश्चेति । कर्मफलं तु अपुनरावर्तिस्वर्गगमनम्, तत्र निवासश्चेति । चरणफलस्वर्गप्राप्त्यनन्तरभाविनमर्थमाह– **यावत्संपात-मुषित्वेत्यादिनेति** ॥ तत्रापि **गतागतस्येति** ॥ अत्र एवं पूर्वपक्षिमते श्रुतियोजना द्रष्टव्या, अथ येऽधिकारिणः ग्रामे = गृहस्थाश्रमे स्थिताः, इष्टापूर्ते इष्टं यजनं, पूर्तं कूपखननादि, दत्तं दानमिति एतत्त्रयं तन्निकटवर्त्याचरणं चासते अनुतिष्ठन्ति, ते धूममभिसम्भवन्ति ततो रात्र्यादि-द्वारेण नित्याऽनित्यस्वर्गप्राप्तिमन्तो भवन्ति इति ॥ **पुनरावृत्तिशून्यस्वर्गसिद्धेरिति** ॥ चरणफलभोगोत्तरभाव्यपुनरावृत्तिस्वर्गसिद्धेरित्यर्थः । एतेन सङ्गकर्मण एव फलसाधनत्वात् चरणस्य च यज्ञाङ्गत्वात् चरणाभावे कर्मणः स्वर्ग एव न स्यात् । अङ्गविकलत्वात् सति च तस्मिन्पुनरा-वृत्तिः स्यात् साधनसद्भावादित्युभयथापि न कर्मणः सकाशात् अपुनरावृत्तिस्वर्गसिद्धिरिति परास्तम् ।

ननु 'नान्यः पन्था' इत्यादिश्रुतिबलेन निर्णयो युज्यते । निरवकाशचरणश्रुतिविरोधादित्या-शङ्क्य निषेधति– **न चेत्यादिना** ॥ **रमणीयकपूयपदाभ्यामिति** ॥ रमणीयत्वकपूयत्व-विशिष्टाऽधिकारिवाचिभ्यां पदाभ्यां लक्षणया यज्ञादिविशिष्टग्रहणसम्भवादित्यर्थः । न यज्ञादय उपलक्षणत्वेनोपात्तुं शक्यन्ते । अधिकारिणामयज्ञादिकारित्वादित्यत आह– **यज्ञादिकारिणा-मिति** ॥ यज्ञादिकारिणां प्रकृतत्वेन सम्भवात् ये यज्ञादिकारिणो रमणीयाः, कपूयाश्चेति तदुप-लक्षणस्य सम्भवादिति पूर्वेणाऽन्वयः । **तथापीति** ॥ न चरणशब्दस्याऽऽनर्थक्यमिति शेषः । कुतस्तस्य कर्मवाचकत्वमित्यत आह– **यथा खल्विति** ॥ अस्ति तावत्कर्माणि चरणशब्दप्रयोग इति तस्य वृत्तिरङ्गीकर्तव्या चर्यत इति योगेन वाचकत्वसम्भवे लक्षणाऽसम्भवात् वाचकत्वमेवेति भावः । **प्रयोगादिति** ॥ प्रयोगसम्भवादित्यर्थः । प्रयोगासम्भवं सूचयितुं प्रकृतेरेकस्मिन्नर्थे प्रयोगं दर्शयति **प्रयुज्यते हीति** ॥ प्रकृतिद्वयं पर्यायेण प्रयुज्यत इत्यर्थः । अयं भावः धर्मं कुरुतेत्यर्थे 'धर्मं चरत' इति प्रयोगात् धर्मं मा कुरुतेत्यर्थे 'मा चरत' इति प्रयोगात् करोतिचरत्योः पर्यायत्वम् । ततश्च कृतिविषयाणां यज्ञादीनां कर्मव्युत्पन्नकृतशब्दवाच्यत्वमिव 'कृत्य ल्युटो बहुलम्' इति वचनात् कर्मणि व्युत्पन्नचरणशब्दवाच्यत्वमपि सिद्धमेवेति कर्मण्यपि चरणशब्दप्रयोगः सम्भावित

(अभिनवचन्द्रिका)
एवेति । एतेन कुरुतेत्यर्थे चरतेति प्रयोगेण करोतिचरत्योः पर्यायत्वसिद्धावपि चरणशब्दस्य यज्ञादिवाचकत्वाऽसिद्धिरिति परास्तम् ॥ **साधारणश्रुतेरिति** ॥ 'तद्य इह रमणीयचरणा' इति साधारणश्रुतेः साङ्गकर्माभिधायकत्वमभ्युपेयम् । यज्ञाङ्गमात्रपरत्वे बाधकस्योक्तत्वादिति भावः ।

पूर्वपक्षस्तु चरणफलमेव गतागतं न यज्ञादिकर्मणः 'तद्य इह रमणीयचरणा' इति श्रुतेः, चरणस्य च 'स यथाकारी यथाचारी तथा भवतीति श्रुतेः, 'आचार इति संप्रोक्त' इति स्मृतेश्च कर्मणोऽन्यत्वात् । न च 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासत' इति श्रुतेः, गतागतं यज्ञफलमेव न चरणफलमिति वाच्यम् । 'इष्टापूर्ते दत्तमित्युपशब्देन यज्ञसमीपवर्तिवाचिना चरणमभिधाय 'इष्टापूर्ते, इत्यनेन यज्ञं चाभिधाय उभयफलस्य 'ते धूममभिसम्भवन्ति' इत्यादिना द्विविधस्वर्गस्याभिधानात् । अयमत्र विवेकः । एकस्तावत् पुनरावर्तियुक्तः स्वर्गः, अपरस्तु अपुनरावृर्तियुक्तः । तत्र आद्यः चरणफलं, तद्भोगानन्तरं यज्ञफलस्य पुनरावर्तिवर्जितस्य स्वर्गस्य प्राप्तिर्भवति । प्रायश्चित्तेन पापानां संसारापादकानामनन्तकर्मणाम् अपुनरावृत्तिस्वर्गसाधनज्योतिष्टोमादिमहिम्ना विनाशो वा, पण्डता वा, (कार्यजनकता) भवतीति । अतो गतागतस्याऽन्यफलत्वात् कर्मणापुनरावर्तिशून्यस्वर्गसिद्धेर्न तत्र वैराग्यादिना कृत्यमिति ।

सिद्धान्तस्तु न गतागतस्य कर्मफलत्वाभावः 'नान्यः पन्था' इति गतागताशून्यफलस्य कर्मसाध्यताया निषिद्धत्वात् । 'इष्टापूर्ते मन्यमाना' इति श्रुत्या, 'त्रैविद्यामाम्' इति स्मृत्या च गतागतस्य कर्मफलत्वोक्तेश्च । न च 'तद्य इह रमणीयचरण' इति श्रतिविरोधः – तस्या उदाहृतश्रुत्याद्यनुरोधेनाऽजहत्स्वार्थलक्षणया यज्ञाद्यर्थत्वोपपत्तेः । अथ 'यज्ञेन दानेन तपसा लोकान् जनयन्ति' इति विस्पष्टश्रुतेश्च । अपि चैवं कार्ष्णाजिनिराचार्यो मन्यते, ननु 'रमणीयचरणा' इति श्रुतेः लक्षणया यज्ञाद्यर्थत्वमिति न युक्तं, रमणीया इत्यनेनैव यज्ञाद्युपलक्षणसम्भवेन चरण शब्दवैयर्थ्यप्रसङ्गादिति चेत् । अत्र वक्तव्यम् । किं चरणशब्दवैय्यर्थ्यप्रसङ्गात् यज्ञाद्युपलक्षणत्वमेव नेत्युच्यते, आहोस्वित् यज्ञाद्युपलक्षणत्वमङ्गीकृत्य चरणपदकृत्यमात्रं पृच्छसीति । नाद्यः श्रुत्यादिविरोधस्योक्तत्वात् । द्वितीये तु यज्ञादिकारिणां साध्वसाधुचरणाभ्यामेव रमणीयत्वं कपूयत्वं च भवतीति ज्ञापनाय चरणपदमिति ब्रूमः । अथवा पुनरस्तु चरणपदं यज्ञादिवाचकमेव, धर्मं कुरुतेत्यर्थे चरतेति प्रयोगात् करोतिचरत्योः पर्यायत्वेन धर्मशब्दाभिधेये पुण्यसाधने यज्ञादि-

(अभिनवचन्द्रिका)

सर्वकर्मणि, **कर्मणि क्ते** निष्पन्नकृतशब्दाभिधेयत्वस्य सर्वसिद्धत्वेन तत्पर्यायस्य कर्मणि ल्युडन्तस्य चरणशब्दस्याऽपि शक्तेरवर्जनीयत्वात् अपि च एवमेव बादरिराचार्योऽपि मन्यते । अतो गतागतस्य कर्मफलत्वात् क्लेशसाधने तस्मिन्, तत्साध्ये च विरक्तेन भवितव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**कर्मफलत्वसाधनादिति ॥** चरणफलत्वे गतागतिक्लेशस्य कर्मफलस्वर्गस्य क्लेशानुषङ्गाभावान्न स्वर्गाख्ये कर्मफले वैराग्यमावश्यकं स्यादिति पूर्वाक्षेपेण समाधानादनन्तरसङ्गतिरिति भावः । गतागतं यज्ञादिफलं न भवत्युत भवतीति चिन्ता । तदर्थं रमणीयचरणा इत्यत्र श्रुतश्चरणशब्दः कर्मपरो न भवत्युत लक्षणादिना तत्पर इति । तदर्थं लक्षणापक्षे रमणीयपदेनैव तत्सम्भवात् चरणशब्दानर्थक्यमस्ति वा न वेति ॥ **तन्निमित्तेति** ॥ यज्ञादिनिमित्तकस्य ज्योतिर्मयदेहादेः तदनिमित्तकस्य लिङ्गदेहादेः सहभावो दृष्टस्तेन जीवेन सहभूतं गतागतं ज्योतिर्मयदेहादिवत्तन्निमित्तकमुत लिङ्गदेहादिवत्तदनिमित्तकमिति सन्देह इति भावः । यद्वा कर्तुः कुलालादेः घटादिना दण्डतुर्यादिना तदनिमित्तेन रासभादिना सहभावो दृश्यते । प्रकृते च गमनागमनकर्तुर्जीवस्य कर्मादिना सहभावो दृश्यत इति कर्त्रा सहभूतं कर्म निमित्तं वोतावर्जनीयसन्निधिकं वेति सन्देहजननद्वारा गतागतं कर्मफलं न वेति सन्देहबीजमिति भावबोधोक्तार्थः ।

सूत्रे 'यथेतमनेवं च' इति प्रकृतत्वाद्गतागतमित्यस्ति । तथा च गतागतं चरणात्कर्माङ्गभूतादाचाराद्भवति । न तु यज्ञादिकर्मभिर्भवति । कुतः । चरणात् चरणशब्दघटितात् 'रमणीयचरणा रमणीयां योनिमापद्यन्त' इत्यागमादित्यर्थमभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे ॥ **न यज्ञादिकर्मफलमिति** ॥ एतेन न यज्ञादिकृत इति भाष्यस्य यज्ञादिकृतो यज्ञादिकर्तुःफलं नेत्यर्थ उक्तो भवति । ननु रमणीयचरणा इति श्रुत्या योनिप्राप्तेश्चरणफलत्वसिद्धावपि न गतागतस्य तत्फलत्वं सिद्ध्यति । कथञ्चिदागमस्य योनिप्राप्त्यनुबन्धित्वेन चरणफलत्वेऽपि गतस्य कर्मफलस्वर्गप्राप्त्यनुबन्धित्वेन न तस्य चरणफलत्वे इदं प्रमाणमिति चेन्न । इह साधकेषु ये रमणीयचरणास्ते तत्र धूमादिमार्गेण स्वर्गं गत्वा रमणीयां योनिमापद्यन्त इति श्रुत्यर्थस्य विवक्षितत्वेन प्रकृतोपयोगात् । न चैवं स्वर्गस्यापि चरणफलत्वे कर्मफलवैय्यर्थ्यमिति वाच्यम् । अङ्गभूतेन चरणेन गतागतयोनिप्रवेशा भवन्ति, कर्मणा तु स्वर्गभोग इत्युपपत्तेरिति भावः । सुकृतदुष्कृत एवेति तु

(वाक्यार्थमुक्तावली)

बादरिरिति सूत्रनिवर्तनीयमाशङ्क्य निषेधति ॥ **न चेति** ॥ चरणत्वाच्चरणशब्दवाच्यत्वात् ॥ **शून्यमिति** ॥ चरणफलमेव गमनागमनं न यज्ञादिकृत इत्यर्थोपपादकं वचनं शून्यं नास्तीति न वाच्यमित्यर्थः । कुतो न वाच्यमित्यतश्चरणात् चरणस्य कर्माङ्गत्वप्रतिपादकचरणशब्दघटितस्मृतेः श्रुतेश्चेति भावेन प्रवृत्तं 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः' इति भाष्यमुपलक्षणं मत्वा व्याचष्टे ॥ **स यथाकारीत्यादिना** ॥ चरणमेव यज्ञादिसमीपवर्तीति 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः' इति तदङ्गत्वस्मरणादिति भावः । अथ य इम इत्यत्रोपशब्देन चरण-ग्रहणेऽपि यावत्सम्पातमुषित्वेत्युक्तस्वर्गवासस्य यथा कर्मफलत्वं प्रतीयते तथा धूम इत्याद्युक्त-गतागतस्यापि । तथा हि । अथ ये अधिकारिणो **ग्रामे** गृहस्थाश्रमे स्थित्वा **इष्टं** यजनं, **पूर्तं** कूपारामादि, **दत्तं** दानमित्येतत्त्रयं उप तन्निकटवर्त्याचरणं चासते अनुतिष्ठन्ति ते इमे धूममभि-सम्भवन्ति प्राप्नुवन्ति । ततो रात्र्यादिद्वारेण स्वर्गं प्राप्य तस्मिन् यावत्सम्पातमुषित्वा अथैत-मेवाध्वानं पुनरावर्तन्ते इति योजनायां स्वर्गस्य साङ्गकर्मसाध्यत्ववद्गतागतस्यापि साङ्गकर्मसाध्यत्व-प्रतीतेरित्याशङ्कापरिहाराय सहभाव इत्युक्तन्यायं विशदयति ॥ **तत्र येयमिति** ॥ एतच्चरण-फलमेतत्कर्मफलमिति विवेचनसामर्थ्याभावाद्भ्रान्तिरेवाज्ञानां ज्ञायते इति भावः ॥ **कुत एवमिति** ॥ कुतो बाधकाद्भ्रान्तित्वं कल्प्यत इत्यर्थः ।

आनर्थक्यमिति चेदिति सूत्रपूर्वपक्षानुसारेण भ्रमत्वकल्पकं बाधकमाह ॥ **चरणत्वश्रुतेरिति** ॥ **पुनरावृत्तिशून्येति** ॥ चरणस्यैव पुनरावृत्तित्वेन पुनरावृत्त्यहेतुना स्वर्गार्थं विहितेन कर्मणा पुनरावृत्तिशून्यस्वर्गसिद्धेरित्यर्थः ॥ **नेति** ॥ नञ्निषेध्यमाह ॥ **न गतागतस्येति** ॥ किन्तु तच्छून्यफलस्यैव कर्मसाध्यत्वं गतागतं तु चरणसाध्यमिति न वाच्यमित्यर्थः । कुतो न वाच्य-मित्यतो नान्यःपन्था इत्यादिवचनादिति न्यायविवरणानुसारेण हेतुमध्याहरति । 'नान्यः पन्थाः' इति श्रुत्या गतागतशून्यफलस्येति । मोक्षे गमनसद्भावेऽपि विशिष्टाभावादियमुक्तिः । इष्टापूर्तमिति श्रुतौ इष्टापूर्तादिकारिणां धूमादिमार्गेण सुकृतप्राप्ये स्वर्गे भोगं विधाय इमं लोकमाविशन्ती-त्यागमनस्य श्रवणात् । स्मृतौ सोमपानां धूमादिमार्गेण सुरेन्द्रलोकप्राप्तिं विधाय 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति पुण्यभोगावसानकाले पुनरागमनस्मरणादिति भावः । नेत्यंशं चरण-श्रुतिविरोधश्च नेत्यर्थतयापि व्याचष्टे । न चेति । कुतो नेत्यतश्चरणश्रुतेरुदाहृतश्रुतिविरोधेन मुख्यार्थे योग्यताविरहात् लाक्षणिकार्थस्योदाहृतश्रुतिविरोधेन योग्यतावत्वात् । यथायोग्यमेवार्थः श्रुतेरिति

(वाक्यार्थमुक्तावली)

योग्यतेत्युक्तन्यायसूचकं यज्ञाद्युपलक्षणार्थेति भाष्यं व्याचष्टे ॥ **तस्या इति** ॥ एतेन चरणादिति प्रकृतचरणश्रुतिस्तदुपलक्षणार्था तस्येष्टादिकारिणामिति प्रकृतयज्ञादेरुपलक्षणयोपपादनार्थेति कार्ष्णाजिनिरित्यर्थ उक्तो भवति ॥ **अजहल्लक्षणयेति** ॥ साङ्गकर्मण एव फलावश्यंभावाच्चरण-रूपाङ्गस्यापि अन्वये समर्पणीयत्वादिति भावः ॥ **आदिवाक्यस्येति** ॥ 'अथ य इमे ग्रामा' इत्युपक्रमवाक्ये गतागतस्य कर्मफलत्वप्रतीतेर्भ्रान्तित्वेन तमर्थं विहाय तस्मिन्यावत्सम्पातमुषित्वेत्ये-तत्करणफलं एतमेवाध्वानमित्येतच्चरणफलमित्यर्थान्तरकल्पनमित्यर्थः । एतेन यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति भाष्ये आदिपदेनोपात्ता 'अथ य इमे ग्रामा' इत्युपक्रमश्रुतिर्यज्ञाद्यर्था यज्ञादेरेव गतागतसाधनत्वार्थेति व्याख्यातं भवति । एतेन सूत्रे तदुपलक्षणेत्येतवता पूर्तेरर्थपदवैय्यर्थ्यमिति निरस्तम् । चरणश्रुतेरुपक्रमस्था अथ य इम इति श्रुतिरपि तदर्था यज्ञार्थेति विजिज्ञापयिषितत्वात् । अन्यथा भाष्यस्थादिपदवैय्यर्थ्यात् ।

## तत्त्वसुबोधिनी

**प्रकृतं गतागतमिति** ॥ तथा च यथेतमनेवं चेत्युक्तगतागतस्य कर्मफलत्वसमर्थनादनन्तर-सङ्गतिरिति भावः ॥ **तन्निमित्तानिमित्तयोरिति** ॥ न केवलमेकस्य निमित्तस्यैवेत्यपेरर्थः । एकस्मिन् देशे काले च पटादिना कार्येण तन्निमित्तानिमित्तयोस्तन्त्वादिरासभादिकयोः सहभाव-दर्शनमित्यर्थः । ननु करणचरणयोरैक्यात् गतागतं न यज्ञादिकर्मफलं किन्तु चरणफलमेवेति वचनमयुक्तमित्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ कथमुपशब्दस्य चरणवाचकत्वमित्यत आह ॥ **स हीति** ॥ तर्हि गतागतयोः कर्मफलत्वप्रतीतेः का गतिरित्यत आह ॥ **तत्र येयमिति** ॥ **न चेति** ॥ इष्टापूर्ते दत्तमित्युपासत इति श्रुतिस्थोपशब्दस्य चरणवाचकत्वपरिकल्पनादिकं कुत इत्यर्थः । **गतागतशून्यफलस्येति** ॥ मोक्षरूपस्येत्यर्थः । कर्मणो गतागतफलत्वाभावे हि विहितस्य निष्फलत्वायोगात् गतागतशून्यफलस्य च कर्मसाध्यत्वाभावात् परिशेषेण गतागतफलकत्वमेव सिद्ध्यतीति भावः । नन्वनया श्रुत्या कर्मणो गतागतशून्यफलकत्वाभावसिद्धावपि गतागतफलकत्वं कुत इत्यतस्तत्र श्रुतिस्मृती आह ॥ **इष्टापूर्तमिति** ॥ **उदाहृतश्रुत्याद्यनुरोधेनेति** ॥ तदपेक्षत्वा-दित्युत्तरसूत्रांशानुसारेणाजहल्लक्षणयेत्युक्तम् ॥ **एतेनेति** ॥ 'नान्यः पन्थाः' इत्यादिश्रुत्यनुसारेण चरणशब्दस्य कर्मोपलक्षकतया रमणीयचरणा इति श्रुतेः कर्मणो गतागतफलकत्वप्रतिपादकतया

(तत्त्वसुबोधिनी)

सविषयत्वप्रतिपादनेन निर्विषयत्वाद्यभावात् एतत् श्रुत्यवष्टम्बेन 'अथ य इमे ग्रामा' इत्युपक्रमवाक्यस्य गतागतस्य चरणफलत्वेनाङ्गीकारादित्यादिना यदर्थान्तरमुक्तं तदपि निरस्तमित्यर्थः । गतागतस्य कर्मफलत्वानङ्गीकारे समाख्याविरोधं चाह ॥ **अथ ये यज्ञेनेति** ॥ यद्यप्यत्र नान्यः पन्था, इष्टापूर्तं, त्रैविद्या मां इत्यादिश्रुतिस्मृतिविरुद्धं चेत्यपि वक्तुं शक्यम् । तथापि अथ ये यज्ञेनेत्यादिश्रुतेः अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासत इति श्रुत्या शब्दतोऽपि समाख्यात्वलक्षणविशेषोऽस्तीति ज्ञापयितुं तद्विरोध एव दर्शितः ।

## वाक्यार्थविवरणम्

गतागतस्येति भावे क्तः । गमनसहितागमनस्येति व्याख्येयम् । तेनैकवचनोपपत्तिः ॥ **तन्निमित्तेत्यादि** ॥ एकस्मिन्नेव देशे काले च पटादिना कार्येण तन्निमित्तानिमित्तयोस्तन्त्वादिरासभयोः सहभावदर्शनात् गतागतरूपकार्येण तन्निमित्तानिमित्तयोः कर्मणोः सहभावाद्यज्ञादिकं तन्निमित्तं न वेति सन्देहो भवतीति यावत् ॥ **तद्य इहेति** ॥ **इह** लोके ये रमणीयाचारवन्तस्ते धूमादिमार्गेण चन्द्रलोके स्वर्गे भोगान् भुक्त्वाऽनन्तरं यथेतमाकाशमित्युक्तमार्गेण रमणीयां योनिमापद्यन्त इति हि श्रुत्यर्थः । तथा चात्र गतागतस्य चरणफलत्वे इयं श्रुतिः प्रमाणमिति ध्येयम् । भाष्ये यज्ञादिकृत इति लिङ्गव्यत्यासेन यज्ञादिकृतमिति योज्यमित्याहुः । यद्वा यज्ञादिकृत इति षष्ठी । तथा च यज्ञादिकृतो यत् गमनागमनं तत् चरणफलमेव । यज्ञादिकर्मफलं नेत्यर्थः । चरणफलमेव गमनागमनं न यज्ञादिकृत इत्यभिधानं वचनं शून्यं व्यर्थम् । कुत इत्यतश्चरणफलत्वोक्त्या यज्ञादिकर्मफलत्वेऽस्यैव प्राप्तेरित्याशयेनोक्तम् यज्ञादिकर्मण एव चरणत्वादिति ॥ **यथाकारी** ॥ यथा कर्मकर्ता ॥ **यथाचारी** ॥ **यथा आचारवान्** ॥ **तथा भवतीति** ॥ तदनुसारेण फलवान् भवतीत्यर्थः ॥ **इत्युपक्रम्येति** ॥ 'ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति । मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रलोकम्' इत्युपक्रम्येत्यर्थः ॥ **तस्मिन्** ॥ चन्द्रलोकपदोक्ते स्वर्गे पतनपर्यन्तं सम्यगुषित्वेत्यर्थः । पुनरावर्तन्त इत्यनन्तरं यथेतमाकाशमाकाशाद्वायुमित्यादिवाक्यमस्ति । तथा च भोगापादककर्मावसाने यथेतमित्यादिक्रमेणैतमेवाध्वानं पुनरावर्तन्त इत्यर्थः ॥ **नास्तीति न च** ॥ अस्त्येवेत्यर्थः । न श्रूयत इति चेत् । सत्यम् । तथापि तद्वाचकपदान्तरमस्तीत्याह ॥ **इष्टेति** ॥

(वाक्यार्थविवरणम्)

**तदिति** ॥ चरणेत्यर्थः । उपशब्दस्य कथं चरणवाचकत्वमित्यतस्तदुपपादयति ॥ **सं हीति** ॥ उपशब्द इत्यर्थः । समीपवर्ति यद्वस्तु तद्वक्तीत्यर्थः ॥ **यज्ञादिसमीपेति** ॥ अङ्गतयेति शेषः । नन्वथ ये ग्रामा इष्टा पूर्ते इति शब्दात् स्पष्टं गतागतस्येष्टादिकर्मफलत्वप्रतीतेः कुत इत्थं योज्यत इति चेत्तत्राह ॥ **तत्रेति** ॥ **सहैवोक्त्वेति** ॥ इष्टादिशब्देन करणम् उपशब्देन च चरणम् 'इष्टापूर्ते दत्तमित्युपासत' इति वाक्येन सहैवोक्त्वेत्यर्थः ॥ **स्वर्गगतागतयोश्चेति** ॥ इष्टादिकर्मफलस्य स्वर्गस्य उपशब्दोक्तचरणफलस्य गतागतस्य च 'ते धूममभिसम्भवन्ति' इत्यादि तस्मिन् 'यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्त' इति सहोक्तीत्यर्थः । तथा च गतागतस्य स्वर्गवत् कर्मफलत्वप्रतीतिः स्वर्गगतागतरूपफलसाधनयोः कर्माचारयोः सहैवोक्तिनिमित्ता तत्फलयोश्च सहोक्तिनिमित्ता भ्रान्तिरेव । न प्रमेति भावः । इष्टापूर्तादि ये आसत आस्थिताः कुर्वन्ति ते चन्द्रलोकमाप्नुवन्ति । ये उप आसते चरणमास्थिताश्चरणवन्त इति यावत् । ते धूममभिसम्भवन्तीत्यादि धूमादिमार्गेण गमनागमनवन्तो भवन्तीति पूर्वपक्षिमते श्रुत्यर्थः ॥ **अन्येति** ॥ आचारेत्यर्थः । कर्मणा चेत्युक्तं दूषयति ॥ **नान्यःपन्था इतीति** ॥ **श्रुत्येति** ॥ इष्टापूर्त्तादिकं वरिष्ठं मन्यमाना धूमादिमार्गेण नाकपृष्ठं प्राप्य भोगमनुभूय यथेतमाकाशमित्युक्तमार्गेणेमं लोकं हीनतरं वा विशन्तीति श्रुत्यर्थः ॥ **स्मृत्या चेति** ॥ यज्ञैरिष्ट्वा धूमादिमार्गेण सुरेन्द्रलोकमासाद्य दिव्यभोगान् भुक्त्वा क्षीणे पुण्ये यथेतमाकाशमिति क्रमेण मर्त्यलोकं विशन्तीति स्मृत्यर्थः ॥ **उदाहृतेति** ॥ इष्टापूर्तं त्रैविद्या इत्युदाहृतश्रुतिस्मृतीत्यर्थः ॥ **अजहल्लक्षणयेति** ॥ तथा च 'तद्य इह रमणीयचरणा' रमणीयाचारपूर्वकयज्ञादिमन्तः ॥ **कपूयचरणाः** ॥ निषिद्धवाची कपूयशब्दः । निषिद्धाचारपूर्वकयज्ञादिमन्त इत्यर्थः ॥ **एतेनेति** ॥ रमणीयचरणा इत्यस्याः श्रुतेरजहल्लक्षणया यज्ञाद्यर्थत्वेनेत्यर्थः ॥ **एतच्छ्रुतीति** ॥ 'तद्य इह रमणीयचरणा इति श्रुतीत्यर्थः ॥ **आदिवाक्यस्य** ॥ अथ ये ग्रामा इत्युपक्रमवाक्यस्य ॥ **अर्थान्तरेति** ॥ **मैवम्** ॥ तत्रापीत्युक्तरीत्येत्यर्थः ॥ **जयन्ति** ॥ प्राप्नुवन्ति । भाष्ये यज्ञादीत्यत्रादिपदेन पूर्तदत्तपरिग्रहः ।

## वाक्यार्थमञ्जरी

**गतागतस्येति** ॥ **गतं** गमनम् **आगतम्** आगमनं तयोरित्यर्थः । भावे क्तप्रत्ययः ॥ **तन्निमित्तानिमित्तयोरिति** ॥ एकस्मिन्देशे काले च पटादिकार्येण तन्निमित्तानिमित्तयोः

(वाक्यार्थमञ्जरी)

तन्तुरासभयोः सहभावदर्शनादित्यर्थः । तथा च तद्वदेवात्र यज्ञादेर्गतागतनिमित्तत्वसंशयेन गतागतस्य तज्जन्यत्वसंशय इति भावः ॥ **ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ** ॥ 'रमणीयचरणा' इति श्रुतेः गतागतं चरणादाचारादेव भवति, न कर्मणेति चेन्न यतश्चरणश्रुतिस्तदुपलक्षणार्था तस्य कर्मणोपलक्षणया वृत्त्योपादानार्थेत इत्यर्थः ॥ **तद्य इहेति** ॥ **तत्** तत्र कर्मिषु ये **रमणीयचरणाः** साध्वाचारवन्तः **त इह** भूमौ **रमणीयां** साध्वीं ब्राह्मणादि-योनिम् आपद्यन्ते प्राप्नुवन्ति । ये **कपूयचरणाः** असाध्वाचारवन्तः ते **कपूयाम्** असाध्वीं शूद्रादि-योनिमापद्यन्त इत्यर्थः । कृतकर्मणोरित्यभिधानम् । शून्यं प्रयोजनविकलम् । कारी कर्मकर्ता **आचारी** आचारवान् तथा तदनुसारिफलभाक् ॥ **अथेति** ॥ **य इमे ग्रामाः** काम्यकर्मिणां समुदायः **इष्टं** यजनं **पूर्तं** तटाकबन्धनादि **दत्तं** धनादिदानं इति शब्दःप्रभृत्यर्थः । **उपासते** आतिष्ठन्ते । **ते धूमं** धूमादिदेवतालोकं **अभिसम्भवन्ति** प्राप्नुवन्तीत्यर्थः ॥ **तस्मिन्निति** ॥ ते कर्मिणः तस्मिन्निन्द्रलोके यावत्संपातं तस्मादधःपतनं यावद्भवति तत्रावस्थाननिमित्तं पुण्यं यावत्समाप्यत इति यावत् तावत्कालपर्यन्तं तत्रोषित्वा वासं कृत्वा अथ कर्मक्षये तमेव मार्गं पुनरावर्तन्त इत्यर्थः ॥ **न चेति** ॥ नास्तीति न चेत्यर्थः । **करणं** कर्म ॥ **भ्रान्तिरेवेति** ॥ तथा च न तद्विरोध इति भावः । एतत् तत्रापि चरणफलस्य गतागतस्य चरणफलत्वरूपार्थान्तरकल्पनम् । चरणश्रुतेः तद्य इहेत्यस्य सावकाशश्रुतेः इष्टापूर्ते दत्तमित्यस्याः । गतागतशून्यफलं मोक्षः । नन्वनया श्रुत्या कर्मणो गतागतशून्यफलत्वाभावसिद्धावपि गतागतफलत्वं कुत इत्यत आह ॥ **इष्टापूर्तमिति** ॥ तत्रेमं लोकं हीनतरं वा विशन्तीत्युक्तेरिति भावः ॥ **त्रैविद्येति** ॥ **त्रैविद्याः**काम्यकर्मिणः । मां यान्तीत्यर्थः ॥ **अजहदिति** ॥ स्वार्थाचारात्यागलक्षणयेत्यर्थः । **आदिवाक्यस्य** इष्टापूर्ते दत्तमित्युपक्रमवाक्यस्य ॥ **य इति** ॥ ये यज्ञादिकर्मणा लोकान्प्राप्नुवन्ति त आदौ धूममभिसम्भवन्तीत्यर्थः । विरुद्धमर्थान्तरकल्पनमित्यस्ति ।

## सूत्रभाष्यम्

### ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ११ ॥

**तर्हि रमणीयाः कपूया इत्येव स्यात् । चरणशब्दस्यानर्थक्यमिति चेन्न । चरणापेक्ष-त्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ।**

## तत्त्वप्रदीपिका

यदि चरणशब्देन पुण्यपापे एव ह्युपलक्ष्येते तर्हि रमणीयाः कपूया इत्येव श्रुतिः स्यात् । विनाऽपि चरणशब्देन रमणीयशब्देनैव पुण्यवत्त्वप्रतीतेः कपूयशब्देनैव पापित्वप्रतीतेश्चेति चेन्न । स्नानाचमनाद्याचारापेक्षत्वात्सुकृतित्वस्य । अनाचारवतां सुकृतस्यापि दुष्कृततापत्तेः । शौचादि-रहितानां यजनादौ महान्हि दोषः स्मर्यते । अत आचारवत्कृतमेव पुण्यमनाचारकृतमपुण्यमिति ज्ञापनार्थत्वाच्चरणशब्दस्य न वैयर्थ्यम् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **आनर्थक्यमिति** ॥ कथं यज्ञाद्युपलक्षणार्था रमणीयचरणा इत्यादिश्रुतिः । तथात्वे चरणशब्दस्यानर्थक्यप्रसङ्गात् । रमणीयक-पूयपदाभ्यामेव तदुपलक्षणस्य सम्भवात् यज्ञादिकारिणां प्रकृतत्वेन ये यज्ञादिकारिणो रमणीयाः कपूयाश्चेति । न चानर्थक्यं युक्तमिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ किमत्र चरण-शब्दानर्थक्यप्रसङ्गाद्यज्ञाद्युपलक्षणाभावसाधनं उतोपलक्षणपक्षमभ्युपेत्य चरणपदकृत्यविचारः । नाद्यः । तथात्वे श्रुत्यादिविरोधस्योक्तत्वात् । द्वितीये ब्रूमः । सत्यं रमणीयादिपदेन शक्यं यज्ञाद्युपलक्षणम् । तथापि तन्मात्रोक्तौ यज्ञादिकर्तृत्वे समाने कथमेकेषां रमणीयत्वमन्येषां कपूयत्वमिति शङ्का स्यात् । तां निराकर्तुं साध्वसाधुयज्ञादिमत्त्वस्य 'आचार इति सम्प्रोक्तः' इति स्मृतेराचाराद्यपेक्षत्वा-द्रमणीयकपूयचरणाभ्यां यज्ञादिकारिणामपि रमणीयत्वादीति ज्ञापनाय चरणशब्दस्य सार्थक्योपपत्तेः । एवं च सति रमणीयचरणत्वेन ये साधवो यज्ञादिकृत इत्यादिवाक्ययोजना स्यादिति भावः ।

## भावबोधः

**यज्ञादिकारिणां प्रकृतत्वेनेति** ॥ 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते' इत्युपक्रम-वाक्येनेत्यर्थः । अनेनैकप्रकरणप्रतिपाद्यत्वरूपः शक्यसम्बन्ध उक्तो भवति । **श्रुत्यादिविरोध-स्येति** ॥ 'नान्यः पन्थाः' 'त्रैविद्या माम्' इत्यादिश्रुतिस्मृतिविरोधस्येत्यर्थः । **रमणीयकपूय-चरणाभ्यामिति** ॥ अनेन लाक्षणिकपदप्रयोगस्याचारस्य कर्मण्यावश्यकाङ्गत्वज्ञापनं प्रयोजन-मङ्गाङ्गिभावः शक्यसम्बन्ध इत्यपि सूचितं भवति ।

## भावदीपः

उक्तमिति दर्शयन्नेवाक्षेपप्रकारमाह ॥ **कथमित्यादिना** ॥ **तथात्व इति** ॥ उपलक्षणार्थत्व इत्यर्थः । भाष्ये तर्हीत्यस्य चरणेत्यादिनाऽन्वयमुपेत्य प्रसज्येतेति शेष इति भावेन सूत्रभाष्ययोरर्थो दर्शितः । तद्विवरणपरतया रमणीयेत्यादिपूर्वभाष्यमाह ॥ **रमणीयेत्यादिना** ॥ सम्भवादित्युक्तं व्यनक्ति ॥ **यज्ञादीति** ॥ 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासत' इति पूर्ववाक्ये प्रकृतत्वेनेत्यर्थः । इष्टापत्तिं निराह ॥ **न चेति** ॥ ननु कथमानर्थक्यशङ्का चरणशब्दस्याजहल्लक्षणया यज्ञाद्यर्थत्वस्योक्तत्वात् । न हि चरणशब्दाभावेऽयमर्थो लभ्यते । यज्ञादिमात्रलाभात् । अत एव तत्वप्रदीपे केवलयज्ञाद्युपलक्षणत्वमुपेत्यैव यदि चरणशब्देन पुण्यपापे एवोपलक्ष्येते तर्हि रमणीयाः कपूया इत्येव श्रुतिः स्यादित्युक्तमिति चेन्न । इष्टापूर्ते दत्तमित्युपासत इति पूर्ववाक्ये पूर्वोक्तदिशा उपशब्देन चरणस्यापि गृहीततया यज्ञादिकारिणां च प्रकृतत्वेन यज्ञादिलाभवत् चरणस्यापि लाभसम्भवादिति शङ्कितुस्तात्पर्यात् । यद्वा सिद्धान्ते गतागतस्य चरणफलत्वाभावेनाजहल्लक्षणयापि यज्ञाद्युक्तौ चरणपदानर्थक्यमिति भावः । उपलक्षणता न युक्तेति वदन्तं प्रति लक्षणापक्षे पदकृत्योक्तिरयुक्तेत्यतो विकल्पमुखेन सूत्रभाष्ययोरर्थमाह ॥ **किमत्रेति** ॥ **श्रुत्यादीति** ॥ 'अथ ये यज्ञेन' इत्यादिश्रुत्यादीत्यर्थः । आदिपदात् 'त्रैविद्या मामित्यादिस्मृतिर्ग्राह्या । भाष्यभावं व्यनक्ति ॥ **सत्यमित्यादिना** ॥ तथापि चरणपदेन विना यज्ञाद्युपलक्षणसम्भवेऽपीत्यर्थः ॥ **आचाराद्यपेक्षत्वादिति** ॥ शौचाचमनस्नानादिरूपाचारेत्यर्थः ॥ **ज्ञापनायेति** ॥ एतेन लक्षणायां किं प्रयोजनमित्यपि चोद्यं निरस्तम् । गंगायां घोष इत्यत्र पावित्र्यसामीप्यादिद्योतनमिव रमणीयत्वादेर्यज्ञाङ्गाचारकृतत्वद्योतनमेव प्रयोजनमिति सूचनात् । भाष्ये अपेक्षितपूर्त्या उपपत्तेरित्यस्यार्थश्चरणशब्दस्येत्यादि ॥ **एवं च सतीति** ॥ उपलक्षणार्थत्वे सिद्धे सतीत्यर्थः ।

## वाक्यार्थमुक्तावली

अत्र नेत्यस्यावृत्तिः । उपलक्षणार्थेत्यस्यानुवृत्तिः । तथात्वे स्यादिति पदद्वयस्याध्याहार इत्याशयेन व्याचष्टे ॥ **कथमिति** ॥ ननु चरणपदस्याङ्गे शक्तस्याङ्गिनि लक्षणा युक्ता । शक्यसम्बन्धादेः सत्वात् । साधुत्वादिवाचकस्य रमणीयादिपदस्य तदभावात्कथं यज्ञादिलक्षकत्वमित्यत आह ॥ **यज्ञादिकारिणामिति** ॥ 'अथ य इमे ग्रामा' इत्युपक्रमवाक्ये प्रकृतत्वेनेत्यर्थः । रमणीयाः

(वाक्यार्थमुक्तावली)

साधुत्वविशिष्टयज्ञादिकारिणः असाधुत्वविशिष्टयज्ञादिकारिण इति तदुपलक्षणसम्भवादित्यर्थः । इदमुक्तं भवति । तद्य इह रमणीयचरणा इत्यस्य यज्ञादिकारिणां प्रकृतत्वेन तत् तत्र यज्ञादिकारिषु ये रमणीयास्साधवस्ते इह भूलोके रमणीयां योनिमापद्यन्त इति हि वाच्योऽर्थः । न चासावुपपद्यत इति । योनिप्राप्तेः कर्मफलत्वेन साधुत्वादिफलत्वाभावात् । अतोऽनुपपत्तेः साधुत्वाभिधानमुखेन तद्विशिष्टान् पुरुषान् बोधयन् शब्दः साधुत्वविशिष्टं यद्यज्ञादि तदुपलक्षणमुखेन तत्कारिणो बोधयति । सम्बन्धस्तु साधुत्वस्य यज्ञादेश्च एकपुरुषनिष्ठत्वम् । यज्ञादिकारिणामेव रमणीयादिपदेन साधुत्वादिवैशिष्ट्यस्याभिधानादिति ॥ **श्रुत्यादिविरोधस्येति** ॥ इष्टापूर्तं, ये यज्ञेन, त्रैविद्या मामित्यादिश्रुत्यादिविरोधस्य गतागतस्य चरणमात्रसाध्यत्वे उक्तेरित्यर्थः । सूत्रे तदिति व्यस्तं समस्तं च पदम् । तदपेक्षत्वादित्यावर्तते । तथा च चरणशब्दस्य नानर्थक्यम् । कुतः? तस्य यज्ञादेस्तयोः रमणीयत्वकपूयत्वयोः तदपेक्षत्वात् । साध्वसाधुचरणापेक्षत्वात् । तदपेक्षत्वात् रमणीयकपूयचरणाभ्यामेव यज्ञादिकारिणां रमणीयत्वादित्येतज्ज्ञापनलक्षणप्रयोजनमपेक्ष्य लाक्षणिकस्य चरणपदस्य प्रयुक्तत्वादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **द्वितीये ब्रूम इत्यादिना** ॥ **साधवो यज्ञादिकृत इति** ॥ साधुत्वविशिष्टयज्ञादिकृत इत्यर्थः ।

## तत्त्वसुबोधिनी

ननु यज्ञाद्युपलक्षणार्थत्वान्न चरणशब्दानर्थक्यमित्यत आह ॥ **रमणीयेति** ॥ कथं ताभ्यां तदुपलक्षणमत आह ॥ **यज्ञादीति** ॥ 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासत' इत्युपक्रमवाक्येनेत्यर्थः । अनेनैकप्रकरणप्रतिपाद्यत्वरूपः शक्यसम्बन्ध उक्तो भवति । अस्त्वानर्थक्यमित्यत आह ॥ **न चेति** ॥ **श्रुत्यादिविरोधस्येति** ॥ 'नान्यः पन्थाः' 'त्रैविद्या माम्' इत्यादिश्रुतिस्मृतिविरोधस्येत्यर्थः ॥ रमणीयेति ॥ अनेन लाक्षणिकपदप्रयोगस्य आचारस्यावश्यकर्मण्यङ्गत्वज्ञापनं प्रयोजनम्, अङ्गाङ्गिभावः शक्यसम्बन्ध इत्यपि सूचितम् । एवं च सति प्रयोजनमाह ॥ **एवमिति** ॥

## वाक्यार्थविवरणम्

यज्ञादिकारिणां पूर्वमप्रकृतत्वाद्ये यज्ञादिकारिण इत्यनुवादायोग इत्यत उक्तं 'यज्ञादिकारिणामथ ये' इत्यादिवाक्येन प्रकृतत्वेनेति ॥ **न चेति** ॥ तथा चाचारवाच्येव चरणशब्दो न यज्ञाद्युपलक्षक इति भावः । प्रसङ्गादित्यनन्तरं तदन्यथानुपपत्त्येति शेषः ॥ **उपलक्षणपक्षमिति** ॥

(वाक्यार्थविवरणम्)

रमणीयकपूयपदाभ्यामेव यज्ञाद्युपलक्षणपक्षमभ्युपेत्येत्यर्थः ॥ **तथात्व इति** ॥ चरणशब्देन यज्ञादिकमनुपलक्ष्याचारमात्रार्थत्वं गृहीत्वा गतागतस्य तत्फलत्वोक्ताविष्टापूर्ते त्रैविद्या मामित्यादि-श्रुतिस्मृतिविरोधस्येत्यर्थः ॥ **तन्मात्रोक्तौ** ॥ रमणीयाः कपूया इत्येतावन्मात्रोक्तावित्यर्थः ॥ **रमणीयत्वम्** ॥ साधुयज्ञादिमत्त्वम् ॥ **कपूयत्वम्** ॥ असाधुयज्ञादिमत्त्वम् ॥ **आचारेति** ॥ कर्माङ्गभूतेत्यर्थः ॥ **रमणीयंचरणत्वेनेति** ॥ रमणीयाचारत्वेन ये साधवो रमणीययज्ञादिकृतः । कपूयाचारत्वेन येऽसाधवः कपूययज्ञादिमन्त इति वाक्यं योज्यम् ।

## वाक्यार्थमञ्जरी

उपलक्षकत्वे चरणशब्दस्यानर्थक्यं वैयर्थ्यमिति चेन्न रमणीयत्वादेस्तदपेक्षत्वात् । चरण-सामर्थ्येन तदर्थन्तत्सार्थक्यादित्यर्थः । प्रकृतत्वेनेष्टापूर्ते दत्तमित्युपासत इत्यनेनेत्युपलक्षणस्येति सम्बन्धः । उपलक्षणत्वपक्षे रमणीयचरणा इत्यादेर्लब्धयोजनां दर्शयति ॥ **एवं चेति** ॥

## सूत्रभाष्यम्

**ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ १२ ॥**

**'धर्मं चरत माऽधर्मम्' इत्यादिप्रयोगात्सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते । तुशब्दात्स्वसिद्धान्तोऽपि स एवेति सूचयति । 'तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारण' इति च नाममहोदधौ ।**

## तत्त्वप्रदीपिका

चरणशब्दस्यानुष्ठानमात्रेऽपि वृत्तिमत्त्वादाचारादेः सुकृतादावन्तर्भावाच्च सुकृतदुष्कृते एवेत्युक्तम् । स्वसिद्धान्ते तूत्तमविषये सुकृतदुष्कृतयोरपि तु किञ्चिद्विशेषाभिप्रायोऽस्तीति गमनीयम् ।

## तत्त्वप्रकाशिका

प्रकारान्तरेण चरणश्रुतिं व्याकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **सुकृतेति** ॥ न चरण श्रुतिर्यज्ञाद्युप-लक्षणत्वेनैवोक्ताऽविरोधिनी । किं नाम साध्वसाधुतया कृतयज्ञादिकर्मवाचिनी च भवति । यथा खलु चरणशब्दस्य कर्माङ्गे प्रयोगस्तथा कर्मण्यपि प्रयोगात् । प्रयुज्यते हि धर्मं कुरुतेत्यर्थे चरतेति ।

(तत्त्वप्रकाशिका)

**साधारणश्रुतेश्चात्र बाधकवशात्साङ्गकर्मार्थत्वस्यैवोपपत्तेरिति बादरिराचार्यो मन्यत इति भावः । परमतमभिधाय सूत्रकारः स्वमतं कुतो न वक्तीत्यत आह ॥ तुशब्दादिति ॥ तुशब्दस्यैतदर्थाभिधायकत्वं कुत इत्यत आह ॥ तुशब्द इति ॥ अतो गतागतस्य कर्मफलत्वात् क्लेशसाधने तस्मिन् तत्साध्ये च विरक्तेन भाव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

क्लेशसाधने तत्साध्ये चेत्यत्र गतागतक्लेशसाधने बहुवित्तव्ययादिक्लेशसाध्ये च तस्मिन् कर्मणीत्यर्थः ।

## भावबोधः

**यज्ञादिकर्मवाचिनी चेति** ॥ अनेन लक्षणातो वचनवृत्तेर्मुख्यत्वादुत्तरपक्षत्वमस्येत्युक्तं भवति ।

ननु नानार्थचरणशब्दस्यैकार्थपरत्वे चारितार्थ्ये उभयपरत्वं कुतः कल्पनीयमित्यत आह– **साधारणश्रुतेश्चेति** ॥ 'रमणीयचरणा' इत्यत्र चरणशब्दस्य यद्याचारमात्रार्थत्वं तर्हि 'नान्यः पन्थाः' इत्यादिश्रुतिविरोधः । यदि कर्ममात्रत्वं तर्हि यज्ञादिकृतामप्याचाराद्यधीनरमणीयत्वाद्यसिद्धिरिति बाधकवशात् साङ्गकर्मार्थत्वस्य तन्त्रन्यायेनाङ्गाङ्गिरूपोभयपरत्वस्यैवोपपत्तेरित्यर्थः ॥ **तुशब्दादितीति** ॥ अनेन परमतमुक्त्वा स्वमतं वक्तव्यमिति सूचनेनाप्यस्य सूत्रस्योत्तरत्वं सूचितम् । अत्राद्ये 'रमणीय' इत्यादिश्रुत्या गतागतस्य चरणफलत्वमाशङ्क्य चरणशब्दस्य मतान्तरेण कर्मोपलक्षकत्वोक्तिः । अत्रोपलक्षणार्थेत्यस्योपलक्षणमर्थः प्रयोजनं यस्याः सा तयेति विग्रहः । द्वितीये लक्षणायां बाधकोद्धारः । तृतीये मतान्तरेण स्वमतेन श्रौतचरणब्दस्य कर्मणि मुख्यवृत्तिप्रतिपादनमिति सूत्रक्रमः ।

## भावदीपः

सूत्रादावेवकारप्रयोगात् पूर्वोक्तार्थव्यवच्छेदभ्रान्तिं निरस्यन् समुच्चयेनार्थमाह ॥ **न चरणेति** ॥ एवकारस्तु पक्षभेदज्ञापनार्थ इति भावः ॥ **भवतीति** ॥ अतोऽप्यविरोधिनीति योज्यम् । कुतो वान्वित्वमित्यतो धर्ममित्यादिभाष्यं व्याचष्टे ॥ **यथेति** ॥ **प्रयोग इति** ॥ आचार इति स्मृत्यादावित्यर्थः । प्रयोगादुभयवाचकत्वेऽपि अत्र चरणमेवार्थः कुतो नेत्यतः नान्यः पन्था इत्यादि-

(वाक्यार्थविवरणम्)

रमणीयकपूयपदाभ्यामेव यज्ञाद्युपलक्षणपक्षमभ्युपेत्येत्यर्थः ॥ **तथात्व इति** ॥ चरणशब्देन यज्ञादिकमनुपलक्ष्याचारमात्रार्थत्वं गृहीत्वा गतागतस्य तत्फलत्वोक्ताविष्टापूर्ते त्रैविद्या मामित्यादिश्रुतिस्मृतिविरोधस्येत्यर्थः ॥ **तन्मात्रोक्तौ** ॥ रमणीयाः कपूया इत्येतावन्मात्रोक्तावित्यर्थः ॥ **रमणीयत्वम्** ॥ साधुयज्ञादिमत्त्वम् ॥ **कपूयत्वम्** ॥ असाधुयज्ञादिमत्त्वम् ॥ **आचारेति** ॥ कर्माङ्गभूतेत्यर्थः ॥ **रमणीयचरणत्वेनेति** ॥ रमणीयाचारत्वेन ये साधवो रमणीययज्ञादिकृतः । कपूयाचारत्वेन येऽसाधवः कपूययज्ञादिमन्त इति वाक्यं योज्यम् ।

## वाक्यार्थमञ्जरी

उपलक्षकत्वे चरणशब्दस्यानर्थक्यं वैयर्थ्यमिति चेन्न रमणीयत्वादेस्तदपेक्षत्वात् । चरणसामर्थ्येन तदर्थन्तत्सार्थक्यादित्यर्थः । प्रकृतत्वेनेष्टापूर्ते दत्तमित्युपासत इत्यनेनेत्युपलक्षणस्येति सम्बन्धः । उपलक्षणत्वपक्षे रमणीयचरणा इत्यादेर्लब्धयोजनां दर्शयति ॥ **एवं चेति** ॥

## सूत्रभाष्यम्

### ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ १२ ॥

**'धर्मं चरत माऽधर्मम्' इत्यादिप्रयोगात्सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते । तुशब्दात्स्वसिद्धान्तोऽपि स एवेति सूचयति । 'तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारण' इति च नाममहोदधौ ।**

## तत्त्वप्रदीपिका

चरणशब्दस्यानुष्ठानमात्रेऽपि वृत्तिमत्त्वादाचारादेः सुकृतादावन्तर्भावाच्च सुकृतदुष्कृते एवेत्युक्तम् । स्वसिद्धान्ते तूत्तमविषये सुकृतदुष्कृतयोरपि तु किञ्चिद्विशेषाभिप्रायोऽस्तीति गमनीयम् ।

## तत्त्वप्रकाशिका

प्रकारान्तरेण चरणश्रुतिं व्याकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **सुकृतेति** ॥ न चरण श्रुतिर्यज्ञाद्युपलक्षणत्वेनैवोक्ताऽविरोधिनी । किं नाम साध्वसाधुतया कृतयज्ञादिकर्मवाचिनी च भवति । यथा खलु चरणशब्दस्य कर्माङ्गे प्रयोगस्तथा कर्मण्यपि प्रयोगात् । प्रयुज्यते हि धर्मं कुरुतेत्यर्थे चरतेति ।

(तत्त्वप्रकाशिका)

**साधारणश्रुतेश्चात्र बाधकवशात्साङ्गकर्मार्थत्वस्यैवोपपत्तेरिति बादरिराचार्यो मन्यत इति भावः । परमतमभिधाय सूत्रकारः स्वमतं कुतो न वक्तीत्यत आह ॥ तुशब्दादिति ॥ तुशब्दस्यैतदर्थाभिधायकत्वं कुत इत्यत आह ॥ तुशब्द इति ॥ अतो गतागतस्य कर्मफलत्वात् क्लेशसाधने तस्मिन् तत्साध्ये च विरक्तेन भाव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

क्लेशसाधने तत्साध्ये चेत्यत्र गतागतक्लेशसाधने बहुवित्तव्ययादिक्लेशसाध्ये च तस्मिन् कर्मणीत्यर्थः ।

## भावबोधः

**यज्ञादिकर्मवाचिनी चेति** ॥ अनेन लक्षणातो वचनवृत्तेर्मुख्यत्वादुत्तरपक्षत्वमस्येत्युक्तं भवति ।

ननु नानार्थचरणशब्दस्यैकार्थपरत्वे चारितार्थ्ये उभयपरत्वं कुतः कल्पनीयमित्यत आह– **साधारणश्रुतेश्चेति** ॥ 'रमणीयचरणा' इत्यत्र चरणशब्दस्य यद्याचारमात्रार्थत्वं तर्हि 'नान्यः पन्थाः' इत्यादिश्रुतिविरोधः । यदि कर्ममात्रत्वं तर्हि यज्ञादिकृतामप्याचाराद्यधीनरमणीयत्वाद्यसिद्धिरिति बाधकवशात् साङ्गकर्मार्थत्वस्य तन्त्रन्यायेनाङ्गाङ्गिरूपोभयपरत्वस्यैवोपपत्तेरित्यर्थः ॥ **तुशब्दादितीति** ॥ अनेन परमतमुक्त्वा स्वमतं वक्तव्यमिति सूचनेनाप्यस्य सूत्रस्योत्तरत्वं सूचितम् । अत्राद्ये 'रमणीय' इत्यादिश्रुत्या गतागतस्य चरणफलत्वमाशङ्क्य चरणशब्दस्य मतान्तरेण कर्मोपलक्षकत्वोक्तिः । अत्रोपलक्षणार्थेत्यस्योपलक्षणमर्थः प्रयोजनं यस्याः सा तयेति विग्रहः । द्वितीये लक्षणायां बाधकोद्धारः । तृतीये मतान्तरेण स्वमतेन श्रौतचरणब्दस्य कर्मणि मुख्यवृत्तिप्रतिपादनमिति सूत्रक्रमः ।

## भावदीपः

सूत्रादावेवकारप्रयोगात् पूर्वोक्तार्थव्यवच्छेदभ्रान्तिं निरस्यन् समुच्चयेनार्थमाह ॥ **न चरणेति** ॥ एवकारस्तु पक्षभेदज्ञापनार्थ इति भावः ॥ **भवतीति** ॥ अतोऽप्यविरोधिनीति योज्यम् । कुतो वान्वित्वमित्यतो धर्ममित्यादिभाष्यं व्याचष्टे ॥ **यथेति** ॥ **प्रयोग इति** ॥ आचार इति स्मृत्यादावित्यर्थः । प्रयोगादुभयवाचकत्वेऽपि अत्र चरणमेवार्थः कुतो नेत्यतः नान्यः पन्था इत्यादि-

(भावदीपः)

वचनादुभयोरपि चरणशब्देनोक्तेः योग्यत्वादित्यन्यत्रोक्तं वाक्यम् । पूर्वत्रोक्तेर्लक्षणया प्रतिपादनस्य योग्यत्वादुपपत्तेरिति व्याख्यातमपीहोक्तेर्वचनवृत्त्या प्रतिपादनस्य । योग्यत्वादुपपत्तेरित्यर्थमुपेत्य तात्पर्यमाह ॥ **साधारणेति** ॥ चरणकरणयोः साधारणेत्यर्थः ॥ **बाधकेति** ॥ नान्यः पन्था इत्यादिप्रागुक्तश्रुतिस्मृतिरूपबाधकेत्यर्थः ॥ **साङ्गेति** ॥ चरणरूपांगसहितेत्यर्थः । यद्वा केवल-यज्ञादिकर्मणां रमणीयत्वकपूयत्वयोरभावात् अनाचारवतां सुकृतस्यापि दुष्कृतत्वापत्तेरिति तत्वप्रदीपोक्तेराचारानाचाराभ्यां विना रमणीयत्वाद्यनुपपत्तिरूपबाधकवशात्साङ्गकर्मार्थत्वस्योपपत्ते-रित्यर्थः । तत्वप्रदीपे तु आचारादेः सुकृतादावन्तर्भावाच्च सुकृतदुष्कृते एवेत्युक्तमित्युक्तम् । एवं मुख्यार्थत्वपक्षे सम्भवति लक्षणापक्षोपन्यासस्तु रमणीयत्वादेराचारादिकृतत्वद्योतनायेति भावः ॥ **अत इति** ॥ नान्यः पन्था इत्यादिवचनबलाच्चरणश्रुतेः सावकाशत्वेनाविरोधकत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

चरणेत्यनुवर्तते । रमणीयकपूयचरणे सुकृतदुष्कृत एव समीचीनत्वात् । समीचीनधर्मावेव न तु तदङ्गे सदसदाचारे चरणशब्दस्यानुष्ठानमात्रे प्रवृत्तिमत्वात् । आचारादेस्सुकृतादावन्तर्भावात् सुकृतदुष्कृत एवेत्युक्तमिति तत्वप्रदीपदिशा व्याचष्टे ॥ **न चरणश्रुतिरित्यादिना** ॥ **साध्वसाधुतया कृतेति** ॥ तदपेक्षत्वादित्युक्तन्यायेन चरणसाहित्येन साध्वसाधुतया कृतेत्यर्थः ॥ **साङ्गकर्मार्थ-त्वस्येति** ॥ आचारादेः सुकृतादावन्तर्भाव इति भावः । भावबोधे तु तन्त्रन्यायेनाङ्गाङ्गि-रूपेणोभयपरत्वोपपत्तेरित्यर्थ उक्तः ॥ **परमतमिति** ॥ यद्यपि पूर्वमपि स्वमतं तथापि लक्षणामात्रत्वं परमतम् । रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदित्युक्तेरिति भावः । अत्र वृत्तितारतम्येन सूत्रक्रमः । द्वितीयस्याद्याक्षेपसमाधानरूपत्वात्तदानन्तर्यं चेति ।

## तत्त्वसुबोधिनी

**उक्ताविरोधिनी** ॥ गतागतस्य कर्मफलत्वाविरोधिनी । अनेन लक्षणातो वचनवृत्तेर्मुख्यत्वा-दुत्तरपक्षत्वमस्य सूत्रस्येत्युक्तं भवति । ननु नानार्थचरणशब्दस्यैकार्थपरत्वेन चरितार्थत्वादुभयपरत्वं कुतः कल्पनीयमित्यत आह ॥ **साधारणश्रुतेश्चेति** ॥ रमणीयचरणा इत्यत्र चरणशब्दस्य यद्याचारमात्रार्थत्वं तदा नान्यः पन्था इत्यादिश्रुतिविरोधः । तत्र गतागतस्य कर्मफलत्व-प्रतिपादनात् । यदि कर्ममात्रार्थत्वं तर्हि यज्ञादिकृतामप्याचाराद्यधीनरमणीयत्वाद्यसिद्धिरिति

(तत्त्वसुबोधिनी)

बाधकवशात् साङ्गकर्मार्थत्वस्य तन्त्रन्यायेनाङ्गाङ्गिरूपोभयपरत्वस्यैवोपपत्तेरिति भावः ॥ **तुशब्दादितीति** ॥ अनेन परमतमुक्त्वा स्वमतं वक्तव्यमिति सूचनेनाप्यस्य सूत्रस्योत्तरत्वं सूचितम्। अत्राद्ये सूत्रे चरणशब्दस्य कर्मोपलक्षकत्वोक्तिः । अत्रोपलक्षणार्थेत्यस्योपलक्षणमर्थः प्रयोजनं यस्याः सा तथेति विग्रहः । द्वितीये तु लक्षणायां बाधकोद्धारः । तृतीये श्रौतचरणशब्दस्य कर्मणि मुख्यवृत्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**उक्तेति** ॥ गतागतस्य यज्ञादिकर्मफलत्वरूपोक्तप्रमेयेत्यर्थः ॥ **साध्वसाधुतया** ॥ साध्वसाध्वङ्गयुक्ततया । कृतं यज्ञादिकर्म तद्वाचिनीत्यर्थः । ननु कुतश्चरणश्रुतेः साङ्गकर्मार्थवाचित्वमित्यत आह ॥ **साधारणेति** ॥ कर्मतदङ्गभूताचारोभयवाचित्वेन साधारणेत्यर्थः । आचारमात्रार्थत्वे इष्टापूर्तमित्यादिविरोधरूपं, कर्ममात्रार्थत्वे यज्ञादिकारिणामप्याचाराद्यधीनरमणीयत्वाद्यसिद्धिरूपं च बाधकं द्रष्टव्यम् ॥ **क्लेशसाधने तस्मिन्निति** ॥ क्लेशयुक्तगतागतसाधने यज्ञादिकर्मणीत्यर्थः । **तत्साध्ये** स्वर्गादिफले ।

## वाक्यार्थमञ्जरी

रमणीयकपूयचरणे सुकृतदुष्कृते क्रमेण साध्वसाधुकर्मणी एव नाचारानाचाराविति बादरिर्मन्यत इत्यर्थः । ननु नानार्थचरणशब्दस्यैकार्थपरत्वे उभयपरत्वं कुत इत्यत आह ॥ **साधारणश्रुतेश्चेति** ॥ रमणीयचरणा इत्यत्र चरणशब्दस्य यद्याचारमात्रार्थत्वं तदा 'नान्यःपन्था अयनाय विद्यत' इति श्रुतिविरोधः । यदि कर्ममात्रार्थत्वं तर्हि यज्ञादिकृतामप्याचाराधीनरमणीयत्वाद्यसिद्धिरिति बाधकवशात्साङ्गकर्मार्थत्वस्य तन्त्रन्यायेनाङ्गाङ्गिरूपोभयार्थकथनपरत्वस्यैवोपपत्तेरित्यर्थः ।

॥ इति चरणाधिकरणम् ॥ १० ॥

# ११. अनिष्टादिकार्यधिकरणम्

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह —

**॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ १३ ॥**

'तद्य इह शुभकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयाऽऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति' इति भाल्लवेयश्रुतौ ।

## तत्त्वप्रदीपिका

एवं तावदुभयथा पुण्यकर्मगतिरित्यायातं, यत्कामुकैरनुष्ठीयते तत्कर्तॄणां पुनरागतिर्यदन्यानिच्छयेश्वरार्पणबुद्ध्याऽनुष्ठीयते । तेन ज्ञानोत्पत्तिद्वारेण मुख्यममृतत्वं लभ्यत इति । अत्र चोदयति–पुण्यकृतामेव गमनागमने च स्यातां नेतरेषां पापकृताम् । न हि तेषामेतेषामिव फलाभिसन्धिनिबन्धनं कर्म क्रोधादिपारवश्यात्सहसैव भवति । तस्मादबन्धकत्वान्न तेषामागमनमित्यत आह **॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥** ये हीष्टादिकृत्यं न कुर्वन्ति, ये च तद्विरुद्धं पापं कुर्वन्ति, त उभयेऽपि सङ्गृहीता 'अनिष्टादिकारिण' इति । उदाह्रियते हि श्रुतिरुभयेषां नारकित्वे 'तद्य इह शुभाकृतो ये वाऽशुभकृत' इत्यादिका ।

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यायानिष्टादिकारिणां गतागतादिदुःखसमर्थनादस्ति शास्त्रादिसङ्गतिः । अनिष्टादिकारिणां गतागतादिदुःखाभावे न तत्र विरक्तिः स्यात् । अतस्तत्साधनीयम् । प्रकृतगतागतादि विषयः । तत्किमिष्टादिकारिणामेवोत सर्वाज्ञानिनामिति सन्देहः । विशेषोक्तिरज्ञानित्वं च सन्देहबीजम् । पूर्वपक्षयति **॥ पुण्येति ॥** इष्टादिपुण्यकृतामेवाज्ञानां गतागतादि न त्वनिष्टादिकारिणामप्यज्ञानाम् । इष्टादिकारिणां प्रत्यवायभयवत्त्वेन तदुपपत्तेरन्येषां च तदभावात् 'बिभ्यत् पतति पादपात्' इति न्यायात् । फलकामित्वाच्चेष्टादिकारिणां तदुपपत्तिः । अनिष्टादिकारिणां न हि कामोऽस्ति । 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रतिमुच्यन्ति कामाः' इति श्रुतेः । इष्टादिकारिणस्तु स्वयमेवात्मानं विधिप्रतिषेधाभ्यां बध्नन्ति नेतरे । अतः पुण्यकृतामेव गमनागमनादीतरेषां तु तद्रहितो मोक्ष एवेति पुण्ये तत्फले च विरक्त्या भाव्यं नान्यत्रेति भावः ।

(तन्त्रप्रकाशिका)

**सिद्धान्तयत्सूत्रमवतार्य तदुपात्तश्रुतिमेवोदाहरति ॥ अत इति ॥ न केवलमिष्टादिकारिणामेव गतागतं किं नामानिष्टादिकारिणामपि । 'तद्य इह' इति श्रुतौ श्रुतत्वादित्यर्थः । अनिष्टादिकारिण इति तदकारिणस्तद्विरुद्धकारिणश्चोच्यन्ते । चशब्दो दुःखान्तरसमुच्चयार्थः । तदेवोत्तरसूत्रेऽनूद्यते ।**

## गुर्वर्थदीपिका

सर्वाज्ञानिनामित्यत्र सर्वाज्ञानिपदेन पुण्यकृतः पापकृतस्सर्वाज्ञानिनो गृह्यन्ते । न हि कामोऽस्तीत्यत्र कामपदेन स्वर्गकामनोच्यते । अत एव स्वर्गविषयगतागते न स्तः 'बिभ्यत्पतति पादपात्' इति वचनान्न नरकपातोऽपि । अतो मोक्ष एवेति शङ्कितुरभिप्रायः । एतदेवाभिप्रेत्य पूर्वपक्षावसाने तद्रहितो मोक्ष एवेति वक्ष्यति । अनिष्टादिकारिणामित्यत्र इष्टं यागादिकर्म, तदकारिणस्तद्विरुद्धपापकर्मकारिणश्चानिष्टकारिण इत्युच्यन्ते । आदिपदेन मिथ्यादृष्टिहरिद्वेषादिकारिणो गृह्यन्ते । तेषामप्युक्तसूत्रे निरूप्यमाणत्वात् ।

## भावबोधः

**तत्किमिष्टादिकारिणामेवेति** ॥ तथा चेष्टादिकारिणां गतागतोक्तावेव किं तेषामेव गतागतम् उतान्येषामपीति सन्देहोत्पादो नान्यथेति एतदधिकरणविचाराङ्गभूतसंशयोत्थापकत्वेन पूर्वाधिकरणस्यैतदधिकरणोपजीव्यत्वादनन्तरसङ्गतिरिति भावः । अत्र गतागतं किमिष्टादिकारिणामेवोत सर्वाज्ञानिनामिति चिन्ता । तदर्थं प्रत्यवायभयफलकामनादिकं गतागतादिदुःखकारणं भवत्युत न भवतीति । तदर्थमनिष्टादिकारिणां गतागतादिदुःखं प्रामाणिकं न भवत्युत भवतीति । तथा चानिष्टादिकारिणां गतागतादिदुःखस्य प्रामाणिकत्वाभावे भयकामनादेः दुःखकारणत्वविघटकाभावेन तत्कारणत्वसिद्धौ तद्वतामिष्टादिकारिणामेव गतागतमिति पूर्वपक्षे अनिष्टादिकारिणां गतागतदुःखस्य प्रामाणिकत्वे तत्रैव व्यभिचारात् भयकामनादेस्तत्राकारणत्वे तद्रहितानामप्यनिष्टादिकारिणां गतागतादिदुःखमिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ।

**विशेष्योक्तिरिति** ॥ पूर्वाधिकरणे गतागतस्येष्टादिकर्मफलत्वोक्तावपि तत्फलमिष्टादिकारिणामेव भवति न त्वन्येषां तदकारिणामित्यर्थात् सिद्धमेवेत्यादिभाष्योक्तसाध्ये हेतुप्रतिपादकतया भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसार अनिष्टादिकारिणां तदभावान्मुक्तिरिति

(भावबोधः)

न्यायविवरणं योजयति– **इष्टादिकारिणां प्रत्यवायभयवत्त्वेनेति** ॥ फलकामस्य गतागतकारणत्वे श्रुतिमाह– **कामान् य इति** ॥ यद्यपि पूर्वार्धस्यैवात्रोपयोगः 'स एव' इत्यवधारणाध्याहारेण विवक्षितसिद्धेः तथाप्यवधारणव्यावर्त्यत्वं नानिष्टादिकारिणां किंतु पर्याप्तकामत्वकृतात्मकत्वादि-गुणयोगिनामेवेति वस्तुगतिप्रदर्शनार्थं पर्याप्तकामस्येत्युत्तरार्धोदाहरणमिति ज्ञातव्यम् ॥ **इष्टादि-कारिणस्त्विति** ॥ अनेनेष्टादिकारिणां संसार इति न्यायविवरणमुक्ततात्पर्यकं भवति । विधि-प्रतिषेधाभ्यामित्यनेन फलकामादीत्यादिपदार्थकथनम् । इतरेषां त्वित्यनेनानिष्टादिकारिणां मुक्तिरित्येतदुक्ततात्पर्यकं भवति । अत्र 'तदभावात्' इत्ययमंश अन्येषां तदभावादिति अनिष्टादि-कारिणां न हि कामोऽस्तीति नेतर इति च त्रेधा व्याख्यात इति ज्ञातव्यम् ॥ **श्रुतौ श्रुतत्वादिति** ॥ अनेन तेषां दोषश्रुतेरिति न्यायविवरणांशो व्याख्यातो भवति ।

नन्वेवं तर्हीष्टानिष्टाद्यकरणे गतागतादिदुःखाभावान्मोक्षसम्भवेन किमर्थं वैराग्याद्यापादन-मित्यतः सर्वाज्ञानिसंग्रहार्थं नञो विरुद्धार्थत्वमभावार्थत्वं चाभिप्रेत्यानिष्टादिकारिणामित्ये-तद्व्याचष्टे– **तदकारिण इति** ॥ इष्टापूर्ताद्यकारिणस्तद्विरुद्धकारिणश्चेत्यर्थः । अपिशब्देनैवेष्टादि-कारिसमुच्चयसिद्धेः चशब्दः किमर्थमित्यत आह– **चशब्द इति** ॥ तदेवोत्तरसूत्रे अनूद्यत इति । विविच्योच्यत इत्यर्थः ।

## भावदीपः

**अनिष्टादिकारिणामिति** ॥ एतेन एवमुक्तदिशा काम्यपुण्यस्यैव गतागतादिहेतुत्वात्तद-ननुष्ठानस्य वा पापस्य वा तदहेतुत्वान्न तत्र वैराग्यमिति शङ्कनाद्वा पापकृतां पुण्यकृतामिव गतागतादौ रागाभावेन पतनहेतुप्रत्यवायभयाभावेन च गतागतादेः पापादिफलत्वाभावेन श्रुत्यर्थतया सूत्रे दुष्कृतपदोक्त्ययोगादिति शङ्कनाद्वा सङ्गतिरिति सूचितम् । समर्थनस्य शङ्कानिरासार्थत्वात् । यद्वा पूर्वसूत्रे दुष्कृतपदेनानिष्टादिकारिणां प्रस्तुतानां दुःखफलकथनात्सङ्गतिरिति । पुण्यकृतामेवेति भाष्ये सूत्रे चात्मविदामिति पदानुषङ्गमुपेत्याह ॥ **सर्वाज्ञानिनामिति** ॥ तेन भाक्तं वेत्यत्र वाशब्दोक्तार्थविरोधो नेति भावः । कामकारेण चैक इत्यादिवक्ष्यमाणाविरोधश्च । तत्र ज्ञानिनः कामचारेणापि मोक्षाप्रतिबन्धेन गतागताद्यभावस्य वक्ष्यमाणत्वात् । अतोऽनिष्टादिकारिणा-मपीत्यनुक्त्वा सर्वाज्ञानिनामित्युक्तम् । एतेन भाक्तं वेत्यत्रानात्मविदामकाम्यकर्मिणां ज्ञानद्वाराऽ-

(भावदीपः)

मृतभात्त्वेऽपि काम्यकर्मिणां तेषां गतागतादीत्युक्तौ कथं गतागतमिति शङ्कायां कर्मानुशयवत्त्वे-नागमनं गतिमार्गादन्यथाप्यागमनं कर्मणैव गतागतादि न तु चरणेनेत्युक्तावत्रापि कर्मिणां विकर्मिणां चानात्मविदां हेत्वभावेन गतागताद्यभावे मुक्तिरेव साक्षादित्याशङ्क्य समाधीयत इति च सङ्गतिस्सूचिता । भाष्यं व्याचष्टे ॥ **इष्टादीति** ॥ नेतरेषामिति एवकारार्थं व्यनक्ति ॥ **न त्विति** ॥ कुत इत्यतो भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसारोऽनिष्टादिकारिणां तदभावान्मुक्ति-रित्यन्यत्रोक्तौ हेतू व्यनक्ति ॥ **इष्टादिकारिणामिति** ॥ **तदुपपत्तेः** गतागताद्युपपत्तेः । कामभावा-भावाभ्यां कथं गतादिभावाभावावित्यत आह ॥ **कामानिति** ॥ यः काम्यमानानर्थान्वरिष्ठा-न्मन्यमानः कामयते इच्छति । स कामनावशात्तत्र तत्र देशविशेषे धनाढ्यादिकुले जायत इत्याथर्वणश्रुतौ पूर्वोत्तरार्धयोः अकामिकामिनोर्गतागतादिभावाभावोक्तेरित्यर्थः । कामाकामयो-र्बन्धाबन्धहेतुत्वमन्यत्रोक्तसंसारमुक्त्योरुपपादनाय तत्रस्थादिपदार्थविवरणेन व्यनक्ति ॥ **इष्टेति** ॥ अन्यत्रोक्तो हेतुर्भाष्योपपादक इति दर्शयन् उक्तप्रमेयं भाष्यारूढमिति भावेन तदनुवादेन फलोक्त्योपसंहरति ॥ **अत इति** ॥ इष्टादिकारिणामेव गतागतादिहेतूभयफलकामनावत्त्वादन्या-ज्ञानिनां तदभावादित्यर्थः ॥ सौत्राऽपिपदसमुच्चेयमाह ॥ **न केवलमिति** ॥ गतागतमित्यनुषङ्ग इति भावः । भाष्यस्य सूत्रेणान्वयमुपेत्य हेतुत्वेनार्थमाह ॥ **तद्य इहेति** ॥ श्रुतौ श्रुतत्वादित्यर्थः इति । सूत्रे पापकृतामपीति वाच्येऽनिष्टेत्युक्तिलब्धार्थमाह ॥ **अनिष्टेति** ॥ अन्यथा तदकारिणां गतागतादिसिद्धिर्न स्यादिति भावः । चशब्दादन्यच्चेति सूचितम् । तच्च स्पष्टयति संयमन इत्यादिसूत्रमिति तत्वप्रदीपोक्तेश्चशब्दसार्थक्यार्थं भाष्यानुक्तमपि चशब्दार्थमाह ॥ **चशब्द इति** ॥ तर्हि संयमन इति सूत्रं व्यर्थमित्यत आह ॥ **तदेवेति** ॥ अनुवादश्च स्पष्टीकरणायेति भावः ।

## अभिनवचन्द्रिका

**न हि कामोऽस्तीति** ॥ फलजनकस्य कर्मणः कामना अङ्गम् । अनिष्टादिकारिणश्च न फलोद्देशेन इष्टादिकारिवत् कर्मकुर्वन्ति । ततश्च व्यङ्गत्वात् न तत्कृतं कर्म दुःखजनकम् । अन्यथा ब्रह्मवधहेतूनां मुद्गरादीनामपि तज्जन्यदुःखं स्यादिति भावः ॥ **कामान्यः कामयत इति** ॥ मन्यमानो यजमानः यज्ञाद्यनुष्ठानसमये तज्जन्यकामान् विषयान् कामयमानः सन् यज्ञाद्यनुतिष्ठति स एव **सकामभिः** कामसहकृतयज्ञादिभिः तत्र तत्र सुरनरतिर्यगादिषु भोगाय जायते । पर्याप्तकामस्य

(अभिनवचन्द्रिका)

त्यक्तेषणस्य, मत्तस्य, कृतात्मनश्च, कृतकृत्यस्य, विरक्तस्य च, सर्वे कामाः विषयसाधनानि सर्वाणि कर्माणि । **प्रतिमुच्यन्ति** तद्बन्धकानि न भवन्तीति पूर्वपक्षिमते श्रुत्यर्थः । पुण्यं कृत्वा ये पापभयपूर्वकमनुतिष्ठन्ति तेषामेव गमनादिसर्वमपि दुःखम् । इतरेषां विधिनिषेधभयमपहाय स्वेच्छाचारिणां मत्तानां मोक्ष एवेत्यर्थः । एतेन नरकादिदुःखस्य यज्ञफलत्वाभावात् इष्टादिकारिणामेव दुःखमित्यप्ययुक्तमिति परास्तम् । **इष्टादिकारिणामेवेति ॥** विधिनिषेधभयवतामेवेत्यर्थः ॥ **श्रुतत्वादिति ॥** ये शुभकृतो ये चाऽशुभकृत इति पुण्यकृद्वत् केवलपापकर्तुरपि ग्रहणादिति भावः । नन्वनिष्टादिकारिणां गतागतक्लेशस्य मयाप्यङ्गीकृतत्वादित्यत आह– **अनिष्टादिकारिण इतीति ॥** धर्मसमुच्चये चशब्दः । 'अनिष्टादि कारिणः' इति सौत्रपदेन ये त्वया मुक्तिभागित्वेनोक्ताः विधिनिषेधभयशून्यत्वेन दुःखसाधनं व्यर्थं, विधिनिषेधभयवतामनिष्टादिकारिणां गतागते, इष्टाद्यकारित्वे सति तद्विरुद्धकारिणो मत्तास्त उच्यन्त इत्यर्थः । एतेन 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति वचनात् इष्टाद्यकारिणः तद्विरुद्धकारित्वं नियतमेवेति तद्विरुद्धकारिणो गतागतक्लेशसमर्थनेन कृतत्वात् इष्टाद्यकारिग्रहणं व्यर्थमिति परास्तम् । मत्तत्वसूचनाय तद्ग्रहणस्यावश्यकत्वात् ।

पूर्वपक्षस्तु इष्टादिपुण्यकृतामेव गतागतादिक्लेशाः । तेषां विधिनिषेधभीतियुक्तत्वात् । 'बिभ्यत्पततिपादपात्' इति न्यायात् । किं च कामना हि कर्माङ्गं, साङ्गमेव च कर्म फलहेतुः न तु व्यङ्गम् । कामनावन्तश्च ते । उक्तं च 'कामान्यः कामयते मन्यमानः सकामभिर्जायते तत्र तत्र' इति । इष्टादिकारिणस्तु स्वयमेव स्वात्मानं विधिनिषेधाभ्यां बध्नन्ति । उपनीतस्यैव विधिनिषेधविषयत्वात् । अनुपनीतास्तु मत्ताः । न ह्यनुपनीतं प्रति 'अहरहः सन्ध्यामुपासीत' इत्यादिशास्त्रं प्रवर्तत इति शक्यते वक्तुम् । शूद्रादीनां तत्प्रसङ्गात् । अतः पुण्यपापकृतामेव गमनागमनादिदुःखं न तु पापमात्ररतानां मत्तानाम् । किंतु मोक्ष एवेति पुण्ये त तत्फले च विरक्त्या भवितव्यं, न तु पापमात्रानुष्ठान इति ।

सिद्धान्तस्तु न पुण्यापापे सङ्कल्य्याऽनुतिष्ठतामेव गतागतादिक्लेशः किंनाम पापमात्रानुरक्तानां मत्तानामपि 'तद्य इह शुभकृतो ये चाऽशुभकृत' इति प्रत्येकं गतागतक्लेशाभिधानात्, न केवलं पापमात्रानुरक्तानां सञ्जीववत् गतागतक्लेश एव किं नाम संयमने त्वनुभूय नित्यनरके पातो भवति ।

(अभिनवचन्द्रिका)

ये तु सञ्जीवाः सन्तः पापमनुतिष्ठन्ति तेषामारोहो भवति । सर्वे वा एते शुभकृतः' इति कौण्ठरव्यश्रुतौ तथा दर्शनात् । 'गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः । तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम्' इत्यादिस्मृतेश्च । न च भयकामनाद्यभावविरोध इति वाच्यम् । अबिभ्यता फलकामनाशून्येनापि उपभुक्तस्य विषस्य मरणहेतुत्वदर्शनात् । अतोऽनिष्टादिकारिणामपि महानर्थत्वेन मोक्षाशाया दूरोत्सारितत्वात् भवितव्यं तत्रापि विरक्तेनेति सिद्धम् ।

## वाक्यार्थमुक्तावली

विशिष्योक्तिरिति टीकायामेव पूर्वाधिकरणे गतागतमिष्टादिफलमिति विशिष्योक्तेराद्यकोट्युपस्थापकत्वेन सन्देहबीजत्वस्य वक्ष्यमाणत्वात् अनन्तरसङ्गतिः । गतागतमिष्टादिकारिणामेवोत सर्वाज्ञानामिति चिन्ता । तदर्थं प्रत्यवायभयकाममिश्रबुद्धित्वं पतनप्रयोजकं भवति न वेति ॥ **अज्ञानित्वं चेति** ॥ इष्टादिकारिणीवानिष्टादिकारिण्यपि अज्ञानित्वस्य सत्त्वेन द्वितीयकोट्युपस्थितिरिति भावः । प्रत्यवायफलाभावे फलकामनाभावे च पुण्यकरणाभावात् पुण्यकृतामिति कार्योक्त्या सूचितं विमिश्रतेत्युक्तन्यायं विशदयति ॥ **इष्टादिकारिणामिति** ॥ प्रत्यवायभयकाममिश्रबुद्धित्वेनेत्यर्थः । **फलकामित्वात्** फलकाममिश्रबुद्धित्वात् । प्रत्यवायभयस्य पतनहेतुत्वं न्यायेनोपपादनीयम् । कामित्वस्य तु श्रुत्येत्युपपादनावैचित्र्यात्पृथगुक्तिः ॥ **न हि कामोऽस्तीति** ॥ यद्यपि पापकारिणां फलकामोऽस्त्येव, अन्यथा प्रवृत्त्यनुपपत्तेः । तथाप्यत्र यस्मात्फलात्स्वर्गादिरूपादिह पतनं विवक्षितं तत्कामो नास्तीति भावः । फलकामिनां पतनमित्यत्र प्रमाणमाह ॥ **कामान्य इति** ॥ **मन्यमानो** बहुमन्यमानः । **कामिभिः** कामपूर्वकमनुष्ठितयज्ञादिभिः साधनैः । तत्र तत्र योनौ । फलकामस्यैव पातहेतुत्वेऽन्वयमुक्त्वा व्यतिरेकहेतुरुच्यते ॥ **पर्याप्तकामस्येति** ॥ **कृतात्मनः** शुद्धमनसः । अत एव पर्याप्तकामस्य परिसमाप्तकामस्य त्यक्तेषणस्य सर्वे कामाः । इहैव ज्ञानदेहे एव प्रविमुच्यन्ति ज्ञानिनं त्यजन्ति । 'यदा सर्वे विमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इति श्रुतेः । स्वसम्बन्धितया विधिज्ञानाभावे पुण्यकरणानुपपत्तेः । पुण्यकृतामिति कार्योक्त्या सूचितं विमिश्रतेत्येतदेव न्यायं विधिनिषेधविमिश्रतेति प्रकारान्तरेण विवृणोति ॥ **इष्टादिकारिणस्त्विति** ॥ अत एव न्यायविवरणे न च भयकामनादिमिश्रबुद्धित्वादित्यादिशब्दः । गतागतमित्यनुवृत्या सूत्रार्थमाह ॥ **न केवलमिति** ॥ **तदकारिण इति** ॥ इष्टाद्यकारिण इत्यर्थः ॥

(वाक्यार्थमुक्तावली)

**तद्विरुद्धकारिण इति** ॥ इष्टापूर्तविरुद्धपापकारिण इत्यर्थः ॥ **दुःखान्तरेति** ॥ न केवलं गतागतं किन्तु संयमनाख्यं प्रबलदुःखान्तरं च श्रुतमिति समुच्चयार्थ इत्यर्थः । एतेन प्रबलत्वयुक्तः न्यायः सूत्रारूढो दर्शितः ॥ **अनूद्यत इति** ॥ आरोहावरोहविधानाय अनूद्यतेऽतो न पौनरुक्त्यमिति भावः ।

## तत्त्वसुबोधिनी

**तत्किमिति** ॥ तथा चेष्टादिकारिणां गतागतोक्तावेव किं तेषामेव गतागतमुतान्येषामपीति सन्देहोत्पादो नान्यथेत्येतदधिकरणविचाराङ्गभूतसंशयोत्थापकत्वेन पूर्वाधिकरणस्यैतदधिकरणोपजीव्यत्वादनन्तरसङ्गतिरिति भावः । **विशेषोक्तिरिति** ॥ पूर्वाधिकरणे गतागतस्येष्टादिकर्मफलत्वोक्तावपि तत्फलमिष्टादिकारिणामेव भवति न त्वन्येषां तदकारिणामित्यर्थात् सिद्धमेवेति भावः । कुतो नेत्यत आह ॥ **इष्टादीति** ॥ **तदुपपत्तेः** ॥ गतागतयोरुपपत्तेः ॥ **तदभावात्** ॥ प्रत्यवायभयाभावात् । अस्तु प्रत्यवायभयवत्त्वमिष्टादिकारिणामन्येषां तदभावश्च, तथापि तेषामेव गतागते कुत इत्यत आह ॥ **बिभ्यदिति** ॥ तथा च भयवत एव फलं न त्वभयवत इति भावः । किञ्च भवत्येवेष्टादिकारिणां तेषां फलकामनावत्त्वात् अन्येषां तदभावादित्याह ॥ **फलेति** ॥ फलकामस्य गतागतकारणत्वे श्रुतिमाह ॥ **कामान्य इति** ॥ यद्यपि पूर्वार्धस्यैवात्रोपयोगः, स एवेत्यवधारणाध्याहारेण विवक्षितसिद्धेः तथाप्यवधारणव्यावर्त्यत्वं नानिष्टादिकारिणां किन्तु पर्याप्तकामत्वकृतात्मत्वादिगुणयोगिनामेवेति वस्तुगतिप्रदर्शनार्थं पर्याप्तकामस्येत्युत्तरार्धोदाहरणमिति ज्ञातव्यम् । संसारित्वस्योभयत्र तुल्यत्वात्कथमेतदित्यत आह ॥ **इष्टादीति** ॥ विधिनिषेधबद्धत्वस्यैव संसारत्वात् तेषां च तदभावदिति भावः । नन्वेवं तर्हि इष्टानिष्टाद्यकरणे गतागतादिदुःखाभावान्मोक्षसम्भवेन किमर्थं वैराग्योपादानमित्यतः सर्वाज्ञानिसङ्ग्रहार्थं नञो विरुद्धार्थत्वमभावार्थत्वं चाभिप्रेत्यानिष्टादिकारिणामित्येतद्व्याचष्टे ॥ **तदकारिण इति** ॥ इष्टापूर्ताकारिणस्तद्विरुद्धकारिणश्चेत्यर्थः । अपिशब्देनैवेष्टादिकारिणां समुच्चयसिद्धेश्चशब्दः किमर्थमित्यत आह ॥ **चशब्द इति** ॥ तत् किं दुःखान्तरमत आह ॥ **तदेवेति** ॥ विविच्योच्यत इत्यर्थः ।

## वाक्यार्थविवरणम्

॥ **अनिष्टादीति** ॥ ये भगवज्ज्ञानशून्या इष्टापूर्तादिवेदोक्तपुण्यकर्मकारिणः स्तेयादिकर्तारो ये च प्रत्युतेष्टादिवेदोक्तकर्मविरुद्धभगवद्द्रोहादिकर्मकर्तारो मिथ्याज्ञानिनस्ते सर्वेऽप्यनिष्टादिकारि-

(वाक्यार्थविवरणम्)

शब्दवाच्यत्वेन अत्राधिकरणे सर्वत्र विवक्षिताः ॥ **तत्र** ॥ कर्माकरणे विरुद्धकर्मकरणे च ॥ **विरक्तिः** ॥ **तस्मान्निवृत्तिरूपा** ॥ **इष्टादिकारिणामेवेति** ॥ काम्यकर्मिणामेवेत्यर्थः ॥ **सर्वाज्ञानिनामिति** ॥ भगवज्ज्ञानशून्यानां काम्यकर्मिणाम् अकर्मिणां स्तेनादीनां विरुद्धकर्मिणां मिथ्याज्ञानिनां चेति सर्वाज्ञानिनामित्यर्थः । अत्र काम्यकर्मिणामेव धूमादिमार्गेण गतागतम् इष्टाद्यकारिणां तद्विरुद्धकारिणां च गतागतं नाम तत्फलानुभवाय नरकलोकं प्रति गमनम् । तदवसाने केषाञ्चिदिष्टाद्यकारिणां इमं लोकं प्रत्यागमनं तद्विरुद्धकारिणां च तमसि पतनार्थमनित्यनरकान्महातमः प्रति गमनमेव विवक्षितम् । न तु धूमादिमार्ग इति विवेकोऽत्र द्रष्टव्य इति सम्प्रदायविदः ॥ **विशेषोक्तिः** ॥ अथ ये ग्रामा इष्टापूर्त इति गतागतस्य विशिष्येष्टादिफलत्वोक्तिः ॥ **अज्ञानित्वं चेति** ॥ भगवदज्ञानित्वाविशेषादिष्टादिकारिवत् । सर्वाज्ञानिनामपि गतागतमित्यर्थः ॥ **तदुपपत्तेः** ॥ गतागतोपपत्तेः ॥ **अन्येषाम्** ॥ अनिष्टादिकारिणाम् ॥ **तदिति** ॥ प्रत्यवायभयेत्यर्थः । इष्टादिकारिणां प्रत्यवायादिमत्त्वेन कुतस्तदुपपत्तिरित्यतस्तदुपपादयति ॥ **बिभ्यदिति** ॥ युक्त्यन्तरमाह ॥ **फलेति** ॥ इष्टादिकारिणां फलकामित्वेन फलभोगार्थं स्वर्गं प्रति गमनं तदवसान आगमनं च युक्तमित्यर्थः ॥ **कामः** ॥ तत्साध्यफलकामः । अतो न तदुपपत्तिरिति भावः । फलकामित्वाचेत्युक्तप्रमेयद्वये श्रुतिमप्याह ॥ **कामान्य इति** ॥ द्वितीयार्धेनानिष्टादिकारिणां न हि कामोऽस्तीत्यर्थसिद्धिः ॥ **पर्याप्तेति** ॥ समाप्तेत्यर्थः । परित्यक्तेति यावत् । प्रत्यवायभयवत्त्वेनेत्याद्युक्तमुपपादयति ॥ **इष्टादिकारिणस्त्विति** ॥ **तद्रहितः** ॥ गमनागमनरहितः । अपुनरावृत्तिरूप इत्यर्थः । इहैवेत्युक्तत्वान्न मोक्षार्थमपि गमनमपेक्षितमिति भावः । श्रुत्यनुसारेण सूत्रेऽपि तथैवार्थो द्रष्टव्य इत्याह ॥ **अनिष्टादिकारिण इतीति** ॥ **दुःखान्तरेति** ॥ न केवलं गमनागमनप्रयुक्तमेव दुःखमित्यर्थः ।

## वाक्यार्थमञ्जरी

**अनिष्टादिकारिणामिति** ॥ इष्टादिपुण्यकारिणां तद्विरुद्धपापकारिणां चेत्यर्थः ॥ **विशेषोक्तिरिति** ॥ गतागतस्येष्टादिकर्मसमर्थनलब्धा इष्टादिकारिणां गतागतमिति विशिष्योक्तिरित्यर्थः । भयतदभावमात्रेण कथमिदं वैषम्यमित्यत आह ॥ **बिभ्यदिति** ॥ पतनभयवानेव वृक्षात्पततीत्यर्थः । फलकामस्य गतागतकरणत्वे श्रुतिमाह ॥ **कामान्य इति** ॥ यश्चात्मानं कर्तृत्वेन मन्यमानः कामान्

(वाक्यार्थमञ्जरी)

विषयान् कामयते इच्छति स्म स एव कामभिः भोक्तव्यैः कामैर्निमित्तैस्तद्भोगार्थमिति यावत् । भुवि जायते तत्र तत्र विषयेषु पर्याप्तकामस्यालंबुद्धिमतः कृतात्मनः शिक्षितबुद्धेर्योगिनस्तु इहैव लोके सर्वकामाः प्रविमुच्यन्ति विलीयन्त इत्यर्थः ॥ **ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ** ॥ न केवलमिष्टादिकारिणामेव गतागतादिकं अपि तु तद्य इहेत्यनिष्टादिकारिणामपि च श्रुतमित्यर्थः । नन्वेवं तर्हीष्टानिष्टाद्यकरणे गतागतादिदुःखाभावात् मोक्षसम्भवे च किमर्थं वैराग्यादीत्यत आह ॥ **तदकारिण इति** ॥ अनिष्टेत्यत्र नञोऽभावार्थत्वं विरुद्धार्थत्वं चेति भावः । अपिशब्देनेष्टादि-कारिसमुच्चयसिद्धेश्चशब्दो व्यर्थ इत्यत आह ॥ **चशब्द इति** ॥ अत्रोपष्टम्भकमाह ॥ **तदेवोत्तरसूत्र इति** ॥ अन्यथा अप्राप्तस्यानुवादायोगात्संयमने त्वनुभूयेत्यनुवादो न स्यादिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥ १४ ॥

**संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः । तुशब्दोऽवधारणे । 'सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्वज्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विपः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति' इति कौण्ठरव्यश्रुतेः ।**

## तत्त्वप्रदीपिका

पापिनामप्यागमनं श्रुतमित्युक्तम् । चशब्दादन्यच्चेति सूचितम् । तत्स्पष्टयति संयमन इत्यादिसूत्रम् ॥ संयमने नरके संयमनं तद्दुःखमनुभूयेतरेषामनिष्टादिकारिणां मध्ये केषाञ्चिदारोह एव केषाञ्चिदवरोह एव । 'यम उपरम' इति धातोः पापोपरमणं संयमनम् । 'तत्र ह ये परद्विषो गुरुद्विषो श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति' इति श्रुतेः । शठाः गूढद्वेषिणः । मूर्खाः तत्वाज्ञा अन्यथाज्ञाश्च ।

'अनादिद्वेषिणो दैत्या विष्णोर्द्वेषो विवर्धितः ।
तमस्यन्धे पातयति दैत्यानन्ते विनिश्चयात् ॥
पूर्णदुःखात्मको द्वेषः सोऽनन्तो ह्यवतिष्ठते ।
पतितानां तमस्यन्धे निःशेषसुखवर्जिते ॥

(तत्त्वप्रदीपिका)

जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।
साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥
प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च ।
तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः ।
एतैर्विहीना या भक्तिः सा भक्तिरिति कीर्त्यत' ॥ इति भगवद्वचनम् ।

'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ॥
धर्मदेहावतारादेः भेददृष्टिश्च सङ्करः ।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ॥
सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् ।
अधरं याति च तमः प्रादुर्भावगतोऽप्यतः ।
ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुण' ॥ इति भविष्यत्पर्वणि ।

'सर्वदेववरत्वेन यो न जानाति केशवम् ।
तस्य पुण्यानि मोघानि याति चान्धतमो ध्रुवम्' ॥ इति च सत्तत्वे ।

'असुराणां तमः प्राप्तिस्तदा नियमतो भवेत् ।
यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्पदम्' ॥ इति च भविष्यत्पर्वणि ।

## तत्त्वप्रकाशिका

न केवलमनिष्टादिकारिणां गतागतमात्रमतिदुःखं चान्यदस्तीत्येतदर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ **संयमने त्विति** ॥ अस्ति तावत्सर्वेषामनिष्टादिकारिणामज्ञानां यमशासनम् । तदनुभवावसाने केषाञ्चिदनिष्टादिकारिणां ततो व्युत्थानं भवति । केषाञ्चित्ततोऽपि नीचस्थले नित्यनरके पातो भवति । कुतः । तेषामनिष्टादिकारिणामेवंविधगतेः श्रुतिसिद्धत्वादिति भावः । यथा नित्यनरकपाते विकल्पस्तथा संयमनेऽप्यस्तीति नाशङ्क्यमिति भावेनाह ॥ **तुशब्द इति** ॥ अशुभकृत इति न शुभकृत इति चार्थः । द्वेषः प्रतीपबुद्धिः । अवमतिर्नीचतया विज्ञानम् । शाठ्यं गूढद्वेषः । मौर्ख्यं तत्त्वज्ञानराहित्यम् । नैवैत उत्तिष्ठन्त इत्यस्योपपादनम् ॥ **वव्रमिति** ॥ स्वस्थितान् वारयति गन्तुं न मुञ्चतीत्यर्थः ।

## गुर्वर्थदीपिका

'अज्ञानां यमशासनम्' इत्यत्र अज्ञानां ज्ञानिव्यतिरिक्तानामित्यनेन इतरेषामिति सौत्रपदस्य ज्ञानिभ्य इतरेषामित्यर्थं दर्शयति । 'इमं लोकमनुव्रजन्ति' इति श्रुतेः सौत्रारोहपदेन पापभोगावसाने भूलोकं प्रत्यारोह एव आरोहः । अतः फलद्वयमप्यज्ञानिनामिति भावेनोक्तं इतरेषामिति । केषाञ्चिदितरेषामारोहः केषाञ्चिदितरेषामवरोह इति सूत्रार्थ इति भावः ।

## भावबोधः

**यमशासनमिति ॥** अनेन सम्यग्यमनं नियमनं शासनमिति यावदिति संयमनशब्दो यौगिकः । सूत्रे 'संयमने तु' इति सप्तमी द्वितीयार्थे । अत एव भाष्ये संयमनमित्युक्तमित्युक्तं भवति । एवं विधगतः श्रुतिसिद्धत्वादिति । अनेन प्रबलदोषश्रुतेरिति न्यायविवरणमप्युक्तार्थं भवति ॥ **विकल्प इति ॥** भगवद्द्वेषादियुतानामेवाज्ञानां नित्यनरकपातलक्षणोऽवरोहः । अन्येषामुत्थानलक्षणारोह इति विकल्प इत्यर्थः ॥ **तुशब्द इतीति ॥** तथा चानुभूय त्विति सम्बन्धः सूचित इति भावः ।

## भावदीपः

चशब्दार्थं वदन्नेव सूत्रमवतारयति ॥ **न केवलमिति ॥** अनिष्टादिकारिणां मुक्तिरेवेति वादिनं पूर्ववादिनं प्रति कथं संयमनमनुभूयेत्युक्तिरित्यत आह ॥ **अस्ति तावदिति ॥** 'सर्वे वा एते' इति भाष्यस्थश्रुतेरेवेति भावः । यद्वा भाष्ये शेषं कृत्वा सूत्रार्थं विवृण्वन् सौत्रतुशब्दभावार्थमाह ॥ **अस्ति तावदिति ॥** संयमनशब्दार्थो **यमशासनमिति ॥** सर्वे इत्यादिभाष्यस्य तद्गतिदर्शनादिति सूत्रखण्डव्याख्यात्वं स्फोरयन् तेषां प्रबलदोषश्रुतेरित्यन्यत्रोक्त्यनुरोधेन सौत्रतच्छब्दार्थं विवृण्वन्नर्थ-माह ॥ **तेषामिति ॥ एवंविधेति ॥** एतेनान्यत्रोक्तप्रबलदोषशब्दार्थो विवृतः । अवधारणकृत्यं वदन्नेवावतारयति ॥ **यथेति ॥** श्रुत्यर्थमाह ॥ **अशुभकृत इति ॥** एतेन तद्य इहेति प्राचीन-श्रुतावप्यशुभकृत इति पदं व्याख्यातं बोध्यम् ॥ **प्रतीपेति ॥** 'जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा । साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च । प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च । तत्प्रमाणस्य निन्दा च द्वेषो एतेऽखिला मताः' इत्यादिना भारततात्पर्यनिर्णयेऽनेकधा विवृतेति भावः ॥ **नीचतयेति ॥** 'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता । प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।

(भावदीपः)

धर्मदेहावतारादेर्भेददृष्टिश्च संकरः । अवतारेष्विति ज्ञेयमवज्ञानं जनार्दन' इत्यादिनवम-गीतातात्पर्योक्तेरिति भावः ॥ **तत्वज्ञानेति** ॥ 'यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम्' इत्याद्युक्तदिशेति भावः । वत्रं वेत्यंशस्योपयोगमाह ॥ **नैवैत इति** ॥

## अभिनवचन्द्रिका

ननु सूत्रमिदमयुक्तं नरकभेगस्य नित्यत्वं समर्थनीयमसमर्थयित्वा, नरकसङ्ख्यामात्राभिधानात् । भाष्यं चाऽयुक्तं नरकभोगस्य नित्यताऽसमर्थनादित्यतः सूत्रभाष्ययोस्तात्पर्यमाह– **नरकभोगो भवत्येवे त्यादिना, इति स्मृतेरित्यन्तेन** ॥ क्वचित्तु 'इति स्मृतेरित्यर्थः' इति पाठः । तस्य तात्पर्यार्थ इत्यर्थो बोध्यः । ननु रौरवादिपञ्चभ्य एवाऽऽरोहावरोहौ न तु तामिस्राऽन्धतामिस्राभ्यां, तथा च 'एतानि क्रमशो गत्वा' इति कथं सप्तानां परामर्श इत्यत आह– **एतानि पञ्चेति** ॥ पञ्चानामेव 'एतानि' इति परामर्शः कृतो न सप्तानामिति भावः । अतिशयेन तत्र वैराग्येण भवितव्यमिति । नन्विदमयुक्तं वैराग्ये अतिशयाऽभावात् । तथा हि– वैराग्यं नाम विरागता, रागाऽभाव इति यावत् । न चाऽभावे तारतम्यमस्ति, । येन ब्रह्महननवैराग्यात् भगवद्विद्वेषे वैराग्यस्याऽतिशय इति चेत् सत्यम् । अभावे न तारतम्यम्, तथापि हरिद्वेषादिविरागतायां महता प्रयत्नेन महादरेण भाव्यमित्यभिप्रायेण तथोक्तमित्यदोषः ।

पूर्वपक्षस्तु नरकं न नित्यदुखसाधनं, 'यावदिन्द्राश्चतुर्दश' इत्यादौ अवधिमत्त्वश्रवणात् । न चोभयं युक्तं, विरोधात् । न च पुरुषभेदेन व्यवस्था 'चकार नरकं शून्यम्' इति शून्यताऽभिधानात् । ततश्च संयमने त्वनुभूय केषां चिदवरोह इति प्रागुक्तमयुक्तमिति नेतरपापेभ्यो भगवद्विद्वेषेऽतिशयितेन वैराग्येणाऽभाव्यमिति ।

सिद्धान्तस्तु भवेदेव यद्येकमेव नरकं स्यात् न चैवं किं नाम 'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चाऽन्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ' इति वचनात् सप्तनरकाणि । 'चकार नरकं शून्यम्' इत्यादीनि रौरवादिपञ्चनरक विषयाणि । 'नैवोत्तिष्ठन्ती'त्यादीनि तु तामिस्राऽन्धतामिस्रविषयाणि । अन्यानि च बहूनि क्षुद्र-नरकाणि सन्ति । तान्यपि अनित्यफलदानि । अतो भगवद्द्वेषादिफलस्य नित्यनरकत्वात् इतरपापेभ्योऽतिशयेन तत्र वैराग्यैण भवितव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

॥ **यमशासनमिति** ॥ एतेन संयमने नरके । संयमनं सम्यग्यमनं नियमनं यमशासनमनुभूयैवेति सूत्रे विभक्तिविपरिणामेन यथास्थितेन चान्वय इत्युक्तं भवति । अत एव भाष्ये संयमनमनुभूय संयमने पततीति द्विधोक्तिः । तद्गतिदर्शनादित्यत्र तेषां गतिस्तद्गतिः । सा च सा गतिश्चेति विग्रहद्वयं तन्त्रेणोपात्तमिति भावेनाह । तेषामनिष्टादिकारिणामेवं विधगतेरिति ॥ **अशुभकृत इति** ॥ अशुभकृत इत्यस्याशुभकारिणः शुभकारिण इति चार्थ इति भावः ।

## तत्त्वसुबोधिनी

**यमशासनमिति** ॥ अनेन सम्यग्यमनं संयमनमित्युक्तम् । पृच्छति । **कुत इति** ॥ **विकल्प इति** ॥ भगवद्द्वेषादियुक्तानामेवाज्ञानां नित्यनरकपातलक्षणोऽवरोहः । अन्येषामुत्थानलक्षण आरोहः इति विकल्प इत्यर्थः ॥ **तुशब्द इतीति** ॥ तथा चानुभूय त्विति सम्बन्धः सूचितः । सौत्रचशब्दार्थमाह ॥ **अशुभकृत इति** ॥ न शुभकृत इति चार्थ इति । पौनरुक्तपरिहाराय श्रौतपदानि व्याचष्टे ॥ **द्वेष इत्यादिना** ॥ ननु नैवेत उत्तिष्ठन्त इत्येतत्पुनरुक्तं, वव्रमित्यनेन गतार्थत्वादित्यत आह ॥ **नैवेत इति** ॥ तद्व्याचष्टे ॥ **स्वेति** ॥

## वाक्यार्थविवरणम्

**यमशासनमिति** ॥ तथा च सूत्रे भाष्ये च संयमपदेन सम्यक् यमनं नियमनं यमशासनं नरकदुःखमेव ग्राह्यम् । तथा च संयमने संयमनं अनित्यनरकदुःखमनुभूयेत्यर्थः ॥ **केषाञ्चिदिति** ॥ इष्टाद्यकारिणां ब्रह्मद्विट्स्तेनादीनाम् । आरोह इत्यस्य व्याख्यानं ततो व्युत्थानमिति । अनित्यनरकात् व्युत्थाय इमं लोकं प्रत्यागमनमित्यर्थः ॥ **केषाञ्चिदिति** ॥ तद्विरुद्धकारिणां हरिगुरुद्विषाम् । अवरोह इत्यत्र 'अव' इत्यस्य व्याख्यानं ततोऽपि नीचस्थान इति । यत्रा-नित्यनरके रौरवादौ दुःखमनुभवन्तः स्थितास्ततो नरकादपि नीचस्थान इत्यर्थः । तत् किं स्थलमित्यत उक्तम् ॥ **नित्यनरक इति** ॥ 'रोह' इत्यस्यार्थः पात इति । तद्गतिदर्शनादिति सूत्रखण्डस्यार्थमाह ॥ **तेषामिति** ॥ **विकल्प इति** ॥ विरुद्धकारिणामेव नित्यनरके पातो नेष्टादिकारिणामित्येवंरूपः ॥ **संयमने** ॥ अनित्यनरकदुःखानुभवोऽपि इष्टाद्यकारिणां

(वाक्यार्थमुक्तावली)

तद्विरुद्धकारिणां च मध्ये केषाञ्चिदस्ति केषाञ्चिन्नेत्येवंरूपो विकल्पोऽस्तीति न शङ्क्यमित्यर्थः ॥ **तुशब्द इतीति** ॥ तथा च संयमनमनुभूयैव केषाञ्चिदारोहः केषाञ्चिदवरोह इत्यर्थः । तथा च संयमनानुभवेनोक्तरूपो विकल्प इति भावः । सूत्रे इतरेषामित्यस्य इष्टादिकारिभ्य इत्यर्थस्य स्पष्टत्वादर्थान्तरं चाह ॥ **न शुभकृत इति चार्थ इति** ॥ इष्टादिरूपशुभेत्यर्थः । श्रुतौ संयमनेऽनित्यनरके । श्रुतौ ततोऽनित्यनरकात् । **अवरुह्य** व्युत्थाय । **एतत्** एतस्मात् । **गन्तुं** बहिर्गन्तुम् । श्रुतौ **तदनुभूय** संयमनपदोक्तमनित्यनरकमनुभूयेत्यर्थः ।

## वाक्यार्थमञ्जरी

सम्यक् यमनं शासनं सप्तमी द्वितीयार्थे अनुभूय तु अनुभूयैव इतरेषामनिष्टादिकारिणामारोहावरोहौ केषाञ्चिदारोह उत्थानं केषाञ्चिदवरोहःनीचस्थाने पातो भवति । कुतः? तद्गतिदर्शनात् तेषामनिष्टादिकारिणां गतेरेवंविधायाः 'सर्वे वा एत' इति श्रुतौ दर्शनादित्यर्थः ॥ **विकल्प इति** ॥ भगवद्वेषिणामेव नित्यनरके पातोऽन्येषां नेति यथा न तथा सम्यग्यमनं पापोपरमणं यत्रेति संयमनपदेनोक्तेऽनित्यनरके किन्तु सर्वेषान्तन्नियतमिति भावेनेत्यर्थः ॥ **इति चार्थ इति** ॥ न केवलं पापकर्तृत्वमेवाशुभकृच्छब्दार्थः किंतु पुण्याकर्तृत्वमप्यर्थ इत्यर्थः । तेनानिष्टादिकारिशब्दस्योभयविधव्याख्याने न श्रुतिसंवाद इति भावः ।

## सूत्रभाष्यम्

**॥ ॐ स्मरन्ति च ॐ ॥ १९ ॥**

**गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः ।**
**तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ॥**
**महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।**
**इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥**
**सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।**
**इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा' ॥ इत्यादि ॥ १९ ॥**

## तत्त्वप्रदीपिका

पञ्चकष्टे तु तदेव दुःखं सदा भवति । पञ्चेन्द्रियाणि प्रत्यपि कष्टं पञ्चकष्टं दुःस्सहशब्दस्पर्श-रूपरसगन्धनित्यायतनम् । पञ्चभ्यो रौरवादिभ्यः कष्टत्वाद्वा पञ्चकष्टमिति ।

## तत्त्वप्रकाशिका

उक्तार्थं स्मृत्या च समर्थयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ **स्मरन्ति चेति** ॥ रौरवादि-पञ्चभ्योऽतिकष्टे नित्यनरके दुःखमेव सदेत्यर्थः । सूत्रे बहुवचनश्रवणादित्यादि स्मरन्तीत्युक्तम् । तेन 'तानहं द्विपतः' इत्यादेः सङ्ग्रहः । न च भयकामनाद्यभावविरोधः । अबिभ्यता फलकामना-शून्येनाप्युपभुक्तविषयस्य मरणहेतुत्वदर्शनात् । अतोऽनिष्टादिकारिणामपि महानर्थवत्त्वेन मोक्षाशाया दूरोत्सारितत्वाद्भवितव्यं तत्रापि विरक्तेनेति सिद्धम् ।

## गुर्वर्थदीपिका

इत्यादि स्मरन्तीत्युक्तमित्यनेन सौत्रक्रियापदेन भाष्यपदस्यापि सम्बन्धो दर्शितः । तेनाऽऽदि-पदेन अबिभ्यतेत्यस्य विषयत्वाज्ज्ञानात्क्रोधोद्रेकादुन्मत्तत्वाद्वा भयरहितेनेत्यर्थः ।

## भावबोधः

ननु भाष्ये 'पञ्चकष्टे तु तत्सदा' इत्येतावता पूर्तावादिपदं किमर्थम् । कथं च अत्रान्वय इत्यतस्तत्प्रयोजनकथनपूर्वकमित्यादीति कर्म द्वितीयान्तमित्यभिप्रेत्य तस्य सूत्रेणान्वयमाह ॥ **सूत्रे बहुवचनश्रवणादिति** ॥ न्यायविवरणोक्तपूर्वपक्षयुक्तिविरोधमाशङ्क्य तस्याव्यभिचारमाह ॥ **न च भयकामनाद्यभावविरोध इति** ॥ अत्राद्ये अनिष्टादिकारिणामपि विप्रतिपन्ने गतागतादिदुःखमात्रे श्रुतिरूपप्रमाणोक्तिः । द्वितीये यदा तेषां नित्यनरकादिकमप्यस्ति किमु वक्तव्यं गतागतमस्तीति कैमुत्यमभिप्रेत्य न केवलमेतावद्गतागतादिमात्रम् । किं त्वधिकमप्यनिष्टमस्तीति सप्रमाणकं तदुक्तिः । तृतीये द्वितीयसूत्रोक्ताशेषार्थप्रतिपादकतदुपात्तश्रुतिव्याख्यानरूपविशेषस्मृतिप्रदर्शनमिति सूत्रक्रमः ॥

## भावदीपः

**स्मृत्या चेति** ॥ भाष्योक्तस्मृतेरेकत्वद्योतनायैकवचनम् । अत एव स्मृतिमुदाहरन्तीत्युक्तिः ॥ **समर्थयदिति** ॥ उक्तमत्र समाधानं परस्मैपदत्वे । भाष्यस्य सूत्रेणान्वयं दर्शयन्

(भावदीपः)

उत्सूत्रत्वभ्रमनिरासायादिपदार्थमाह ॥ **सूत्र इति** ॥ 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इत्यादेर्गीतास्मृतेर्ग्रह इत्यर्थः । आदिपदेन सर्वदेवावरत्वेन 'यो जानाति च केशवम्' । 'तस्य पुण्यानि मोघानि याति चांधं तमो ध्रुवम्' इत्यादेर्ग्रहः । प्रागुक्तयुक्तिमाशङ्क्य निराह ॥ **न चेति** ॥ **अत इति** ॥ अनिष्टादिकारिप्रबलदोषस्य श्रुत्यादि-सिद्धत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिरित्युक्तप्रकृतविषये रौरव इत्यादिस्मृतिरूपग्रन्थं कुर्वन्तीत्यर्थः । स्मरणं ग्रन्थकृतिःस्मरन्तीत्यादेरिति भागवततात्पर्योक्तेः । अत्राद्ये यागाद्यकारिणां पापकारिणां च गतागतसद्भावे श्रुत्युक्तिः । द्वितीये कैमुत्यसूचनाय ततोऽपि प्रबलदोषे श्रुत्युप-न्यासः । तृतीये तत्रैव स्मृत्युपन्यास इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु भाष्ये 'पञ्चकष्टे तु तत्सदो' इत्येतावता पूर्ते आदिपदं किमर्थं, कुत्र चान्वय इत्यतस्त-त्प्रयोजनकथनपूर्वकमित्यादीति कर्मद्वितीयान्तमित्यभिप्रेत्य तस्य सूत्रेणान्वयमाह ॥ **सूत्रे वहुवचनेति** ॥ अत्राद्ये सूत्रे अनिष्टादिकारिणामपि विप्रतिपन्ने गतागतादिदुःखमात्रे श्रुतिरूप-प्रमाणोक्तिः । द्वितीये तेषामधिकमप्यनिष्टमस्तीति सप्रमाणं तदुक्तिः । तृतीये द्वितीयोक्ताशेषार्थे स्मृतिप्रदर्शनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**गच्छन्तीति** ॥ स्मृतौ महातमसि पतन्त्येवेति पूर्वेणोत्तरेण चान्वयः । इतरेषां तु पापानां भगवद्द्वेषादीतरपापवतामितरेषां ब्रह्मद्विट्स्तेनादीनाम् ॥ **व्युत्थानम्** ॥ व्युत्थायेमं लोकं प्रत्यागमनम् । अनिष्टादिकारिणां न गतागताद्यनर्थोऽस्ति प्रत्यवायप्रयुक्तभयवत्त्वफल कामित्वयोर-भावादित्युक्तयुक्तिं निराह ॥ **न चेति** ॥ कुतो न चेत्यतोऽप्रयोजकत्वादित्याह ॥ **अनिष्टादि-कारिणामपीति** ॥ न केवलमिष्टादिकाम्यकर्मकारिणां गतागतादिमहानर्थवत्त्वं किं नामेष्टाद्यकारिणां तद्विरुद्धकारिणां च गतागतदुःखनरकादिदुःखरूपमहानर्थवत्त्वेनेत्यर्थः ॥ **तत्रापीति** ॥ न

(वाक्यार्थविवरणम्)

केवलमिष्टादिरूपकाम्ये कर्मणि किं नामेष्टाद्यकरणे तद्विरुद्धकरणे चेत्यर्थः । तत्र वैराग्यं नाम तयोरकरणमेवेति द्रष्टव्यम् । नन्विष्टाद्यकरणाद्वैराग्योक्ताविष्टादिकरणमेवापन्नं तत्र चानर्थः पूर्वमुक्तोऽस्तीति चेत् । सत्यम् । कामनया तत्करणेऽनर्थः पूर्वमुक्तः । अकामनया करणे तु न कोऽपि दोष इत्याशयात् । 'भाक्तं वा' 'अनिष्टादीत्यधिकरणद्वयतात्पर्यमुक्तं सङ्ग्रहे' । 'शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा । मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् । तस्माद्विरक्तः सन्' इति । 'अथाविद्वानकर्मावाग्गच्छति' इत्युदाहरिष्यमाणश्रुतौ चैतदधिकरणार्थ एवोक्तः । अकर्मपदेनोभयोरपि ग्रहणादिति ध्येयम् ।

## वाक्यार्थमञ्जरी

न केवलमिष्टादिकारिणामेवंविधगतिः श्रूयते किन्तु तां स्मरन्ति स्मृतिकर्तार इत्यर्थः ॥ **दर्शनादिति** ॥ तथा च तद्वदेव भयाद्यभावेऽपि गतागतमनिवार्यमिति भावः ।

**॥ इति अनिष्टादिकार्यधिकरणम् ॥ ११ ॥**

## १२. सप्ताधिकरणम्

### ।। ॐ अपि सप्त ॐ ।। १६ ।।

'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु (च) ।।
तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।
एतानि क्रमशो गत्वैवाऽऽरोहोऽथावरोहणम्' ।। इति च भारते ।

### तत्त्वप्रदीपिका

यद्यपि वहुकोटयो नरकाः, तथाऽपि सप्त प्रधानानीत्यपिशब्दः । दर्शयति चाऽचार्यः 'इति सप्त प्रधानानि' इति । सर्वत्र चेत्थमेव सूत्रपदानां कृत्यमुपक्षिपति, न तु निर्वक्ति सूक्ष्मदृष्टिभिरधिकारिभिर्भाव्यमिति ज्ञापयन् ।

### तत्त्वप्रकाशिका

अत्र परमात्मप्राप्तिसाधनवैराग्यार्थं नित्यनरकसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि भगवद्द्वेषादिफलस्य न नित्यदुःखात्मकत्वं समर्थ्यते न तर्हि ब्रह्महननादिभ्योऽतिशयेन वैराग्यं भवतीत्यतस्तत्समर्थनीयम् । प्रकृतं नरकमेव विषयः । नित्यफलप्रदमुत नेति सन्देहः । पूर्वोक्तिर्लोकदृष्टिश्च सन्देहबीजम् । पुनरावृत्तिमदेव न तु नित्यफलप्रदमिति पूर्वः पक्षः । 'यावदिन्द्राश्चतुर्दश' इत्यादौ नरकभोगस्यानित्यत्वोक्तेः । न चोभयं युक्तम् । विरोधात् । न चैकस्यैव पुरुषभेदेन व्यवस्था 'चकार नरकं शून्यम्' इत्यादेः । अतो यदुक्तं संयमने त्विति सोक्तिर्विरुद्धा । एवं च फलसाम्यान्न भगवद्द्वेषादावितरपापेभ्योऽतिशयेन वैराग्यं प्रयोजकमिति ।

सिद्धान्तयत्सूत्रं पठति **।। अपीति ।।** अपिपदेन स्मरन्तीत्यनुकृष्यते । तां स्मृतिं चोदाहरति **।। रौरव इति ।।** नरकभोगो भवत्येव नित्यः । 'नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्' इत्यादिश्रुतेः । अनित्यत्वोक्तिविरोध इति चेन्न । भवेदयं विरोधो यदि नरकैक्यं स्यात् । नैतदस्ति । किं तर्हि सप्तापि सन्ति । तेषु च नित्यानित्यत्वविभागेनोपपत्तेः । कुतो नरकाणां सप्तत्वम् । तथात्वेऽपि कुतो

(तत्त्वप्रकाशिका)

**नित्यानित्यतया विभाग इति चेत् 'रौरव' इति स्मृतेरित्यर्थः । महान्महारौरवः । एतानि पञ्च । सप्त प्रधानानीत्यनेन बहुनरकाभिधायकपुराणविरोधोऽपि परिहृतः । अतो भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वादितरपापेभ्योऽतिशयेन तत्र वैराग्येण भवितव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अतिशयेन वैराग्यं प्रयोजकमित्यत्र अतिशयेन यद्वैराग्यं विष्णुभक्तैः क्रियते तत्प्रयोजनं नेति पूर्वेणान्वयः । सप्तेति नरकैः सह पाठात् । 'तामिस्रश्चान्धतामिस्र' इति स्मृतौ नित्यनरकावेतौ तमस्त्वतोऽन्यदिति न मन्तव्यम् । सप्तातिरिक्ततमसोऽपि सत्त्वेऽष्टाविति ब्रूयात् । अतो वक्ष्यमाणं तृतीयत्वमप्येष्वेव द्वयोरिति ज्ञेयम् । किञ्च एतानि पञ्चेति द्वयोरेव टीकाकृता विभजनात् स्मृतिरपि द्वयोरेवावरोहमाह । तमोऽन्तरसद्भावे तत्राप्यवरोहो वक्तव्यः । सप्तस्वेवावरोहस्य परिसमापितत्वाच्च न तमोन्तरमस्तीति गम्यते । अत एव 'तामिस्रान्धादिकाख्ये तमसि' इत्यनयोरेव तमस्त्वं शिष्टैरपि निर्णीतम् । अन्धमिति पदमादौ यस्य तामिस्रस्य सोऽन्धादिकोऽन्धतामिस्र इत्यर्थः ।

## भावबोधः

**नित्यनरकसमर्थनादिति ॥** नित्यनरकसमर्थनस्य 'संयमने तु' इति उक्तकैमुत्यसिद्ध्युपयोगित्वादनन्तरसङ्गतिरिति भावः ॥ **नित्यफलदमिति ॥** अत्र नरकं नित्यफलदं न भवत्युत भवतीति चिन्ता । तदर्थं 'यावदिन्द्राश्चतुर्दश' 'चकार नरकं शून्यम्' इत्यादिवाक्यविरोधोऽस्ति न वेति । तदर्थं नरकमेकमुतनित्यानित्यविभागेनानेकमिति **॥ पूर्वोक्तिरिति ॥** अवरोह इति पूर्वोक्तिर्लोके फलस्यानित्यत्वदृष्टिरित्यर्थः । नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह ॥ **पुनरावृत्तिमदेवेति ॥**

ननु नरकभोगस्य नित्यत्वेऽपि नानित्यत्वोक्तिर्विरुद्धा । नरकस्य भगवद्द्वेषाद्यतिपापिनां नित्यफलदत्वेऽप्यपापिनां पुनरावृत्त्यपेक्षया 'यावदिन्द्राश्चतुर्दश' इत्याद्यनित्यत्वकथनसम्भवादित्याशङ्क्य निषेधति **॥ न चैकस्येवेति ॥** नरकस्य केषाञ्चिन्नित्यफलत्वे शून्यत्वरूपानित्यत्वकथनविरोधः स्यादित्यर्थः । ननु सप्तानामपि नित्यफलदत्वे पुनरनित्यत्वोक्तिविरोध इत्यतो विभागादिति न्यायविवरणोक्तयुक्तिमाह **॥ तेषु चेति ॥**

(भावबोधः)

ननु रौरवादिपञ्चभ्य एवारोहावरोहौ न तु तामिस्रान्धतामिस्राभ्याम् । तथा 'चैतानि क्रमशो गत्वा' इति कथं सप्तानां परामर्श इत्यत आह ॥ **एतानि पञ्चेति** ॥ तथा च'एत'च्छब्देन रौरवादिपञ्चैव परामृश्यन्ते न तु सप्तापीत्यर्थः ।

ननु तत्र हैके नरकानेकविंशतिं गणयन्ति । अष्टाविंशतिनरकाः । एवंविधानरकाः यमालये सन्ति । शतशः सहस्रश इत्यादिना भागवतादौ बहुनरकोक्तेः कथं न तद्विरोधः सूत्रस्मृत्योरित्यतस्तद्विरोधपरिहारार्थमेवेति सप्तप्रधानानीति विशेषोदाहरणमित्यभिप्रेत्याह– **सप्त प्रधानानीत्यनेनेति** ॥ अन्यथा न्यायविवरणवत् 'द्वौ नित्यौ संप्रकीर्तितौ' इत्यन्तमेवोदाहर्तव्यमिति भावः ।

## भावदीपः

भावार्थमाह ॥ **नित्यनरकसमर्थनादिति** ॥ नरकानित्यत्ववचनानां विषयभेदाय नरकभेदकथनेनेति योज्यम् । एतेन संयमनसूत्रादौ नैवैत उत्तिष्ठन्ते । न तेषामुत्थितिरित्यादिनोक्तानुत्थानपातो न युक्तः । नरकानित्यत्ववचनविरोधादित्याक्षेपात्सङ्गतिः सूचिता । चिन्ताफलमाह ॥ **यदीति** ॥ **पूर्वोक्तिरिति** ॥ अवरोहादिपदेनानुत्थानपातोक्तिः लोके कारागृहादौ पतितस्योत्थानदृष्टिश्चेत्यर्थः । सूत्रादौ नरकभेदोक्तेरसाङ्गत्यभ्रमनिरासाय तात्पर्यतस्तन्निवर्त्य चोद्यमाह ॥ **पुनरावृत्तिमदेवेति** ॥ नरकभोगस्यानित्यत्वकथनविरोधादित्यन्यत्रोक्तं हेतुं व्यनक्ति ॥ **यावदिन्द्रा इति** ॥ यावदाभूतसङ्कल्पमित्यादिरादिपदार्थः । नित्यनरकोक्तिर्विरुद्धेति न्यायविवरणशेषं योजयितुं प्राक् श्रुतिस्मृतिषु नित्यनरकोक्तिं हृदि कृत्वा शङ्कते ॥ **न चोभयमिति** ॥ नित्यफलत्वमनित्यफलत्वं चेत्यर्थः ॥ **विरोधादिति** ॥ एतेन नरकनित्यत्वस्याप्युक्तिर्विरुद्धेति शेषस्यार्थ उक्तो भवति । अद्यापि नरकभेदानुक्तेरिति भावः । नरकस्येत्यनुक्त्वा नरकभोगस्येत्युक्तितात्पर्यं व्यावर्त्य शङ्कापूर्वमाह ॥ **न चैकस्यैव पुरुषेत्यादिना** ॥ नित्यनरकोक्तिविरुद्धेति न्यायविवरणशेषं पूर्वाक्षेपरूपफलपरतयापि विवृण्वन् कृत्स्नवाक्यमुपसंहारपरतयापि योजयति ॥ **अत इति** ॥ नरकभोगस्यानित्यत्वकथनादित्यर्थः ॥ **इत्यनुकृष्यत इति** ॥ अत एव प्राक् प्रथमानिर्देश इति भावः । 'प्राक् तानहं द्विषत' इत्यादिसङ्ग्रहेण बहुवचनस्य कृतार्थत्वादिहाविवक्षितबहुवचनं धातुमात्रमनुकृष्यत इति भावेनाह ॥ **तां स्मृतिं चेति** ॥ यद्वा भाष्यस्थस्मृतिरुपलक्षणम् । स्मृत्यन्तराण्यपि ध्येयानीति भावः । कथं स्मृत्युक्त्योक्तशङ्कानिरास इत्यतो रौरवोऽथ महांश्चैव इति

(तत्त्वप्रकाशिका)

**नित्यानित्यतया विभाग इति चेत् 'रौरव' इति स्मृतेरित्यर्थः । महान्महारौरवः । एतानि पञ्च । सप्त प्रधानानीत्यनेन बहुनरकाभिधायकपुराणविरोधोऽपि परिहृतः । अतो भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वादितरपापेभ्योऽतिशयेन तत्र वैराग्येण भवितव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अतिशयेन वैराग्यं प्रयोजकमित्यत्र अतिशयेन यद्वैराग्यं विष्णुभक्तैः क्रियते तत्प्रयोजनं नेति पूर्वेणान्वयः । सप्तेति नरकैः सह पाठात् । 'तामिस्रश्चान्धतामिस्र' इति स्मृतौ नित्यनरकावेतौ तमस्त्वतोऽन्यदिति न मन्तव्यम् । सप्तातिरिक्ततमसोऽपि सत्त्वेऽष्टाविति ब्रूयात् । अतो वक्ष्यमाणं तृतीयत्वमप्येष्वेव द्वयोरिति ज्ञेयम् । किञ्च एतानि पञ्चेति द्वयोरेव टीकाकृता विभजनात् स्मृतिरपि द्वयोरेवावरोहमाह । तमोऽन्तरसद्भावे तत्राप्यवरोहो वक्तव्यः । सप्तस्वेवावरोहस्य परिसमापितत्वाच्च न तमोन्तरमस्तीति गम्यते । अत एव 'तामिस्रान्धादिकाख्ये तमसि' इत्यनयोरेव तमस्त्वं शिष्टैरपि निर्णीतम् । अन्धमिति पदमादौ यस्य तामिस्रस्य सोऽन्धादिकोऽन्धतामिस्र इत्यर्थः ।

## भावबोधः

**नित्यनरकसमर्थनादिति** ॥ नित्यनरकसमर्थनस्य 'संयमने तु' इति उक्तकैमुत्यसिद्ध्युपयोगित्वादनन्तरसङ्गतिरिति भावः ॥ **नित्यफलदमिति** ॥ अत्र नरकं नित्यफलदं न भवत्युत भवतीति चिन्ता । तदर्थं 'यावदिन्द्राश्चतुर्दश' 'चकार नरकं शून्यम्' इत्यादिवाक्यविरोधोऽस्ति न वेति । तदर्थं नरकमेकमुतनित्यानित्यविभागेनानेकमिति ॥ **पूर्वोक्तिरिति** ॥ अवरोह इति पूर्वोक्तिर्लोके फलस्यानित्यत्वदृष्टिरित्यर्थः । नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह ॥ **पुनरावृत्तिमदेवेति** ॥

ननु नरकभोगस्य नित्यत्वेऽपि नानित्यत्वोक्तिर्विरुद्धा । नरकस्य भगवद्द्वेषाद्यतिपापिनां नित्यफलदत्वेऽप्यपापिनां पुनरावृत्त्यपेक्षया 'यावदिन्द्राश्चतुर्दश' इत्याद्यनित्यत्वकथनसम्भवादित्याशङ्क्य निषेधति ॥ **न चैकस्येवेति** ॥ नरकस्य केषाञ्चिन्नित्यफलत्वे शून्यत्वरूपानित्यत्वकथनविरोधः स्यादित्यर्थः । ननु सप्तानामपि नित्यफलदत्वे पुनरनित्यत्वोक्तिविरोध इत्यतो विभागादिति न्यायविवरणोक्तयुक्तिमाह ॥ **तेपु चेति** ॥

(भाववोधः)

ननु रौरवादिपञ्चभ्य एवारोहावरोहौ न तु तामिस्रान्धतामिस्राभ्याम् । तथा 'चैतानि क्रमशो गत्वा' इति कथं सप्तानां परामर्श इत्यत आह ॥ **एतानि पञ्चेति** ॥ तथा च'एत'च्छब्देन रौरवादिपञ्चैव परामृश्यन्ते न तु सप्तापीत्यर्थः ।

ननु तत्र हैके नरकानेकविंशतिं गणयन्ति । अष्टाविंशतिनरकाः । एवंविधानरकाः यमालये सन्ति । शतशः सहस्रश इत्यादिना भागवतादौ बहुनरकोक्तेः कथं न तद्विरोधः सूत्रस्मृत्योरित्यतस्तद्विरोधपरिहारार्थमेवेति सप्तप्रधानानीति विशेषोदाहरणमित्यभिप्रेत्याह– **सप्त प्रधानानीत्यनेनेति** ॥ अन्यथा न्यायविवरणवत् 'द्वौ नित्यौ संप्रकीर्तितौ' इत्यन्तमेवोदाहर्तव्यमिति भावः ।

## भावदीपः

भावार्थमाह ॥ **नित्यनरकसमर्थनादिति** ॥ नरकानित्यत्ववचनानां विषयभेदाय नरकभेदकथनेनेति योज्यम् । एतेन संयमनसूत्रादौ नैवैत उत्तिष्ठन्ते । न तेषामुत्थितिरित्यादिनोक्तानुत्थानपातो न युक्तः । नरकानित्यत्ववचनविरोधादित्याक्षेपात्सङ्गतिः सूचिता । चिन्ताफलमाह ॥ **यदीति** ॥ **पूर्वोक्तिरिति** ॥ अवरोहादिपदेनानुत्थानपातोक्तिः लोके कारागृहादौ पतितस्योत्थानदृष्टिश्चेत्यर्थः । सूत्रादौ नरकभेदोक्तेरसाङ्गत्यभ्रमनिरासाय तात्पर्यतस्तन्निवर्त्य चोद्यमाह ॥ **पुनरावृत्तिमदेवेति** ॥ नरकभोगस्यानित्यत्वकथनविरोधादित्यन्यत्रोक्तं हेतुं व्यनक्ति ॥ **यावदिन्द्रा इति** ॥ यावदाभूतसङ्कल्पमित्यादिरादिपदार्थः । नित्यनरकोक्तिर्विरुद्धेति न्यायविवरणशेषं योजयितुं प्राक् श्रुतिस्मृतिषु नित्यनरकोक्तिं हृदि कृत्वा शङ्कते ॥ **न चोभयमिति** ॥ नित्यफलत्वमनित्यफलत्वं चेत्यर्थः ॥ **विरोधादिति** ॥ एतेन नरकनित्यत्वस्याप्युक्तिर्विरुद्धेति शेषस्यार्थ उक्तो भवति । अद्यापि नरकभेदानुक्तेरिति भावः । नरकस्येत्यनुक्त्वा नरकभोगस्येत्युक्तितात्पर्यं व्यावर्त्य शङ्कापूर्वमाह ॥ **न चैकस्यैव पुरुषेत्यादिना** ॥ नित्यनरकोक्तिविरुद्धेति न्यायविवरणशेषं पूर्वाक्षेपरूपफलपरतयापि विवृण्वन् कृत्स्नवाक्यमुपसंहारपरतयापि योजयति ॥ **अत इति** ॥ नरकभोगस्यानित्यत्वकथनादित्यर्थः ॥ **इत्यनुकृष्यत इति** ॥ अत एव प्राक् प्रथमानिर्देश इति भावः । 'प्राक् तानहं द्विषत' इत्यादिसङ्ग्रहेण बहुवचनस्य कृतार्थत्वादिहाविवक्षितबहुवचनं धातुमात्रमनुकृष्यत इति भावेनाह ॥ **तां स्मृतिं चेति** ॥ यद्वा भाष्यस्थस्मृतिरुपलक्षणम् । स्मृत्यन्तराण्यपि ध्येयानीति भावः । कथं स्मृत्युक्त्योक्तशङ्कानिरास इत्यतो रौरवोऽथ महांश्चैव इति

(भावदीपः)

विभागादित्यन्यत्रोक्तहेतुं नरकानित्यत्वोक्तिविरोधनिरासकतया व्याकुर्वन् तत्साधकतया सूत्रभाष्यभावं वक्तुं पूर्वोक्तदिशा नित्यत्वं तावदाह ॥ **नरकभोग इति** ॥ सौत्रापिपदव्यावर्त्यं व्यनक्ति ॥ यदि न नरकैक्यं स्यान्नैतदस्तीति ॥ **सप्तापीति** ॥ एतेन सूत्रे पूर्वस्मान्नरकवाचितया संयमनपदानुवृत्तिं सूचयति । सप्तत्वमात्रोक्तावप्युक्तदिशा विरोधनिरासात्स्मृत्युक्तिर्व्यर्थेत्यत आह ॥ **कुत इति** ॥ एतानीति स्मार्तपदस्य प्राचीनसप्तनरकपरामर्शित्वभ्रमं निवारयति ॥ **एतानि पञ्चेति** ॥ इति सप्तप्रधानानीत्युक्तेरुपयोगमाह ॥ **सप्तेति** ॥ **अत इति** ॥ नरकानित्यत्वोक्तेर्भिन्नविषयतया तन्नित्यत्वश्रुत्याद्यविरोधकत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

**नित्यनरकसमर्थनादिति** ॥ अन्यथारोहावरोहावित्युक्तमयुक्तं स्यात् । कैमुत्यं च न सिद्ध्येत् इत्यनन्तरसङ्गतिरिति भावः ॥ **नित्यफलप्रदं न वेति** ॥ लोकस्य प्रलये नाशान्नित्यफलप्रदं न वेत्युक्तम् । अत्र नरकं नित्यफलप्रदं न भवत्युत भवतीति चिन्ता । तदर्थं 'यावदिन्द्राश्चतुर्दश', 'चकार नरकं शून्यम्' इत्यादिवाक्यं सर्वनरकपरमुत नरकविशेषपरमिति ॥ **पूर्वोक्तिरिति** ॥ अवरोह इति पूर्वोक्तिः लोके फलस्यानित्यत्वदृष्टिश्चेत्यर्थः । न च पूर्वोक्तेः श्रुतिस्मृतिमूलकत्वाल्लोकदृष्टेर्वैदिकेऽर्थेऽप्रसरात्कथं संशय इति चेन्न । लोकदृष्टेरपि यावदिन्द्रा इत्याद्यागमसहायवत्वादिति भावः । सूत्रभाष्याभ्यां नरकप्रभेदमुक्त्वा विरोधसमाधानात्सूचितमर्थं बुद्ध्वोक्तिरित्युक्तपूर्वपक्षन्यायं **विशदयन्पूर्वपक्षयति** ॥ पुनरावृत्तिमदेवेत्यादिना ॥ **न चैकस्यैवेति** ॥ भगवद्द्वेषिणामधिकारिणां नित्यं भोगप्रदत्वं येऽन्ये ब्रह्मद्विष इत्युक्तानां ब्रह्महननाद्यल्पपापवतामधिकारिणां पुनरावृत्यानित्यफलप्रदत्वमिति पुरुषभेदेन व्यवस्था नोपपद्यते । तथात्वे नरकस्य शून्यत्वकथनविरोधादित्यर्थः । सूत्रे संयमनमित्यस्ति । अपिशब्देन स्मरन्तीत्यनुकृष्यते । संयमनं सप्तधा प्रविभागवदेव न त्वेकम् । यतो भारते 'रौरव' इत्यादिस्मृत्या स्मृतिकर्तारः सप्तापि प्रतिपादयन्तीति सूत्रार्थं हृदि निधाय सूत्रे नरकभोगस्य नित्यत्वे समर्थनीये साङ्ख्योक्तिरसङ्गतेति शङ्कां वारयन् विभाग इत्युक्तन्यायं चारूढं करोति ॥ **भवेदयमित्यादिना** ॥ तामिस्रान्धतामिस्ररूप नित्यनरकप्राप्त्यनन्तरमारोहावरोहाभावात् एतानीति सप्तपरामर्शोऽयुक्त इत्यत आह ॥ **एतानि पञ्चेति** ॥

## तत्त्वसुबोधिनी

**नित्यनरकसमर्थनादिति** ॥ नित्यनरकसमर्थनस्य संयमने त्वित्युक्तसिद्ध्युपयोगित्वादनन्तर-सङ्गतिरिति भावः ॥ **पूर्वोक्तिरिति** ॥ अवरोह इति पूर्वोक्तिः, लोके फलस्यानित्यत्वदृष्टिरित्यर्थः । ननु तर्हि नित्यत्वानित्यत्वोक्त्यनुरोधेन नरकस्य नित्यत्वमनित्यत्वं चास्त्वित्यत आह ॥ **न चेति** ॥ ननु नरकभोगस्य नित्यत्वेऽपि नानित्यत्वोक्तिर्विरुद्धा । नरकस्य भगवद्द्वेषाद्यतिपापिनां नित्यफल-दत्वेऽप्यल्पपापिनां पुनरावृत्तिपक्षे 'यावदिन्द्राश्चतुर्दश' इत्याद्यनित्यत्वकथनसम्भवादित्याशङ्क्य निषेधति ॥ **न चैकस्यैवेति** ॥ नरकस्य केषाञ्चिन्नित्यफलत्वशून्यत्वरूपानित्यत्वकथनविरोधः स्यादित्यर्थः । ननु सप्तानामपि नित्यफलदत्वे पुनरनित्यत्वोक्तिविरोध इत्यत आह ॥ **तेषु चेति** ॥ ननु रौरवादिपञ्चभ्य एवारोहावरोहौ, न तु तामिस्रान्धतामिस्राभ्याम् । तथा चैतानि क्रमशो गत्वेति कथं सप्तानां परामर्श इत्यत आह ॥ **एतानि पञ्चेति** ॥ तथा चैतच्छब्देन रौरवादिपञ्चैव परामृश्यन्ते, न तु सप्तापीत्यर्थः । ननु तत्र ह्येके नरकानेकविंशतिं गणयन्ति, अष्टाविंशतिर्नरकाः । एवंविधा नरका यमालये सन्ति सहस्रश इत्यादि भागवतादौ बहुनरकोक्तः कथं न तद्विरोधः सूत्रश्रुत्योरित्यतः तद्विरोधपरिहारार्थमेव 'इति सप्त प्रधानानि' इति शेषोदाहरणमित्यभिप्रेत्याह ॥ **सप्त प्रधानानीत्यनेनेति** ॥ अन्यथा 'द्वौ नित्यौ सम्प्रकीर्तितौ' इत्यन्तमेवोदाहर्तव्यमिति भावः ।

## वाक्यार्थविवरणम्

**प्रकृतमिति** ॥ भगवद्गुरुद्वेषिणां फलत्वेनेति शेषः ॥ **फलेति** ॥ दुःखरूपेत्यर्थः ॥ **उत नेति** ॥ पुनरावृत्तिसद्भावेनेति भावः ॥ **उभयमिति** ॥ अनित्यत्वं नित्यफलप्रदत्वं चेत्यर्थः ॥ **एकस्यैवेति** ॥ एकमेव नरकं कस्यचित्पुरुषस्य नित्यफलप्रदं कस्यचिन्नेत्यर्थः ॥ **चकारेति** ॥ यमलोकं प्राप्तो नारदो नरके दुःखानुभवेन रोरूयमाणान् जनान् दृष्ट्वा तत्कृपया 'नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी । तथापि नरके घोरे पतन्तीत्येतदद्भुतम्' इत्युक्त्वा नारायणादिनामोच्चारणरूपं गायनं जनानाश्राव्य तांस्ततो निष्कास्य नरकं शून्यं चकारेति पौराणिकी कथा । तथा च केषाञ्चित्पुरुषाणां नित्यफलप्रदत्वाङ्गीकारे तद्विरोध इति भावः ॥ **सोक्तिरिति** ॥ केषाञ्चिदवरो-होक्तिरित्यर्थः ॥ **फलसाम्यादिति** ॥ नित्यनरकाभावेन अनित्यनरकस्य चोभयोरपि साम्येनेत्यर्थः ॥ **इतरपापेभ्यः** ॥ ब्रह्महननादिभ्यः ॥ **प्रयोजकम्** ॥ न कार्यमिति यावत् ॥ **उपपत्तेरिति** ॥ तथा

(वाक्यार्थविवरणम्)

च 'यावदिन्द्राश्चतुर्दश' 'चकार' इति श्रुतिस्मृत्यो रौरवाद्यनित्यनरकविषयत्वेन न विरोध इति भावः ॥ **तत्र** ॥ भगवद्द्वेषादौ । भाष्ये ॥ **आरोहोऽथावरोहणम्** ॥ उक्तरीत्या केषाश्चिदारोहः केषाश्चिदवरोह इत्यर्थः ।

## वाक्यार्थमञ्जरी

वैराग्यं भगवद्द्वेषादौ । पूर्वोक्तिः अवरोहः नैवेत उत्तिष्ठन्तीत्युक्तिःलोकदृष्टिः निगडस्थानादेरनिवृत्त्यफलप्रदत्वदर्शना ॥ **यावदिति** ॥ चतुर्दशेंद्रा यावत्स्वपदे तिष्ठन्ति तावत्कालं नरके तिष्ठन्तीत्यर्थः । ननु नरकभोगस्य नित्यत्वेऽपि नानित्यत्वोक्तिर्विरुद्धा नरकस्य भगवद्द्वेषाद्यतिपापीनां नित्यफलप्रदत्वेऽप्यल्पपापिनां पुनरावृत्त्यपेक्षया यावदिन्द्राश्चतुर्दशेत्याद्यनित्यत्वकथनसम्भवादित्याशङ्क्य निषेधति ॥ **न चैकस्यैवेति** ॥ नारदो नारकिणां नारायणनामस्मृतिद्वारा नरकं शून्यजनं चकारेत्यर्थः । नरकस्य केषाश्चिन्नित्यफलप्रदत्वे शून्यत्वरूपानित्यत्वकथनविरोध इति भावः ॥ **यदुक्तमिति** ॥ केषाश्चिदारोहः केषाश्चिदवरोह इति वैषम्योक्तिर्नरके वैषम्याभावादयुक्तेत्यर्थः ॥ **ॐ अपि सप्त ॐ** ॥ सप्तप्रभेदमपि स्मरन्तीत्यर्थः । ननु सप्तानामपि नित्यफलप्रदत्वे पुनरनित्यत्वोक्तिविरोध इत्यत आह ॥ **तेषु चेति** ॥ महान् रौरव इति विशेषणविशेष्यभ्रान्तिं निवारयति ॥ **महान् महारौरव इति** ॥ ननु रौरवादिपञ्चभ्य एवारोहावरोहौ न तु तामिस्रान्धतामिस्राभ्याम् तथा चैतानि क्रमशो गत्वेति कथं सप्तानां परामर्श इत्यत आह ॥ **एतानि पञ्चेति** ॥ तथा चैतच्छब्देन रौरवादिपञ्चैव परामृश्यन्ते न तु सप्तापीतिभावः । ननु ह्येके नरकानेकविंशतिं गणयंत्यष्टाविंशतिनरकाः एवं विधा नरका यमालये सन्ति शतशः सहस्रश इत्यादिना भागवतादौ बहुनरकोक्तेस्तद्विरोधः सूत्रस्मृत्योरित्यत आह ॥ **सप्त प्रधानानीति** ॥

॥ इति सप्ताधिकरणम् ॥ १२ ॥

## १३. तद्व्यापाराधिकरणम्

ईश्वरस्य नरकायुक्तेः 'सर्वं विसृजति[१] सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः' इति कौषारवश्रुतिविरोध इत्यतो वक्ति—

**॥ ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ १७ ॥**

चशब्दाददुःखानुभवेन । 'स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रवृत्तिकृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात्सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेद' इति पौत्रायणश्रुतेरविरोधः ।

'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ॥
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः' इति भागवततन्त्रे ।

### तत्त्वप्रदीपिका

दुर्गतिभेदः प्राधान्येनोदितः । यदि तत्रस्थ ईश्वरो दुःखं भोजयति स्वयं कथं तदस्पर्शी स्यात् । दुःखस्पर्शे ईश्वरत्वमेव न स्यात् । अभोजकत्वे 'सर्वं रमयति सर्वं न रमयति' इत्यादिश्रुतिविरोधश्च । यो जनो रमते तं सर्वं रमयति यो न रमते तं सर्वं न रमयतीत्यर्थः । एवमाशङ्कायामाह– '**ॐ तत्रापि च तव्द्यापारादविरोधः ॐ** ॥ प्रवर्तनव्यापाराददुःखानुभवाच्च न विरोधः । स्वातन्त्र्यादेव ।

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनवैराग्याय नरकस्य सदुःखत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । नरकस्य निर्दुःखत्वे न तत्र तत्साधने च वैराग्यं स्यादतः सदुःखत्वं साधनीयम् । प्रकृतं नरकमेव विषयः । किं सदुःखं न वेति सन्देहः । उभयविधस्थानदर्शनं सन्देहबीजम् । न नरके दुःखमस्तीति पूर्वः पक्षः । तथा हि यदि नरकेऽस्ति दुःखं तत्र पृच्छामः । किं तत्रेश्वरः प्रेरको न वेति । आद्यं दूषयति **॥ ईश्वरस्येति ॥** यदि नरकस्य सदुःखतामङ्गीकृत्य तत्रस्थानां प्रेरकतयेश्वरो वर्तत इत्यभ्युपगम्यते तर्हि तस्य दुःखिसहावस्थानान्नरकभोगप्राप्तिः । ईश्वरस्य च नरकदुःखायुक्तेर्न तत्र दुःखमिति भावः । न च वैशेष्ययुक्त्यैतत्परिहृतमिति वाच्यम् । दुःखाननुभवे सार्वज्ञाभावप्रसङ्गात् । द्वितीयं

१. पा. सृजति

(तत्त्वप्रकाशिका)

निराचष्टे ।। **सर्वमिति** ।। यदि नरके दुःखसिद्ध्यर्थं तत्रेश्वरो न प्रेरक इत्युच्यते तर्हि श्रुतिविरोधः । अतः प्रकारद्वयेनापि नरकस्य सदुःखत्वानुपपत्तेर्न तत्र तत्साधने च वृथा वैराग्यमापाद्यमिति भावः । योग्यं सर्वम् ।

सिद्धान्तयत्सूत्रमवतारयति ।। **अत इति** ।। भवत्येव नरकं सदुःखम् । न चोक्तदोषः । नरकेऽपि तस्येश्वरस्य प्रेरणरूपव्यापाराभ्युपगमेन श्रुतिविरोधाभावादिति सूत्रार्थः । सदुःखत्वे नरकस्य अस्मिन्नपि पक्षे कथितविरोधपरिहारो वाच्यः । स कुतो न सूत्रित इत्यत आह ।। **चशब्दादिति** ।। तत्राप्यदुःखानुभवेन तद्व्यापारादुभयविरोधाभाव इत्यर्थः । इति समुच्चिनोतीति शेषः । अस्यार्थस्य प्रामाणिकत्वे भवेदविरोधस्तत्कुत इत्यत आह ।। **स इति** ।। सहभाव-युक्तिपरिहारः प्रभावादिति । असार्वज्ञमाशङ्क्य सर्वं पश्यतीत्युक्तम् । अत्र स्मृतिं चाह ।। **नरकेऽपीति** ।। सर्वज्ञस्य कथं दुःखानुभवाभाव इत्यत आह ।। **नीचेति** ।। अतो नरकस्य सदुःखत्वाद्भवितव्यं तत्र वैराग्येणेति सिद्धम् ।

## गुर्वर्थदीपिका

वैशेष्ययुक्तयेत्यनेन 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' इति सूत्रोक्तयुक्तिं स्मारयति । हानोपानादीनामपि व्यवहारत्वप्रतीतेर्व्यापार एव व्यवहारो नोच्चारणमात्रम् । तदपि वाचो व्यापार-रूपत्वेनैव व्यवहारपदवाच्यत्वमिति भावेनोक्तम् ।। **प्रेरणरूपव्यापाराभ्युपगमेनेति** ।। ननु तमसि वृद्धिह्रासरहितजीवचैतन्यस्य दुःखानुभवेऽपि का क्षतिः । मुक्तौ च तादृशजीवस्य सुखानुभवे को लाभः । दुःखं दुःखतयैव दोषः सुखं सुखतयैव गुणः । न तयोः पुनर्हानिलाभान्तरचिन्तेति चेन्न । सहिष्णूनां स्वसहनशक्त्या दुःखेऽप्यनिष्टत्वादर्शनेन मुमुक्षूणां स्वविरक्तिशक्त्या वैषयिक-सुखेष्विष्टत्वादर्शनेन च तयोरपि गुणदोषान्तरचिन्ताया आवश्यकत्वात् ।

किञ्च सुखस्य दुःखस्य चैतन्यस्वरूपत्वेनैव गुणत्वे दोषत्वे च बाह्यसुखदुःखयोर्गुणता दोषता च न स्यात् । तदुभयरूपमनसि च तयोर्गुणता दोषता च स्यात् । अनुभवाद्गुणदोषतेति चेत् सर्वज्ञपरमात्मनोऽपि तत् स्यात् । स्वसमवेततदनुभवस्य च समवायनिराकरणेन निराकृतत्वात् । समवायवादिनां मते समवायस्यैकत्वेन पुनः परमात्मन्येव प्रसङ्गाच्च । दुःखस्वरूपत्वं परमात्मनि नास्तीति तु न सर्वाधारे परमात्मनि वक्तुं युक्तम् । स्वीयतया तदनुभवश्चेत्समवायाभावे स्वीयत्वं

(गुर्वर्थदीपिका)

स्वसंयोगो वा स्वाश्रितत्वं वा स्यात् । तदपि परमात्मन्येव गतम् । प्रत्ययार्थमुपेक्ष्य स्वत्वमेव स्वीयत्वमिति पक्षोऽपि बाह्यसुखदुःखयोः स्वीयत्वासम्भवादुपेक्षणीय एव । देहदाहकतया सर्वेषामनिष्टरूपेऽग्नावेवाग्निस्तम्भनशक्तिमति देहदाहेऽनिष्टत्वादर्शनाच्च । दुष्टानि स्वस्वव्यापारोदासीनानि खानि इन्द्रियाणि यस्मात्तद्दुःखं, सु सुष्ठूनि स्वस्वव्यापारेषु सम्यक्प्रवर्तमानानि खानि यस्मात्तत्सुखमिति व्युत्पत्तेश्चैतन्य एव गुणदोषयोरभावेऽयोगाच्च । तस्मात्सुखदुःखाभ्यां चैतन्य एव कश्चिद्गुणः काचिद्धानिश्च वक्तव्या । तदुभयं च किमिति चेत्सत्यम् । दुःखानुभवे सत्यौत्तरव्यापारान्प्रत्यननुकूलताख्या काचिन्नीचता चिद्रूपमन आदावेव भवति । सुखानुभवे च तं प्रति सम्यगनुकूलताख्या काचिदुच्चता चिद्रूपमनआदावेव जायते । सा च नीचता सर्वज्ञतया दुःखद्रष्टुरपि परमात्मनो नास्तीति 'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत' इति स्मृतेरभिप्रायः ।

## भावबोधः

**सदुःखत्वेति** । निर्णीते धर्मिणि धर्मचिन्तेति पूर्वाधिकरणेऽवान्तरभेदभिन्ने नरकस्वरूपे निर्णीते इदानीं तद्गतसदुःखत्वरूपप्रकारविचारः क्रियत इत्यनन्तरसङ्गतिरिति भावः । सदुःखं न वेति सन्देह इति । अत्र नरकं निर्दुःखमुत सदुःखमिति चिन्ता । तदर्थं दुःखिसहावस्थानमीश्वरस्य दुःखापादकं न वेति । तदर्थमीश्वरस्य दुःखपरिहारोपायोऽस्त्युत नास्तीति ॥ **उभयविधस्थानेति** ॥ निर्दुःखं स्वर्गादिकं सदुःखं भूम्यादिकमित्यर्थः । भाष्ये ईश्वरस्य नरकायुक्तेः श्रुतिविरोध इति यथाश्रुतान्वयभ्रमनिरासायेश्वरस्य नरकायुक्तेरिति भाष्यं सहावस्थानादीशस्यापि दुःखप्राप्तिरिति न्यायविवरणं च सौत्र'च'शब्दनिवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तम् । सर्वं विसृजतीत्यादि भाष्यं तु 'तत्रापि च तद्व्यापारादविरोधः' इति सूत्रांशनिवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तमित्यभिप्रेत्य पूर्वपक्षं विवृणोति । तथा हीत्यादिना सहावस्थानादिति न्यायविवरणोक्तसहावस्थानरूपापादकासिद्धिपरिहारार्थमाह ॥ **यदि नरकस्येति** ॥ इदानीं समग्रं न्यायविवरणं योजयति ॥ **तर्हि तस्येति** ॥ विपर्ययपर्यवसानपरतया भाष्यं योजयति ॥ **ईश्वरस्येति** ॥ नरकायुक्तेरित्यस्य नरकेऽवस्थानायुक्तेरिति प्रतीतिनिरासार्थमुक्तम् ॥ **दुःखायुक्तेरिति** ॥

ननु 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ' इति सूत्रेण सार्वज्ञ्यादिसामर्थ्यवैशेष्येण जीवेन सहावस्थितावपि न जीवसमानभोगप्राप्तिरित्युक्तत्वात् कथमेवं पूर्वपक्षोत्थानमित्याशङ्क्य

(भावबोधः)

परिहरति ॥ **न च वैशेष्ययुक्त्येति** ॥ **सार्वज्ञाभावप्रसङ्गादिति** ॥ तथा च सार्वज्ञादि-वैशेष्ययुक्तिरेवासिद्धेति भावः । अत एव नीचोच्चतैवेत्यादिना सार्वज्ञासिद्धिशङ्का परिहरिष्यत इति हृदयम् ।

ननु साधूनेव रमयति नासाधून् । असाधूनेव न रमयति न साधूनिति, कथं सर्वं रमयति सर्वं न रमयतीत्युक्तमित्यत आह ॥ **योग्यं सर्वमिति** ॥ सहभावयुक्तिपरिहारः **प्रभुत्वादितीति** ॥ अनेन स्वातन्त्र्यात् कारणाभावादिति न्यायविवरणमप्युक्ततात्पर्यं भवति ।

## भावदीपः

**सदुःखत्वसमर्थनादिति** ॥ दुःखाभोगेनैवेशेन प्रेर्यत्वोक्तेरिति भावः । एतेनानिष्टादिकारिणा-मित्यत्र यन्नरकस्य नित्यत्वं दुःखात्मकत्वं चावरोहादिपदादिनाभिमतं तत्रानित्यत्वोक्तिविरोध-निरासेन व्यक्तिभेदसाक्षेपं नित्यत्वं समर्थ्येदानीमीश्वरस्य निर्दुःखत्वादिश्रुतिविरोधनिरासेन दुःखात्मकत्वं समर्थ्यत इति वा एवं तर्हि अनिष्टादिकारिणां नित्यानित्यनरकभोक्तृत्वे तत्सहा-वस्थानादीशस्यापि नरकदुःखप्राप्तिरिति शङ्कोदयाद्वा सङ्गतिः सूचिता । (**उभयविधावस्थेति** ॥ मूर्छासुषुप्त्यवस्थयोः सदुःखनिर्दुःखयोर्दर्शनमित्यर्थः ।) भाष्यमेकवाक्यतायामनन्वितमिति मत्वा विकल्पपूर्वं वाक्यभेदेन योजयति ॥ **किं तत्रेति** ॥ सहावस्थानादीशस्यापि नरकदुःख-प्राप्तिरित्यन्यत्रोक्तापादनस्य भाष्यवाक्यं विपर्ययपर्यवसानमिति भावेन ग्रन्थद्वयोक्तवाक्यद्वय-मसङ्गततया प्रतीयमानं सङ्गमयितुमापादकं पूरयति ॥ **यदीति** ॥ **सदुःखतामिति** ॥ चशब्दो दुःखान्तरसमुच्चयार्थः । तदेवोत्तरसूत्रेऽनूद्यत इत्युक्तदिशाऽनिष्टादिनयसिद्धां सदुःखतामित्यर्थः ॥ **प्रेरकतयेति** ॥ अन्तर्यामिनयादावुक्तदिशा वा स एव च कर्मानुस्मृतिशब्दविधिभ्य इति वक्ष्यमाणदिशा वेति भावः । ईश्वरस्येति हेतुगर्भम् । अन्यथा चैत्रादिवदीश्वरत्वमेव न स्यादिति भावः । न तत्र दुःखमिति भाष्यशेषोक्तिः । एवं च शब्दाद्दुःखानुभवेनेति भाष्यव्यावर्त्यचोद्यं विवृत्य नीचोच्चतैव दुःखादेर्भोग इति भाष्यव्यावर्त्यं गतार्थत्वनिरासकं चोद्यं व्यनक्ति ॥ **न च वैशेष्येति** ॥ लिङ्गपादीयाद्याधिकरणगुणसूत्रे 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ' इत्यत्रोक्तसामर्थ्यातिशयवत्त्वरूपयुक्त्येत्यर्थः ॥ **सार्वज्ञाभावेति** ॥ सुखदुःखगोचरापरोक्षज्ञानस्यैव भोगशब्दार्थत्वात् । तथा च प्रागुक्तपरिहारो न युक्त इति भावः । ईश्वरस्य नरकायुक्तेरित्यस्य

(भावदीपः)

नरके प्रेरणायुक्तेः प्रेरणायोगस्य प्रेरणाभावस्योक्तौ सत्यामित्यर्थकत्वमुपेत्य कृत्स्नं भाष्यमेकवाक्यतया द्वितीयपक्षनिरासकत्वेन योजयति । यदीत्यादिना ॥ **श्रुतीति** ॥ 'स सर्ववित्सर्वं सृजति' इत्यादिश्रुतीत्यर्थः । तत्र सर्वं रमयति रमणयोग्यं सर्वं रमयति तदयोग्यं सर्वं न रमयतीत्यर्थः । 'स सर्ववित्' इत्यादिशेषोक्तिरीश्वरपरत्वद्योतनाय । तत्र वियत्पादीयन्यायेन सर्वसृष्टिविलयौ बोध्यौ ॥ **अत इति** ॥ प्रेरकस्येश्वरस्यापि दुःखप्रसङ्गादप्रेरकत्वे च श्रुतिविरोधादित्यर्थः ॥ **प्रकारेति** ॥ प्रेरकत्वाप्रेरकत्वरूपप्रकारद्वयेनापीत्यर्थः । सर्वं रमयति सर्वं न रमयतीत्यनयोर्विरोधनिरासाय सर्वशब्दार्थमाह ॥ **योग्यं सर्वमिति** ॥ नरकस्य सदुःखत्वे प्राप्तदोषनिवर्तकतया सूत्रं व्याकुर्वन् प्राक्सिद्धमेवार्थमनुवदति ॥ **भवत्येवेति** ॥ अनात्मविदित्यत्रात्मपदेन प्रकृत ईश्वरस्तच्छब्देन परामृश्यत इति भावेनाह ॥ **तस्येश्वरस्येति** ॥ **उभयविरोधेति** ॥ दुःखाभोगविरोधो वा सर्वप्रेरकत्वश्रुतिविरोधो वा नेत्यर्थः । श्रुतौ हेतूक्तेरुपयोगमाह ॥ **सहभावेति** ॥ दुःखिसहावस्थानादित्यादिना प्रागुक्तयुक्तीत्यर्थः । न च सहावस्थानादीशस्यापि नरकदुःखप्राप्तिः स्वातन्त्र्यादित्यन्यत्रोक्तेरिति भावः । श्रुतौ 'स स्वर्गः' इत्यादिशेषोक्तिः । प्राक् तदन्तरसूत्रादौ जीवेन सहेशस्य स्वर्गादाववस्थानमपि सम्मतं यच्च कृतात्यय इत्यादिना जीवेन सह भूम्यादाववस्थानं यच्च न तृतीय इत्यादावग्रे दुःखैकरूपे तमस्यपि सहावस्थानमभिप्रेतम् । तत्र सर्वत्रापि न जीववत्तत्तल्लोकगतसुखदुःखभोगोऽस्तीत्युक्तवक्ष्यमाणस्थलेष्वपि विरोधशङ्काव्युदासाय । अत एव स्मृतावप्युच्यत इति पदम् । असौ दुःखभुक् न चेदसर्वज्ञः स्यात् दुःखापरोक्षस्यैव दुःखभोगशब्दार्थत्वादित्यत उक्तं श्रुतौ 'सर्वं पश्यति' इति । तत्र हेतुः सर्वं कारयतीति । ईशस्य दुःखाभोगे कैमुत्यन्यायेनासौ दुःखभुग्य एवं वेदेति ॥ **असार्वज्ञमिति** ॥ नासौ दुःखभुगित्युक्त्या प्रसक्तमिति भावः ॥ **अत्र स्मृतिं चेति** ॥ शङ्कापरिहाराय दुःखभोगशब्दार्थमन्यथा वक्तुमिति योज्यम् ॥ **इत्यत आहेति** ॥ अत्र नीचोच्चता नाम भिन्नांशहीनस्यापि जीवस्य सांशत्वातूलपिण्डस्येव स्वरूपसंकोचविकासौ । यथोक्तं क्षपणकपरीक्षायां न च पर्यायादप्यविरोधो विकारादिभ्य इति सूत्रे नानित्यतास्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदित्यनुभाष्यसुधायाम् । उक्तं च बृहद्भाष्ये षष्ठे 'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तथैव सुमहातेजः करोति भगवान्महत्' इति । महच्च करोतीत्यर्थः । त्रयोदशे गीतातात्पर्ये तु 'तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते । तदभावान्नाभिमानी भगवान्पुरुषोत्तम' इति ।

(भावदीपः)
अभिमतिरेव भोग इत्युक्तम् ॥ **अत इति** ॥ ईश्वरस्यादुःखानुभवेन तद्व्यापारोररीकरणे-नोक्तद्विविधविरोधस्याभावादित्यर्थः ।

## अभिनवचन्द्रिका

**उभयविधस्थानेति** ॥ वैकुण्ठभूलोकदर्शनं सन्देहबीजमित्यर्थः । नरके दुःखाङ्गीकारे ईश्वरस्य दुःखं स्यादित्यनिष्टमापदयितुं नरके ईश्वराभावात् न तस्य दुःखापादनं युक्तमित्याशङ्कानिरासाय पृच्छति **किं तत्रेति** ॥ **आद्यं दूषयतीति** ॥ नरके ईश्वरमङ्गीकृत्य तत्र दुःखमस्तीति वदन्तं वादिनं दूषयतीत्यर्थः । एतेन नरके दुःखस्यैव दूषणीयत्वात्, तत्रेश्वरोऽस्तीत्याद्यपक्ष-दूषणमयुक्तमिति परास्तम् । **यदि नरकस्येति** ॥ अत्र यदि नरकस्य सदुःखताऽङ्गीक्रियते इत्येतत्, आपादकं तर्हि ईश्वरस्य दुःखभोगप्राप्तिः स्यादित्येवमापाद्यम् । नरकस्य सदुःखत्वं नेश्वरदुःख-भोगाऽऽपादकं नियामकाभावादित्यत उक्तम् **दुःखिसहावस्थानादिति** ॥ दुःखिसहावस्थानम-सिद्धमित्याशङ्का परिहाराय तत्रस्थानां 'प्रेरकतया ईश्वरोऽभ्युपगम्यत'इत्यनेन पराऽभ्युपगमप्रदर्शनं कृतमिति बोध्यम् । एतेन यदि नरकस्य सदुःख ताऽङ्गीक्रियते, तर्हि ईश्वरस्य दुःखभोगप्राप्तिः स्यादित्येतावतैव पूर्णत्वात् अधिकं व्यर्थमिति परास्तम् । विपर्यये पर्यवसानमाह– **ईश्वरस्येति** ॥ भूलोके दुःखिसहावस्थितस्यापि ईश्वरस्य शक्तिवैशेष्यात् दुःखाऽभोगवत् नरकेऽपि दुःखाऽभोगोऽस्त्वित्याशङ्क्य निषेधति **न चेति** ॥ कुतो नेत्यत आह– **दुःखाननुभव इति** ॥ युज्यते दुःखिना सहावस्थितस्यापि ईश्वरस्य भूलोके स्वीयतया दुःखानुभवाऽभावः । भूलोकस्य सर्वेषां स्वस्थितानां दुःखजननस्वभावाभावेन ईश्वरीय दुःखाभावात् । अस्वकीयस्य दुःखस्य स्वकीयतयाऽननुभवस्य गुणत्वेन सार्वज्ञाऽविघातकत्वात् । नरकस्थस्य तु ईश्वरस्य न स्वीयतया दुःखस्याऽननुभवाभावो युज्यते । नरकस्य स्वस्थितानां सर्वेषां दुःखजननस्वभाववत्त्वेन स्वकीय-दुःखप्राप्त्या तदनुभवाभावस्य सार्वज्ञविरोधित्वादिति भावः ॥ **द्वितीयमिति** ॥ द्वितीयवादिनं निराचष्ट इत्यर्थः ॥ **प्रकारद्वयेऽपीति** ॥ नरके ईश्वराङ्गीकारे ईश्वरस्य दुःखप्राप्त्या न नरकस्य दुःखजननस्वभावः । तदनङ्गीकारे तु 'सर्वं विसृजति' इति श्रुत्या तस्य कार्यमात्रं प्रति कारणत्वात् तद्रहितप्रदेशे दुःखसम्भवेन प्रकारद्वयेऽपि नरकस्य सदुःखत्वानुपपत्तिरिति भावः ॥ **न चोक्तदोष इति** ॥ ईश्वरं विना नरके दुःखाङ्गीकारे तस्य सर्वकारणता ग्राहकश्रुतिविरोधः स्यादित्युक्तदोषः

(अभिनवचन्द्रिका)

स्यादिति न वाच्यमित्यर्थः । **असार्वज्ञतामाशङ्क्येति ॥** 'नासौ दुःखभुग्' इत्युक्त्या सर्वथा दुःखज्ञानमेव नास्तीति मन्यमानस्य शंकामाशंक्येत्यर्थः ।

पूर्वपक्षस्तु नरकं न सदुःखं ईश्वरस्यापि दुःखप्रसङ्गात् । न च सहावस्थितयोः जीवेश्वरयोः जीवस्यैव दुःखं नेश्वरस्येति सम्भवति । न च भूलोके सहावस्थितयोः जीवेश्वरयोःजीवस्यैव दुःखं नेश्वरस्य शक्तिवैशेष्यादितिवत् नरकेऽपि वैषम्यं स्यादिति वाच्यम् । भूलोकस्य स्वस्थितानां सर्वेषां दुःखजननस्वभावाभावेन तत्र तथासम्भवेऽपि, नरकस्य स्वस्थितानां सर्वेषां दुःखजननस्वभाववत्त्वेन वैषम्यायोगात् । न च तत्रेश्वराभावान्न दुःखप्रसङ्गः । 'सर्वं सृजति'ति श्रुत्या ईश्वरस्य कार्यमात्रं प्रति कारणत्वेन तत्रेश्वराभावे सुतरां दुःखायोगात् । ततश्चोभयथापि दुःखासम्भवात् न तत्र वैराग्येण भाव्यमिति ।

सिद्धान्तस्तु भवत्येव नरकं सदुःखम् । तत्रापि ईश्वरव्यापाराङ्गीकारेण अकारणकत्वदोषाभावात् । न चेश्वरस्य दुःखप्राप्तिः । नरकस्यापि तद्वशत्वेन अदुःखानुभवेनैव तत्प्रेरकत्वात् । न च तत्र प्रमाणाभावः । 'स स्वर्गे स भूमौ स नरक' इति श्रुतेः, 'नरके पि वसन्नीश' इति स्मृतेश्च । ततश्च नरकस्य सदुःखत्वात् तत्र वैराग्येण भाव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**नरकस्येति ॥** नित्यानित्यत्वविभागयुक्ततया सिद्धस्य नरकस्य धर्मिणः सदुःखत्वरूपधर्मविचारादनन्तरसङ्गतिरपीति भावः । अत्र नरकं निर्दुःखमुत सदुःखमिति चिन्ता । तदर्थं दुःखिसहावस्थानेऽपीश्वरस्य दुःखपरिहारोपयोगितदननुभवे सार्वज्ञं चास्त्युत नास्तीति ॥ **उभयविधेति ॥** वैकुण्ठभूलोकदर्शनमित्यर्थः । वैकुण्ठे मुक्तस्थाने शापादिप्रयुक्तेषदुःखस्याप्यभावात् । सूत्रे चशब्दनिवर्तनीयपूर्वपक्षप्रदर्शकं ईश्वरस्य नरकायुक्तेरिति भाष्यं सहस्थानमिति न्यायप्रदर्शकतयापि व्याचष्टे ॥ **आद्यं दूषयतीति ॥** बहिरेव तर्कमुक्त्वा विपर्ययपर्यवसायिनः प्रदर्शनपरतया ईश्वरस्येति भाष्यं योजयति ॥ **ईश्वरस्य नरकभोगायुक्तेरिति ॥** नरकभोगस्येश्वरत्वयुक्त्या 'निरनिष्टो निरवद्य' इत्यादिश्रुत्या च विरुद्धत्वादित्यर्थः । अत एव वक्ष्यति । अस्मिन्पक्षे कथितविरोधपरिहारो वाच्य इति ।

(वाक्यार्थमुक्तावली)

ननु 'सम्भोगप्राप्तिः' इति सूत्रे सार्वज्ञादिसामर्थ्यवैशेष्येण जीवेन सह स्थितावपि न जीवसमानभोगप्राप्तिरित्युक्तत्वात्कथं पूर्वपक्षोत्थानमित्याशङ्क्य परिहरति ॥ **न च वैशेष्ययुक्त्येति** ॥ **सार्वज्ञाभावप्रसङ्गादिति** ॥ तथा च सार्वज्ञादिवैशेष्ययुक्तिरेव न सिद्धेति भावः । अत एव नीचोच्चतैवेत्यादिना सार्वज्ञादिशङ्का परिहरिष्यत इति हृदयम् । तत्रापि तद्व्यापारादविरोध इति सूत्रांशनिवर्त्यपूर्वपक्षप्रदर्शकं सर्वं सृजतीत्यादिभाष्यन्यायं प्रकारान्तरेण विवृण्वन्व्याचष्टे ॥ **द्वितीयमिति** ॥ **श्रुतिविरोध इति** । सहावस्थानप्रतिपादकश्रुतिविरोध इत्यर्थः । सर्वं रमयति सर्वं न रमयतीत्येतद्विरुद्धमित्यत आह ॥ **योग्यं सर्वमिति** ॥ यो जनो रमणयोग्यस्तं सर्वं रमयति यस्त्वरमणयोग्यस्तं सर्वं न रमयतीत्यर्थः ॥ **न चोक्तदोष इति** ॥ द्वितीयपक्षोक्तदोष इत्यर्थः । चशब्दाद्दुःखाननुभवेनाविरोध इति भाष्येऽन्वयमभिप्रेत्य शेषपूरणेन व्याचष्टे ॥ **तत्रापीति** ॥ प्रभुत्वादित्यनेनैव कारणाभव इत्युक्तन्यायः स्वतन्त्रत्वेन सहभावेऽपि दुःखकारणाभव इति सूचित इत्याह ॥ **सहभावयुक्तीति** ॥ सूत्रे व्यापारपदेन कर्तृत्वमिव कारयितृत्वमपीति भावेन भाष्ये सर्वं कारयतीत्युक्तम् ।

## तत्त्वसुबोधिनी

**सदुःखत्वेति** ॥ निर्णीते धर्मिणि धर्मचिन्तेति पूर्वाधिकरणेऽवान्तरभेदभिन्ने नरके निर्णीते इदानीं तद्गतस्य दुःखवत्वरूपधर्मविचारः क्रियत इत्यनन्तरसङ्गतिः ॥ **उभयविधस्थानेति** ॥ निर्दुःखं स्वर्गादिकं सदुःखं भूम्यादिकमित्यर्थः । भाष्ये ईश्वरस्य नरकायुक्तेः श्रुतिविरोध इति यथाश्रुतान्वयभ्रमनिरासाय ईश्वरस्य नरकायुक्तेरिति भाष्यं सौत्रचशब्दनिवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तम् । 'सर्वं विसृजति' इत्यादि भाष्यं तु तत्रापि च तद्व्यापारादविरोध इति सूत्रांश-निवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तमित्यभिप्रेत्य पूर्वपक्षं विवृणोति ॥ **तथा हीत्यादिना** ॥ विपर्यये पर्यवसानपरतया भाष्यं योजयति ॥ **ईश्वरस्येति** ॥ नरकायुक्तेरित्यस्य नरकेऽवस्थानायुक्तेरिति प्रतीतिनिरासार्थमुक्तम् ॥ **दुःखायुक्तेरिति** ॥ ननु 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ' इति सूत्रेण सार्वज्ञादिसामर्थ्यवैशेष्यात् जीवेन सहावस्थितावपि न जीवसमानभोगप्राप्तिरित्युक्तत्वात् कथमेवं पूर्वपक्षोत्थानमित्याशङ्क्य परिहरति ॥ **न च वैशेष्येति** ॥ **सार्वज्ञाभावेति** ॥ तथा च सार्वज्ञादिवैशेष्ययुक्तेरेवासिद्धिरिति भावः । अत एव नीचोच्चतैवेत्यादिना सार्वज्ञासिद्धिशङ्कां परिहरतीति हृदयम् । ननु साधूनेव रमयति नासाधून् । असाधूनेव न रमयति न साधून् इति कथं

(तत्त्वसुबोधिनी)
सर्वं रमयति सर्वं न रमयतीत्युक्तमित्यत आह ॥ **योग्यं सर्वमिति** ॥ नन्वीश्वरस्य दुःखिजीवसहभूतस्य सदुःखत्वं स्यादित्यत आह ॥ **सहभावेति** ॥

## वाक्यार्थविवरणम्

**तत्साधने** पापे **नरकं** नरकस्थानम् । दुःखज्ञानमेव दुःखानुभव इत्यभिप्रेत्याह ॥ **दुःखेति** ॥ **तर्हि श्रुतिविरोध इति** ॥ 'सर्वं न रमयत्यन्तरस्मिन्निविष्ट' इति सर्वेषां सुखदुःखादिप्रदत्वेनेश्वरस्य सद्भावप्रापकश्रुत्यादिविरोध इत्यर्थः । तथा चैवं दुःखादिप्रदत्वेन श्रुतिसिद्धेश्वरस्य नरकेऽनङ्गीकारे दुःखमेव न सम्भवति । तत्प्रदातुरेवाभावादिति भावो द्रष्टव्यः । एवं हि सति अतः प्रकारद्वयेऽपि न नरकस्य सदुःखत्वानुपपत्तेरित्युत्तरटीकावाक्यं युक्तम् । अन्यथेश्वरस्य नरके सद्भावपक्षे नरकस्य सदुःखत्वानुपपत्तावपि प्रेरको नेति पक्षे कथं नरकस्य सदुःखत्वानुपपत्तिः । अतः प्रकारद्वयेऽपीत्युक्तमयुक्तमिति शङ्कानवकाश इति ध्येयम् ॥ **उभयविधेति** ॥ नरकस्य सदुःखत्वपक्षे तत्रेश्वरसत्त्वानङ्गीकारे श्रुतिविरोधः । तत्सत्त्वाङ्गीकारे दुःखिना सहावस्थानाद्दुःखप्राप्तिरूपो विरोध इत्युभयविधविरोधेत्यर्थः ॥ **सहभावयुक्तीति** ॥ दुःखिना सहावस्थानरूपयुक्तीत्यर्थः ॥ **असार्वज्ञेति** ॥ 'नासौ दुःखभुक्' इति तस्य दुःखानुभवानङ्गीकार इति शेषः । भाष्ये एवं वेत्तुः फलमुक्तं **नासाविति** ॥ य एवं वेदासौ न दुःखभुक् । 'तं यथा यथोपासत' इति श्रुतेरित्यर्थः ॥ **कथमिति** ॥ तथात्वे सार्वज्ञमेव न स्यादिति भावः ॥ **आहेति** ॥ दुःखानुभवो नाम दुःखज्ञानमात्रं न विवक्षितमित्याशयेनाहेत्यर्थः । **तत्र** तत्साधने च ।

## वाक्यार्थमञ्जरी

**उभयविधस्थानेति** ॥ निर्दुःखं स्वर्गादिकं सदुःखं भूम्यादिकमित्यर्थः । ननु 'ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्याद्' इति सूत्रेण सार्वज्ञादिसामर्थ्यविशेषवत्वेन जीवसहावस्थितावपि न जीवसमानभोगप्राप्तिरित्युक्तत्वात्कथमियं शङ्केत्याशङ्क्य निषेधति ॥ **न च वैशेष्येति** ॥ **सार्वज्ञाभावप्रसङ्गादिति** ॥ तथा च सार्वज्ञादिसामर्थ्यवैशेष्ययुक्तिरेवासिद्धेति भावः । ननु साधूनेव रमयति नासाधून् असाधूनेवारमयति न साधूनतः कथं सर्वं रमयति सर्वं न रमयतीत्युक्तमित्यत आह ॥ **योग्यं सर्वमिति** ॥ **ॐ तत्रापि च तद्व्यापारादविरोधः ॐ** ॥ तत्रापि च नरकेऽपि च दुःखाभोगेनैव तद्व्यापारात्तस्य हरेः प्रेरणाख्यव्यापारादविरोधः हरेर्दुःखभोगप्रसङ्गेन वा सर्वं रमयतीति श्रुत्या वा न विरोध इत्यर्थः ।

॥ इति तद्व्यापाराधिकरणम् ॥ १३ ॥

## १४. विद्याकर्माधिकरणम्

'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' (छां.उ.५-१०-८) इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह—

**॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥**

विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि प्रकृतत्वात् ।

'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।
तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तम' इति च भारते ॥

### तत्त्वप्रदीपिका

क्षुद्रमिश्राण्यल्पमिश्राणि । मिश्रत्वं सुखदुःखाभ्याम् । 'जायस्व म्रियस्व' इति स्वप्रत्ययः पौनःपुन्ये । पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः । 'क्रियासमभिहारे लोड् लोटो हि स्वौ' इति हि पाणिनिर्बभाण । पौनःपुन्यं भृशार्थो वा क्रियासमभिव्याहारः । 'अथैतयोः पथोः' इति देवयानपितृयानयोरिति पूर्वः पक्षः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति प्रस्तुतत्वात् । विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ 'एतयोः पथोः' इति विद्याकर्मणोरित्यर्थः । तयोरपि तत्रैव तत्साधनत्वेन प्रस्तुतत्वात् । सर्वत्र चास्वातन्त्र्यसाम्येऽपि 'तद्विजिज्ञासस्व' 'ज्योतिष्टोमेन यजेत' इति विहितत्वात्साधनयोः । तद्वत एव फलप्राप्तिरिति नियमाच्च । विद्याकर्मरहितानां देवयानपितृयानाभ्यां गतिर्न लभ्यते, किन्तु जन्ममृत्योरावृत्तिरेवेति युक्तं वक्तुम् । विहितमकुर्वतां दुःखप्राप्तिरिति हि शास्त्रस्थितिः । कर्तृत्वं तु परतन्त्रस्यापि जीवस्य पुरैव परीक्षितम् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं भूतानां गतिस्वातन्त्र्यनिरासादस्ति शास्त्रादिसङ्गतिः । यदि गतिस्वातन्त्र्यं भूतानां स्यात्तदा वैराग्यवैयर्थ्यप्रसङ्गात्तन्निरसनीयम् । प्रकृतः पितृयानस्तत्प्रकृतिसन्निधापितो देवयानश्च विषयः । किं भूतैः स्वातन्त्र्येण गम्यो न वेति सन्देहः । लौकिकमार्ग-

(तत्त्वप्रकाशिका)

दर्शनमलौकिकत्वं च सन्देहबीजम् । पूर्वपक्षयति ॥ अथेति ॥ अस्त्येव भूतानां गतिस्वातन्त्र्यं 'तेऽर्चिपमभिसम्भवन्ति' 'ते धूममभिसम्भवन्ति' इत्युक्त्वा 'अथैतयोः' इति श्रुतौ तदुक्तेः । न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेति प्रयोगो युज्यते । न च वाच्यं जीवस्यास्वातन्त्र्यं प्रतिपादित- मतः कथं गतिस्वातन्त्र्यमिति । तदधीनस्वातन्त्र्यस्य विवक्षितत्वात्साधनवत् । तादृशस्याप्यभावे वैराग्यादिसाधनमपि नोत्पादयितुं शक्यं स्यात् । न च फलस्वातन्त्र्ये सर्वेषां तत्प्राप्तिः स्यादिति वाच्यम् । साधनेऽपि साम्यात् । अतो 'मूले लब्धफलो नैव शाखाग्रं गन्तुमिच्छति' इति न्यायात्फल एव स्वातन्त्र्यात्किं वैराग्यादिसाधनेनेति भावः । उक्तयोः पथोर्मध्ये यान्येकतरेणापि पथा न गच्छन्ति तानीमान्यल्पानि सुखदुःखमिश्राणि सदा गत्यादिमन्ति पुनः पुनर्जायन्ते म्रियन्ते च । एतत्स्वर्गापवर्गयोरन्यत्तृतीयं भूतानामवस्थानमित्यर्थः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नैतत् श्रुतिबलेन भूतानां गतिस्वातन्त्र्यं मन्तव्यम् । तस्या मार्गद्वयसाधनविद्याकर्मविषयत्वोपपत्तेः । न च मन्तव्यं देवयानपितृयानयोः प्रकृतत्वादेतच्छब्देन तत्परामर्शोपपत्तिरिति । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिपमभिसम्भवन्ति । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति विद्याकर्ममार्गयोरपि प्रकृतत्वादेतच्छब्देन तत्परामर्शोपपत्तेरिति भावः । एवमर्थद्वयस्यापि सति सम्भवे किं साधनार्थत्वग्रहणे कारणमिति स्मृतिसमाख्येति भावेनाह ॥ विद्येति ॥ न च साधने स्वातन्त्र्याभ्युपगमे फलेऽपि तत्स्यादिति युक्तम् । साधने विधिसद्भावात् फले तदभावाच्च । विध्यादिशास्त्रावैयर्थ्यायैव तत्रेश्वरः स्वातन्त्र्यं ददातीति प्रागुक्तम् । अतः फले स्वातन्त्र्या- भावादपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ॥

## गुर्वर्थदीपिका

भूधातोः प्राप्त्यर्थकत्वात् 'तेऽर्चिषमभिसम्भवन्ति' गच्छन्ति । 'ते धूममभिसम्भवन्ति' गच्छन्तीति देवयानपितृयानमार्गयोर्गमने स्वातन्त्र्यदर्शनात् । यानि एतयोः पथोः कतरेण एकतरेण न चापि एकतरेणापि न गच्छन्ति 'तानीमानि क्षुद्रमिश्राणि असकृदावृत्तीनि भवन्ति' इति गमने च स्वातन्त्र्यदर्शनादिति भावेनाऽऽह अस्त्येव भूतानां **गतिस्वातन्त्र्यमिति** ॥ **तदुक्तेः** स्वातन्त्र्योक्तेः । लुनीहि लुनीहीत्युक्त्वा स्वयमप्यलुनादित्यादाविवात्रापि जायस्व म्रियस्वेति 'क्रियासमभिव्याहारे लोट्' इति भावेनोक्तम् ॥ पुनःपुनः जायन्ते म्रियन्ते चेति । लुडि

## १४. विद्याकर्माधिकरणम्

'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' (छां.उ.५-१०-८) इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह—

**॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥**

विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि प्रकृतत्वात् ।

'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।
तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तम' इति च भारते ॥

### तत्त्वप्रदीपिका

क्षुद्रमिश्राण्यल्पमिश्राणि । मिश्रत्वं सुखदुःखाभ्याम् । 'जायस्व म्रियस्व' इति स्वप्रत्ययः पौनःपुन्ये । पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः । 'क्रियासमभिहारे लोड् लोटो हि स्वौ' इति हि पाणिनिर्वभाण । पौनःपुन्यं भृशार्थो वा क्रियासमभिव्याहारः । 'अथैतयोः पथोः' इति देवयानपितृयानयोरिति पूर्वः पक्षः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति प्रस्तुतत्वात् । विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ 'एतयोः पथोः' इति विद्याकर्मणोरित्यर्थः । तयोरपि तत्रैव तत्साधनत्वेन प्रस्तुतत्वात् । सर्वत्र चास्वातन्त्र्यसाम्येऽपि 'तद्विजिज्ञासस्व' 'ज्योतिष्टोमेन यजेत' इति विहितत्वात्साधनयोः । तद्वत एव फलप्राप्तिरिति नियमाच्च । विद्याकर्मरहितानां देवयानपितृयानाभ्यां गतिर्न लभ्यते, किन्तु जन्ममृत्योरावृत्तिरेवेति युक्तं वक्तुम् । विहितमकुर्वतां दुःखप्राप्तिरिति हि शास्त्रस्थितिः । कर्तृत्वं तु परतन्त्रस्यापि जीवस्य पुरैव परीक्षितम् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं भूतानां गतिस्वातन्त्र्यनिरासादस्ति शास्त्रादिसङ्गतिः । यदि गतिस्वातन्त्र्यं भूतानां स्यात्तदा वैराग्यवैयर्थ्यप्रसङ्गात्तन्निरसनीयम् । प्रकृतः पितृयानस्तत्प्रकृतिसन्निधापितो देवयानश्च विषयः । किं भूतैः स्वातन्त्र्येण गम्यो न वेति सन्देहः । लौकिकमार्ग-

(तत्त्वप्रकाशिका)

दर्शनमलौकिकत्वं च सन्देहवीजम् । पूर्वपक्षयति ॥ **अथेति ॥** अस्त्येव भूतानां गतिस्वातन्त्र्यं 'तेऽर्चिषमभिसम्भवन्ति' 'ते धूममभिसम्भवन्ति' इत्युक्त्वा 'अथैतयोः' इति श्रुतौ तदुक्तेः । न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेति प्रयोगो युज्यते । न च वाच्यं जीवस्यास्वातन्त्र्यं प्रतिपादितमतः कथं गतिस्वातन्त्र्यमिति । तदधीनस्वातन्त्र्यस्य विवक्षितत्वात्साधनवत् । तादृशस्याप्यभावे वैराग्यादिसाधनमपि नोत्पादयितुं शक्यं स्यात् । न च फलस्वातन्त्र्ये सर्वेषां तत्प्राप्तिः स्यादिति वाच्यम् । साधनेऽपि साम्यात् । अतो 'मूले लब्धफलो नैव शाखाग्रं गन्तुमिच्छति' इति न्यायात्फल एव स्वातन्त्र्यात्किं वैराग्यादिसाधनेनेति भावः । उक्तयोः पथोर्मध्ये यान्येकतरेणापि पथा न गच्छन्ति तानीमान्यल्पानि सुखदुःखमिश्राणि सदा गत्यादिमन्ति पुनः पुनर्जायन्ते म्रियन्ते च । एतत्स्वर्गापवर्गयोरन्यत्तृतीयं भूतानामवस्थानमित्यर्थः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** नैतत् श्रुतिबलेन भूतानां गतिस्वातन्त्र्यं मन्तव्यम् । तस्या मार्गद्वयसाधनविद्याकर्मविषयत्वोपपत्तेः । न च मन्तव्यं देवयानपितृयानयोः प्रकृतत्वादेतच्छब्देन तत्परामर्शोपपत्तिरिति । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति विद्याकर्ममार्गयोरपि प्रकृतत्वादेतच्छब्देन तत्परामर्शोपपत्तेरिति भावः । एवमर्थद्वयस्यापि सति सम्भवे किं साधनार्थत्वग्रहणे कारणमिति स्मृतिसमाख्येति भावेनाह ॥ **विद्येति ॥** न च साधने स्वातन्त्र्याभ्युपगमे फलेऽपि तत्स्यादिति युक्तम् । साधने विधिसद्भावात् फले तदभावाच्च । विध्यादिशास्त्रावैयर्थ्यायैव तत्रेश्वरः स्वातन्त्र्यं ददातीति प्रागुक्तम् । अतः फले स्वातन्त्र्याभावादपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ॥

## गुर्वर्थदीपिका

भूधातोः प्राप्त्यर्थकत्वात् 'तेऽर्चिषमभिसम्भवन्ति' गच्छन्ति । 'ते धूममभिसम्भवन्ति' गच्छन्तीति देवयानपितृयानमार्गयोर्गमने स्वातन्त्र्यदर्शनात् । यानि एतयोः पथोः कतरेण एकतरेण न चापि एकतरेणापि न गच्छन्ति 'तानीमानि क्षुद्रमिश्राणि असकृदावृत्तीनि भवन्ति' इति गमने च स्वातन्त्र्यदर्शनादिति भावेनाऽऽह अस्त्येव भूतानां **गतिस्वातन्त्र्यमिति ॥ तदुक्तेः** स्वातन्त्र्योक्तेः । लुनीहि लुनीहीत्युक्त्वा स्वयमप्यलुनादित्यादाविवात्रापि जायस्व म्रियस्वेति 'क्रियासमभिव्याहारे लोट्' इति भावेनोक्तम् ॥ पुनःपुनः जायन्ते म्रियन्ते चेति । लुङि

(गुर्वर्थदीपिका)

पर्यवसानवद्वैदिकत्वात् लङ्यपि पर्यवसानमिति ज्ञेयम् । विद्याकर्ममार्गयो: प्रकृतत्वादित्यत्र विद्याकर्मसहितयो: मार्गयोरित्यर्थ: । न च वाच्यं स्मृतावपि 'विद्यापथ: कर्मपथ' इति पथोरपि प्रस्तुतिरस्तीति 'तद्विवर्जित' इत्युत्तरवाक्यपर्यालोचनया 'विद्यैव पन्था' इति विद्यापथ: 'कर्मैव पन्था' इति कर्मपथ इत्यर्थस्यैव वक्तव्यत्वात् । गमनमूलकारणत्वेन तयोरपि पथिन् शब्दवाच्यता । न च तद्वर्जित इति वाक्यमयुक्तं स्यात् । यत: प्रसक्तस्यैव वर्जनं न त्वप्रसक्तस्य । प्रसक्तिश्च विद्याकर्मणोरेव न तु पथो: । अस्माभिर्वक्ष्यमाणप्रकारेण तयो: प्रयत्नागोचरतया प्रसक्तेरेवा-योगादिति ज्ञेयम् । साधने विधिसद्भावादित्यस्य साधने मोक्षसाधने ज्ञाने स्वर्गसाधने कर्मणि च दृष्टव्य: । यजेतेति च विधिसद्भावादित्यर्थ: । तेन ज्ञानकर्मणोरुभयोर्विषये ईश्वरदत्तं स्वातन्त्र्यमप्यस्ति । अन्यथा विधेयाभावेन चोदनारूपविधेरपि वैयर्थ्यप्रसङ्गात् । अत एव श्रवणादिना ज्ञानं स्वयमेव सम्पादयति । कर्म च करोति । एवं च फलबलादीश्वरदत्तस्वातन्त्र्यमपि साधन एवाङ्गीकर्तुमुचितम् । न तु फले मोक्षे स्वर्गे वा । तदनुप्रवेशस्य स्वप्रयत्नासाध्यत्वादिति भाव: । साधनविधिसद्भावात्फले तदभावाच्चेत्युपलक्षणम् । मोक्षसाधनविद्यायां स्वर्गसाधनकर्मणि चेश्वरप्रेरणान्मुमुक्षूणां स्वर्विविक्षूणां च स्वत: एव प्रवृत्तिदर्शनेनेश्वरदत्तस्वातन्त्र्याङ्गीकारवत् स्वर्गापवर्गयोर्मूलीभूतधूमदेवलोकं चापि देवलोकं प्रति च पुरुषप्रमाणदेशोद्गमनासमर्थानां पुरुषाणां विद्याकर्मादिसाधने सत्यपि स्वत: प्रवृत्त्यदर्शनेन तत्र भगवद्दत्तं च स्वातन्त्र्यं नास्तीति गम्यते । फलबलोन्नेयस्य तस्य फलादर्शने कल्पकाभावात् । न हि पंगुर्वनभोजनसाधनमन्नं स्वेच्छयैव रचयन्नपि स्वागम्यवनं प्रति स्वशक्तया भुक्तिसाधनान्नाशया वा गच्छन् दृष्ट इत्यपि द्रष्टव्यम् ।

## भावबोध:

**प्रकृत: पितृयान इति ॥** 'चरणादिति चेत्' इत्यधिकरणविषयवाक्ये 'ते धूममभिसम्भवन्ति' इत्यत्रेत्यर्थ: ॥ **तत्प्रकृतिसन्निधापित इति ॥** उभयोरप्यव्यवधानेनैकप्रकरणपठितत्वादिति भाव: । तथा च विषयोपस्थापकेन 'चरणात्' इत्यनेनास्याधिकरणस्यानन्तर्यलक्षणा सङ्गतिरिति भाव: । न चैवं सति तदानन्तर्यमेव स्यादिति वाच्यम्; तत्रेष्टादिकारिणां गतागतोक्तावनिष्टादिकारिणां गतागतमस्ति न वेति खटित्याकाङ्क्षोदयेन तेषामपि गतागतसमर्थनपरस्य 'अनिष्टादिकारिणामपि च श्रुतम्' इत्यस्य तदानन्तर्यस्यावश्यकत्वात् । तत्रोक्तकैमुत्यसिद्ध्युपयोगितया तदुत्तराधिकरणद्वयस्य

(भावबोधः)

तदानन्तर्यस्य चावश्यकत्वाच्च । तथा च साक्षात्तदुपक्षिप्तविचारपराधिकरणत्रयव्यवधानं न दोषायेति । किं भूतैरिति । अत्र देवयानपितृयानौ किं भूतैः स्वातन्त्र्येण गम्यौ न वेति चिन्ता । तदर्थं 'अथैतयोः' इति श्रुतावेतच्छब्देनैतौ परामृश्यौ किं वा विद्याकर्ममार्गाविति । तदर्थं विद्याकर्ममार्गयोरेतच्छब्देन परामर्शे नियामकं नास्त्युतास्तीति ।

ननु कथमत्र श्रुतौ जीवानां गतिस्वातन्त्र्यमुच्यत आह ॥ **न हीति** ॥ 'च'शब्देनाभिसम्भवन्तीति विधिसमुच्चयः । पुरुषप्रयत्नाविषये विधिनिषेधयोरसम्भवेनाभिसम्भवन्तीति न गच्छन्तीति विधिनिषेधान्यथानुपपत्त्या तेषां तत्र स्वातन्त्र्यप्रतीतेरिति भावः ॥ **साधनवदिति** ॥ साधनेऽपि साम्यादित्यन्तेनानेन ग्रन्थेन साधनेन सहश्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यमिति न्यायविवरणमुक्ततात्पर्यं भवति ॥ **न गच्छन्तीति** ॥ अनेन 'अप्य'र्थकस्य 'च' इत्यस्यानन्तरमध्याहृतेन गच्छन्तीत्यनेनानैकतरेणेत्युक्तनञोऽन्वय इत्युक्तं भवति । एतदेवाभिप्रेत्य न गच्छन्तीत्युक्तम् ॥ **इति विद्याकर्ममार्गयोरपीति** ॥ अनेन येन वाक्येन देवयानपितृयानयोः प्रकृतिरिति तेनैव विद्याकर्मणोरपि प्रकृतिरिति सूचयितुं सूत्रगत 'इति'शब्दस्तु 'अप्य'र्थ इत्युक्तं भवति । विद्याकर्मापेक्षयैवेत्यादिव्याख्यानपरेणानेनाथैतयोः पथोरित्यस्य च साधनार्थत्वादिति न्यायविवरणमप्युक्तार्थं भवति । विहितत्वेन कारणाभावादिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकं व्याचष्टे ॥ **न च साधनेति** ॥ ननु फले विध्यभावेऽपि स्वातन्त्र्यं किं न स्यात्, विहितत्वस्य तत्राप्रयोजकत्वादित्यत आह ॥ **विध्यादीति** ॥ तथा च यत्र जीवस्य स्वातन्त्र्यानङ्गीकारे बाधकं तत्र तदङ्गीकर्तव्यं न त्वन्यत्र । ततश्च तत्र साधने स्वातन्त्र्याभावे विध्यादिशास्त्रवैयर्थ्यं स्यादिति तद्वैयर्थ्याय तत्रेश्वरः स्वातन्त्र्यं ददातीति प्राक् 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणे उक्तम् । न चैवं फले स्वातन्त्र्यानङ्गीकारे बाधकमस्ति, येन तदङ्गीकर्तव्यं स्यादिति भावः ।

## भावदीपः

**गतिस्वातन्त्र्येति** । ईशाधीनस्यापि गतिस्वातन्त्र्यस्य श्रुतिबललब्धस्य निरासादित्यर्थः । तेन न स्वात्मना चोत्तरयोरित्यनेन गतार्थतेति बोध्यम् । एतेन 'पूर्वं सर्वं रमयति'त्यादिश्रुतेः स्वर्गनरकादावीशाधीनसुखदुःखभोगवत् गतावपीशाधीनस्वातन्त्र्यं स्यात्तथा श्रुतेरिति शङ्कनाद्वा जीवस्यापि फले स्वातन्त्र्यश्रवणादीशवद्दुःखाभोगाद्यस्त्विति शङ्कनाद्वा पूर्वत्र दुःखादिभोगस्येश्व-

(भावदीपः)

राधीनत्ववत् गतिरूपफलेऽपीशाधीनत्वमेवेति कथनाद्धानन्तरसङ्गतिरपि सूचिता । पूर्ववाक्योक्तं साध्यसाधनभावं व्यनक्ति ॥ **यदीति** ॥ फल एव स्वातन्त्र्येण यथेष्टं फलस्यैव त्यागोपादान-सम्भवात्किं तत्साधनवैराग्यानुष्ठानक्लेशेनेत्यर्थः । वैराग्येत्युपलक्षणम् । फलस्वातन्त्र्ये साधनमात्रवैयर्थ्यात् । अत एव वक्ष्यति **वैराग्यादिसाधनेनेति** ॥ **प्रकृत इति** ॥ तदन्तरेत्यारभ्या-निष्टादिकारिणामपि च श्रुतमित्यन्तेन प्रकृत इत्यर्थः । तत्र चशब्दसमुच्चितं नित्यत्वं सदुःखत्वं च समर्थ्यात्रेदानीं स एव धूमादिमार्गरूपपितृयानस्तत्प्रकृत्या तत्प्रस्तावेन श्रुत्यादौ सहपठितत्वात् बुद्धौ सन्निधापितोर्चिरादिरूपदेवयानश्च चिन्त्यत इत्यर्थः । फलेऽपि जीवस्य स्वातन्त्र्यमित्यन्यत्रोक्त-प्रतिज्ञां विवृण्वन् तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ एतयोरित्येतच्छब्दपरामृश्यं दर्शयितुमित्युक्त्वेत्युक्तम् । छान्दोग्ये पञ्चमेऽध्याय इति भावः । यद्यपि 'तद्य इत्थं विदुः' इत्यादिना विद्याकर्मणोरप्यस्त्युक्तिस्तथापि तयोर्व्यवहितत्वात्सन्निहितदेवयानादित्यागे हेत्वभावादिति भावः । भाष्ये उच्यत इत्यनुक्त्वा प्रतीयत इत्युक्तेर्भावं वदन् श्रुतौ स्वातन्त्र्योक्तिलाभप्रकारमाह ॥ **न हीति** ॥ गच्छन्तीति शेषोक्तिः । स्वतन्त्रः कर्तेत्युक्तकर्त्रर्थकलकारान्ते न गच्छन्तीत्यनेन यानि न गच्छन्ति स्वातन्त्र्येण गमनवन्ति न भवन्ति तानीमानि क्षुद्रमिश्राणि भूतानीति क्षुद्रभूतानां तत्र स्वातन्त्र्येण गमननिषेधकनञ्युक्तकर्त्रर्थकलकारप्रयोगबलात्स्वातन्त्र्यं प्रतीयते । अन्यथा न गच्छन्तीत्युक्तिर्न स्यात् । अप्रसक्तत्वादित्यर्थः । चशब्दोऽभिसम्भवन्तीति प्रागुक्तक्रियासमुच्चय इति भावः । साधनेन सह श्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यमिति न्यायविवरणे तद्वत्साधनवदिति दृष्टान्तोक्त्या तात्पर्यलब्धमर्थं व्यावर्त्यपूर्वमाह ॥ **न च वाच्यमिति** ॥ हिताकरणादिदोषप्रसक्तिः । ज्ञशक्ति-वियोगात् । ज्ञोऽत एव । शक्तिविपर्ययात् । समाध्यभावाच्च । अनुज्ञापरिहारौ देहसम्बन्धात् । असन्ततेश्च । 'आभास एव च' इत्यादिभिस्सूत्रैः सामान्येन स्वात्मना चोत्तरयोरित्यत्र गत्यादौ विशिष्यास्वातन्त्र्यं प्रतिपादितमित्यर्थः । केनेदं लब्धमित्यतस्तल्लाभं वक्तुं तद्वदित्यस्यार्थः साधनवदिति व्याख्यातः । साधनेऽपि तादृशं कुत इत्यतः कर्ता शास्त्रार्थवत्त्वादिति नयसिद्धमाह ॥ **तादृशस्येति** ॥ व्यक्तमेतद्धठवादे । 'तदाज्ञया पुरुषश्चेष्टमानश्चेष्टानुसारेण शुभाशुभस्य । भोक्ता न तच्चेष्टितमन्यथा भवेत्कर्ता तस्मात्पुरुषोऽप्यस्य वश्य' इत्यादिना महाभारततात्पर्यनिर्णये अष्टादशे गीताभाष्ये चेति । साधनवदित्युक्तितात्पर्यलब्धमर्थान्तरमपि व्यावर्त्यपूर्वमाह ॥ **न च फलेति** ॥ **साम्यादिति** ॥ यदि तत्र सर्वथापि तु त एवोभयलिङ्गादित्यादौ वक्ष्यमाणदिशाऽनादियोग्यता-

(भावदीपः)

दृष्टादिवशाद् व्यवस्था तर्हि फलेऽपि तथा स्यादिति भावः । ततश्च किमित्यतोऽथपदोक्त-वैराग्यादिसाधनाक्षेपमुपपादयन्नुपसंहरति ॥ **अत इति** ॥ फल एव स्वातन्त्र्यादित्यन्वयः । श्रुतौ प्रतीयमानत्वादीशाधीनस्वातन्त्र्याङ्गीकृतौ विरोधाभावाच्चेत्यर्थः । किमित्यादेरुपपादकमिति न्यायादिति । वैराग्याद्यशेषसाधनाक्षेपसमाधिभ्यां सर्वार्थमपीदं वैराग्यप्रयोजकं च भवतीति तदन्तरेत्यादेरिवात्र पादे निवेशो बोध्यः । अत एव प्राक् वैराग्यार्थं वैराग्यवैयर्थ्येत्येव चोक्तम् । अवान्तरसङ्गतिवशाद्व्यवधानेनात्र निवेशः । भाष्योक्तश्रुत्यर्थमाह ॥ **उक्तयोरिति** ॥ 'तेऽर्चिषमभि-सम्भवन्ति' 'ते धूममभिसम्भवन्ति' इति पूर्ववाक्योक्तयोरित्यर्थः । स्वप्रत्ययार्थः पुनः पुनरिति । 'क्रियासमभिहारे लोट् लोटो हि स्वौवाचतध्वमोः' इति सर्वतिङ्विषये पौनःपुन्ये भृशार्थे च हि स्वप्रत्यययोः स्मरणादिति भावः । सूत्रादौ श्रुतेर्विद्याकर्मार्थकत्वोक्तेरुपयोगाय पूर्वपक्षनिरासपूर्वं तत्र हेतुत्वेन सूत्रभाष्ये व्याचष्टे ॥ **नैतच्छ्रुतीति** ॥ अथैतयोः पथोरित्यस्य च साधनार्थत्वादित्य-न्यत्रोक्त्या भाष्यं सङ्गमयितुमुक्तम् ॥ **मार्गद्वयसाधनेति** ॥ तयोरपीत्यादिवाक्यमपि पदसमुच्चयं दर्शयन् शङ्कापूर्वं व्याचष्टे ॥ **न चेति** ॥ **प्रकृतत्वादिति** ॥ 'तेऽर्चिषमभिसम्भवन्ति' इत्यादिनेत्यर्थः ॥ **तप इतीति** ॥ तपःप्रभृतीत्यर्थः ॥ **दत्तमितीति** ॥ दत्तप्रभृति ॥ **विद्येति** ॥ विद्याकर्मरूप-मार्गयोरित्यर्थः । एतयोः पथोरित्युक्त्युपपत्तये मार्गशब्दोक्तिः । उपासत इत्यन्तस्यैव वाच्यत्वे तेऽर्चिषमित्याद्यंशोक्तिः भाष्यस्थापिपदेन देवयानादेरपि प्रकृतत्वसमुच्चयसूचनात् तत्प्रदर्शयितुम् ॥ **एवमिति** ॥ विद्याकर्मणोः प्रकृतत्वेऽपि देवयानादिव्यवधानेन प्रकृतत्वात्सन्निहितदेवया-नादित्यागेन व्यवहितविद्याकर्मग्रहणे किं कारणमित्यर्थः । समाख्येत्युक्त्याऽथैतयोरिति शेषोक्त-फलमुपलक्षणमिति व्याख्येयमिति सूचितम् । साधनवदिति प्रागुक्तशङ्कामनूद्याविहितत्वेन कारणाभावादित्यन्यत्रोक्तस्य विवरणेन निराह ॥ **न चेति** ॥ **विधीति** ॥ 'तद्विजिज्ञासस्व' 'ज्योतिष्टोमेन यजेत' इति विद्याकर्मरूपसाधने विधिसद्भावात्फलस्य साक्षात्प्रयत्नागोचरत्वेन तत्र विधेरभावादित्यर्थः । नन्वस्वातन्त्र्यसाम्यात्साधनेऽपि पुरुषप्रयत्नाविषये कथं विधिरित्यत आह ॥ **विध्यादीति** ॥ प्रागुक्तं कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे । सूत्रार्थस्य वैराग्यफलकत्वं स्फोरयन्नुपसंहरति ॥ **अत इति** ॥ अथेति श्रुतेः प्रकृतविद्याकर्मरूपमार्गविषयत्वात्साधनवत्तत्र विध्यभावाच्चेत्यर्थः । फल इति तात्पर्योक्तिः । शेषः फलोक्तिः ।

## अभिनवचन्द्रिका

**लौकिकमार्गदर्शनमिति ॥** लौकिकमार्गे स्वातन्त्र्येण गम्यत्वदर्शनमित्यर्थः । अयं भावः लौकिकमार्गस्तावत्स्वातन्त्र्येण गम्यो दृष्टः । प्रकृतौ च मार्गावलौकिकौ । अतो लोकवैलक्षण्येन भाव्यम् । न च वैलक्षण्यं सर्वात्मना भवतीति केनचिद्रूपेण वाच्यमिति सन्देह उपजायते । किमनयोर्मार्गयोः स्वातन्त्र्येण गम्यत्वाभावेन वैलक्षण्यं उत स्वातन्त्र्येण गम्यत्वेऽपि प्रकारान्तरेण वैलक्षण्यमिति । यद्यप्यलौकिकत्वमेव सन्देहबीजं, तथापि सन्देहं जनयतोऽलौकिकत्वस्य लौकिकदर्शनं साचिव्यमाचरतीति भावेन लौकिकमार्गदर्शनमलौकिकत्वं च, सन्देहबीजमित्युक्तम् । न तु समकक्ष्यत्वाभिप्रायेणेति बोध्यम् । एतेन लौकिकदर्शनं नाऽलौकिकसन्देहापादकं, सन्देहधर्मिसम्बन्धित्वाभावात्, अन्यथाऽतिप्रसङ्ग इति परास्तम् । तादृशस्याप्यभाव इति । सत्यपि ज्ञापके फले न तादृशस्वातन्त्र्यमभ्युपगम्यते । तर्हि साधनेऽपि न स्यादविशेषात् । ततश्च वैराग्याद्यनुष्ठानमपि न स्यादिति भावः । एतेन तादृशस्वातन्त्र्यस्य फलेऽभावे साधनानुष्ठानाऽभावापादनमयुक्तं, व्यधिकरणत्वादिति परास्तम् । 'जायस्व म्रियस्वेत्येतत् व्याचष्टे **पुनः पुनर्जायन्त इति ॥** 'क्रियासमभिव्याहारे लोट् । लोटो हि स्वौवाचतध्वमोः' इति स्मरणात् जायस्व म्रियस्वेत्युपपन्नम् ।

पूर्वपक्षस्तु भवन्त्येव जीवा गत्यादिफले स्वतन्त्राः । 'अथैतयोर्नैकतरेण गच्छन्ति' इति वचनात् । न हि स्वातन्त्र्याभावे गच्छन्ति न गच्छन्तीति व्यपदेशो युज्यते । न च जीवानामस्वातन्त्र्यं प्रतिपादितामिति वाच्यम् साधनवत्फले ईश्वरदत्तस्वातन्त्र्याङ्गीकारात् । अतो 'मूले लब्धफलेनैव शास्त्राग्रं गन्तुमिच्छति' इति न्यायात् फल एव स्वातन्त्र्यात् किं वैराग्यादिसाधनेनेति ।

सिद्धान्तस्तु न जीवाः गत्यादौ स्वतन्त्राः । प्रमाणाभावात् । 'अथैतयोः' इति श्रुतिगतै' तच्छब्दस्य 'तद्य इत्थं विदुर्ये चारण्ये श्रद्धा तप इत्युपासते' तेऽर्चिषमभिसम्भवन्ति, 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति विद्याकर्ममार्गयोरपि प्रकृतत्वात् तत्परामर्शकत्वेन, अस्य वाक्यस्य साधने स्वातन्त्र्यनिर्देशात्मकत्वात् । न च विद्याकर्ममार्गवत् देवयानपितृयान(ण)योरपि प्रकृतत्वात् कस्यायं परामर्श इति सन्देह एव स्यात् न निश्चय इति वाच्यम् 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितस्त्रिधा यात तिर्यग्वा नरकं तम' इति वचनात् निर्णयोपपत्तेः । अतः फले स्वातन्त्र्याऽभावात् अपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वसूत्रे चशब्दात्स्वर्गमोक्षयोरिव नरकेऽपि दुःखानुभवं विनैव तद्व्यापारादविरोध इत्युक्तं तदयुक्तम् । स्वर्गमोक्षयोर्गतिस्वातन्त्र्येण तद्व्यापारानुपयोगादित्यशङ्काया अत्र निवारणादनन्तर-सङ्गतिरिति भावः । भावबोधे तु प्रकारान्तरेणोक्तम् ॥ **प्रकृतः पितृयान इति** ॥ चरणादित्ये-तदधिकरणविषयवाक्ये धूममभिसम्भवन्तीत्यत्रेत्यर्थः । तत्र कृतिसन्निधापित इति । 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्येतद्वाक्यस्य प्रपूर्ववाक्ये 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इति देवयानस्य प्रकृतत्वादिति भावः । अत्र देवयानपितृयानौ किं भूतैः स्वातन्त्र्येण गम्यौ न वेति चिन्ता । तदर्थमेतयोरिति श्रुतावेतच्छब्देन किं तौ परामृश्येते किं वा विद्याकर्ममार्गाविति ॥ **लौकिकमार्गेति** ॥ विमतं स्वातन्त्र्येण गम्यं मार्गत्वादित्यनुमाने व्याप्यव्यापकधर्मवत्तया लौकिकमार्गाख्यदृष्टान्तप्रदर्शनम् । अलौकिकत्वादिति तत्प्रतिपक्षे हेतुप्रदर्शनं चेत्यर्थः । स्वातन्त्र्याभावादेव न गच्छन्तीत्युपपत्तेः नैकतरेण चेत्युदाहरणं नातीव प्रकृतोपयोगीत्यत आह ॥ **तेऽर्चिषमभिसम्भवन्ति ते धूममभिसम्भवन्तीत्युक्त्वेति** ॥ कथमेतावता गतिस्वातन्त्र्यं लब्धमित्यत आह ॥ **न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेति प्रयोग इति** ॥ अभि सम्भवन्तीति प्रयोगसमुच्चयार्थं चशब्दः । तथा च प्रयत्नविषये एव कर्तरि प्रत्ययप्रयोगदर्शनात्तदन्यथानुपपत्त्या तत्र स्वातन्त्र्यप्रतीतेरिति भावः । पुरुषप्रयत्नाविषये विधि-निषेधयोरभावेनाभिसम्भवन्ति न गच्छन्तीति विधिनिषेधान्यथानुपपत्त्या तेषां तत्र स्वातन्त्र्य-प्रतीतेरिति वा । न गच्छन्ति चेदिति क्वचित् पाठः । तत्रापि श्रुतौ नैवं पाठ : । किन्तु नैकतरेण च न तानीमानीत्येव । तथाप्यन्यथेत्यस्य चेदित्यर्थकत्वं नैकतरेण इत्यतः परमभिसम्भवन्तीत्यनु-सारेण गच्छन्तीत्यध्याहारं च मत्वा टीकायामेवमुक्तिः । अनन्ताचार्यकृतौ तु श्रुतौ टीकायां च चेदिति पाठमङ्गीकृत्य व्याख्यातम् । न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेत् इति युज्यते इति भवान् यागादि न करोति चेत् स्वर्गादि न गमिष्यतीत्यादौ करणगमनादिविषये स्वातन्त्र्यसद्भाव एव चेत् युक्तस्य करोतीत्यादेः प्रयोगदर्शनात् । प्रकृते च गच्छन्ति चेदित्यनुरोधेन गतौ स्वातन्त्र्यं वक्तव्यमन्यथा न गच्छन्तीति चेदिति चेत्युक्तस्य प्रयोगोऽनुपपन्न इति भाव इत्यलम् ।

इतरव्यपदेशादित्यादिना गतार्थतामाशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतः इति । गतिस्वातन्त्र्यं भूतानां प्रतीयते इति भाष्यस्य 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप

## अभिनवचन्द्रिका

**लौकिकमार्गदर्शनमिति ।।** लौकिकमार्गे स्वातन्त्र्येण गम्यत्वदर्शनमित्यर्थः । अयं भावः लौकिकमार्गस्तावत्स्वातन्त्र्येण गम्यो दृष्टः । प्रकृतौ च मार्गावलौकिकौ । अतो लोकवैलक्षण्येन भाव्यम् । न च वैलक्षण्यं सर्वात्मना भवतीति केनचिद्रूपेण वाच्यमिति सन्देह उपजायते । किमनयोर्मार्गयोः स्वातन्त्र्येण गम्यत्वाभावेन वैलक्षण्यं उत स्वातन्त्र्येण गम्यत्वेऽपि प्रकारान्तरेण वैलक्षण्यमिति । यद्यप्यलौकिकत्वमेव सन्देहबीजं, तथापि सन्देहं जनयतोऽलौकिकत्वस्य लौकिकदर्शनं साचिव्यमाचरतीति भावेन लौकिकमार्गदर्शनमलौकिकत्वं च, सन्देहबीजमित्युक्तम् । न तु समकक्ष्यत्वाभिप्रायेणेति बोध्यम् । एतेन लौकिकदर्शनं नाऽलौकिकसन्देहापादकं, सन्देहधर्मिसम्बन्धित्वाभावात्, अन्यथाऽतिप्रसङ्ग इति परास्तम् । तादृशस्याप्यभाव इति । सत्यपि ज्ञापके फले न तादृशस्वातन्त्र्यमभ्युपगम्यते । तर्हि साधनेऽपि न स्यादविशेषात् । ततश्च वैराग्याद्यनुष्ठानमपि न स्यादिति भावः । एतेन तादृशस्वातन्त्र्यस्य फलेऽभावे साधनानुष्ठानाऽभावापादनमयुक्तं, व्यधिकरणत्वादिति परास्तम् । 'जायस्व म्रियस्वेत्येतत् व्याचष्टे **पुनः पुनर्जायन्त इति ।।** 'क्रियासमभिव्याहारे लोट् । लोटो हि स्वौवाचतध्वमोः' इति स्मरणात् जायस्व म्रियस्वेत्युपपन्नम् ।

पूर्वपक्षस्तु भवन्त्येव जीवा गत्यादिफले स्वतन्त्राः । 'अथैतयोर्नैकतरेण गच्छन्ति' इति वचनात् । न हि स्वातन्त्र्याभावे गच्छन्ति न गच्छन्तीति व्यपदेशो युज्यते । न च जीवानामस्वातन्त्र्यं प्रतिपादितामिति वाच्यम् साधनवत्फले ईश्वरदत्तस्वातन्त्र्याङ्गीकारात् । अतो 'मूले लब्धफलेनैव शास्वाग्रं गन्तुमिच्छति' इति न्यायात् फल एव स्वातन्त्र्यात् किं वैराग्यादिसाधनेनेति ।

सिद्धान्तस्तु न जीवाः गत्यादौ स्वतन्त्राः । प्रमाणाभावात् । 'अथैतयोः' इति श्रुतिगतै' तच्छब्दस्य 'तद्य इत्थं विदुर्ये चारण्ये श्रद्धा तप इत्युपासते' तेऽर्चिषमभिसम्भवन्ति, 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति विद्याकर्ममार्गयोरपि प्रकृतत्वात् तत्परामर्शकत्वेन, अस्य वाक्यस्य साधने स्वातन्त्र्यनिर्देशात्मकत्वात् । न च विद्याकर्ममार्गवत् देवयानपितृयान(ण)योरपि प्रकृतत्वात् कस्यायं परामर्श इति सन्देह एव स्यात् न निश्चय इति वाच्यम् 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितस्त्रिधा यात तिर्यग्वा नरकं तम' इति वचनात् निर्णयोपपत्तेः । अतः फले स्वातन्त्र्याऽभावात् अपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वसूत्रे चशब्दात्स्वर्गमोक्षयोरिव नरकेऽपि दुःखानुभवं विनैव तद्व्यापारादविरोध इत्युक्तं तदयुक्तम् । स्वर्गमोक्षयोर्गतिस्वातन्त्र्येण तद्व्यापारानुपयोगादित्यशङ्काया अत्र निवारणादनन्तर-सङ्गतिरिति भावः । भावबोधे तु प्रकारान्तरेणोक्तम् ॥ **प्रकृतः पितृयान इति** ॥ चरणादित्ये-तदधिकरणविषयवाक्ये धूममभिसम्भवन्तीत्यत्रेत्यर्थः । तत्र कृतिसन्निधापित इति । 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्येतद्वाक्यस्य प्रपूर्ववाक्ये 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इति देवयानस्य प्रकृतत्वादिति भावः । अत्र देवयानपितृयानौ किं भूतैः स्वातन्त्र्येण गम्यौ न वेति चिन्ता । तदर्थमेतयोरिति श्रुतावेतच्छब्देन किं तौ परामृश्येते किं वा विद्याकर्ममार्गाविति ॥ **लौकिकमार्गेति** ॥ विमतं स्वातन्त्र्येण गम्यं मार्गत्वादित्यनुमाने व्याप्यव्यापकधर्मवत्तया लौकिकमार्गाख्यदृष्टान्तप्रदर्शनम् । अलौकिकत्वादिति तत्प्रतिपक्षे हेतुप्रदर्शनं चेत्यर्थः । स्वातन्त्र्याभावादेव न गच्छन्तीत्युपपत्तेः नैकतरेण चेत्युदाहरणं नातीव प्रकृतोपयोगीत्यत आह ॥ **तेऽर्चिषमभिसम्भवन्ति ते धूममभिसम्भवन्तीत्युक्त्वेति** ॥ कथमेतावता गतिस्वातन्त्र्यं लब्धमित्यत आह ॥ **न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेति प्रयोग इति** ॥ अभि सम्भवन्तीति प्रयोगसमुच्चयार्थं चशब्दः । तथा च प्रयत्नविषये एव कर्तरि प्रत्ययप्रयोगदर्शनात्तदन्यथानुपपत्त्या तत्र स्वातन्त्र्यप्रतीतेरिति भावः । पुरुषप्रयत्नाविषये विधि-निषेधयोरभावेनाभिसम्भवन्ति न गच्छन्तीति विधिनिषेधान्यथानुपपत्त्या तेषां तत्र स्वातन्त्र्य-प्रतीतेरिति वा । न गच्छन्ति चेदिति क्वचित् पाठः । तत्रापि श्रुतौ नैवं पाठ : । किन्तु नैकतरेण च न तानीमानीत्येव । तथाप्यन्यथेत्यस्य चेदित्यर्थकत्वं नैकतरेण इत्यतः परमभिसम्भवन्तीत्यनु-सारेण गच्छन्तीत्यध्याहारं च मत्वा टीकायामेवमुक्तिः । अनन्ताचार्यकृतौ तु श्रुतौ टीकायां च चेदिति पाठमङ्गीकृत्य व्याख्यातम् । न हि पुरुषप्रयत्नाविषये न गच्छन्ति चेत् इति युज्यते इति भवान् यागादि न करोति चेत् स्वर्गादि न गमिष्यतीत्यादौ करणगमनादिविषये स्वातन्त्र्यसद्भाव एव चेत् युक्तस्य करोतीत्यादेः प्रयोगदर्शनात् । प्रकृते च गच्छन्ति चेदित्यनुरोधेन गतौ स्वातन्त्र्यं वक्तव्यमन्यथा न गच्छन्तीति चेदिति चेत्युक्तस्य प्रयोगोऽनुपपन्न इति भाव इत्यलम् ।

इतरव्यपदेशादित्यादिना गतार्थतामाशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतः इति । गतिस्वातन्त्र्यं भूतानां प्रतीयते इति भाष्यस्य 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप

(वाक्यार्थमुक्तावली)

इत्युपासते तेऽर्चिषमभिसम्भवन्ति,' 'य इमे ग्रामे इष्टापूर्तं दत्तमित्युपासते ते धूममभिसम्भवन्ति' । अथैतयोः पथोर्नैकतरेणेति श्रुतौ भूतानां गतिस्वातन्त्र्यं प्रतीयते, नापलापार्हम् । अन्यथा 'तद्य इत्थं विदुरिष्टापूर्त दत्तम्' इत्याद्युक्तसाधनेऽपि स्वातन्त्र्यं न स्यात् । अतो गत्यन्तराभावात् साधनेष्विव तैस्सह श्रुतधूमार्चिरादिप्राप्तिलक्षणफलेऽपि तदधीनस्वातन्त्र्यमङ्गीकार्यमित्यर्थान्तरमभिप्रेत्य सहस्थानमित्युक्तन्यायं आरूढं करोति । तदधीनेति । दृष्टान्तो पक्षसमः तत्रापि तदधीन-स्वातन्त्र्यसम्मतेरित्यत आह ॥ **तादृशस्येति** ॥ तदधीनस्वातन्त्र्यस्य कुत्राप्यभाव इत्यर्थः ।

**नोत्पादयितुमिति** । स्वसम्बन्धितया विधिज्ञानफलेच्छारूपस्येशायत्तस्य स्वावरान् जडान् प्रति च स्वातन्त्र्यस्याभावे विधिवाक्येनैव वैराग्यादिसाधनमपि नोत्पादयितुं शक्यं जडेष्विवेति भावः । **फल एवेति** ॥ यदि गतावेवेश्वरदत्तस्वेच्छानुसारितालक्षणस्वातन्त्र्यं वर्तते तदा नदीं प्रति गमनवद्देवयानादि प्रति गमनं स्वेच्छानुसारेण स्यात् । तत्प्राप्तौ च मोक्षोऽपि नियत एवातो वैराग्यादि वैय्यर्थ्यम् । न हि नदीगमनार्थं तपादि कुर्वन्तीति भावः । अथैतयोः पथोर्नैकतरेण च तानीमानीति श्रुतौ तानीति श्रवणात् तदनुरोधेनाह ॥ **यानानीति** ॥ चशब्दोऽप्यर्थे । गच्छन्तीत्यध्याहृतस्य नञान्वय इत्यभिप्रेत्याह ॥ **यान्येकतरेणापि न गच्छन्तीति** ॥ क्षुद्राणि च मिश्राणि चेति विग्रहमभिप्रेत्याह ॥ **अल्पानीति** ॥ असकृदावर्तीनीत्यर्थः ॥ **सदा गत्यादि-मन्तीति** ॥ ज्यायस्व म्रियस्वेति 'क्रियासमभिहारे लोट् । लोटो हि स्वौवाचतध्वमोः' इति पाणिनिरभाणीत् । पौनःपुन्यं भृशार्थे वा क्रियासमभिहार इति तत्त्वप्रदीपे व्युत्पादितत्वात् । तात्पर्यार्थमाह ॥ **पुनः पुनर्जायन्ते म्रियन्ते चेति** ॥ इतिशब्दः श्रुतिविशेषद्योतकः । तुशब्दोऽवधारणे । विद्याकर्मणोरिति ल्यब्लोपनिमित्ता पञ्चमी । तथा च इति अथैतयोः-पथोर्नैकतरेण चेत्येतद्वचनं विद्याकर्माख्यमार्गद्वयमपेक्ष्यैवेत्यर्थमभिप्रेत्य प्रवृत्तं विद्याकर्मापेक्षयैतद्वचन-मिति भाष्यं व्याचष्टे ॥ **तस्या इति** ॥ केचित्तु इतिशब्दः श्रौतपदस्यार्थोक्तिपरः । अथैतयोः पथोरित्यस्य विद्याकर्मणोरित्येवार्थ इति व्याचक्षते ।

समग्रं सूत्रं प्रकारान्तरेण व्याकुर्वन् तयोरपीति भाष्यं व्याचष्टे ॥ **न च मन्तव्यमित्यादिना** ॥ एतेन इतिशब्दः 'तद्य इत्थं विदुर्य इमे ग्रामा इष्टापूर्त' इति श्रुतिद्योतकः । विद्याकर्मणोरिति षष्ठी । तुशब्द अप्यर्थ इत्युक्तं भवति ॥ **स्मृतिसमाख्येति भावेनेति** ॥ विद्याकर्मपदप्रयोगसूचितस्मृति-

(वाक्यार्थमुक्तावली)

समाख्येत्यर्थः । द्वौ पन्थानौ प्रकीर्तितावित्यस्य तद्विजिज्ञासस्व ज्योतिष्टोमेन यजेत' इत्यादौ विहितावित्यर्थः । तथा च तत्साधने स्वातन्त्र्याभ्युपगमे विध्याख्यकारणसद्भावात् फले विध्यभावेन कारणाभावात् स्वातन्त्र्यं नास्तीति कारणाभाव इत्युक्तन्यायोऽपि भाष्यारूढ इत्याह ॥ **साधने विधिसद्भावादिति** ॥ ननु फले विधेरभावेऽपि स्वातन्त्र्यं किं न स्यात्, विहितत्वस्य तत्राप्रयोजकत्वादित्यत आह ॥ **विध्यादीति** ॥ प्रागुक्तमिति कर्ता शास्त्रार्थवत्त्वादित्यत्रोक्तमित्यर्थः । तथा च साधने स्वातन्त्र्यानङ्गीकारे बाधकसद्भावात् फले तदनङ्गीकारे बाधकाभावान्नाप्रयोजकत्वमिति भावः ।

## तत्त्वसुबोधिनी

**न प्रकृतः पितृयान इति** ॥ चरणादिति चेदित्यधिकरणादिविषयवाक्ये ते धूममभिसम्भवन्तीत्यत्रेत्यर्थः । तत्प्रकृतिसन्निधापित इत्यर्थः । उभयोरप्यव्यवधानेनैकप्रकरणपठितत्वादिति भावः । तथा च विषयोपस्थापकेन चरणादित्यनेनास्यानन्तर्यलक्षणा सङ्गतिरिति भावः । न च तदानन्तर्यं स्यादिति शङ्क्यम् । तत्रेष्टादिकारिणां गतागतोक्तावेवानिष्टादिकारिणां गतागतमस्ति न वेति खटित्याकाङ्क्षोदयेन तेषामपि गतागतसमर्थनपरस्यानिष्टादिकारिणामपि च श्रुतमित्यस्य तदानन्तर्यस्यावश्यकत्वात् ॥ **तदुक्तेरिति** ॥ भूतानां गतिस्वातन्त्र्योक्तेरित्यर्थः । ननु कथमत्र श्रुतौ भूतानां गतिस्वातन्त्र्यमुच्यत इत्यत आह ॥ **न हीति** ॥ चशब्दोऽभिसम्भवन्तीति विधिसमुच्चायकः । पुरुषप्रयत्नाविषये विधिनिषेधयोरसम्भवेनाभिसम्भवन्तीति न गच्छन्तीति विधिनिषेधान्यथानुपपत्त्या तेषां स्वातन्त्र्यप्रतीतेरिति भावः ॥ **साधनवदिति** ॥ साधने यथा तदधीनं स्वातन्त्र्यं तद्वदित्यर्थः । ननु साधनेऽपि तदधीनं स्वातन्त्र्यं नाङ्गीक्रियत इति कथं दृष्टान्तीकरणमित्यत आह ॥ **तादृशस्यापीति** ॥ अप्रतीतार्थत्वात् वाक्यं व्याख्याति ॥ **उक्तयोरिति** ॥ **इति विद्याकर्ममार्गयोरिति** ॥ अनेन येन वाक्येन देवयानपितृयानयोः प्रकृतिः तेनैव विद्याकर्मणोरपि प्रकृतिरिति सूचयितुं सूत्रगतेतिशब्दः । तुशब्दोऽप्यर्थक इत्युक्तं भवति । ननु फले विध्यभावेऽपि स्वातन्त्र्यं किं न स्यात् । विहितत्वस्य तत्राप्रयोजकत्वादित्यत आह ॥ **विध्यादीति** ॥ यत्र जीवस्य स्वातन्त्र्यानङ्गीकारे बाधकं तत्र तदङ्गीकार्यम् । न त्वन्यत्र । ततश्च साधने विध्यादिशास्त्रवैय्यर्थ्यं स्यादिति तदवैय्यर्थ्याय तत्रेश्वरः स्वातन्त्र्यं ददातीति प्राक् कर्ता शास्त्रार्थवत्त्वादित्युक्तम् । न चैवं फले स्वातन्त्र्यानङ्गीकारे बाधकमस्ति येन तदङ्गीकर्तव्यं स्यादिति भावः ।

## वाक्यार्थविवरणम्

**भूतानां** जीवानाम् ॥ **तदेति** ॥ इदमतो मूले लब्धफल इति पूर्वपक्षोपसंहारे स्पष्टम् । न गच्छन्ति चेति चशब्दादर्चिषं धूमं च गच्छन्तीति ग्रहणम् । प्रकृतिः प्रकरणम् । स्वर्गसाधनी-भूतमार्गौ पितृयानदेवयानसंज्ञौ ॥ **साधनवदिति** ॥ साधने यथा स्वातन्त्र्यं विवक्षितं तथेति सप्तम्यर्थे वतिः ॥ **तादृशस्येति** ॥ तदधीनस्वातन्त्र्यस्येत्यर्थः ॥ **साम्यादिति** ॥ साधनेऽपि स्वातन्त्र्याङ्गी-कारे सर्वेषामपि साधनसम्पत्तिः स्यादिति भावः ॥ **फल एवेति** ॥ पितृयानादेः कर्मादिफल-रूपत्वादिति भावः । नेत्यनन्तरं गच्छन्तीति श्रुतौ शेषोक्तिः ॥ **अल्पानीति** ॥ क्षुद्रशब्दार्थः । असकृदावर्तीनीत्यस्य ॥ **सदेति** ॥ जायस्व म्रियस्व इत्यनयोरर्थः पुनःपुनरिति ॥ तथा च जायस्व म्रियस्व इत्येतदत्र न लोट्मध्यमपुरुषरूपत्वेन विवक्षितम् । किं नाम पुनःपुनः जायन्ते म्रियन्त इति तिङन्तविभक्तिप्रतिरूपकनिपातद्वयमस्तीत्यादिवदिति द्रष्टव्यमित्याहुः ॥ **तृतीयं स्थानम्** ॥ स्वर्गापवर्गाभ्यामन्यत् तिर्यग्यातनारूपम् ॥ **मार्गद्वयेति** ॥ स्वर्गमोक्षमार्गद्वयेत्यर्थः ॥ **तत्परामर्शोपपत्तिरिति** ॥ न देवयानपितृयानसाधनयोर्विद्याकर्मणोस्तयोरप्रकृतत्वादिति वाक्यशेषः ॥ **सम्भवे सति** ॥ उभयोरपि प्रकृतत्वेनैतच्छब्देन परामर्शसम्भवे सतीत्यर्थः ॥ **साधनेति** ॥ मार्गद्वयसाधनभूतविद्याकर्मेत्यर्थः ॥ **फल एवेति** ॥ पितृयानादेः कर्मादिफलरूपत्वादिति भावः ।

## वाक्यार्थमञ्जरी

**प्रकृतपितृयान इति** ॥ चरणादित्यत्र विषयवाक्ये 'ते धूममभिसम्भवन्ति' इत्यनेन प्रकृत इत्यर्थः ॥ **तत्प्रकृतीति** ॥ तत्प्रकरण इत्यर्थः । उभयोरप्यव्यवधानेनैकप्रकरणपठितत्वादिति भावः । ननु कथमत्र श्रुतौ जीवानामतिस्वातन्त्र्यमुच्यत इत्यत आह ॥ **न हीति** ॥ चशब्देनाभि-सम्भवन्तीति विधिसमुच्चयः पुरुषप्रयत्नाविषये विधिनिषेधयोरभावेनाभिसम्भवन्तीति न गच्छन्तीति च विधिनिषेधान्यथानुपपत्त्या तेषां स्वातन्त्र्यप्रतीतिरिति भावः । प्रतिपादितं परेणेत्यादिना । साधनवत् साधने तदधीनस्वातन्त्र्यवत् सर्वेषां साधनरहितानामपि साम्यात् सर्वेषां साधनप्राप्तेः क्षुद्र-शब्दार्थोऽल्पानीति ॥ **ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ** ॥ अथैतयोरित्येतच्छब्दस्य विद्याकर्मणोरित्येवार्थः । कुतः? प्रकृतत्वात् । 'तद्य इत्थं विदुः अथेमे ग्रामा' इत्यादिना विद्याकर्मणोरपि प्रकृतत्वादित्यर्थः ॥ **तद्य इति** ॥ तत्तस्मात्काम्यकर्मणो गमनागमनहेतुत्वात्तत्र

(वाक्यार्थमञ्जरी)

विरक्ताय इत्थं पञ्चाग्निविद्योक्तरीत्या भगवन्तं विदुः ये चेमेऽरण्ये मनोहरप्रदेशे श्रद्धातप इत्युपासते श्रद्धातपः प्रवृत्तिकर्मानुतिष्ठन्ति तेऽर्चिषमर्चिर्लोकन्तदभिमानिनं वा प्रविशन्तीत्यर्थः । किं कारणमिति प्रश्नोत्तरमाह ॥ **स्मृतिसमाख्येति** ॥ ननु फले विध्यभावेऽपि तत्र स्वातन्त्र्यं किं न स्यादित्यत आह ॥ **विध्यादीति** ॥ तथा च यत्र जीवस्वातन्त्र्यानङ्गीकारे बाधकं तत्र तदङ्गीकर्तव्यं न त्वन्यत्र । ततश्च तत्र साधने स्वातन्त्र्याभावे विध्यादिशास्त्रवैयर्थ्यं स्यादिति तदवैय्यर्थ्याय तत्रेश्वरः स्वातन्त्र्यं ददातीति प्राक्कर्ता शास्त्रार्थवत्वादित्युक्तम् । न चैवं फले स्वातन्त्र्यानङ्गीकारे बाधकमस्ति येन तदङ्गीकर्तव्यं स्यादिति भावः ।

॥ इति विद्याकर्माधिकरणम् ॥ १४ ॥

## १९. न तृतीयाधिकरणम्

'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।
अपि नीचगतौ किञ्चित्किमु मानुषदेहिनः' इति ।

वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—

**ॐ न तृतीये तथोपलब्धेः ॐ ।। १९ ।।**

'अथाविद्वानकर्माऽवाग्गच्छति त्रिधा ह वाऽवाग्ग (च्छ) तिस्तिर्यग्यातना तम इति । द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' इति श्रुतेर्न तृतीया वाग्गतौ सुखम् ।

### तत्त्वप्रदीपिका

एवं तावदूर्ध्वगती द्वे इत्युक्तम् । ते अपेक्ष्याधोगतिस्त्वान्तरभेदभिन्नाऽपि तृतीयस्थानमित्युच्यते । तच्च तृतीयस्थानं त्रिविधमुक्तं तिर्यङ्नरकं तम इति । तत्र प्रथमं स्पष्टोक्तं 'जायस्व म्रियस्व'ति । इतरे चोक्ते 'संयमन' इत्यादिना । तृतीयं पुनर्विशेषतो वेदयति । न तृतीये तथोपलब्धेः ।। 'त्रिधा ह वाऽवाग्गच्छति' । वाव एव । अवाग्गच्छतीति यत्तत्त्रिधैवेत्यर्थः । 'समाने लोप' इति सूत्रादेक-वकारलोपः ।।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यायान्धन्तमसो दुःखमात्रतासाधनादस्ति शास्त्रादिसङ्गतिः । अन्धे तमस्यपि सुखसद्भावे न तत्रातिशयेन वैराग्यमुत्पद्यतेऽतस्तन्निषेध्यम् । प्रकृतमन्धन्तमो विषयः । सुखयुक्तं न वेति सन्देहः । लोकदृष्टिरलौकिकत्वं च सन्देहबीजम् । पूर्वपक्षयति **।। यत्रेति ।।** अन्धन्तमोऽपि सुखयुक्तमेव । दुःखयुक्तत्वात् । सुखेन च दुःखस्य व्याप्तत्वात् । न च वक्तव्यं सर्वसुखदुःखयोरप्रत्यक्षत्वाद् व्याप्तिग्रहणानुपपत्तिरिति । 'यत्र दुःखम्' इत्यागमेन तद्ग्रहणोपपत्तेः । अतोऽन्धतमस्यपि सुखसद्भावान्न तत्रातिवैराग्यमपेक्षितमिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **।। अत इति ।।** अधोगतिषु तृतीये तमसि न सुखमस्तीति मन्तव्यम् । 'अथाविद्वान्' इति तथाभिधायकश्रुतेरित्यर्थः ।

## भावबोधः

प्रकृतमन्धन्तम इति ॥ 'अपि सप्त' इत्यत्रेत्यर्थः । न च तर्हि तदानन्तर्यमेव स्यादिति वाच्यं 'तत्रापि च' इत्यनेन सदुःखत्वे सिद्धे सुखाभावविचारस्य प्रवृत्तेः । तर्हि 'विद्याकर्मणोः' इत्यनेन व्यवधाने किं कारणमिति चेत् । सत्यम् । सदुःखत्वविचारस्य सर्वनरकविषयत्वम् । अस्य तमोमात्रविषयत्वमिति ज्ञापनमिति भावः । अत्रान्धंतमः सुखयुक्तं न वेति चिन्ता । तदर्थं दुःखं सुखेन व्याप्तं न वेति । तदर्थं व्याप्तिग्राहकं प्रमाणमस्ति न वेति । तदर्थं तत्र बाधकं प्रमाणं नास्त्युतास्तीति । महातमस्यपि सुखप्राप्तिरिति भाष्यव्याख्यानपरेणान्धंतमोऽपीत्यादिना व्याप्तत्वादित्यन्तेन दुःखसहावस्थायित्वादन्धंतमस्यपि सुखमिति न्यायविवरणमुक्ततात्पर्यं भवति ।

## भावदीपः

**अन्धतमस इति** ॥ अन्धतमसस्येत्यर्थः । 'द्वित्रिभ्यां पाद्दन्मूर्धसुबहुव्रीहौ' इत्यादिनिर्देशेन समासान्तविधेरनित्यत्वादवसमन्धेभ्यस्तमस इति समासान्तो नाश्रितः । एतेन विद्याकर्मरहितानां तिर्यङ्नरकतमोभेदेन यत्त्रेधावस्थानं तत्राद्यं पूर्वत्र स्पष्टमुक्तम् । जायस्व म्रियस्वेति द्वितीयस्वरूपं तु तत्रापि चेत्यत्रोक्तम् । अत्र तु तृतीयस्य तमसः स्वरूपं निरूप्यत इति वा प्राङ्नरकवत्पौनः पुन्येन जननमरणवद्रूपे भतानां तृतीयावस्थाने मिश्राणीति सुखदुःखमिश्रत्वोक्तौ तमोरूपेऽपि तृतीयेऽवस्थाने तथास्त्विति शङ्कोदयाद्वाऽवान्तरसङ्गतिः सूचिता । ननु नरकवद्दुःखरूपत्वेऽपि वैराग्योपपत्तौ किं दुःखमात्रोक्त्येत्यतः फलफलिभावं व्यनक्ति ॥ **अन्धेति** ॥ **प्रकृतमिति** ॥ प्रागवरोहपदादिना प्रस्तुतं तिर्यग्वा नरकं तम इति पूर्वत्र चोपस्थापितं चेत्यर्थः । दुःखसहावस्थायित्वादन्धे तमस्यपि सुखमित्यन्यत्रेह भाष्ये च सुखदुःखयोर्व्याप्तिमात्रस्यैवोक्त्या हेत्वनुक्तेरसाङ्गत्यनिरासाय स्वयं हेतुं वदन् महातमसीत्यादि प्रतिज्ञाभाष्यं व्याचष्टे ॥ **अन्धन्तमोऽपीति** ॥ दुःखसहावस्थायित्वादित्यन्यत्रोक्तहेतुं स्मृत्यनुरोधेन व्यनक्ति ॥ **सुखेन चेति** ॥ तावतैव पूर्तौ भाष्ये यत्र दुःखं तत्र सुखमिति व्याप्तिवचनोक्तेरुपयोगं व्यनक्ति ॥ **न च वक्तव्यमिति** ॥ **अत इति** ॥ सुखव्याप्तदुःखयुक्तत्वादित्यर्थः । न तृतीयावाग्गतौ सुखमिति भाष्यदिशा सूत्रेऽवाग्गताविति शेषोक्तौ तृतीयायामिति निर्देशापत्तेर्न तृतीयेत्यादिभाष्यं फलितोक्तिपरं मत्वा सूत्राक्षरार्थमाह ॥ **अधोगतिष्विति** ॥ तासां तिसृणां तिर्यग्वा नरकं तम इति पूर्वं प्रकृतत्वादिति भावः ।

## १५. न तृतीयाधिकरणम्

'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।
अपि नीचगतौ किञ्चित्किमु मानुषदेहिनः' इति ।

वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—

**ॐ न तृतीये तथोपलब्धेः ॐ ॥ १९ ॥**

'अथाविद्वानकर्माऽवाग्गच्छति त्रिधा ह वाऽवाग्ग (च्छ) तिस्तिर्यग्यातना तम इति । द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' इति श्रुतेर्न तृतीया वाग्गतौ सुखम् ।

### तत्त्वप्रदीपिका

एवं तावदूर्ध्वगती द्वे इत्युक्तम् । ते अपेक्ष्याधोगतिस्त्वान्तरभेदभिन्नाऽपि तृतीयस्थानमित्युच्यते । तच्च तृतीयस्थानं त्रिविधमुक्तं तिर्यङ्नरकं तम इति । तत्र प्रथमं स्पष्टोक्तं 'जायस्व म्रियस्व'ति । इतरे चोक्ते 'संयमन' इत्यादिना । तृतीयं पुनर्विशेषतो वेदयति । न तृतीये तथोपलब्धेः ॥ 'त्रिधा ह वाऽवाग्गच्छति' । वाव एव । अवाग्गच्छतीति यत्तत्त्रिधैवेत्यर्थः । 'समाने लोप' इति सूत्रादेक-वकारलोपः ॥

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यायान्धन्तमसो दुःखमात्रतासाधनादस्ति शास्त्रादिसङ्गतिः । अन्धे तमस्यपि सुखसद्भावे न तत्रातिशयेन वैराग्यमुत्पद्यतेऽतस्तन्निषेध्यम् । प्रकृतमन्धन्तमो विषयः । सुखयुक्तं न वेति सन्देहः । लोकदृष्टिरलौकिकत्वं च सन्देहबीजम् । पूर्वपक्षयति ॥ **यत्रेति** ॥ अन्धन्तमोऽपि सुखयुक्तमेव । दुःखयुक्तत्वात् । सुखेन च दुःखस्य व्याप्तत्वात् । न च वक्तव्यं सर्वसुखदुःखयोरप्रत्यक्षत्वाद् व्याप्तिग्रहणानुपपत्तिरिति । 'यत्र दुःखम्' इत्यागमेन तद्ग्रहणोपपत्तेः । अतोऽन्धतमस्यपि सुखसद्भावान्न तत्रातिवैराग्यमपेक्षितमिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अधोगतिषु तृतीये तमसि न सुखमस्तीति मन्तव्यम् । 'अथाविद्वान्' इति तथाभिधायकश्रुतेरित्यर्थः ।

## भावबोधः

प्रकृतमन्धन्तम इति ॥ 'अपि सप्त' इत्यत्रेत्यर्थः । न च तर्हि तदानन्तर्यमेव स्यादिति वाच्यं 'तत्रापि च' इत्यनेन सदुःखत्वे सिद्धे सुखाभावविचारस्य प्रवृत्तेः । तर्हि 'विद्याकर्मणोः' इत्यनेन व्यवधाने किं कारणमिति चेत् । सत्यम् । सदुःखत्वविचारस्य सर्वनरकविषयत्वम् । अस्य तमोमात्रविषयत्वमिति ज्ञापनमिति भावः । अत्रान्धंतमः सुखयुक्तं न वेति चिन्ता । तदर्थं दुःखं सुखेन व्याप्तं न वेति । तदर्थं व्याप्तिग्राहकं प्रमाणमस्ति न वेति । तदर्थं तत्र बाधकं प्रमाणं नास्त्युतास्तीति । महातमस्यपि सुखप्राप्तिरिति भाष्यव्याख्यानपरेणान्धंतमोऽपीत्यादिना व्याप्तत्वादित्यन्तेन दुःखसहावस्थायित्वादन्धंतमस्यपि सुखमिति न्यायविवरणमुक्ततात्पर्यं भवति ।

## भावदीपः

**अन्धतमस इति ॥** अन्धतमसस्येत्यर्थः । 'द्वित्रिभ्यां पाद्दन्मूर्धसुबहुव्रीहौ' इत्यादिनिर्देशेन समासान्तविधेरनित्यत्वादवसमन्धेभ्यस्तमस इति समासान्तो नाश्रितः । एतेन विद्याकर्मरहितानां तिर्यङ्नरकतमोभेदेन यत्त्रेधावस्थानं तत्राद्यं पूर्वत्र स्पष्टमुक्तम् । जायस्व म्रियस्वेति द्वितीयस्वरूपं तु तत्रापि चेत्यत्रोक्तम् । अत्र तु तृतीयस्य तमसः स्वरूपं निरूप्यत इति वा प्राङ्नरकवत्पौनः पुन्येन जननमरणवद्रूपे भतानां तृतीयावस्थाने मिश्राणीति सुखदुःखमिश्रत्वोक्तौ तमोरूपेऽपि तृतीयेऽवस्थाने तथास्त्विति शङ्कोदयाद्वाऽवान्तरसङ्गतिः सूचिता । ननु नरकवद्दुःखरूपत्वेऽपि वैराग्योपपत्तौ किं दुःखमात्रोक्त्येत्यतः फलफलिभावं व्यनक्ति ॥ **अन्धेति** ॥ **प्रकृतमिति** ॥ प्रागवरोहपदादिना प्रस्तुतं तिर्यग्वा नरकं तम इति पूर्वत्र चोपस्थापितं चेत्यर्थः । दुःखसहावस्थायित्वादन्धे तमस्यपि सुखमित्यन्यत्रेह भाष्ये च सुखदुःखयोर्व्याप्तिमात्रस्यैवोक्त्या हेत्वनुक्तेरसाङ्गत्यनिरासाय स्वयं हेतुं वदन् महातमसीत्यादि प्रतिज्ञाभाष्यं व्याचष्टे ॥ **अन्धन्तमोऽपीति** ॥ दुःखसहावस्थायित्वादित्यन्यत्रोक्तहेतुं स्मृत्यनुरोधेन व्यनक्ति ॥ **सुखेन चेति** ॥ तावतैव पूर्तौ भाष्ये यत्र दुःखं तत्र सुखमिति व्याप्तिवचनोक्तेरुपयोगं व्यनक्ति ॥ **न च वक्तव्यमिति** ॥ **अत इति** ॥ सुखव्याप्तदुःखयुक्तत्वादित्यर्थः । न तृतीयावाग्गतौ सुखमिति भाष्यदिशा सूत्रेऽवाग्गताविति शेषोक्तौ तृतीयायामिति निर्देशापत्तेर्न तृतीयेत्यादिभाष्यं फलितोक्तिपरं मत्वा सूत्राक्षरार्थमाह ॥ **अधोगतिष्विति** ॥ तासां तिसृणां तिर्यग्वा नरकं तम इति पूर्वं प्रकृतत्वादिति भावः ।

(भावदीपः)

तथोपलब्धेरित्येतद्विवरणपरतया भाष्यं व्याचष्टे ॥ **अथेति** ॥ **श्रुताववागच्छतीति** ॥ यत् तत् त्रिधा ह वाव त्रिधैवेत्यर्थ इति तत्वप्रदीपे एवकारार्थस्य वावेत्यस्य 'समाने लोपः' इति सूत्रादेक-वकारलोप इत्युक्तम् ।

## अभिनवचन्द्रिका

**लोकदृष्टिरलौकिकत्वं चेति** ॥ इहापि अलौकिकत्वमेव सन्देहबीजं लौकिकदृष्टिस्तु प्रागुक्तदिशा तस्य साचिव्यमाचरतीति तथोक्तमिति बोध्यम् । एतेन लोकदृष्टेर्लौकिके सुखवत्त्वरूपकोटिप्रापकत्वेऽपि अलौकिके तदप्रापकत्वात् सन्देहबीजत्ववर्णनमयुक्तमिति परास्तम् । एवमेवंजातीयके सर्वत्र द्रष्टव्यम् ॥ **अतिवैराग्यमिति** ॥ नरकाऽपेक्षयेत्यर्थः ॥ **अप्रियत्वादिति** ॥ अभिव्यक्ताप्रीतिविषयत्वादित्यर्थः । एतेन एतेषामेव संसारदशायां सुखित्वेनेश्वरेष्टत्वदर्शनाद्व्यभिचार इति परास्तम् । तत्राप्रियत्वसद्भावेऽपि हेतुकृताभिव्यक्ताप्रीतिविषयत्वस्य तत्राभावात् । भाष्यस्थ 'लोकसिद्धिः' इति पदमनूद्य व्याचष्टे **लोकसिद्धिरिति** ॥ लोकसिद्धदृष्टान्तेन तमसः सुखराहित्यसाधकमनुमानं स्मृतिसिद्धमिति भावः । **अनेन व्यतिरेकान्वयाविति** ॥ 'विमता न सुखवत्त्वेनेश्वरेष्टाः तदप्रियत्वात्' इति प्रयोगे 'अतिप्रिये यथा राजा न दुःखं सहते क्वचित्' इत्यनेनाऽर्थात् यो यस्य सुखित्वेनेष्टः नाऽसौ तस्याऽप्रिय इति व्यतिरेकः सूचितः । 'अत्यप्रिये सुखमपि' इत्यनेन यो यस्याऽप्रियः, नाऽसौ तस्य सुखित्वेनेष्ट इत्यन्वयो दर्शित इत्यर्थः । अतः परं श्रूयमाणं 'सदसज्जनानां वा प्रकृतिः' इति वाक्यं न टीकावाक्यं किंतु प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयं, 'चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह' इति भाष्यविरुद्धत्वात् । अस्मिन् भाष्ये लोकसिद्धदृष्टान्तकानुमानस्य स्मार्तत्वाभिधानेन स्मृतेः अनुमानाङ्गव्याप्तिनिरूपणपरत्वस्यैव भाष्याऽभिमतत्वात् अस्य वाक्यस्य पूर्वेणान्वयाभावाच्च । न च सदसज्जनानां वा प्रकृतिः अनेन दर्शितेत्यन्वय इति वाच्यम् । सदसज्जनस्वभावनिरूपणस्याऽसङ्गतत्वात्, स्मृतौ तदनुपलम्भाच्च ॥ **मोहान्यथानुपपत्तेरिति** ॥ ननु मोहस्य दुःखविशेषकार्यत्वात् मोहान्यथानुपपत्त्या दुःखातिशय एव तत्र सिध्येत्, न सुखाभावः तत्कथमुच्यते मोहान्यथाऽनुपपत्तेर्न तत्र सुखलेश इति चेत् सत्यम् । मोहान्यथाऽनुपपत्त्या दुःख एवातिशयः सिध्यति अतिशयश्च निरवधिकत्वमिव सुखलेशाऽ-समानाधिकरणत्वमपीति तथोक्तम् । ननु भाष्ये 'तृतीयतमसः श्रवणात् संशोकजमोहप्राप्तिः'

(अभिनवचन्द्रिका)

इत्येतावतैव पूर्णत्वात् भाष्ये 'शब्दानुसारात्' इति पदं व्यर्थमित्यत आह– **शब्दानुसारादितीति ॥** इत्यादीत्यतः परं सूचयतीति शेषः । ततश्चैवं योजना शब्दानुसारादितिपदं तृतीयतमसः सम्यग्व्याख्याने अतिमूर्च्छा, अतिसम्यग्व्याख्याने ततोऽप्यतिमूर्च्छेत्यादि सूचयतीति । यथा यथा व्याख्यानं विशिष्यते तथा तथा दुःखं विशिष्यत इति सूचनाय तत्पदं प्रयुक्तमिति भावः ।

पूर्वपक्षस्तु अन्धन्तमोऽपि सुखयुक्तमेव दुःखयुक्तत्वात्, दुःखं हि सुखाविनाभूतम् । 'यत्र दुःखं सुखं तत्र' इति वचनात् । अतोऽन्धे तमस्यपि सुखसद्भावात् न तत्र वैराग्यमपेक्षितमिति ।

सिद्धान्तस्तु नाऽन्धे तमसि सुखलेशो वक्तव्यः । 'अथाऽविद्वानकर्माऽवाग्गच्छति 'त्रिधा ह वा अवाग्गतिःतिर्यग्यातनातम' इति, द्वे वा वसुखानुवृत्ते, न तमः सुखानुवृत्तमिति श्रुतेः, 'तिर्यक्षु नरके चैव सुखलेशो विधीयते । नाऽन्धे तमसि मग्नानां सुखलेशोऽपि कश्चन'ति स्मृतेश्च । 'विमताः न सुखवन्तः, ईश्वरेण तथाऽनिष्टत्वात् यो यथा नेश्वरेणेष्टः नासौ तथा, तथा शृङ्गित्वेनाऽनिष्टः शशो न शृङ्गि' इत्यनुमानाच्च । ईश्वरेण तथानिष्टत्वं न तदप्रियत्वहेतुसिद्धम् । तत्र सुखाभावस्य चतुर्मुखप्रत्यक्षसिद्धत्वाच्च । अधरतमःश्रवणमात्रेण तच्छ्राविणां मोहप्राप्त्य न्यथशनुपपत्त्या तत्रत्यदुःखस्य निरवधिकत्वात् सुखलेशाऽसामानाधिकरण्याऽतिशयसिद्धेश्च । न च श्रवणमात्रेणं तच्छ्राविणां मोहप्राप्तिरसिद्धेति वाच्यम् । 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत्' इति स्मरणात् । अतोऽन्धे तमसि सुखलेशाभावात् भवितव्यं तत्र तत्साधने च विरक्तेनेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृतमन्धन्तम इति ॥** सप्तेति सूत्रे प्रकृतमित्यर्थः । यद्वा विद्याकर्मणोरिति सूत्रोपात्तस्मृतौ तिर्यग्वा नरकं तम इति प्रकृतमित्यनन्तरसङ्गतिरिति भावः । अन्धन्तमः सुखयुक्तं न वेति चिन्ता । तदर्थं दुःखं सुखेन व्याप्तं न वेति । तदर्थं व्याप्तिग्राहकप्रमाणस्य बाधकं नास्त्युतास्तीति । अत्रापि सहस्थानमित्युक्तन्यायप्रदर्शकं भाष्यं व्याचष्टे ॥ **अन्धन्तमोऽपीति ॥ न तत्रातिवैराग्यमिति ॥** ननु वैराग्यं रागाभावः । कथं तत्र तारतम्यमिति चेन्न । प्रतियोगिनि रागे फलतारतम्येन तारतम्यात् । अभावेऽपि तदनुसारेण फलतारतम्येन तारतम्यस्य विवक्षितत्वात् । सूत्रे सुखमित्यध्याहारः । तृतीये तिर्यग्वा नरकं तम इत्युक्ताधोगतिषु मध्ये तृतीये तमसीति विवक्षित्वा व्याचष्टे ॥ **अधोगतिष्विति**

(वाक्यार्थमुक्तावली)

**॥ तथाभिधायकश्रुतेरिति ॥** स्पष्टश्रुतेरित्यर्थः । तेनापि नीचगताविति व्याप्तिवचनं स्पष्टश्रुतिबला-द्विविधनीचगतिविषयमित्युक्तं भवति । एतेनोपलब्धेरिति पूर्तेः तथेत्यधिकमिति निरस्तम् ।

## तत्त्वसुबोधिनी

**प्रकृतमन्धन्तम इति ॥** अपि सप्तेत्यत्रेत्यर्थः । तर्हि तदानन्तर्यं स्यादिति न वाच्यम् । तत्रापि चेत्यनेन सदुःखत्वे सिद्धे दुःखाभावविचारस्य प्रवृत्तेः । तर्हि विद्येत्यनेन व्यवधाने किन्निमित्तमिति न वाच्यम् । सदुःखत्वविचारस्य सर्वनरकविषयत्वं अस्य तु तमोमात्रविषयत्वमिति ज्ञापनमिति भावः **॥ अन्धन्तमोऽपीति ॥** तमोगताः न सुखवन्तः दुःखवत्वादित्यनुमानमुक्तं भवति ।

## वाक्यार्थविवरणम्

**लोकदृष्टिरिति ॥** कारागृहे सुखदुःखयोरुभयोरपि दृष्टत्वादिति भावः । श्रुतौ 'अकर्मा' इत्यस्य कर्माकर्ता विरुद्धकर्मकर्ता मिथ्यामानी चेत्यर्थो 'अनिष्टादि' इत्यधिकरणोक्तरीत्या द्रष्टव्यः।

## वाक्यार्थमञ्जरी

प्रकृतमपि सप्तेत्यनेन लोकदृष्टिरंधकारेऽपि विषयभोक्तुः सुखदर्शनम् **॥ ॐ न तृतीये तथोपलब्धेः ॐ ॥ तृतीये** तृतीयावाग्गतावन्धे तमसि न सुखमस्ति । कुतः ? **तथोपलब्धेः ।** अथाविद्वानिति श्रुतौ तथा दर्शनादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ स्मर्यतेऽपि च लोके ॐ ॥ २० ॥**

**'तिर्यक्षु नरके चैव सुखलेशो विधीयते ।**
**नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन' इति भविष्यत्पर्वणि ।**

**लोकसिद्धं चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।**

**'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् ।**
**अत्यप्रिये सुखमपि तथैव परमेश्वरः' इति हि ब्राह्मे ॥**

## तत्त्वप्रकाशिका

एतमेवार्थं स्मृत्यनुमानाभ्यां च साधयत्सूत्रमुपन्यस्य तां स्मृतिमुदाहृत्यानुमानस्वरूपं च सूचयति ॥ **स्मर्यतेऽपीति** ॥ एतदन्धेतमसि सुखराहित्यं लोकसिद्धं लौकिकदृष्टान्तयुक्तानुमानसिद्धमित्यर्थः । अयमभिसन्धिः । विप्रतिपन्ना न सुखवन्तः । तथात्वेनेश्वरानिष्टत्वात् । यद्यथेश्वरानिष्टं तत्तथा न भवति । यथा शशो विषाणित्वेन । नैते सुखित्वेनेश्वरेष्टाः । अप्रियत्वात् । यो यस्याप्रियः स सुखित्वेन न तदिष्टः । यथा राजविरोधी राज्ञ इति । एतच्चानुमानं स्मृतिसिद्धत्वेनातिप्रबलमिति भावेनाह ॥ **च शब्दादिति** ॥ लोकसिद्धिः लोकदृष्टान्तवदनुमानेन तमसः सुखराहित्यसिद्धिः । क्वासौ स्मृतिरित्यत आह ॥ **अतीति** ॥ अनेन व्यतिरेकान्वयौ दर्शितौ । सदसज्जनानां वा प्रकृतिः ।

## गुर्वर्थदीपिका

तथात्वेनेश्वरानिष्टत्वादित्यत्र ईश्वरस्येष्टाः सङ्कल्परूपेच्छाविषयाः न भवन्ति ईश्वरानिष्टाः । तथात्वेन सुखवत्त्वेनेश्वरानिष्टत्वादीश्वरसङ्कल्पाविषयत्वादित्यर्थः । अप्रियत्वादीश्वराप्रियत्वात् । अनेन व्यतिरेकान्वयौ दर्शितावित्यस्य 'अतिप्रिये यथा राजा' इति स्मृतिवचनेन व्यतिरेकान्वयौ अप्रियत्वादिति हेतोः व्यतिरेकान्वयौ दर्शितावित्यर्थः । यः ईश्वराप्रियः स सुखित्वेनेश्वरेष्टो न भवतीत्यन्वयव्याप्तिरुत्तरार्धेन कथिता । यद्यपि पूर्वार्धे न दुःखं सहत इत्येवास्ति । तथापि यो यत्र दुःखं न सहते स सुखित्वेनैव तस्येष्टो दृष्ट इति साध्याभावोऽप्यर्थादुक्त एवेति भावः ।

## भावबोधः

नन्वन्धे तमसि सुखराहित्यानुमाने लौकिकदृष्टान्तानुपलम्भादुदाहरिष्यामाणस्मृतौ चेश्वरस्य स्वाप्रिये सुखासहनराजादिदृष्टान्तोक्तेः कथमेतदित्यत ईशस्याप्रियत्वेनैव कारणाभावादिति न्यायविवरणं मनसि निधाय तदभिप्रायमाह ॥ **अयमभिसन्धिरिति** ॥ कारणाभावादिति न्यायविवरणोक्तसाक्षाद्विप्रतिपन्नार्थसाधकमनुमानमाह ॥ **विप्रतिपन्न इति** ॥ तथात्वेनेश्वरानिष्टत्वादित्यनेनेशेच्छारूपकारणाभावादिति व्याख्यातं भवति । अप्रियत्वेनैवेत्युक्तं हेतुसाधकमनुमानमाह ॥ **नैते सुखित्वेनेश्वरेष्टा इति** ॥ तमोगतानामसुरादीनामीश्वराप्रियत्वं तु–

'तमोद्वेषेण संयाति भक्त्या मुक्तिं तथैव च ।
विष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा ॥'

(भावबोधः)

इत्याद्यनेकप्रमाणसिद्धम् । एतच्चानुमानं स्मृतिसिद्धत्वेनातिप्रबलमिति । तथा च तमसि सुखसाधकानुमानस्यानेन बाध इत्यर्थः ।

ननु स्मृतौ ईश्वरः 'स्वाप्रिये सुखं न सहत' इत्यत्रात्यप्रिये सुखं यथा राजा न सहते तथैव परमेश्वर इत्येतावदेव वक्तव्यम् । 'अतिप्रिये यथा' इत्यादिकं किमर्थमुदाहृतमित्यत आह ॥ **अनेन व्यतिरेकान्वयौ दर्शिताविति** ॥ नैते सुखित्वेनेश्वरेष्टा अप्रियत्वादित्यनुमाने प्रथमार्धेन व्यतिरेकः तृतीयपादेनान्वयः प्रदर्शित इत्यर्थः । दुःखस्य सुखविरुद्धत्वेन दुःखपदस्य सुखाभावपरत्वात् व्यतिरेकत्वं द्रष्टव्यम् । अत एव पक्षान्तरमाह ॥ **सदसज्जनानां वेति** ॥ अत्र पूर्वं सदसज्जनानां प्रकृतत्वात्तत्र परमेश्वरः 'सज्जनेषु दुःखं न सहत' इत्यत्रातिप्रिये यथा राजेति दृष्टान्तोक्तिः । 'असज्जनेषु सुखं न सहत इत्यत्रात्यप्रिय' इति दृष्टान्तोक्तिरिति भावः ।

## भावदीपः

सूत्रेऽपिचशब्दयोः श्रवणादाह ॥ **स्मृत्यनुमानाभ्यां चेति** ॥ भाष्यस्थैतच्छब्दं व्याचष्टे ॥ **एतदिति** ॥ भाष्येऽनुमानप्रकारस्यास्फुटत्वात्स्मृत्युक्तान्वयव्यतिरेकवशादीशस्याप्रियत्वेन कारणाभावान्न चान्धे तमस्यपि सुखमित्यन्यत्रोक्त्यनुरोधाच्च । विमता न सुखिनः ईशाप्रियत्वादित्युक्तौ संप्रतिपन्नदृष्टान्ताभाव इत्यतो प्रियत्वहेतुं सकर्तृकत्वे कार्यत्वद्वारा सावयवत्वमिव सुखराहित्यरूपे साध्ये सुखित्वेनेश्वरानिष्टत्वद्वारा परंपरया सङ्गमयितुमाह ॥ **अयमभिसंधिरिति** ॥ **अप्रियत्वादिति** ॥ एतच्च परद्विषो गुरुद्विष इत्यादिना प्रागुक्तश्रुत्यादिसिद्धद्वेषित्वावमन्तृत्वादिना सिद्धमिति भावः । स्मृत्यनुरोधेन दृष्टान्तलाभाय सामान्यव्याप्तिमाह ॥ **यो यस्येति** ॥ दृष्टान्तवदिति 'मतुप्' न तु 'वतिः' ॥ **व्यतिरेकेति** ॥ यो यस्य सुखित्वेनेष्टस्स तस्य प्रियः । यथा राजानुकूलो राज्ञ इति व्यतिरेकव्याप्तिः । अन्वयस्तु प्रागुक्त एव । व्यतिरेकस्य व्यभिचारशङ्कानिरासेनान्वयव्याप्तिग्रहणद्वारानुमित्यङ्गत्वमुपेत्य व्यतिरेकोपन्यास इति भावः । अप्रियत्वहेतौ व्याप्त्युपपादकत्वे स्मृत्युपयोगमुक्त्वेदानीं व्यभिचारासिद्ध्योर्निरासपरतयोपयोगमाह ॥ **सदसज्जनानां वेति** ॥ 'प्रकृतिं यान्ति भूतानि' इत्यादाविव प्रकृतिः स्वभाव इत्यर्थः । दर्शितेत्यनुषङ्गः । राजानुकूले राजवत् परमेश्वरो यस्मिन् दुःखं न सहते यश्च तस्य प्रियः स सज्जनस्वभावः । राजविरोधिनि राजेव यस्मिन्नीश्वरः सुखं न सहते तदप्रियश्च सोऽसज्जन इति तयोः स्वभावोऽत्र

(भावदीपः)

प्रदर्श्यते । तथा च सज्जने हेतुसाध्ययोर्द्वयोरप्यभावान्न व्यभिचारोऽसज्जने नासिद्धिश्चेति भावः । एवं चास्मिन् पक्षे न सहत इत्यस्येच्छापरत्वमिति तात्पर्यम् ।

## वाक्यार्थमुक्तावली

न तृतीये सुखमित्येतत्स्मर्यते लोकेऽपि सिद्धमिति सूत्रार्थपरे भाष्ये एतल्लोकसिद्धमिति पदद्वयार्थमाह ॥ **तदिति** ॥ ननु कथमत्रानुमानम् । तमः सुखरहितं तमस्त्वादित्युक्ते दृष्टान्ताभावः । एवं तामसा न सुखिनः तामसत्वादित्यत्रापीत्यतश्चशब्दसूचितस्मृत्यनुसारेण प्रयोगप्रकारमाह ॥ **अयमभिसन्धिरिति** ॥ परमेश्वरो विप्रतिपन्नेषु 'सुखं न सहत' इत्यंशसूचितं कारणाभाव इत्युक्तन्यायमीश्वरेच्छारूपकारणाभावात् न विप्रतिपन्नाः सुखिन इति व्यञ्जयन्ननुमानमाह ॥ **विप्रतिपन्ना इति** ॥ तत्रासिद्धिवारणाय राजेवाप्रिये सुखं न सहते इत्युक्तमनुमानमाह ॥ **नैते इति** ॥ राजा अत्यप्रिये यथा सुखं न सहते तथैव परमेश्वर इत्येतावता पूर्णत्वाच्छिष्टं व्यर्थमित्यत आह ॥ **अनेनेति** ॥ नैते सुखित्वेनेष्टाःअप्रियत्वादित्यनुमाने प्रथमार्धेन यथा राजा अतिप्रिये दुःखं न सहते किन्तु सुखमेवेत्युक्त्या यत्र सुखित्वेनेष्टत्वं तत्र प्रियत्वमिति व्यतिरेकव्याप्तिर्दर्शिता । तृतीय-पादेनान्वयव्याप्तिरित्यर्थः । भावबोधे तु दुःखस्य कालापेक्षया सुखविरुद्धत्वेन दुःखासहनमेव सुखाभावासहनमिति व्यतिरेकित्वं द्रष्टव्यमित्युक्तम् । व्यतिरेकव्याप्तिप्रदर्शकत्वेन पूर्वार्धस्य स्पष्ट-मप्रतीतेः पक्षान्तरमाह ॥ **सदसज्जनानां वेति** ॥ **दर्शितेत्यन्वेति** ॥ **प्रकृतिः**स्वभावः । नायं श्लोकः नैतेऽसन्तः सुखित्वेनेष्टाः अप्रियत्वादित्यनुमानेऽन्वयव्याप्तिकथनद्वारा असज्जनानां प्रकृतिरीश्वरेण सुखित्वेनानेष्यमाणेति तत्त्वभावकथनमात्रे परः किन्तु नैते सन्तः दुःखित्वेनेष्टाः अतिप्रियत्वात् इत्यनुमानेऽन्वयव्याप्तिकथनपूर्वं सज्जनप्रकृतिरीश्वरेण दुःखित्वेनानेष्यमाणेति सज्जनस्वभावकथन-परश्च । अतः पूर्वार्धः सार्थक इति भावः । एतेनात्र सदसत्स्वभावनिरूपणे चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याहेति भाष्यविरोध इति निरस्तम् । भावबोधे तु अत्र स्मृतौ पूर्वं सदसज्जनानां प्रकृतेः प्रकृतत्वम् । तथा च सज्जनेषु दुःखं न सहते इत्यभिप्रायेण अतिप्रिये यथा राजेति दृष्टान्तोक्तिः । असज्जनेषु सुखं न सहत इत्यभिप्रायेणात्यप्रिय इति दृष्टान्तोक्तिरिति भाव इति हृदयमित्युक्तम् । अनन्तभट्टीयेऽपि प्रकृतेः प्रकृतत्वम् । अनेनान्वयव्याप्तिदृष्टान्तौ दर्शितौ भवत इति भाव इत्युक्तम् ।

## तत्त्वसुबोधिनी

ननु अन्धे तमसि सुखराहित्यानुमाने लौकिकदृष्टान्तानुपलम्भात् उदाहरिष्यमाणस्मृतौ चेश्वरस्याप्रिये सुखासहन एव राजादिदृष्टान्तस्योक्तेःकथमेतदित्यत आह ॥ **अयमभिसन्धिरिति** ॥ साक्षाद्विप्रतिपन्नार्थसाधकमनुमानमाह ॥ **विप्रतिपन्ना इति** ॥ अप्रियत्वहेतुकमनुमानान्तरमाह ॥ **नैत इति** ॥ तमोगतानामसुरादीनां ईश्वराप्रियत्वं तु ' तमो द्वेषेण संयान्ति भक्त्या मुक्तिं तथैव हि । विष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा' इत्याद्यनेकप्रमाणसिद्धम् ॥ **एतच्चानुमानमिति** ॥ तथा च तमसि सुखसाधकानुमानस्यानेन बाध इत्यर्थः । ननु स्मृतावीश्वरः स्वाप्रिये सुखं न सहत इत्यत्र अत्यप्रिये सुखं यथा राजा न सहते तथैव परमेश्वर इत्येव वक्तव्यम् । अतिप्रिये यथेत्यादिकं किमर्थमुदाहृतमित्यत आह ॥ **अनेन व्यतिरेकान्वयौ दर्शिताविति** ॥ नैते सुखित्वेनेश्वरेष्टाः अप्रियत्वादित्यनुमाने प्रथमार्धेन व्यतिरेकः, तृतीयपादेनान्वयः प्रदर्शित इत्यर्थः । दुःखस्य कालापेक्षया सुखविरुद्धत्वेन दुःखासहनमेव सुखाभावासहनमिति व्यतिरेकत्वं द्रष्टव्यम् । पक्षान्तरमाह ॥ **सदसज्जनानां वेति** ॥ अत्र स्मृतौ पूर्वं सदसज्जनानां प्रकृतत्वात् तत्र परमेश्वरः सज्जनेषु 'दुःखं न सहत' इत्यत्रातिप्रिये यथा राजेति दृष्टान्तोक्तिः । असज्जनेषु 'सुखं न सहत' इत्यत्रात्यप्रिये इति दृष्टान्तोक्तिरिति भावः ।

नन्वनेनान्वयव्यतिरेकौ दर्शितावित्युक्तं तदयुक्तम् । अत्र ह्यतिप्रिये इति पूर्वार्धेन व्यतिरेकः तृतीयपादेन चान्वयः प्रदर्शित इति वक्तव्यम् । तत्रैते सुखित्वेन नेश्वरेष्टाः अप्रियत्वादित्यनुमानस्य पूर्वं प्रकृतत्वात् यत्र सुखित्वेनेष्टत्वाभावाभावः तत्राप्रियत्वाभाव इति व्यतिरेकदर्शनार्थं स्मृतौ अतिप्रिये यथा राजा सुखाभावं न सहत इति वक्तव्यम् । तथा च कथमत्र पूर्वार्धेन व्यतिरेकप्रदर्शनमिति चेन्न । अत्र हि स्मृतौ दुःखशब्दोऽजहल्लक्षणया सुखाभावपरः । एवं च 'दुःखं न सहत' इति सुखाभावं न सहत इत्यर्थः । एवं च व्यतिरेकदर्शनमुपपन्नम् । न च दुःखसुखाभावसाधारणैकधर्माभावात् कथं तेनोपलक्षणमिति वाच्यम् । सुखविरोधित्वरूपस्यैव तादृशधर्मस्य सत्वादिति भावः । यद्वा अतिप्रिये इति स्मृत्यनुसारेणैव प्रयोगावभिप्रेतौ । विमत ईश्वरेण दुखित्वेन नेष्टः सज्जनत्वात् इत्यत्रातिप्रिये इति दृष्टान्तोक्तिः । विमत ईश्वरेण सुखित्वेन नेष्टः असज्जनत्वात् इत्यत्रात्यप्रिये इति दृष्टान्तोक्तिः । न च सदसज्जनानामप्रकृतत्वात् कथमेतदिति वाच्यम् । एतत्पूर्ववाक्ये प्रकृतत्वादित्याशयेन पक्षान्तरमाह ॥ **सदसज्जनानां वा प्रकृतिरिति** ॥

## वाक्यार्थमञ्जरी

अन्धेतमसि न सुखमित्येतत् 'तिर्यक्षु नरके चैव' इति स्मर्यते स्मृत्योच्यते लोकेऽपि सिद्धमिति शेषः । लौकिकदृष्टान्तोपेतयुक्तिसिद्धं चेत्यर्थः । नन्वन्धेतमसि सुखराहित्यानुमाने लौकिकदृष्टान्तानुपलम्भात् कथमित्यत आह ॥ **अयमभिसन्धिरिति** ॥ अयमभिप्राय इत्यर्थः । स्वरूपासिद्धिवारणायाह ॥ **नैतदिति** ॥ **अतिप्रबलमिति** ॥ तथा च तमसि सुखसाधकानुमानस्यानेन बाध इति भावः । ननु स्मृतावीश्वरः स्वाप्रिये सुखं न सहत इत्यत्राप्रिये सुखं राजा यथा न सहते तथैव परमेश्वर इत्येतावदेव वक्तव्यम् । अतिप्रियेत्यादिकन्तु किमर्थमुदाहृतमित्यत आह ॥ **अनेनैवेति** ॥ नैते सुखित्वेनेश्वरेष्टा इत्यनुमानेन प्रथमार्धेन व्यतिरेकः । तृतीयपादेनान्वयो दर्शित इत्यर्थः । दुःखस्य सुखविरुद्धत्वेन दुःखपदस्य सुखाभावपरत्वात् व्यतिरेकित्वं द्रष्टव्यम् । अत एवास्वरसात्पक्षान्तरमाह ॥ **सदसज्जनेति** ॥ अत्र स्मृतौ पूर्वं सदसज्जनानां प्रकृतत्वात् तत्र परमेश्वरः सज्जनेषु 'दुःखं न सहत' इत्यत्रातिप्रिये यथा राजेति दृष्टान्तोक्तिरसज्जनेषु 'सुखं न सहत' इत्यत्रात्यप्रिय इति दृष्टान्तोक्तिरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥**

**'नारायणप्रसादेन समिद्धज्ञानचक्षुषा ।**
**अत्यन्तदुःखसल्लीनान्निश्शेषसुखवर्जितान् ॥**
**नित्यमेव तथाभूतान्विमिश्रांश्च गणान्बहून् ।**
**निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः ॥**
**अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुखः'**

**इति दर्शनवचनाच्च पाद्मे ।**

## तत्त्वप्रदीपिका

**दर्शनाच्च** ॥ 'अपश्यत्त्रिविधान्ब्रह्म' इत्युक्तं त्रैविध्यं त्रिष्वपि तेषु नित्यदुःखिषु विमिश्रेषु नित्यसुखिषु चावान्तरभेदादवगन्तव्यम् । 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम्' इति हि

(तत्त्वप्रदीपिका)

**वक्ष्यति । दुःखतारतम्येन भेदं तदायतनानाम् । विमिश्रभेदस्वल्पसुखसम्मिश्राल्पदुःखभेदात् नारकिणो मानुषाः स्वर्गिण इति । मनुष्योत्तमा ऋषिगन्धर्वा देवा इति । मुक्तेषु नित्यसुखिषु च सुखतारतम्याद्भेद उक्तः । एतेषु नित्यमेव तथाभूतत्वं समानम् । विमिश्रेषु नित्यमतथाभाविनश्च सन्ति । स्वरूपावस्थितमध्यमानामेव नित्यं तथाभावात् । सर्वेषां च जीवानामास्वरूपा वस्थाना-द्विमिश्रत्वमेवेत्यनेकशो विमिश्राः । अत एतदाह– 'विमिश्रांश्च गणान्बहून्' इति । तच्च विमिश्रत्वमनन्तविधमिति सूचयति ॥ विमिश्रानिति ॥**

## तत्त्वप्रकाशिका

**प्रत्यक्षेणाप्येतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ दर्शनाच्चेति ॥ तमसि स्थितानां सुखलेश-राहित्यं हिरण्यगर्भप्रत्यक्षदर्शनाच्च सिद्ध्यति । न च वाच्यं परप्रत्यक्षस्यास्माकमसिद्धिः । तस्यापि परसुखाभावदर्शनानुपपत्तिरिति । भगवत्प्रसादसमृद्धज्ञानदृष्ट्या तद्दर्शनस्य स्मृतिसिद्धत्वादिति भावः ॥**

## भावदीपः

भाष्ये वचनोक्तेः कथमस्य प्रत्यक्षोक्तिपरत्वमित्यतः सूत्रार्थमाह ॥ **तमसीति** ॥ न तृतीये सुखमित्यनुवृत्तस्यार्थः तमसीत्यादि । वचनोक्तेरुपयोगमाह ॥ **न चेत्यादिना** ॥ नारायणेत्याद्यंश-स्योपयोगाय व्यावर्त्यमाह ॥ **तस्यापीति** ॥ हिरण्यगर्भस्यापीत्यर्थः ॥ **स्मृतीति** ॥ स्मृतौ त्रिविधानित्यनेन न केवलं दुःखिमिश्रसुखिभेदात्त्रैविध्यम् । किं तु प्रत्येकमपि वक्ष्यमाणदिशोर्ध्व-मध्याधरतमोगतभेदेन दुःखिनां नारकिमानुषस्वर्गिभेदेन मिश्राणां मनुष्योत्तमरूपाधमऋषिगन्धर्वादि-रूपमध्यमदेवरूपोत्तमभेदेन सुखिनां प्रत्येकं त्रैविध्यात् । अनेकशो विमिश्रा इति दर्शयितुं गणानित्युक्तिरित्यादिनेयं स्मृतिस्तत्वप्रदीपे व्याख्याता ।

## वाक्यार्थमुक्तावली

हिरण्यगर्भप्रत्यक्षदर्शनाच्चैतत्सिद्धम् । दर्शनवचनाच्चेति सूत्रार्थः । स्मृत्यर्थस्तु तत्त्वप्रदीपेऽनु-सन्धेयः ।

## वाक्यार्थविवरणम्

**परप्रत्यक्षस्य** चतुर्मुखप्रत्यक्षस्य । **तस्यापि** चतुर्मुखस्यापि । भगवत्प्रसादेत्याद्युक्तरीत्या दर्शनानुपपत्तेः स्मृतिसिद्धत्वादित्युक्त्या अस्माकमसिद्धेश्च परिहारो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

तमसि सुखं नेत्यर्थः । तद्विरिञ्चिदर्शनरूपप्रत्यक्षाच्च सिद्धमित्यर्थः ।

## सूत्रभाष्यम्

**ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ॥ २२ ॥**

**तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिः ।**

## तत्त्वप्रदीपिका

**तृतीये तमसि श्रुतमात्र एव तच्छब्दानुसारेण संशोकजस्यात्यन्तदुःखोद्भूतस्य मोहस्यावरोधः प्राप्तिः ।**

## तत्त्वप्रकाशिका

अर्थापत्त्याप्येतमर्थं साधयत्सूत्रं पठित्वा व्याचष्टे ॥ **तृतीय इति** ॥ तमोऽपि त्रिविधम् । तत्र तृतीयविषये यः शब्दस्तेनावरोधः प्राप्तिर्भवति । कस्य । मोहस्य मूर्छायाः कथं तच्छ्रवणेन शोकः शोकान्मूर्छेति । एवं तत्स्वरूपश्रोतॄणामपि मोहान्यथानुपपत्तेर्न तत्र सुखलेश इति भावः । अधोगतौ तृतीयत्वस्य प्रथमसूत्र एवोक्तत्वादत्र पुनस्तृतीयग्रहणवैयर्थ्यापत्तेस्तृतीयेऽपि तृतीयग्रहणम् । एतच्चातिद्वेषिणामधिकदुःखसूचनायैव ॥ **शब्दानुसारेणेति** ॥ सम्यग्व्याख्यानेऽतिमूर्छेत्यादि ।

## गुर्वर्थदीपिका

तृतीये तृतीयतमस इत्यत्र तृतीयेति प्रतीकं गृहीत्वा तृतीयतमस इति विषयषष्ठ्यभिप्रायेण व्याख्यानम् । अनेन तृतीय इति सौत्रसप्तमी विषयसप्तमीति सूचितम् । संशोकजपदस्य विशेष्यावश्यम्भावान्मोह इत्युक्तम् ।

## भाववोधः

ननु 'तिर्यग्यातना तम' इति तमसः अधोगतिषु तृतीयत्वस्योक्तत्वात्तृतीयतमस इति भाष्ये कथमुक्तमित्यत आह ॥ **तमोऽपि त्रिविधमिति** ॥

(भावबोधः)

नन्वत्र सूत्रे तिर्यगाद्यधोगतौ तमस एव तृतीयत्वज्ञापकतया तृतीय इत्युपपत्तेर्भाष्ये तृतीयतमस इति 'तृतीय' इत्येतत्सौत्रं पदं कथं तृतीयतमःपरत्वेन व्याख्यातमित्यत आह ॥ **अधोगताविति** ॥ तमस्तृतीयत्वस्य 'न तृतीय' इति प्रथमसूत्र एवोक्तत्वादत्र सूत्रे तज्ज्ञापनार्थं तृतीयग्रहणवैयर्थ्यापत्तेः । उपलक्षणमेतत् । 'महातमस्त्रिधा प्रोक्तम्' इति उत्तरसूत्रानुगृहीतस्मृत्यनुसाराच्च तृतीयेऽपि तिर्यगाद्यधोगतौ तृतीये तमस्यपि तृतीयस्याधराख्यतमोविशेषस्य ग्रहणमित्यर्थः ।

ननु 'श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत्' इति स्मृत्यनुसारेण भाष्ये श्रवणादेव संशोकजमोहप्राप्तिरित्यन्वयपूर्तेः शब्दानुसारादिति किमर्थमुक्तमित्यत आह– **शब्दानुसारादिति** ॥ अनेन 'तस्मान्न विस्तरेणैव कथ्यते राजसत्तम' इति स्मृत्यनुसारात् कथनानुसारात् सम्यग्व्याख्यान इति यावदिति 'शब्दानुसारादि'त्यस्य तात्पर्यमुक्तं वेदितव्यम् । अतिमूर्छेत्यनेन संशोकजमोहप्राप्तिभाष्यांशः 'अति' इत्यध्याहारेण प्रकारान्तरेण योजितः । यद्वा सूत्रस्थ 'सं'शब्दानुरोधेन भाष्ये शब्देत्येतच्छब्दानुसारादिति व्याख्यातमित्यभिप्रेत्याह ॥ **शब्दानुसारादिति** ॥ अत एव पूर्वं 'सं'शब्दो न योजित इति भावः ।

## भावदीपः

**अर्थापत्त्यापीति** ॥ अर्थापत्तेरनुमानत्वेऽप्यर्थापत्त्युपमे अनुमाविशेष इत्युक्त्यानुमाविशेषत्वात्पृथगुक्तिरिति भावः । समर्थयदित्येतदुक्तसमाधानम् । भाष्यस्य सूत्राविसंवादाय सूत्रारूढतया भाष्यं दर्शयन् पूर्वस्मात्तृतीयपदमनुवर्त्य सूत्राक्षराणि योजयति ॥ **तमोऽपीति** ॥ पूर्वदर्शनाच्चेत्यत्राभिमतस्मृतौ तत्त्रैविध्यस्य प्रस्तुतत्वादिति भावः । न केवलमधोगतिमात्रं तिर्यगादिभेदेन त्रिविधमित्यपेरर्थः । एतेन तिर्यग्यातना तम इति तृतीये तमसि तृतीये अधररूपतमोविषय इति सूत्रयोजना सूचिता । मोहस्येति शेषः । संशोकजस्येत्येतद् व्यनक्ति ॥ **कथमित्यादिना** ॥ अर्थापत्तिस्वरूपं निष्कृष्य दर्शयति ॥ **एवमिति** ॥ शोकद्वारेत्यर्थः । भाष्ये तृतीये तृतीयतमस इति द्विरुक्तेर्बीजमाह ॥ **अधोगताविति** ॥ तद्विभागसूचनेनाधरतमसो दुःखातिशयोक्तावाद्यतमसि किञ्चित्सुखमस्तीति भ्रान्तिनिरासायैतदुक्तेरुपयोगमाह ॥ **एतच्चेति** ॥ न त्वाद्यद्वितीयतमसोः किञ्चित्सुखमस्तीति द्योतनायेत्येवकारार्थः । भाष्यस्थानुपदतात्पर्यं व्यनक्ति ॥ **शब्देति** ॥ मूर्छेत्यादीत्यादिपदेन मरणम् ।

## वाक्यार्थमुक्तावली

तृतीय इत्यस्ति । तस्य च 'तिर्यग्वा नरकं तमः' इत्युक्तरीत्या तिर्यङ्नरकापेक्षया तृतीये तमसीत्यर्थः । श्रुतस्य तृतीय इत्यस्य तत्रापि यत्तृतीयमधरं तमस्तस्मिन्नित्यर्थः । विषयसप्तमीयम् ॥ **शब्देति** ॥ श्रुतशब्दो विवक्षितः । मोहस्येति शेष इत्यभिप्रायेण तृतीये तृतीयतमस इति भाष्यं व्याचष्टे ॥ **तमोऽपीति** ॥ न केवलमवाग्गतिरित्यपिशब्दः । ननु सौत्रतृतीयपदेनाधोगतिषु तृतीयस्य तमस एव ग्रहणसम्भवाच्च भाष्ये तृतीयस्य त्रैविध्यमुक्त्वा तत्तृतीयग्रहणं कुत इत्यत आह ॥ **अधोगताविति** ॥ यद्यत्र तृतीयपदेनाधोगतिषु तृतीयस्य तमस एव ग्रहणं विवक्षितं, तर्हि तृतीय इति न प्रयोक्तव्यमेव । अधिकरणव्यवधानमन्तरेण प्रथमसूत्र एव तृतीयग्रहणस्य सत्त्वादनुवृत्तिसम्भवादिति भावः । प्रयोजनविशेषसत्त्वाच्च तृतीयपदेन तृतीयग्रहणमित्याह ॥ **एतच्चेति** ॥ अधिकद्वेषातिवैराग्यकर्तव्यत्वसूचनायेत्यर्थः । अतिमूर्च्छेत्यादीत्यादिपदेन तत्त्वप्रदीपोक्तमरणं गृह्यते ।

## तत्त्वसुबोधिनी

ननु तिर्यग्यातना तम इति तमसः अधोगतिषु तृतीयत्वेनोक्तत्वात् तृतीयतमस इति भाष्ये कथमुक्तमित्यत आह ॥ **तमोऽपि त्रिविधमिति** ॥ शब्देनावरोधः प्राप्तिर्भवतीत्युक्तम् । तत्र कस्य प्राप्तिर्भवतीति पृच्छति ॥ **कस्येति** ॥ उत्तरमाह ॥ **मोहस्येति** ॥ तस्य व्याख्या ॥ **मूर्च्छाया इति** ॥ शब्देन कथं मूर्च्छाप्राप्तिरिति पृच्छति ॥ **कथमिति** ॥ उत्तरमाह ॥ **तच्छ्रवणेनेति** ॥ तृतीयतमोविषयशब्दश्रवणेनेत्यर्थः ।

नन्वत्र सूत्रे तिर्यगाद्यधोगतौ तमस एव तृतीयत्वज्ञापकतया तृतीय इत्युपपत्तेर्भाष्ये तृतीयतमस इति तृतीय इत्येतत् सौत्रपदं कथं तृतीयतमःपरत्वेन व्याख्यातमित्यत आह ॥ **अधोगताविति** ॥ तमस्तृतीयत्वस्य न तृतीय इति प्रथमसूत्र एवोक्तत्वात् अत्र सूत्रे तज्ज्ञापनार्थं तृतीयग्रहणवैयर्थ्यापत्तेः । उपलक्षणमेतत् । 'महातमस्त्रिधा प्रोक्तम्' इत्युत्तरसूत्रानुगृहीतस्मृत्यनुसाराच्च । तृतीयेऽपि तिर्यगाद्यधोगतौ तृतीये तमस्यपि तृतीयस्याधराख्यतमोविशेषस्य ग्रहणमित्यर्थः । अधराख्यतृतीयतमसः कथनं किमर्थमित्यत आह ॥ **एतच्चेति** ॥ ननु 'श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत्' इति स्मृत्यनुसारेण भाष्ये श्रवणादेव संशोकजमोहप्राप्तिरित्यन्वयपूर्तेः शब्दानुसारेणेति किमर्थमुक्तमित्यत आह ॥ **शब्दानुसारेणेतीति** ॥ अनेन 'तस्मान्न विस्तरेणैतत् कथ्यते

(तत्त्वसुबोधिनी)

राजसत्तम' इति स्मृत्यनुसारेण शब्दानुसारेण कथनानुसारेण शब्दानुसारेणेत्यस्य तात्पर्यकथनम् ॥ **सम्यग्व्याख्याने इति** ॥ संशोकजमोहप्राप्तिरित्यस्य अतीत्यध्याहारेण व्याख्यानम् ॥ **अति-मूर्च्छेति** ॥ एवं च तृतीयतमसः शब्दावरोधः शब्दात् शब्दानुसारात् तृतीयतमसः शब्देन सम्यग्व्याख्याने कृते सति अवरोधः प्राप्तिः संशोकजस्यातिमूर्च्छाया इत्यर्थः ॥ **सम्पद्यत इति** ॥ अत्राद्ये सूत्रे तमसि सुखराहित्ये श्रुत्युक्तिः । द्वितीये तत्रैव स्मृत्युक्तिः । तृतीये प्रत्यक्षोक्तिः । चतुर्थेऽर्थापत्त्युक्तिः । पञ्चमे उपपादकस्य प्रामाणिकत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**अर्थापत्त्येति** ॥ तत्स्वरूपश्रोतॄणां मोहान्यथानुपपत्त्येत्यर्थः । **तच्छ्रवणेन** तच्छब्दश्रवणेन । भाष्ये संशोकजमोहेत्युक्त्या सूत्रे 'संशोकजस्य' इत्यनन्तरं मोहस्येति विशेष्यपदमभिप्रेतमिति ज्ञायते। तदाकाङ्क्षापूर्वकं योजयति ॥ **कस्येति** ॥ एतदुपपादकत्वेन संशोकजस्येति विशेषणं प्रवृत्तमित्याशयेन प्रवृत्तं संशोकजेति भाष्यमाकाङ्क्षापूर्वकमुपपादयति ॥ **कथमिति** ॥ तृतीयतमो-विषयकशब्दश्रवणेन मोहप्राप्तिः कथमित्यर्थः ॥ **तच्छ्रवणेनेति** ॥ तृतीयतमःप्रतिपादक-शब्दश्रवणेनेत्यर्थः ॥ **मोहान्यथानुपपत्तेरिति** ॥ मोहस्यान्यथा तमसो दुःखरूपत्वाभावेऽ-नुपपत्तेरित्यर्थः । ननु तृतीय इत्येतत्सूत्रे तृतीयपदं तृतीयेऽपि तृतीयतमस इति कुतो व्याख्यायते । किं नामावाग्गतिस्त्रिविधा । तिर्यग् यातना तम इति । तत्रैवमधोगतेस्त्रिविधत्वात्तृतीयेऽधोगतौ तृतीयभूते तमसीति कुतो न व्याख्यायत इति चेत्तत्राह ॥ **अधोगताविति** ॥ अधोगतिमध्ये तृतीयत्वस्य तमस इति शेषः ॥ **प्रथमसूत्रेति** ॥ न तृतीय इति अधिकरणप्रथमसूत्रे । ननु तृतीयेऽपि तृतीयतमसि अतिदुःखकथनेनापि किं कृत्यमित्यत आह ॥ **एतच्चेति** ॥ **अतिद्वेषिणां** कल्या-दीनाम् । शब्दः कथनं व्याख्यानमिति यावत् । तथा च शब्दानुसाराद् व्याख्यानुसारादित्यर्थ इत्यभिप्रेत्योक्तम् ॥ **सम्यगिति** ॥ विस्तरेणेत्यर्थः ।

## वाक्यार्थमञ्जरी

तृतीये तृतीयतमस्यपि विषये संशोकजस्यातिदुःखजस्य मोहस्य शब्दावरोधः शब्दश्रवणानु-सारेण प्राप्तिर्भवतीत्यर्थः । ननु 'तिर्यग्यातना तम' इति तमसोऽधोगतिषु तृतीयस्योक्तत्वात् तृतीयत्वस्य तमस इति कथं भाष्येऽभिहितमित्यत आह– **तमोऽपीति** ॥ **कथमिति** ॥

(वाक्यार्थमञ्जरी)
शोकसाध्यमोहस्य श्रवणमात्रेण प्राप्तिः कथमित्यर्थः । नन्वत्र सूत्रे तिर्यगाद्यधोगतौ तमस एव तृतीयत्वज्ञापकत्वतया तृतीय इत्युपपत्तेः भाष्ये सौत्रतृतीयपदं किमर्थं तृतीयतमःपरत्वेन व्याख्यात-मित्यत आह ॥ **अधोगताविति** ॥ तमसस्तृतीयत्वस्य न तृतीय इति प्रथमसूत्र एवोक्तत्वात् अत्र सूत्रे तज्ज्ञापनार्थं तृतीयग्रहणवैय्यर्थ्यापत्तेः तृतीये तिर्यगाद्यधोगतौ तृतीये तमस्यपि तृतीय-स्याधराख्यतमोविशेषस्य ग्रहणमित्यर्थः । सूत्रे पुनस्तृतीयग्रहणमेव कुतः यदवैयर्थ्यायेत्थं व्याख्यात-मित्यत आह ॥ **एतच्चेति** ॥ **सम्यग्व्याख्यान** इति ॥ शब्दानुसारात् कथनानुसारात् सम्यक्तत्स्वरूपव्याख्याने सतीति यावदिति तात्पर्यकथनमिदम् ।

## सूत्रभाष्यम्

**ॐ स्मरणाच्च ॐ ॥ २३ ॥**

**'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।**
**श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ॥**
**तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तम' इति कौर्मे ।**

## तत्त्वप्रदीपिका

**मर्च्छादिः मूर्च्छोन्मादमरणम् । तदुक्तिविस्तरानुसारेण मूर्च्छादिः समासतो व्यासतो वा भवति ।**

## तत्त्वप्रकाशिका

**तृतीयतमसः स्वरूपश्रवणे श्रोतॄणां मोहप्राप्तिरित्येतत्कुतः । यदन्यथानुपपत्त्या तत्र सुखाभाव इत्याशङ्कां स्मृत्या परिहरत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ स्मरणाच्चेति ॥ अतोऽन्धतमसि सुखलेशाभावाद्भवितव्यं तत्र तत्साधने च विरक्तेनेति सिद्धम् ।**

## भावबोधः

सूत्रक्रमस्तु–

'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्'

(भावबोधः)

इति वचनादलौकिकेऽर्थे आगमस्येतरप्रमाणापेक्षया मुख्यत्वात्तत्राप्यपौरुषेयत्वेन वेदस्यैव मुख्यत्वात् प्रथमसूत्रे– 'तथोपलब्धेः' इति तमसि सुखराहित्ये श्रुतिरभिहिता । द्वितीये 'स्मर्यतेऽपि' इत्यंशेन तदनन्तरप्राप्ता स्मृतिर्दर्शिता । 'लोके च' इत्यनेन त्वनुमानमुक्तम् । यद्यपि 'दर्शनाच्च' इति प्रत्यक्षोक्त्यनन्तरमनुमानं वक्तव्यम् । तथापि पृथक् सूत्रेण तदुक्तौ तमसि सुखसाधकानुमानबाधकत्वोपयुक्तप्राबल्याय पुनः स्मृतिसिद्धत्ववचने गौरवं स्यादिति स्मृतिवचन-प्रसङ्गेन स्मार्तमनुमानमप्युक्तम् । तृतीये अर्थापत्त्यपेक्षया प्रबलस्य प्रत्यक्षस्योक्तिः । चतुर्थे अवशिष्टार्थापत्त्युक्तिः । यद्यप्यर्थापत्तिरनुमानमेव । तथापि विशेषविवक्षया तदुक्तिरिति ज्ञेयम् । पञ्चमे उपपादकस्य प्रामाणिकत्वोक्तिरिति ।

## भावदीपः

नयार्थस्य वैराग्यफलकत्वं व्यंजयन्नुपसंहरति ॥ **अत इति** ॥ श्रुतिस्मृतियुक्तिप्रत्यक्षार्थापत्तीनां सुखराहित्यसाधिकानां भावात् । यत्र दुःखं तत्र सुखमिति व्याप्तेरनेकमानबाधेन तमोऽन्यविषयतया संकोचावश्यंभावाच्चेति कृत्स्नहेतुभा (वार्पकः)गार्थकः सूत्रार्थः । न तृतीय इति प्रतिज्ञाभागार्थोऽध इत्यादि । शेषेण फलोक्तिः ।

## वाक्यार्थमुक्तावली

चोऽवधारणे । स्पष्टं स्मृतिसद्भावादेव । न त्वस्मदभिमतसिद्ध्यर्थमेवेत्यर्थः । न केवलं तृतीय-तमसः श्रवणानुसारेण संशोकसंमूर्च्छादिरित्यस्य किन्तु तमस्त्रैविध्यस्यापि स्मरणादिति समुच्चये वा चशब्दः । तत्राद्ये तमसि सुखलेशाभावे श्रुतिः । द्वितीये स्मृत्यनुमाने । तृतीये प्रत्यक्षम् । चतुर्थेऽर्था-पत्तिः । पञ्चमेऽप्यन्यथानुपपत्त्या सुखाभावः । तस्य प्रामाणिकत्वोक्तिरिति सूत्रक्रमः । यद्यपि प्रत्यक्षमनुमानात्प्रबलम् । तथापि चतुर्मुखप्रत्यक्षस्यास्माकमप्रत्यक्षत्वेनास्माकमागमिकत्वात् अनुमाना-नन्तर्यम् । वैदिकेऽर्थे प्रत्यक्षदौर्बल्याच्चार्थापत्तेरनुमानत्वेऽपि तद्विशेषत्वज्ञापनाय व्यवधानमिति ।

## वाक्यार्थमञ्जरी

तृतीयतमसःस्वरूपश्रवणेऽतिमूर्छेत्येतस्य 'च' शब्दात्त्रैविध्यस्य च 'महातमस्त्रिधा प्रोक्तम्' इत्यादिना स्मरणादित्यर्थः ।

॥ इति न तृतीयाधिकरणम् ॥ १५ ॥

## १६. तत्स्वाभाव्याधिकरणम्

'धूमो भूत्वाऽभ्रं भवति' (छां.उ.५-१०-५) इत्याद्यन्यभावः श्रूयते । स कथमित्यतो ब्रवीति—

**ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ २४ ॥**

धूमादिषु प्रविश्य तद्गतौ गतिः (तत्)स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते । न च तत्पदप्राप्तिः । गारुडे च—

'धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु ।
स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ॥
न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते ।
विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा ॥
एकदेशस्वभावेन वागभेदाऽपि युज्यते ।
यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपीति' ॥

### तत्त्वप्रदीपिका

अवसितोऽवाग्गतिविशेषविचारः । या पुनरसौ पुण्यवतां पुनरागतिरगादि तत्प्रकारोऽयमतः प्रपञ्च्यते । 'तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्न निवर्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादिना विचार्यते । किं मुख्यत एव किंवा तत्पदाप्तिरथवा तत्सादृश्यापत्तिरिति । तत्र तावन्मुख्यत इति प्राप्तम् । तथा श्रुतेरेव । न च युक्तिविरोधमात्रेण श्रुतपरित्यागो युक्तः श्रुतिशरणानाम् । विरोधे युक्तेर्दुर्बलत्वात् । अथाप्यदृष्टत्वान्न साक्षादन्यस्यान्यभाव इत्याग्रहिष्ट । अस्तु तर्हि सञ्चितपुण्यस्य तस्य यथाक्रमं चरतो धूमाद्यभिमानिदेवतापदप्राप्तिर्धूमादिभावः । अन्यथा श्रुतिवैयर्थ्यात् । न च तत्सादृश्यभावमात्रेण तद्भावापत्तिश्रुतेरर्थवत्त्वं कल्प्यम् । अगतिकत्वात्तत्कल्पनाया इत्यत आह ॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ धूमादिषु प्रविश्य तद्गतौ गतिः स्थितौ स्थितिरादिशब्दाल्लघुत्वं पृथगभिमानाभावश्चेति तत्स्वाभाव्यापत्तिरेव तद्भावापत्तिः । तस्य धूमादेः स्वभावसदृशः स्वभावो यस्य स 'तत्स्वभावः' । गजमुख इतिवत् । तत्स्वभावता 'तत्स्वाभाव्यं' तदापत्तिस्तत्सादृश्यापत्तिरित्यर्थः । न ह्यन्यस्यान्यभावो युज्यते । न च मृदो

(तत्त्वप्रदीपिका)

घटभावेऽप्यमृद्भावः, मृद्धट इति प्रतीतेः । न च मृदन्यो घटो भवति । न चान्यस्यान्यभाव श्रुतः । न च तत्पदप्राप्तिस्तस्य कर्मिणो युज्यते । विद्यागम्यत्वात्तस्य । ब्रह्मदर्शिनां हि जीवन्मुक्तानां पदप्राप्तिर्गम्यते । तत्परतो मुक्तिश्रवणात् । ईषत्सादृश्येऽप्यभेदोक्तिर्युज्यते । तदाह– **'एकदेश' इत्यादि ।** एकदेशस्वभावसादृश्येन भेदरहिता वाग्युज्यते । यथाऽत्यन्तविलक्षणो जीवः किञ्चित्सादृश्यात्परमात्मेत्युच्यते । श्रुतियुक्त्यनुभवसम्प्रतिपत्तिबलादयं दृष्टान्त उपात्तः ।

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्यसिद्ध्यर्थं कर्मिणां धूमादिभावनिवारणादस्ति शास्त्रादिसङ्गतिः । कर्ममात्रेण महासुखे धूमादिभावे लभ्यमाने नायं तत्र विरज्येत अतोऽसौ निवारणीयः । तत्र विषयं दर्शयति **॥ धूम इति ॥** कर्मिणः स्वर्गादवतीर्णा यथा गतमन्यथा चागच्छन्तीत्युक्तम् । तेषामागतौ धूमादिदेवताभावः श्रूयते 'धूमो भूत्वा' इति । स धूमादिभावोऽत्र विषय इत्यर्थः । सन्देहप्रकारं दर्शयति **॥ स इति ॥** स धूमादिभावो धूमादिदेवतैक्यं वा कर्मिणस्तत्पदप्राप्तिर्वा प्रकारान्तरं वेत्यर्थः । शब्दस्यानेकवृत्तयः सन्देहबीजम् । ऐक्यं तत्पदप्राप्तिर्वेति पूर्वः पक्षः । सामानाधिकरण्यश्रुतेः । सा ह्युभयथोक्तरीत्या युज्यते । अन्यथा तद्विरोधः । न च श्रुतेरन्यार्थत्वं कल्पनीयम् । बाधकमन्तरेण मुख्यार्थत्यागायोगात् । न च कर्मिणो देवतापदप्राप्तिरसम्भाविता । धूमादिदेवताभिः सहावस्थानात् । स्नेहादिवशेन ताभिरेव स्वपदस्य दातुमपि शक्यत्वात् । अतः प्रकारद्वयेऽपि सकृदनुष्ठित यज्ञानामाकल्पसमाप्तिपरमसुखसम्भवाद्ध्यर्थं कर्मणि तत्फले च वैराग्यमिति ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **॥ अत इति ॥** अत धूमादिभावप्राप्तिर्नाम कर्मिणस्तत्स्वभावत्वप्राप्तिरेव । न चैतावता पदप्राप्तिपर्यायत्वम् । तद्गतौ गतिरित्याद्येकदेशस्वभावत्वात् । तादृशे सादृश्ये च सामानाधिकरण्यदर्शनात् । तत्प्रवेशेन स्थानैक्याभिप्रायं वैतद्वाक्यं तथा प्रयोगदर्शनादिति भावः । कुतोऽर्थोऽयं स्यादित्यत आह **॥ न हीति ॥** प्रागन्यस्य कर्मिणो धूमादिदेवतैक्यं तावदनुपपन्नम् । अन्यस्यान्यभावादर्शनात् । नापि तत्पदप्राप्तिर्युक्ता । तस्य नियताधिकारिभिर्विद्ययैव गम्यत्वात् । युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्ययोगाच्च । अतो मुख्यतः प्रतीयमानार्थासम्भवेनोक्तार्थस्यैवोपपत्तेरयमेव श्रुत्यर्थ इति भावः । एवं न्यायप्राप्तेऽर्थे स्मृतिं चाह **॥ गारुडे चेति ॥** अभेदा अभेदवादिनी । अतो धूमाद्यैक्याद्यभावाद्युक्तमेव कर्मतत्फलयोर्वैराग्यमिति सिद्धम् ।

## गुर्वर्थदीपिका

**महासुखे धूमादिभावे** इत्यत्र महासुखप्रदे धूमादिदेवतात्वे तदैक्य इत्यर्थः । ऐक्यप्राप्तौ देवताया अनिष्टाभावात् पदप्राप्तौ च स्वस्या अन्यत्र गमनप्रसङ्गेनानिष्टत्वात्तत्रैवासम्भवं शङ्कते ॥ **न चेति** ॥ तत्प्रवेशेन स्थानैक्याभिप्रायमित्यत्र तत्प्रवेशे सति स्थानैक्यं नामोभयोरेकदेहगतत्वम् । यद्यप्येकलोकगतत्वेनापि स्थानैक्यं वक्तुं शक्यते । तथापि धूमो भूत्वेत्यस्य स्वारस्यायैवमुक्तम् । तथा प्रयोगदर्शनादित्यस्य तप्तायःपिण्डेऽयमग्निरिति प्रयोगदर्शनादित्यर्थः ।

## भावबोधः

यथागतमन्यथा चागच्छन्तीत्युक्तमिति ॥ 'यथेतमनेवं च' इत्यत्रेत्यर्थः । तथा च धूमादिभावरूपविषयस्मारकागत्युपक्षेपकतया तेनास्य सङ्गतिरिति भावः ।

ननु तर्हि तदानन्तर्यमेवास्य स्यादिति चेन्न साक्षात्तदुपक्षिप्तगतागतविचारस्य तदनन्तरमेवास्य कर्तव्यत्वेन तत्परस्य 'चरणात्' इत्यस्य तदानन्तर्ये स्थिते इतरेषां विचाराणां तूक्तरीत्या तत्तत्प्रसङ्गेन तदनन्तरमेवावश्यकर्तव्यतया तत्परैरधिकरणैर्व्यवधानस्यादोषत्वात् ॥ **धूमादिदेवतैक्यं वेति** ॥ अत्र धूमादिभावः किं धूमादिदेवतैक्यतत्पदप्राप्त्योरन्यतर उत तद्गतौ गतिरित्याद्येकदेशस्वभावत्वादिरूपो वेति चिन्ता । तदर्थं धूमो भूत्वेत्यादिसामानाधिकरण्यश्रुतिर्मुख्यार्थोतामुख्यार्थेति । तदर्थं मुख्यार्थत्यागे कारणं नास्त्युतास्तीति । न ह्यन्यस्यान्यभावो युज्यत इति सिद्धान्तभाष्यानुसारेणाह ॥ **ऐक्यमिति** ॥ न च तत्पदप्राप्तिरिति भाष्यस्य कर्मिणोऽपि तत्पदप्राप्तिरिति न्यायविवरणस्य चानुसारेणाह ॥ **तत्पदप्राप्तिर्वेति पूर्वपक्ष इति** ॥ **तद्विरोध इति** ॥ श्रौतसामानाधिकरण्यविरोध इत्यर्थः । धूमादिदेवतासहावस्थानकर्मिणोऽपि तत्पदप्राप्तिरिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकं योजयति **न च कर्मिणामित्यादिना** ॥ **तद्गतौ गतिरित्यादीति** ॥ अत्रादिशब्देन 'स्थितिः स्थितौ प्रवेशश्च लघुत्वात्' इति स्मृत्युक्तं ग्राह्यम् ॥ **सादृश्येति** ॥ 'तत्त्वमसि' इत्यादावित्यर्थः । उपलक्षणमेतत् । तदधीनत्वे चेत्यपि ग्राह्यम् । 'सर्वं खल्विदं ब्रह्म' इति तत्रापि प्रयोगदर्शनात् । अत एवोक्तं स्मृतौ–

'यथा जीवः परो ब्रह्म ब्रह्मेदं जगदित्यपि' इति भावः ।

(भावबोधः)

इत्यादिरिति भाष्यगता'दि'शब्दार्थमाह ॥ **स्थानैक्याभिप्रायं वेति** ॥ **तथा प्रयोगदर्शनादिति** ॥ 'परेऽव्यये सर्व एकीभवन्ति' इत्यादावित्यर्थः ॥ **प्रागन्यस्येति** ॥ अनेन प्रागन्यस्य सतः कर्मिणि अन्यभावः, धूमादिदेवतैक्यं न युज्यत इति भाष्यं व्याख्यातं भवति । कुत इत्यतस्तद्धेतुप्रदर्शनपरत्वेन तदेव भाष्यं व्याचष्टे ॥ **अन्यस्येति** ॥ कुतस्तत्पदप्राप्तिर्न युक्तेत्यतः 'विद्यागम्यं पदं यस्मात् इति' स्मृत्युक्तं हेतुमाह ॥ **तस्येति** ॥ अनेन तन्निमित्तविद्याख्यकारणाभावादिति न्यायविवरणमपि व्याख्यातं भवति । 'न तत्प्राप्यं हि कर्मणा' इति स्मृतिसूचितं युक्त्यन्तरमाह ॥ **युगपदिति** ॥

## भावदीपः

एवं यथेतमनेवं चेत्यन्तेन पुण्यकृतां पुण्यलोकादिगत्यागतिप्रकारान्निरूप्य गत्यादेः कर्मफलत्वं चोक्त्वा तत्प्रसङ्गागतदुष्कृतफलभूतदुर्गतिविचारं च समाप्य अधुना आपादसमाप्ति यथेतमित्यत्र प्रस्तुतागतिचिन्ता प्रस्तूयत इति भावेन पूर्वसङ्गतिं सूचयन् अन्तर्भावसङ्गतिमाह ॥ **अत्रेति** ॥ **धूमादिभावेति** ॥ धूमादिदेवतैक्यं वा तत्पदप्राप्तिर्वेत्यर्थः । एतेन पूर्वत्र दुःखसहावस्थायित्वात्सुखस्य तमस्यपि दुःखस्येव सुखस्यापि सत्त्वं स्यादित्यस्यानेकमानबाधेनायोगेऽपि धूमादिदेवतासहावस्थायित्वात्पुण्यकृतामपि धूमादिदेवताया इव तत्पदभात्त्वं स्यादेवेति शङ्कनाद्वा पूर्वत्र वैराग्यार्थं सुखनिरासवदत्रापि देवादिभवनरूपसुखनिवारणाद्वा पूर्वोक्तदिशा दुःखयुक्तदुर्गतौ तत्साधने महादुःखयुक्ते तमसि तत्साधने च वैराग्ययोगेऽपि न देवतैक्यादिरूपमहासुखहेतौ कर्मणि तत्फले वेति शङ्कानिवारणाद्वाऽनन्तरसङ्गतिः सूचिता । फलफलिभावं व्यनक्ति ॥ **कर्मेति** ॥ **उक्तमिति** ॥ 'यथेतमनेवं च' इति सूत्रे तस्मिन्यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' आकाशाद्वायुं वायुर्भूत्वा' इत्यादिश्रुतौ छान्दोग्ये पञ्चमे उक्तम् । तत्र वायुर्भूत्वेत्यादिना धूमादिभावः श्रूयत इत्यर्थः । अभिमानिनयन्यायेन सिद्धत्वाद्देवतेत्युक्तम् ॥ **प्रकारान्तरं वेति** ॥ सादृश्यापत्तिरूपं वेत्यर्थः ॥ **अनेकेति** ॥ मुख्यामुख्यरूपानेकवृत्तय इत्यर्थः । न ह्यन्यस्येत्यादिभाष्यदिशा द्वेधा पूर्वपक्षमाह ॥ **ऐक्यमिति** ॥ भोक्त्रापत्तेरित्यत्रोक्तयुक्तिविरोधनिरासाय तत्पदेत्युक्तिः ॥ **सामानाधिकरण्येति** ॥ समानमेकमधिकरणं प्रतिपाद्यं यस्य तस्य भावः सामानाधिकरण्यं तद्बोधकश्रुतेरिति वा भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थनिष्ठत्वरूपसामानाधिकरण्य-

(भावदीपः)

श्रुतेरिति वार्थः । तथा च घटो द्रव्यं भवति वायुर्ब्रह्मा भवतीत्यादौ यथा तदैक्यं तत्तत्पदप्राप्तिर्वा प्रतीयते तथेहापीति । **उपपादयति ॥ सा हीति ॥**

ननु 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इत्यत्रोक्तन्यायेन तत्त्वमसि सर्वं खल्विदं ब्रह्मेत्यादिसामानाधिकरण्यश्रुतिवदियं श्रुतिः सादृश्यरूपार्थान्तरपरा स्यादेवेत्यतस्तत्रेवात्र सोपपत्तिकश्रुत्यादिरूपबाधकस्याभावेन तन्न्यायाविषयत्वेन पूर्वपक्षोत्थानमाह ॥ **न च श्रुतेरिति ॥** न च स्याल्लोकवदित्यत्रोक्तयुक्तिविरोध एव बाधकमत्रेति वाच्यम् । श्रुतितो युक्तेर्दुर्बलत्वात् । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युक्तेः । तत्पदप्राप्तौ बाधकाभावाच्च । अद्यापि देवतापदं विद्याप्राप्यं न तु कर्मलभ्यमित्यस्यासिद्धेरिति भावः । ननु तत्राप्यनेकयत्नसाध्यपदस्य कर्ममात्रलभ्यत्वस्यासम्भावितत्वमेव बाधकमित्याशङ्क्य तन्निवर्तकतया धूमादिदेवतासहावस्थानात्कर्मिणोऽपि तत्पदप्राप्तिरित्यन्यत्रोक्तयुक्तिं व्यनक्ति ॥ **न चेत्यादिना ॥ अत इति ॥** धूमो भवतीत्यादिनिर्बाधसामानाधिकरण्यश्रुतिसद्भावादुक्तदिशा तत्पदप्राप्तेरसम्भावितत्वाच्चेत्यर्थः ॥ **प्रकारेति ॥** देवतैक्यदेवतापदप्राप्तिरूपप्रकारद्वय इत्यर्थः । सकृदनुष्ठितयज्ञानामिति बहुव्रीहिः । कर्मणोऽदृष्टार्थत्वेन दृष्टार्थावघातादिवत् तादृशश्रवणादिवच्च आवर्तनानपेक्षत्वात्सकृदित्युक्तम् । देवानामाकल्पं स्थायित्वादाकल्पसमाप्तीत्युक्तम् । भाष्यस्य सूत्राविसंवादाय इत्यादिरेवेत्यन्तं तत्स्वाभाव्यापत्तिरित्यस्य व्याख्या । तद्भावापत्तिरिति तु शेषोक्तिरिति भावेन सूत्राक्षरार्थमाह ॥ **अत्रेत्यादिना ॥** श्रुतावित्यर्थः ॥ **तत्स्वभावत्वेति ॥** तत्स्वभावसदृशस्वभाववत्त्वमित्यर्थः । गजमुख इत्यादिवत् 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति वचनादेकस्वभावपदस्य लोपः । न तु तदैक्यं तत्पदप्राप्तिर्वेत्येवार्थः । कृत्स्नतत्स्वभावसादृश्यं मत्वा शङ्कते ॥ **न चैतावतेति ॥** भाष्ये तत्स्वाभाव्यापत्तिरेव तद्भावापत्तिरित्यनुक्त्वा यद्धूमादिष्वित्यादिना तद्विवरणं कृतं तस्योक्तशङ्कानिवर्तकत्वतात्पर्यमाह ॥ **तद्गताविति ॥** तद्गतिस्थितिभ्यां गतिस्थितिमत्त्वं तद्वल्लघुत्वं तदभिमानापेक्षया पृथगभिमानशून्यत्वमित्येवं रूपेषत्सदृशस्वभावत्वादित्यर्थः । भाष्यस्थादिपदेन लघुत्वं पृथगभिमत्यभावश्च ग्राह्य इति तत्त्वप्रदीपे । कथं तर्हि सामानाधिकरण्यश्रुतिरित्यत आह ॥ **सादृश्ये चेति ॥** सिंहश्चैत्र इत्यादौ वा यथा जीवः परं ब्रह्मेत्यादिस्मृत्युक्तस्थले वा दर्शनादित्यर्थः । विवृतमेतत्तद्गुणसारत्वादित्यत्रेति भावः । एवं धूमो भवतीत्यादिश्रुतेर्धूमसदृशो भवतीति गौणार्थोक्तिपरतया भाष्यं व्याख्यायेदानीं 'स्याल्लोकवत्' इत्यत्र

(भावदीपः)

भाष्योक्तदिशा धूमादिष्वित्यादिभाष्यं प्रकारान्तरेण व्याचष्टे ॥ **तत्प्रवेशेनेति** ॥ एतेन तत्स्वाभाव्यापत्तिरित्यस्य तत्प्रविष्टत्वरूपतत्स्वभावत्वप्राप्तिरित्यर्थो दर्शितः ॥ **तथा प्रयोगेति** ॥ जीवः परं ब्रह्मेत्यादिप्रयोगदर्शनादित्येवार्थः ॥ **कुतोऽर्थोऽयमिति** ॥ अमुख्योऽर्थ इत्यर्थः ॥ **अन्यभावादर्शनादिति** ॥ घटे मृत्त्वस्यापि सत्त्वेन तदन्यत्वाभावात् मृदो घटभावदर्शनेऽपि न व्यभिचार इति भावः ॥ **नापीति** ॥ भाष्ये चोऽप्यर्थ इति सूचितम् । कुत इत्यतस्तन्निमित्तविद्याख्यकारणाभावादित्यन्यत्रोक्तं हेतुं सूचयन् भाष्योक्तस्मृत्यनुरोधेन तन्निमित्तत्वं विद्याया व्यनक्ति ॥ **तस्येति** ॥ विद्ययैव न कर्मणेत्येवकारेण कर्मकृतां च विद्यरूपकारणाभावादिति सूचितम् । युक्त्यन्तरं स्वयमाह ॥ **युगपदिति** ॥ तथात्वे चान्योन्यानुरोधायोगेन तत्पदकार्यनियमनप्रतिहतिरिति भावः । बाधकमन्तरेणेति पूर्वपक्ष्युक्तहेतुं निरस्यन्न हीत्यादिभाष्यं सूत्रशेषविवरणपरमिति दर्शयन्नुक्तश्रुत्यर्थमुपसंहरति ॥ **अत इति** ॥ क्वाप्यदृष्ट्यान्यस्यान्यभावायोगाद्विद्यारूपकारणाभावेन तत्पदप्राप्त्ययोगाच्च बाधकादित्यर्थः । सहावस्थानयुक्तिस्तु सम्भाविकैव न तु तत्पददाननिर्णायिकेति भावः । अयमेव तत्स्वाभाव्यापत्तिपदोक्तगौणलाक्षणिकरूपद्विविधामुख्यार्थ एवेत्यर्थः ॥ **एवमिति** ॥ मुख्यार्थासम्भवरूपन्यायप्राप्तेऽमुख्यार्थे इत्यर्थः । वागभेदेत्येतद्घटयति ॥ **अभेदेति** ॥ स्मृतौ पृथगुपदेशादित्यत्रोक्तदिशा श्रुतियुक्त्यनुभवसंप्रतिपत्तिबलाद्यथा जीव इति दृष्टान्तोक्तिः सूत्रार्थस्य हेतुत्वं दर्शयन् फलोक्त्योपसंहरति ॥ **अत इति** ॥ धूमो भवतीत्यादिसामानाधिकरण्यश्रुतेस्तत्स्वाभाव्यापत्तिरूपामुख्यार्थत्वस्यैवोपपत्तिमत्वादित्युपपत्तेरित्यस्यार्थः । तत्स्वाभाव्यापत्तिरित्यस्य भावार्थो धूमादीति ।

## अभिनवचन्द्रिका

**धूमादिदेवताभिरिति** ॥ यद्यपि धूमादिपदमाकल्पस्थायि, तथापि अन्यस्य तत्पदप्राप्तिर्युज्यते । तद्यथा आमरणभाव्यपिराजपदं किञ्चित् कालं स्वयमनुभूय पुत्रस्नेहवशात् पुत्राय दत्वा, महाराजस्तपसे वनं गच्छति, तथा धूमादिदेवता अपि स्वपदं स्नेहात् कर्मिणे दत्वा, स्वयमन्यत्र गच्छन्तीत्यङ्गीकारे बाधकाभावादिति भावः ॥ **न चैतावतेति** ॥ तत्स्वभावप्राप्त्युक्त्या तत्पदप्राप्तिरेव शब्दान्तरेणोक्तेति न मन्तव्यमित्यर्थः ।

पूर्वपक्षस्तु कर्मिणो धूमादिपदप्राप्तिर्वा, तदैक्यं वा भवतीत्यभ्युपेयम् । 'धूमो भूत्वाऽभ्रं भवति' इति वचनात् । अनेन वाक्येन सामानाधिकरण्यबलात् धूमादिभावतत्पदप्राप्त्योः प्रतीतेः । स्नेहवशात्

(अभिनवचन्द्रिका)

राजपुत्रस्य राजपदप्राप्तिवत् अर्जुनस्येन्द्रतादात्म्यवच्च, उभयोरप्युपपन्नत्वात् । अतः प्रकारद्वयेऽपि सकृदनुष्ठितयज्ञानामाकल्पसमाप्तिपरमसुखसम्भवात् । व्यर्थं कर्मणि तत्फले च वैराग्यमिति ।

सिद्धान्तस्तु न कर्मिणः तत्तादात्म्यं तत्पदप्राप्तिर्वा सम्भवति । अन्यस्याऽन्यभावासम्भवात् । तत्पदस्य नियताधिकारिभिः ज्ञानेनैव प्राप्यत्वात् । युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्ययोगाच्च । तस्मात् तद्गतौ गतिः तत्स्थितौ स्थितिरित्यादिरूपतत्स्वाभाव्यापत्तिरेव श्रुत्यर्थः । अतो धूमाद्यैक्याद्यभावात् युक्तं कर्मतत्फलयोर्वैराग्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

यथागतमन्यथा **चागच्छन्तीत्युक्तमिति** ।। 'यथैतमनेवं च च' इत्यत्रेत्यर्थः । तथा च धूमादिभावविषयस्मारकगत्युपक्षेपकतया तेनास्य सङ्गतिरिति भावः । नैवास्यानन्तरसङ्गतिः । अनिष्टादिकारिणामपि श्रुतमित्यादीनां तत्प्रसङ्गेनावाग्गतिपरत्वेन प्रासङ्गिकत्वेन व्यवधायकत्वात् । तदुक्तं तत्त्वप्रदीपे । अवसितोऽवाग्गतिविशेषविचारः । या पुनरसौ पुण्यवतां पुनरागतिरवादि तत्प्रकारोऽयमतः प्रपञ्च्यत इति । यद्वास्याधिकरणस्य विषयतस्तच्छेषत्वेऽपि सहस्थानकारणाभावरूपपूर्वपक्षसिद्धान्तन्यायैक्येन पूर्वाधिकरणानन्तर्यं ज्ञेयम् । धूमादिदेवतैक्यं वेति । अत्र धूमादिभावः किं धूमादिदेवतैक्यतत्पदप्राप्त्योरन्यतर उत तद्गतौ गतिरित्याद्येकदेशस्वभावरूपत्वादीति चिन्ता । तदर्थं धूमो भूत्वेत्यादिसामानाधिकरण्यश्रुतेर्मुख्यार्थत्यागे कारणं नास्त्युतास्तीति ।। **अनेकवृत्तय इति** ।। पूर्वपक्षे मुख्यवृत्तिः सिद्धान्ते स्थानैक्यलक्षणा गौण्याख्यवृत्तिद्वयमित्यनेकवृत्तय इत्यर्थः । न ह्यन्यस्यान्यभावो युज्यते न च तत्पदप्राप्तिर्वेति सिद्धान्तभाष्यानुसारेण पूर्वपक्षमाह ।। **ऐक्यं तत्पदप्राप्तिर्वेति** ।। **सा ह्युभयथेति** ।। सामानाधिकरण्यश्रुतिर्वायुर्भीम इत्यादावैक्येन वायुर्ब्रह्मेत्यादावस्यैव ब्रह्मपदप्राप्तेर्भाविगत्या पदप्राप्त्या मुख्यार्थवती दृष्टेति प्रकृतेऽप्युक्तरीत्या द्वेधा मुख्यता युज्यते इति भावः ।। **अन्यार्थत्वमिति** ।। धूमादिदेवतागुणैकदेशसदृशगुणयोगेन गौणार्थत्वं स्थानैक्यार्थत्वं वेत्येकार्थत्वमित्यर्थः ।। **मुख्यार्थेति** ।। ऐक्यपदप्राप्तिरूपमुख्यार्थत्यागायोगादित्यर्थः ।

केचित्तु यद्यप्यभेदोक्तेरैक्यं मुख्यार्थः । तत्पदप्राप्तौ तु लक्षणा । तथापि गौण्यपेक्षया तत्पदप्राप्तेर्मुख्यत्वं विवक्षितम् । तत्पदप्राप्तौ तु तद्गतयावद्गुणलाभाद्गौणार्थत्वे त्वेकदेशसादृश्यमात्रलाभा-

(वाक्यार्थमुक्तावली)

दित्याचक्षते । ऐक्यपक्षस्य पृथगुपदेशादित्यन्तैर्बहुभिरधिकरणैर्निराकृतत्वात्पदप्राप्तिपक्ष एव पूर्वपक्षिणोऽभिप्रेत इत्याशयेन तत्र मुख्यार्थानुपपत्तिमाशङ्क्य परिहरति ॥ **न च कर्मिण इति** ॥ कुतो न वाच्यमित्यतो भाष्योपात्तश्रुत्युपक्रमे 'ते धूममभिसम्भवन्ति' इति धूमप्राप्त्युक्त्या सूचितं सहस्थानमित्युक्तन्यायं **विशदयति** ॥ धूमादिदेवताभिरिति ॥ **साकल्येति** ॥ तत्पदानां कल्पान्तत्वादिति भावः । सूत्रे तदिति भिन्नं पदं समस्तं च । तत्स्वाभाव्यापत्तिरिति सावधारणं विवक्षितम् । तथा च तस्य कर्मिणः तत् धूमादिभवनं तत्स्वाभाव्यापत्तिरेव । तस्य धूमादेः स्वभाव इव स्वभावो यस्य तत्स्वभावः । अश्वमुख इत्यादिवत् । तत्स्वभावस्य भावः तत्स्वाभाव्यम् । तस्यापत्तिः । धूमादिदेवतास्वाभावसदृशस्वभावप्राप्तिर्न तु तदैक्यं तत्पदप्राप्तिर्वेत्यभिप्रेत्य प्रतिज्ञाभागं व्याचष्टे ॥ **अत्रेति** ॥ **न चैतावतेति** ॥ धूमादिदेवतास्वभावसदृशस्वभावप्राप्तिरित्येतावता यावत्साद‍ृश्यमादाय पदप्राप्तिपर्यायत्वमस्य शब्दस्येति न वाच्यम् । तद्गतिस्थित्यादौ स्वस्यापि गतिस्थित्यादिरूप स्वभावैकदेशसदृशस्वभावत्वस्य धूमादिभावपदेन विवक्षितत्वादित्यर्थः ॥ **दर्शनादिति** ॥ तत्त्वमसीत्यादौ तदिव त्वमिति दर्शनादित्यर्थः ।

धूमादिप्रविश्येत्येतदनुसारेण पक्षान्तरमाह ॥ **तत्प्रवेशेनेति** ॥ धूमाद्यभिमानिनः कर्मिणां ग्रामे उभयोरप्येकदेशस्थितत्वेन स्थानैक्यमित्यर्थः ॥ **तथा प्रयोगेति** ॥ 'गाव एकीभवन्ति' इत्यादाविति भावः । एतेन प्रयोगदर्शनेनैक्यवाक्यस्य सादृश्यस्थानैक्याभ्यामुपपत्तेरिति हेत्वंशो विवृतः । यद्वक्ष्यति एकदेशस्वभावेन वागभेदोऽपि युज्यते इति । मुख्यार्थानुपपत्तिरूपबाधकोपपत्तेर्विद्यमानत्वाच्चेति भावेन न ह्यन्यस्येत्येतद्व्याचष्टे ॥ **कुत इत्यादिना** ॥ ह्यन्यस्येति हिशब्दसूचितं विद्यागम्यमित्युत्तरत्र स्पष्टं कारणाभव इत्युक्तन्यायं विशदयति ॥ **तस्य नियताधिकारिभिरिति** ॥ न च तत्पदमिष्यत इत्येकवचनसूचितानुपपत्तिमाह ॥ **युगपदिति** ॥ 'यथा जीवःपरं ब्रह्म' इति भाष्यस्यायमर्थः । तत्त्वमसीत्यादौ ज्ञानानन्दाद्येकदेशसादृश्येन जीवः परं ब्रह्मेत्युच्यते । 'सर्वं खल्विदं ब्रह्म' इत्यत्र सकलजगद्गुणसदृशगुणात्मकत्वेन ब्रह्म जगदित्युच्यते । सर्वभूतगुणैर्युक्तं देवमाज्ञातुमर्हसीत्यादेः । सकलजगद्दोषानुषङ्गाभावात् एकदेशस्वभावेनेत्युक्तम् । स्पष्टं चैतत् 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' इत्यत्र । भावबोधे तु सादृश्ये चेति । तत्त्वमसीत्यादावित्यत्रेत्यर्थः । उपलक्षणमेतत् । तदधीनत्वे चेत्यपि ग्राह्यम् । 'सर्वं खल्विदं ब्रह्म' इति तत्रापि प्रयोगदर्शनादिति । अत एवोक्तं स्मृतौ 'यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि' इति भाव इत्यपि व्याख्यातम् ।

## तत्त्वसुबोधिनी

**यथागतमिति** ॥ यथैतमनेवं चेत्यत्रेत्यर्थः । तथा च धूमादिभावरूपविषयस्मारकगत्युपक्षेपकतया तेनास्य सङ्गतिरिति भावः । तर्हि तदानन्तर्यं स्यादिति न वाच्यम् । साक्षात्तदुपक्षिप्तगतागतविचारस्य तदनन्तरमेवावश्यं कर्तव्यत्वेन तत्परस्य चरणादित्यस्य तदानन्तर्ये स्थिते इतरेषां विचाराणां तूक्तरीत्या तत्तत्प्रसङ्गेन तत्तदनन्तरमेवावश्यं कर्तव्यतया तत्परैरधिकरणैर्व्यवधानस्यादोषत्वादिति भावः । न ह्यन्यस्यान्यभावो युज्यत इति सिद्धान्तभाष्यानुसारेणाह ॥ **ऐक्यमिति** ॥ कुत इत्यतस्तत्र प्रमाणमाह ॥ **सामानाधिकरण्येति** ॥ ऐक्ये तत्पदप्राप्तौ वा सामानाधिकरण्यश्रुतिः कथं मानमित्यत आह ॥ **सा हीति** ॥ उक्तरीत्या ऐक्यतत्पदप्राप्तिरूपोक्तरीत्या ॥ **अन्यथेति** ॥ ऐक्यतत्पदप्राप्तिरूपार्थानङ्गीकारे । तद्विरोधः धूमो भूत्वेत्यादिश्रौतसामानाधिकरण्यविरोध इत्यर्थः । नन्वस्त्येव बाधकं कर्मिणो देवतापदप्राप्त्यसम्भवरूपमित्याशङ्क्य निषेधति ॥ **न चेति** ॥ युक्त्यन्तरं चाह ॥ **स्नेहादिति** ॥ **पदप्राप्तिपर्यायत्वमिति** ॥ धूमादिभावप्राप्तिः देवतापदप्राप्तिरिति पदयोः पर्यायत्वमित्यर्थः ॥ **तद्गतौ गतिरित्यादीति** ॥ अत्रादिशब्देन स्थितौ स्थितिः प्रवेशश्च लघुत्वादिरिति स्मृत्युक्तं ग्राह्यम् । तर्हि सामानाधिकरण्यश्रुतेः का गतिरित्यत आह ॥ **सादृश्ये चेति** ॥ तत्त्वमसीत्यादावित्यर्थः । उपलक्षणमेतत् । तदधीनत्वे चेति ग्राह्यम् । 'सर्वं खल्विदं ब्रह्म' इति तत्रापि प्रयोगदर्शनात् । अत एवोक्तं 'यथा जीवःपरं ब्रह्म ब्रह्मेदं जगदित्यपि' इति भावः । इत्यादिरिति भाष्यगतादिशब्दार्थमाह ॥ **स्थानैक्येति** ॥ **तथा प्रयोगदर्शनादिति** ॥ 'परेऽव्यये सर्व एकीभवन्ती'त्यादावित्यर्थः । **प्रागन्यस्येति** ॥ अनेन प्रागन्यस्य सतः कर्मिणः अन्यभावः धूमादिदेवतैक्यं न युज्यत इति भाष्यं व्याख्यातं भवति । कुत इत्यतस्तद्धेतुप्रदर्शनपरत्वेन तदेव भाष्यं व्याचष्टे ॥ **अन्यस्येति** ॥ कुतो न तत्पदप्राप्तिर्युक्तेत्यतो विद्यागम्यमिति स्मृत्युक्तं हेतुमाह ॥ **तस्या इति** ॥ न तत्प्राप्यं हि कर्मणेति स्मृतिसूचितं युक्त्यन्तरमाह ॥ **युगपदनेकेति** ॥ वाचोऽभेदरूपत्वाद्यनुपपत्तेस्तद्व्याचष्टे ॥ **अभेदेति** ॥

## वाक्यार्थविवरणम्

धूमादिभावः ॥ धूमादिदैवतैक्यम् । तत्पदप्राप्तिश्चेत्यर्थः ॥ **सामानाधिकरण्येति** ॥ धूमो भूत्वेति सामानाधिकरण्यश्रुतेरित्यर्थः ॥ **उभयथेति** ॥ ऐक्येन वा तत्पदप्राप्त्या वेत्यर्थः ॥ **तदिति** ॥ सामानाधिकरण्यश्रुतीत्यर्थः ॥ **अन्यार्थत्वमिति** ॥ धूमादिश्रुतेर्लोकान्तर्विद्यमानत्वरूपमित्यर्थः ।

**(वाक्यार्थविवरणम्)**

सहावस्थानात् जातस्नेहादिति योज्यम् ॥ **प्रकारद्वयेऽपीति** ॥ ऐक्यपक्षे तत्पदप्राप्तिपक्षे चेत्यर्थः ॥ **आकल्पसमाप्ति** ॥ कल्पसमाप्तिपर्यन्तम् ॥ **न चैतावतेति** ॥ कर्मिणो धूमादिदेवतास्वाभाव्योक्तौ तत्पदप्राप्तेरेव तत्स्वभावत्वेन तत्पदप्राप्तिरेवोक्ता स्यादित्यर्थः ॥ **तद्गताविति** ॥ धूमादिदेवताशरीरान्तर्गतस्य कर्मिणो धूमादिदेवताया गतौ तदन्तर्गतस्यापि गतिरित्यर्थः । एकदेशस्वभावत्वसादृश्येन सामानाधिकरण्यव्यपदेश इत्येदृष्टमित्यत आह ॥ **सादृश्ये चेति** ॥ सिंहो देवदत्त इत्यादाविति शेषः । आदिपदोक्तमर्थान्तरं चाह ॥ **तत्प्रवेशेनेति** ॥ धूमादिदेवताशरीरान्तःप्रवेशेनेत्यर्थः । स्थानैक्येनैक्यव्यपदेशस्तु सायं गोष्ठे गाव एकीभूता इत्यादौ दृष्ट इत्याह ॥ **तथेति** ॥ धूमादिदेवताशरीरान्तर्गतत्वं कर्मिणामङ्गीकृत्य धूमो भूत्वेति व्यपदेशस्य तद्गतौ गतिरित्यादिसादृश्येनैकार्थमुक्त्वा प्रवेशश्चेत्यनेन धूमादिदेवताशरीररूपैकस्थानस्थत्वमङ्गीकृत्य स्थानैक्येनार्थान्तरमुच्यत इति ज्ञेयम् ॥ **समवाये** ॥ सम्मेलने । भाष्ये लघुत्वादिः तद्देवताशरीरप्रवेशे तच्छरीरस्य गुरुत्वानापादकत्वतया लाघवमित्यर्थः । भाष्ये ॥ **यथेति** ॥ तत्त्वमसीत्यादौ जीवो ज्ञानादिसादृश्येन ब्रह्मेत्युच्यते । यथा वा 'सर्वं खल्विदं ब्रह्म' इत्यादौ 'गामाविश्य च भूतानि' इति भूतधारकत्वादिरूपपृथिव्यादिगुणसदृशगुणवत्त्वेन भगवतो यथा पृथिव्यादिसर्वाभेदव्यपदेशस्तद्वदित्यर्थः ।

## वाक्यार्थमञ्जरी

**धूमादिभावेति** ॥ धूमादिदेवतैक्यतत्पदप्राप्त्योर्निरासादित्यर्थः । **अवतीर्णाः** अवरूढाः । उक्तं यथेतमनेवं चेत्यनेन प्रकारन्तरं सादृश्यादि ॥ **शब्दस्यानेकवृत्तय इति** ॥ धूमादिशब्दस्य मुख्यवृत्त्या आद्यपक्षद्वयप्रतीतिः । स एव धूमो भूत्वेति वा धूमान्तरो भूत्वेति वा प्रतीतेः । गौण्याद्यमुख्यवृत्त्या सादृश्यादिप्रतीतिरिति भावः ॥ **सामानाधिकरण्येति** ॥ कर्मी धूमो भूत्वेवं रूपाया इत्यर्थः । उक्तरीत्या शब्दस्यानेकेत्युक्तरीत्या मुख्यवृत्त्येति यावत् । तद्विरोधः श्रौतसामानाधिकरण्यविरोधः । अन्यार्थत्वं सादृश्यादिरूपम् ॥ **ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ** ॥ कर्मिणस्तत्स्वाभाव्यापत्तिः तस्य धूमादेः स्वभाव इव स्वभावो यस्य स तत्स्वभावः तस्य भावस्तत्स्वाभाव्यम् । धूमादिदेवतास्वभावसदृशस्वभावत्वस्यापत्तिः प्राप्तिः । न त्वैक्यादेः । कुतः ? उपपत्तेः । अर्थान्तरानुपपत्त्यास्यैवार्थस्योपपत्तेरित्यर्थः ॥ **सादृश्ये चेति** ॥ तत्त्वमसीत्यादावित्यर्थः । आदिशब्दार्थमाह ॥ **स्थानैक्येति** ॥ **तथा प्रयोगेति** ॥ 'परेऽव्यये सर्व एकीभवन्ति' इत्यादावित्यर्थः ॥ **कुतोऽर्थ इति** ॥ श्रुतेरयमेवार्थः कुतः स्यादित्यर्थः । **समवाये** सम्मेलने ॥

॥ इति तत्स्वाभाव्याधिकरणम् ॥ १६ ॥

## १७. नातिचिरेणाधिकरणम्

बहुस्थानगमनात्कल्पान्तमप्येवं स्यादित्यत आह—

**॥ ॐ नातिचिरेण विशेषात् ॐ ॥ २५ ॥**

'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्त' (छ. उ. ५-१०-७) इति विशेषान्नातिचिरेण ।

'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात्पूर्वमेव तु ।
मातुः शरीरमाप्नोति पर्यटन्यत्र तत्र च' इति च नारदीये ॥

### तत्त्वप्रदीपिका

एवं तर्ह्याकाशादिषु बहुस्थानेषु प्रविश्य गमनादियता कालेन जायत इति विशेषाश्रवणादतिचिरमप्येवं सञ्चरणमेव स्यादित्यत आह– **नातिचिरेण विशेषात्** ॥ तत् तेषां मध्ये, इह लोके संसारे, अभ्याशो ह यत् यथा योन्यापत्तौ कालतः सन्निकर्षो भवति तथा योनिमापद्यन्त इति विशेषश्रवणान्नातिचिरेणेमं लोकमाप्नोति ।

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनवैराग्याय स्वर्गादवरूढस्य कर्मिणोऽचिरेण गर्भवासादिप्राप्तिसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि चिरेण गर्भप्राप्तिस्तर्हि बहुकालं मध्येमार्गमतिसुखस्य लाभान्न कर्मणि विरज्येतातः सा प्रतिषेद्धव्या । प्रकृताः कर्मिणो विषयः । स्वर्गान्निर्गत्य किं चिरेण गर्भवासं प्राप्नुवन्त्युताचिरेणेति सन्देहः । द्विविधपान्थदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **बहुस्थानेति** ॥ कर्मी स्वर्गान्निर्गतश्चिरेणैव देहं प्राप्नोति । 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति' इत्यादौ बहुस्थानप्राप्तिश्रवणात् । बहुस्थानगमनं च नाचिरेण सम्भवति तत्र तत्र तत्तत्स्वाभाव्येनातिसुखे सम्भवति तद्विहायागमने प्रयोजनाभावात् । एवं च सकृदनुष्ठितयज्ञस्य स्वर्गभोगावसाने मध्येमार्गं कल्पान्तमपि तत्तद्देवतास्वाभाव्यं स्यात् । कल्पावसाने देवानां पदपर्यवसानात् । अतः किं कर्मणि तत्फले च वैराग्येणेति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ कर्मिणो न चिरेणागमनं किं त्वचिरेणैव । 'तद्य इह रमणीयचरणाः' इति विशेषश्रुतेः । न च बहुस्थानगमनविरोधः । अतिचिरेणागमनस्यैव

(तत्त्वप्रकाशिका)

**निषेधादिति भावः । तत्र कर्मिषु ये रमणीयचरणास्त इह भूमौ रमणीयां ब्राह्मणादियोनिमापद्यन्ते । आपद्यन्त इति यत्तच्चाभ्याशः कालसामीप्येनेत्यर्थः । कल्पान्तकालस्याप्यापेक्षिकसामीप्यान्नेयं श्रुतिर्बाधिकेत्यत आह ॥ स्वर्गादिति ॥ न चेष्टत्वविरोधः । इष्टत्वेऽपि क्लृप्तकालाधिककालावस्थाने कारणाभावात् अन्यथा दुःखाभावप्रसङ्गात्सर्वेषाम् । अतः कर्मिणोऽचिरेणैव गर्भवासादिदुःख प्राप्तिसद्भावाद्भवितव्यं कर्मादौ विरक्तेनेति सिद्धम् ।**

## भावबोधः

**मध्येमार्गमतिसुखलाभादिति** । तथा च पूर्वाधिकरणे कर्मिणां धूमादिदेवतास्वाभाव्यापत्त्युक्तावेव बहुस्थानगमनादित्यादिपूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **स्वर्गान्निर्गत्येति** ॥ अत्र कर्मिणः स्वर्गान्निर्गत्य चिरेण गर्भवासं प्राप्नुवन्त्युताचिरेणेति चिन्ता । तदर्थं बहुस्थानगमनं किं चिरकालेनोताचिरकालेनेति । तदर्थं तत्तत्स्वाभाव्यापत्त्या जायमानसुखस्यानुभवे इष्टत्वं प्रयोजकं न वेति । तैस्तैः सहावस्थानादतिचिरत्वमिति न्यायविवरणाभिप्रायमाह ॥ **तत्र तत्रेति** ॥ ननु भाष्ये सदाप्येवं स्यादित्यनुक्त्वा कल्पान्तमिति किमर्थमुक्तमित्यत आह ॥ **कल्पावसानमिति** ॥ तथा च यावद्देवतापदं तावदेव तत्स्वाभाव्यापत्तिनिमित्तकं सुखमिति न सर्वदेत्युक्तमिति भावः ॥ **आगमनस्यैवेति** ॥ न तु बहुस्थानगमनस्येत्यर्थः । 'पर्यटन् यत्र तत्र च' इति बहुस्थानगमन पूर्वकमचिरेणैवागमनस्योक्तेरिति भावः । कुतो नेष्टत्वविरोध इत्यतो वत्सरात् पूर्वमेव चेति क्लृप्तकालादधिकावस्थाने कारणाभावादिति न्यायविवरणोक्तं हेतुमाह ॥ **इष्टत्वेऽपीति** ॥ इष्टत्वस्यैव प्रयोजकत्वेऽतिप्रसङ्गमाह ॥ **अन्यथेति** ॥ दुःखाभावस्य सर्वेषामिष्टत्वादिति भावः ।

## भावदीपः

**अचिरेण गर्भवासादीति** ॥ मध्ये मार्गं चिरकालावस्थाननिवारणेनेति भावः । एतेन कर्मिणस्तदैक्यतत्पदप्राप्त्योरभावेऽपि चिरकालं महासुखहेतुभूततत्स्वाभाव्यापत्तिभावेन न कर्मतत्फलयोर्हेयत्वमिति शङ्कनादवान्तरसङ्गतिः सूचिता । गर्भवासादीत्यादिपदेन गर्भवासादन्यत्र यन्नानाविधजन्म तद्ग्रहः । अस्फुटत्वात्फलफलिभावं व्यनक्ति ॥ **यदीति** ॥ **मध्येमार्गमिति** ॥ पारे मध्ये षष्ठ्या वेत्यव्ययीभावः । मार्गमध्य इत्यर्थः । भाष्ये बहुस्थानगमनादित्यत्र साध्यं पूरयन् गमनपदं गमनश्रवणपरं व्याचष्टे ॥ **कर्मीति** ॥ तैस्तैस्सहावस्थानादतिचिरत्वमित्यन्यत्रोक्त्यनुरोधेन

(भावदीपः)

साध्यसाधनभावमुपपादयति ॥ **बहुस्थानेति** ॥ तत्तत्स्वाभाव्येन तैस्तैस्सहावस्थानरूपेणेत्यर्थः । सौत्रातिपदव्यावर्त्योक्तिपरं कल्पान्तमप्येवं स्यादित्येतद्व्याचष्टे ॥ **एवं चेति** ॥ बहुस्थानगमने सतीति वा शीघ्रमागमने प्रयोजनाभावे सतीति वार्थः । अभ्याशश्रुतिस्तु बहुस्थानगमनश्रवणविरोधेन गौणी नेयेति भावः । कल्पान्तमित्यवध्युक्तेर्भावमाह ॥ **कल्पेति** ॥ **अत इति** ॥ चिरकालीन-देवतास्वाभाव्यापत्तिहेतुत्वादित्यर्थः । भाष्यादावतिपदकृत्यं पश्चाद्विवृण्वानो भाष्यं व्युत्क्रमेण व्याकुर्वन् सूत्रार्थमाह ॥ **कर्मिण इति** ॥ आगमननिषेधभ्रान्तिं निरस्यन् अचिरेणेत्यनुक्त्वा न चिरेणेत्युक्तेर्भावमाह ॥ **किं त्वचिरेणैवेति** ॥ श्रुतावभ्याश इत्युक्त्या धूमादिस्थानमप्राप्यैवायातीति भ्रान्तः शङ्कते ॥ **न चेति** ॥ **विरोध इति** ॥ उक्तविशेषश्रुतेरित्यर्थः ॥ **निषेधादिति** ॥ अभ्याशश्रुतावभ्याशपदेनेत्यर्थः । एतेन सूत्रादावतिपदकृत्यं व्यक्तीकृतं श्रौतपदानामर्थमाह ॥ **तत्रेति** ॥ तदित्यस्य प्रतिपदमेतत् । तस्य व्याख्या **कर्मिष्विति** ॥ अथ य इमे ग्रामा इति पूर्ववाक्ये तेषां प्रकृतत्वादिति भावः ॥ **आपेक्षिकेति** ॥ ततोऽपि स्थूलकालापेक्षया कल्पान्त-कालस्य सामीप्यादित्यर्थः । तत्र तत्रेत्यादिना प्रागुक्तयुक्तिविरोधनिवर्तकतया वत्सरात्पूर्वमेव त्विति क्लृप्तकालादधिकावस्थाने कारणाभावादित्यन्यत्रोक्तयुक्तिं व्यनक्ति ॥ **न चेत्यादिना** ॥ इष्टत्वमेव कारणमित्यत आह ॥ **अन्यथेति** ॥ सूत्रार्थस्य हेतुत्वं व्यञ्जयन् फलोक्त्योपसंहरति ॥ **अत इति** ॥ विशेषश्रुतिस्मृतिभावात् स्मृत्युक्तक्लृप्तकालादधिकावस्थाने हेत्वभावाच्चेति विशेषादित्यस्यार्थः । नातिचिरेणेत्यस्यार्थः कर्मिणोऽचिरेणैवेत्यादि ।

## अभिनवचन्द्रिका

**अतिसुखस्य भावादिति** ॥ समानाधिकरणदुःखापेक्षयाऽतिसुखस्य भावादित्यर्थः । एतेन वैराग्यार्थं गतागतक्लेशस्य प्राक् समर्थितत्वात् तत्राऽतिसुखाऽङ्गीकारे तद्विरोध इति परास्तम् । दुःखादतिशयस्यैवाऽङ्गीकृतत्वेन दुःखाऽसंभिन्नत्वाऽनङ्गीकारात् । **आगमने प्रयोजनाभावादिति** ॥ ननु सुखमपहाय आगमने प्रयोजनाभावात् चिरेणाऽऽ यातीत्ययुक्तम् । जीवस्याऽस्वतन्त्रत्वात् । स्वतन्त्रस्य हि प्रवृत्तिनिवृत्ती प्रयोजनाधीने नाऽस्वतन्त्रस्य । प्रयोजनाभावेऽपि सुखमपहायैव विष्टिगृहीतीनां प्रवृत्तिदर्शनात् । जीवाऽस्वातन्त्र्यं 'यथेतमनेवं च' (ब.३.१.१२) इत्यत्रोक्तम् । किं च यदि जीवस्य प्रयोजनवशात् प्रवृत्तिः तदभावे च निवृतिः तर्हि स्वर्गादागमनमेव न स्यात् ।

(अभिनवचन्द्रिका)

अथ प्रयोजनाऽभावेऽप्यस्वातन्त्र्यात् स्वर्गान्निवृत्तिः तर्हि तत एव मार्गेऽप्यस्तु अविशेषादितिचेत् सत्यम् जीवोऽस्वतन्त्रः, तथापि मार्गे तत्तत्स्वाभाव्यं प्राप्तः तत्र देवताराधनेन तत्प्रसादात् तत्र तत्र बहुकालं तिष्ठेदेव । देवताप्रसादस्य सुखाऽवाप्तिहेतुत्वात् । अन्यथा ज्योतिष्टोमादपि स्वर्गादिप्राप्तिर्न स्यात् । न हि प्रेक्षावान् सुप्रसन्नदेवतामवाप्यापि स्वेष्टं न लभत इति युक्तम् । न च स्वर्गात् आगमनानुपपत्तिः मार्गवत्तद्देवतास्वाभाव्याभावेन कर्मसमाप्त्यनन्तरं पुनःप्रसादाऽऽर्जनाऽ-योगेने तत्र स्थातुमशक्यत्वात् । न हि महाराजपुरे निवसन्नपि प्रेक्षावान् राजदर्शनवर्जितो राजभृत्येषु निवारयत्सु स्थातुमीष्ट इति दृष्टम् । येनाऽसौ कर्माऽवसाने स्वर्ग एव तिष्ठेत्, कल्पावसाने तु देवानां मुक्तत्वात् तत्सान्निध्याभावेन पुनःप्रसादाऽऽर्जनाऽसम्भवात् मातृशरीरं प्राप्नुयादिति । अधिकावस्थाने कारणाभावादिति । आधिककालावस्थाने कारणस्य देवताप्रसादस्य कर्मभूमौ ईश्वरप्रेरणादौ सत्येव संपाद्यत्वेन तत्र संपादनासम्भवादिति भावः ।

पूर्वपक्षस्तु कर्मी स्वर्गान्निर्गतः कल्पान्ते देहं प्राप्नोति । 'यथेतमाकाशम्' इत्यादौ आगमन-वेलायां बहुस्थानप्राप्तिश्रवणात् । बहुस्थानगमनं च नाऽचिरेण सम्भवति । तत्र तत्र तत्तत्स्वाभाव्येन अतिमहासुखे सम्भवति तद्विहायाऽऽगमने प्रयोजनाऽभावात् । न च पुण्यस्याऽल्पत्वात् बहुकालावस्थानानुपपत्तिः । देवतासान्निध्यसद्भावेन तत्रावस्थानकारणदेवताप्रसादाऽर्जनोपपत्तेः । न हि प्रेक्षावान् वदान्यमहाप्रभुसान्निध्ये सति अनाराध्य स्वाभीष्टं न प्राप्नोतीति सम्भवति । न च तथा सति कल्पान्तेऽपि न मातृशरीरप्राप्तिरिति वाच्यम् । कल्पान्ते स्वपरिचितदेवतायामुक्तत्वेन देवतान्तरस्य च परिचयाऽभावेनाऽऽराधनायोगात् । ततश्च कर्मानुष्ठानेनैव आकल्पं सुखसद्भावात् किं कर्मणि तत्फले च वैराग्येणेति ।

सिद्धान्तस्तु अचिरेणैव संवत्सरादर्वाक् देहं प्राप्नोति । 'तद्य इह रमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमपाद्यन्त' इति श्रुतेः, 'स्वर्गाल्लोकादवाक्प्राप्तो वत्सरात्पूर्वमेव तु । मातुः-शरीरमाप्नोति पर्यटन् तत्र तत्र च' इति स्मृतेश्च । कर्मफलस्य क्लृप्तकालत्वेन अधिकाव स्थानानु-पपत्तेश्च । इह लोक एव पुण्यार्जनमिति भगवता क्लृप्तत्वेन तत्रैव पुनर्देवताऽऽराधनाऽनुपपत्तेश्च । अतः कर्मिणोऽचिरेणैव गर्भवासादिदुःखसद्भावात् भवितव्यं कर्मादौ विरक्तेनेति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र स्वर्गान्नातिचिरेण गमनमिति पूर्वपक्षे तत्स्वाभाव्यापत्तेर्हेतुत्वेनोपन्यासादनन्तरसङ्गतिः । अत्र कर्मिणः स्वर्गान्निर्गत्य किं चिरेण गर्भवासं प्राप्नुवन्त्युताचिरेणेति चिन्ता । तदर्थं बहुस्थानगमनकाले तत्स्वाभाव्यापत्त्या जायमानसुखस्येष्टत्वं विलम्बप्रयोजकत्वं न वेति । अत्र सहस्थानमित्युक्तन्यायं बहुस्थानगमनेन तैस्तैर्बहुकालसुखानुभवाय सहस्थानादचिरत्वमिति प्रदर्शकं भाष्यं व्याचष्टे ॥ **कर्मी स्वर्गादित्यादिना** ॥ बहुस्थानगमनादित्यस्य बहुस्थानगमनश्रवणादित्यर्थ उक्तः । बहुस्थानगमनान्यथानुपपत्त्येत्यर्थान्तरमाह ॥ **बहुस्थानगमनं चेति** ॥ ननु वैराग्यार्थं गतागतक्लेशस्य समर्थितत्वात् कथमिति महासुखत्वमिति चेत् तत्स्वाभाव्येन तस्याप्याक्षेपात् ।

ननु विद्याकर्मणोरित्यत्र गतागतादावस्वातन्त्र्यस्य समर्थितत्वात् प्रयोजनाधीनप्रवृत्तिर्नापि निवृत्तिः सम्भवतीति चेन्न । ब्रूमो वयं गतिस्वातन्त्र्यात् सुखमपहाय न गच्छन्तीति । किन्तु गतागतादावस्वातन्त्र्येऽपि ईशेच्छयाकाशादिषु बहुस्थानेषु प्रविश्य तत्स्वाभाव्यमनुभूयागच्छ-मानस्याचिरेणैव गमने ईशेच्छया वैषयिकसुखमनुभवतोऽपि तदिच्छयैव वैराग्योत्पादनेन तत्त्यागवत् वैराग्यं वा कारणं स्यादुत ईश एवाविरक्तस्याप्याशां विच्छिद्य तस्मात्स्थानान्निस्सारयतीति ईश्वरेच्छा वा कारणं स्यात् । न चोभययमपि । तत्र वैराग्यग्राहकप्रमाणाभावात् । प्रत्युत कामिनो महासुखे सम्भवति तद्विहाय गमनस्य प्रयोजनाभावेनासम्भावितत्वात् । ईश्वर एवातिशीघ्रं निस्सारयतीत्यत्र विशेषप्रमाणाभावाच्चेति । उक्तं च तत्त्वप्रदीपे । आकाशादिषु बहुस्थानेषु प्रविश्य गमनमियता कालेन जायत इति विशेषश्रवणात् । अतिचिरमप्येवं सञ्चरणं स्यादिति कल्पान्तमेवं स्यादित्येतदक्षरार्थमाह ॥ **एवं चेदित्यादिना** ॥ **मध्येमार्गं** मार्गस्य मध्ये ।

ननु भाष्ये अस्याप्येवमित्यनुक्त्वा कल्पान्तमिति किमर्थमुक्तमित्यत आह ॥ **कल्पावसान इति** ॥ सूत्रे यथेतमनेवमित्युक्तत्वादागमनमपि वर्तते । इष्टादिकारिणामित्यस्ति । नेति भिन्नं पदमित्यभिप्रेत्य व्याचष्टे ॥ **कर्मिण इति** ॥ न समासमभ्युपेत्याह । **किन्त्वचिरेणैवेति** ॥ विशेषात् विशेषवचनादित्यभिप्रेत्याह ॥ **तद्य इहेति** ॥ सूत्रे इतिशब्दं तद्व्यावर्त्यशङ्कां दर्शयन् व्याचष्टे ॥ **न च बहुस्थानेति** ॥ आगमनसमये यथेतमाकाशमाकाशाद्वायुमित्यादिबहुस्थानगमनेत्यर्थः ॥ **अतिचिरेणेति** ॥ अतिचिरेण गमनस्यैव निषेधात् वत्सररूपचिरकालस्याङ्गीकारात् तावत्यपि काले

(वाक्यार्थमुक्तावली)

बहुस्थानगमनोपपत्तेरित्यर्थः । भावबोधे तु आगमनस्यैवेति । न तु बहुस्थाने गमनस्यैवेत्यर्थः । पर्यटन् तत्र तत्र चेति बहुस्थानगमनपूर्वकमचिरेणैवागमनस्योक्तेरिति भाव इत्युक्तम् । तच्च इह रमणीयचरणा इत्यत्र तदित्यस्य तत्रेत्यर्थः । इति यत् तच्चेत्यप्यर्थ इति भावेन व्याचष्टे ॥ **तत्रेत्यादिना** ॥ आपेक्षिकेऽस्मिन्कोटिकल्पापेक्षया समीपत्वादित्यर्थः । आगमनसमये यत्र तत्र पर्यटनमपि वत्सरात् पूर्वमेव मातुश्शरीरं प्राप्नोतीति कालक्लृप्त्युक्त्या सूचितम् । क्लृप्तकाला-दधिकावस्थाने कारणाभाव इत्युक्तन्यायं विशदयितुमाशङ्क्य निषेधति ॥ **न चेष्टत्व इति** ॥ तत्र तत्र मार्गे बहुकालमवस्थानस्य सुखानुभवायेष्टत्वात्तद्युक्तिविरोध इत्यर्थः ॥ **इष्टत्वस्यैव प्रयोजकत्व इति** ॥ प्रसङ्गमाह ॥ **अन्यथेति** ॥ दुःखाभावस्य सर्वेषामिष्टत्वादिति भावः ।

## तत्त्वसुबोधिनी

**मध्येमार्गमतिसुखस्य लाभादिति** ॥ तथा च पूर्वाधिकरणोक्तकर्मिणां धूमादिदेवतास्वाभाव्या-पत्त्युक्तावेव बहुस्थानगमनादित्यादिपूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । कुत इत्यतस्तत्र प्रमाणमाह ॥ **यथेतमिति** ॥ अस्तु बहुस्थानप्राप्तिः, ततः किमित्यत आह ॥ **बहुस्थानेति** ॥ कुतो नेत्यत आह ॥ **तत्र तत्रेति** ॥ ननु भाष्ये सर्वदाप्येवं स्यादित्यनुक्त्वा कल्पान्तमिति किमर्थ-मुक्तमित्यत आह ॥ **कल्पावसान इति** ॥ तथा च यावद्देवतापदं तावदेव तत्स्वाभाव्या-पत्तिनिमित्तकं सुखमिति न सर्वदेत्युक्तमिति भावः ॥ **आगमनस्येति** ॥ न तु बहुस्थान-गमनस्यैवेत्यर्थः । पर्यटन् यत्र तत्र चेति बहुस्थानगमनपूर्वकमचिरेणैवागमनस्योक्तेरिति भावः । कुतो नेष्टत्वविरोध इत्यत आह ॥ **इष्टत्वेऽपीति** ॥ इष्टत्वस्यैव प्रयोजकत्वेऽतिप्रसङ्गमाह ॥ **अन्यथेति** ॥ दुःखाभावस्य सर्वेषामिष्टत्वादिति भावः ।

## वाक्यार्थविवरणम्

**अचिरेण** ॥ **शीघ्रम्** ॥ **मध्येमार्गमिति** ॥ पारे मध्ये षष्ठ्या वा । पारे मध्ये शब्दौ षष्ठ्या वा समस्येते सोऽव्ययीभावः । षष्ठीसमासापवादः । एदन्तत्वं चानयोर्निपात्यते । पारे गङ्गायाः पारेगङ्गम् । मध्ये गङ्गायाः मध्येगङ्गम् इतिवत् अव्ययीभावे नपुंसकत्वे च सति मध्ये मार्गस्य मध्येमार्गमिति भवतीति द्रष्टव्यम् । अव्ययीभावश्च । अव्ययीभावोऽप्यव्ययं स्यादित्यव्ययत्वेऽ-व्ययस्य चाम्भावे च सति मध्येमार्गमिति भवतीति ध्येयम् । एवमित्यस्यार्थस्तत्तद्देवतेति । सदैवं

(वाक्यार्थविवरणम्)

स्यादित्यनुक्त्वा कल्पान्तपदकृत्यमाह ॥ **कल्पेति** ॥ अतो न सदेत्युक्तमिति भावः ॥ **अतिचिरेणाप्यागमनस्यैवेति** ॥ तद्य इति श्रुतावन्याश इति पदेनातिचिरेणागमनस्यैव निषधेन बहुस्थानगमनं न निषिद्धमित्यतिचिरेणागमनाभावो बहुस्थनागमनं चेति द्वयमप्यङ्गीक्रियत एवातो न तद्विरोध इत्यर्थः ॥ **आपेक्षिकेति** । कल्पद्वयापेक्षयेत्यर्थः । अचिरेणागमनाङ्गीकारे बहुस्थानागमनं च नाचिरेण सम्भवतीत्याद्युक्तरीत्या सुखस्येष्टत्वेन तद्विरोध इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **अधिकेति** ॥ अधिककालेत्यर्थः ॥ **अन्यथेति** ॥ इष्टत्वस्यैवातिचिरेणागमने प्रयोजकत्वे ॥ **सर्वेषाम्** ॥ शीघ्रगामिनां केषाञ्चित् ॥ **दुःखाभावेति** ॥ तस्यापि सर्वेषामिष्टत्वादिति भावः ।

## वाक्यार्थमञ्जरी

**पान्थ इति** ॥ मार्गजनेत्यर्थः ॥ **मध्येमार्गमिति** ॥ मार्गस्य मध्य इत्यर्थः । पारे मध्ये षष्ठ्या वा । पारे मध्येशब्दौ षष्ठ्या वा समस्येते सोऽव्ययीभावः । पारेगङ्गायाः पारेगङ्गं मध्येगङ्गाया मध्ये गङ्गमित्युदाहरणम् । ननु भाष्ये सदाप्येवं स्यादित्यनुक्त्वा कल्पान्तमिति किमर्थमुक्तमित्यत आह ॥ **कल्पावसान इति** ॥ तथा च यावद्देवतापदं तावदेव तत्स्वाभाव्यापत्तिनिमित्तसुखमिति किमर्थ-मुक्तमिति भावः ॥ ॐ **नातिचिरेण विशेषात्** ॐ ॥ गर्भादिप्राप्तिरतिचिरेणातिबहुकालेन न भवति किंत्वचिरेणैव । कुतः ? विशेषात् । तद्य इहेति विशेषश्रवणादित्यर्थः ॥ **आगमनस्यैवेति** ॥ न तु बहुस्थानगमनस्यापीत्येवकारार्थः । पर्यटन्यत्र तत्र चेति बहुस्थानगमनपूर्वकमचिरेणैव गमनस्योक्ते-रिति भावः ॥ **आपेक्षिकेति** ॥ तस्योत्तरकल्पापेक्षयेत्यर्थः ॥ **इष्टत्वविरोध इति** ॥ तत्र तत्रेत्युक्तरीत्येत्यर्थः ॥ **कारणेति** ॥ **अदृष्टविशेषेत्यर्थः** ॥ इष्टत्वस्यैव प्रयोजकत्वं न कारणस्येत्यङ्गीकारेऽतिप्रसङ्गमाह ॥ **अन्यथेति** ॥ दुःखाभावस्य सर्वेषामिष्टत्वादिति भावः ।

**॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥**

## १८. अन्याधिष्ठिताधिकरणम्

'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्त'(छां.उ.५-१०-६) इति श्रवणादनर्थफलत्वं यज्ञादेरित्यतो वक्ति–

**॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ २६ ॥**

अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः । न तु भोगोऽस्य । 'धूमो भूत्वाऽभ्रं भवति' (छां. उ.५-१०-५) इत्यादिपूर्वोक्ति(क्त)वत् ।

'सोऽवाग्गतः स्थावरान्प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात्कौषारवश्रुतौ ।

'स्वर्गादवाग्गतौ देही व्रीह्यादीतरदेहगः ।
अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालत' इति वाराहे ॥

### तत्त्वप्रदीपिका

'त इह व्रीहियवा' इत्यादौ योनिप्रवेशात्पूर्वमेव जननं श्रूयते । भुक्तपुण्या आगच्छन्तो मेघपर्यन्तेन पथा वर्षेण सहावनिमवाप्ता व्रीह्यादिरूपेण जायन्त इति । अतः स्थावरजातिहेतुत्वादन्ततो दुःखफलत्वं यज्ञादेः । 'ततो वै खलु दुर्निष्प्रपतनम्' इति दुर्निर्गमत्ववचनेन दुःखानुभवसूचनाच्चेत्यत आह **॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥** अन्येन व्रीह्यादिशरीराभिमानिजीवेन भोक्तृतयाऽधिष्ठते व्रीह्यादिशरीरे प्रवेशस्तत्रोच्यते । न तु भोगो विवक्षितः । यथा धूमादिषु पूर्वोक्तेषु तद्भावोक्त्या प्रवेशादिरेव विवक्षितः । अतश्चैतत्स्पष्टीकृतं भवति धूमादिसमानदेशत्वादिसादृश्यापत्तिरेवास्येति यत्पूर्ववदिति प्रसिद्धवदुपादत्त दृष्टान्तत्वेन । न च व्रीह्यादिस्थितेर्दुःखानुभवः सूच्यते । 'ततो वै खलु दुर्निष्प्रपतनम्' इति पूर्ववत्क्षिप्रनिर्गमनाभावसूचकत्वात्तस्य । रेतस्सेकादूर्ध्वं देहाभिमानेन दुःखानुभवोपपत्तेश्च ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय कर्मिणो व्रीह्यादिभावनिरासादस्ति शास्त्रादिसङ्गतिः । सुखसाधनतया वेदोपदिष्टकर्मिणां व्रीह्यादिभावेन दुःखित्वे वेदविहितवैराग्यादावपि तच्छङ्का

(तत्त्वप्रकाशिका)

**स्यादतस्तन्निराकरणीयम्। कर्मिणो विषयः। किमागमने दुःखवन्तो न वेति सन्देहः। लोकदृष्टिः पुरुपार्थत्वं च सन्देहबीजम् ॥ त इति ॥ अस्त्येव कर्मिणामागमने दुःखम्। 'त इह व्रीहियवा' इति श्रुतेस्तेषां व्रीह्यादिभावदर्शनात्। तद्भावे छेदादिना दुःखनियमात्। न चेयं श्रुतिर्धूमादिभावश्रुतिवद्व्याख्येया। तद्वदिह बाधकाभावात्। न हि बाधकं विनाऽमुख्यार्थकल्पना युक्ता अनुपयुक्ता च। दुःखप्राप्त्यनिवारकत्वात्। व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखनियमात्। न हि दुःखिना सहावस्थानेऽपि दुःखाप्राप्तावीश्वरवत्स्वातन्त्र्यमस्ति। तच्च दुःखं यज्ञादि कर्मफलमेवागमनादेर्यज्ञादिफलत्वस्य प्रतिपादितत्वात्। अतः सुखसाधनतया वेदोदितस्यापि कर्मणो दुःखसाधनत्वे मोक्षहेतुत्वेनोपदिष्टवैराग्यादावपि विश्वासाभावादननुष्ठेयत्वं तस्येति भावः। इतिशब्दोऽन्योपलक्षणार्थः।**

**सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नागतौ कर्मिणां व्रीह्यादिभावेन दुःखं मन्तव्यम्। तत्रैव मानाभावात्। न चोक्तश्रुतिर्मानम्। यतोऽस्यां श्रुतौ कर्मिणां व्रीह्यादिशरीरप्रवेश एवोच्यते न तु तच्छरीराभिमानित्वम्। यतश्चास्य न व्रीह्यादिभावोऽतो नैव छेदादिजातदुःखभोग इति भावः। व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखं स्यादित्यत आह ॥ न त्विति ॥ सहावस्थानेऽपि दुःखकारणपापफलानुभवस्थानावसरप्राप्तत्वान्न दुःखभोगोऽस्येति भावः। यदि कर्मिणो व्रीह्यादिदेहप्रवेश एव न तु तद्भावस्तर्हि कथं सामानाधिकरण्यमित्यत आह ॥ धूम इति ॥ कर्मिणो व्रीह्यादिदेहप्रवेश एव न तु तद्भावः। प्रवेशेऽपि न भोग इत्येतत्कुतः येन श्रुतेरर्थान्तरकल्पनेत्यत आह ॥ स इति ॥ अभोगेन व्रजन्नित्यस्य सहावस्थानेऽपि दुःखाननुभवेन वर्तमान इत्यर्थः।**

## गुर्वर्थदीपिका

दह्यमानगेहप्रवेशस्येव छिद्यमानव्रीहिप्रवेशस्यापि दुःखदत्वेन तत्प्रवेशकल्पनाऽपि व्यर्थेत्याह ॥ **अनुपयुक्ता चेति** ॥ 'तिलमाषा जायन्त' इत्येतावतैव पूर्तेर्मध्ये इतिशब्दो व्यर्थ इति न शङ्कनीयम्। माषादिसमानप्रकारगोधूमादिधान्यान्तरसङ्ग्राहकत्वसम्भवादित्याह **इतिशब्द इति** ॥ ननु व्रीह्यादिषु प्रवेशे तत्कृतकर्मफलरूपच्छेदजदुःखभोगाभावेऽपि स्वकृतपापनिमित्तदुःखभोगः कुतो नेति चेत् यज्ञादिपुण्यफलकृतो मातुरुदरप्रवेशपर्यन्तमागमनहेतुभूतस्वकृतयज्ञजनितपुण्यफलस्यैवानुभूयमानत्वेन पापफलानुभवस्यावसराभावादित्याह **सहावस्थानेऽपि दुःखकारणेति** ॥ एतच्च प्रायिकम्। दैत्योपद्रवादिप्रबलनिमित्तेन पतनचिन्तया मध्येमार्गमपि कदाचिद्दुःखमस्त्येव। तदुक्तं भारते 'यदा समन्तात्पथि तांस्तुदन्ति वयांसि गृध्राः पिशिताशनाश्च' इत्यादि।

## १८. अन्याधिष्ठिताधिकरणम्

'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्त'(छां.उ.५-१०-६) इति श्रवणादनर्थफलत्वं यज्ञादेरित्यतो वक्ति–

**॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ २६ ॥**

अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः । न तु भोगोऽस्य । 'धूमो भूत्वाऽभ्रं भवति' (छां. उ.५-१०-५) इत्यादिपूर्वोक्ति(क्त)वत् ।

'सोऽवाग्गतः स्थावरान्प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात्कौपारवश्रुतौ ।

'स्वर्गादवाग्गतौ देही व्रीह्यादीतरदेहगः ।
अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालत' इति वाराहे ॥

### तत्त्वप्रदीपिका

'त इह व्रीहियवा' इत्यादौ योनिप्रवेशात्पूर्वमेव जननं श्रूयते । भुक्तपुण्या आगच्छन्तो मेघपर्यन्तेन पथा वर्षेण सहावनिमवाप्ता व्रीह्यादिरूपेण जायन्त इति । अतः स्थावरजातिहेतुत्वादन्ततो दुःखफलत्वं यज्ञादेः । 'ततो वै खलु दुर्निष्प्रपतनम्' इति दुर्निर्गमत्ववचनेन दुःखानुभवसूचनाच्चेत्यत आह **॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥** अन्येन व्रीह्यादिशरीराभिमानिजीवेन भोक्तृतयाऽधिष्ठते व्रीह्यादिशरीरे प्रवेशस्तत्रोच्यते । न तु भोगो विवक्षितः । यथा धूमादिषु पूर्वोक्तेषु तद्भावोक्त्या प्रवेशादिरेव विवक्षितः । अतश्चैतत्स्पष्टीकृतं भवति धूमादिसमानदेशत्वादिसादृश्यापत्तिरेवास्येति यत्पूर्ववदिति प्रसिद्धवदुपादत्त दृष्टान्तत्वेन । न च व्रीह्यादिस्थितेर्दुःखानुभवः सूच्यते । 'ततो वै खलु दुर्निष्प्रपतनम्' इति पूर्ववत्क्षिप्रनिर्गमनाभावसूचकत्वात्तस्य । रेतस्सेकादूर्ध्वं देहाभिमानेन दुःखानुभवोपपत्तेश्च ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय कर्मिणो व्रीह्यादिभावनिरासादस्ति शास्त्रादिसङ्गतिः । सुखसाधनतया वेदोपदिष्टकर्मिणां व्रीह्यादिभावेन दुःखित्वे वेदविहितवैराग्यादावपि तच्छङ्का

(तत्त्वप्रकाशिका)

स्यादतस्तन्निराकरणीयम् । कर्मिणो विषयः । किमागमने दुःखवन्तो न वेति सन्देहः । लोकदृष्टिः पुरुषार्थत्वं च सन्देहबीजम् ॥ **त इति** ॥ अस्त्येव कर्मिणामागमने दुःखम् । 'त इह व्रीहियवा' इति श्रुतेस्तेषां व्रीह्यादिभावदर्शनात् । तद्भावे छेदादिना दुःखनियमात् । न चेयं श्रुतिर्धूमादिभावश्रुतिवद्व्याख्येया । तद्वदिह बाधकाभावात् । न हि बाधकं विनाऽमुख्यार्थकल्पना युक्ता अनुपयुक्ता च । दुःखप्राप्त्यनिवारकत्वात् । व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखनियमात् । न हि दुःखिना सहावस्थानेऽपि दुःखाप्राप्तावीश्वरवत्स्वातन्त्र्यमस्ति । तच्च दुःखं यज्ञादि कर्मफलमेवागमनादेर्यज्ञादिफलत्वस्य प्रतिपादितत्वात् । अतः सुखसाधनतया वेदोदितस्यापि कर्मणो दुःखसाधनत्वे मोक्षहेतुत्वेनोपदिष्टवैराग्यादावपि विश्वासाभावादननुष्ठेयत्वं तस्येति भावः । इतिशब्दोऽन्योपलक्षणार्थः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ नागतौ कर्मिणां व्रीह्यादिभावेन दुःखं मन्तव्यम् । तत्रैव मानाभावात् । न चोक्तश्रुतिर्मानम् । यतोऽस्यां श्रुतौ कर्मिणां व्रीह्यादिशरीरप्रवेश एवोच्यते न तु तच्छरीराभिमानित्वम् । यतश्चास्य न व्रीह्यादिभावोऽतो नैव छेदादिजातदुःखभोग इति भावः । व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखं स्यादित्यत आह ॥ **न त्विति** ॥ सहावस्थानेऽपि दुःखकारणपापफलानुभवस्थानावसरप्राप्तत्वान्न दुःखभोगोऽस्येति भावः । यदि कर्मिणो व्रीह्यादिदेहप्रवेश एव न तु तद्भावस्तर्हि कथं सामानाधिकरण्यमित्यत आह ॥ **धूम इति** ॥ कर्मिणो व्रीह्यादिदेहप्रवेश एव न तु तद्भावः । प्रवेशोऽपि न भोग इत्येतत्कुतः येन श्रुतेरर्थान्तरकल्पनेत्यत आह ॥ **स इति** ॥ अभोगेन व्रजन्नित्यस्य सहावस्थानेऽपि दुःखाननुभवेन वर्तमान इत्यर्थः ।

## गुर्वर्थदीपिका

दह्यमानगेहप्रवेशस्येव छिद्यमानव्रीहिप्रवेशस्यापि दुःखदत्वेन तत्प्रवेशकल्पनाऽपि व्यर्थेत्याह ॥ **अनुपयुक्ता चेति** ॥ 'तिलमाषा जायन्त' इत्येतावतैव पूर्तेर्मध्ये इतिशब्दो व्यर्थ इति न शङ्कनीयम् । माषादिसमानप्रकारगोधूमादिधान्यान्तरसङ्ग्राहकत्वसम्भवादित्याह **इतिशब्द इति** ॥ ननु व्रीह्यादिषु प्रवेशे तत्कृतकर्मफलरूपच्छेदजदुःखभोगाभावेऽपि स्वकृतपापनिमित्तदुःखभोगः कुतो नेति चेत् यज्ञादिपुण्यफलकृतो मातुरुदरप्रवेशपर्यन्तमागमनहेतुभूतस्वकृतयज्ञजनितपुण्यफलस्यैवानुभूयमानत्वेन पापफलानुभवस्यावसराभावादित्याह **सहावस्थानेऽपि दुःखकारणेति** ॥ एतच्च प्रायिकम् । दैत्योपद्रवादिप्रबलनिमित्तेन पतनचिन्तया मध्येमार्गमपि कदाचिद्दुःखमस्त्येव । तदुक्तं भारते 'यदा समन्तात्पथि तांस्तुदन्ति वयांसि गृध्राः पिशिताशनाश्च' इत्यादि ।

## भावबोधः

**व्रीह्यादिभावनिरासादिति ॥** निरन्तराधिकरणद्वयेन 'यथेतम्' इत्याद्यागमनप्रतिपादकवाक्ये 'मेघो भूत्वा प्रवर्षति' इत्यन्ते सविशेषं विचारिते 'त इह व्रीह्ये वा ओषधिवनस्पतयस्तिला माषा इति जायन्ते' इति तदनन्तरवाक्यविचारोऽत्र क्रियत इत्यनन्तसङ्गतिरिति भावः ।

ननु वैराग्यार्थं दुःखहेतुगत्यादिनिरूपणार्थं प्रवृत्तेऽस्मिन् पादे कर्मिणां व्रीह्यादिभावेन दुःखाभावसमर्थनपरस्यास्याधिकरणस्य कथमन्तर्भाव इत्यतोऽन्तर्भावं सूचयन् तत्प्रतिपादनस्यावश्य-कत्वमाह ॥ **सुखसाधनतयेति ॥ किमागमने दुःखवन्त इति ॥** अत्र कर्मिणः किमागमने दुःखवन्तो न वेति चिन्ता । तदर्थं तेषां व्रीह्यादिभावोऽस्ति न वेति । तदर्थं 'तिला माषाः इति जायन्ते' इति व्रीह्यादिभावप्रतिपादिका श्रुतिर्मुख्यार्था न वेति । तदर्थं मुख्यार्थत्यागे बाधकोपयोगौ न स्त उत स्त इति । तदर्थं व्रीह्यादिजीवैः सहावस्थाने कर्मिणां दुःखं भवत्युत नेति । तदर्थं तेषां दुःखकारणं पापमस्ति न वेति । तदर्थं यागीयहिंसायाः पापसाधनत्वमस्त्युत नेति । तथा च यागीयहिंसायाः पापसाधनत्वपापलक्षणदुःखकारणसद्भावे न व्रीह्यादिजीवैः सहावस्थितानां कर्मिणां दुःखनियमाद्व्रीह्यादिभावप्रतिपादकश्रुतेः व्रीह्यादिशरीरप्रवेशमात्ररूपामुख्यार्थकल्पनस्य दुःखानिवारकत्वेनोपयोगाभावाद्बाधकाभावाच्च । तच्छ्रुतेर्मुख्यार्थत्वे तेषां व्रीह्यादिभावस्य सत्त्वात्तच्छेदनादिनिमित्तकदुःखमागमन इति पूर्वपक्षे वेदविहितत्वेन यागीयहिंसायाः पापसाधनत्वा-भावे तन्निमित्तकपापाख्यदुःखकारणाभावात् पापान्तरस्य चैतदकारणत्वात् दुःखिव्रीह्यादिजीवैः सहावस्थानेऽपि कर्मिणां दुःखाभावेन दुःखनिवारणलक्षणोपयोगसद्भावात् 'सोऽर्वाक् गतः' इत्यादिबाधकसद्भावाच्च व्रीह्यादिभावप्रतिपादकश्रुतेस्तच्छरीरप्रवेशमात्ररूपामुख्यार्थत्वे रूपादि भावाभावेनागमने न तेषां छेदनादिनिमित्तकं दुःखमिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ॥ **तद्वदिति ॥** कर्मिणां धूमादिदेवतैक्येऽन्यस्यान्यभावायोगलक्षणस्य बाधकस्य सत्त्वात् सा श्रुतिः स्वाभाव्यापत्तिपरत्वेन व्याख्यातुं शक्यते । इह तु कर्मिणां जीवैरैक्यं न श्रुत्यर्थः । किं तु तेषामेव व्रीह्यादिशरीरकत्वेन भवनरूपव्रीह्यादिभावः । अत्र च बाधकाभावादियं श्रुतिस्तद्वन्न व्याख्येयेति भावः । व्रीह्यादिजीवैः सहावस्थाने तु दुःखप्राप्तिरिति न्यायविवरणं संयोजयितुं मुख्यार्थकल्पक-प्रयोजकाभावं चाह ॥ **अनुपयुक्ता चेति ॥** न्यायविवरणाभिप्रायमाह ॥ **व्रीह्यादिजीवैरित्यादिना ॥**

(भावबोधः)

नन्वेवमागमने दुःखं तस्यापि वैराग्यहेतुत्वादित्यत अनर्थफलत्वं यज्ञादेरिति पूर्वपक्षफलप्रतिपादकभाष्याभिप्रायमाह ॥ **तच्च दुःखमिति** ॥ **इतिशब्द इति** ॥ 'इति जायन्ते' इति श्रौत'इति' शब्दः प्रियङ्ग्वाद्युपलक्षक इत्यर्थः ॥ **यथोऽस्यामिति** ॥ अनेनान्याधिष्ठिते व्रीह्यादिशरीरे प्रवेश इति भाष्ये यतोऽस्यां श्रुतावुच्यत इत्यध्याहारः । प्रवेश एव इति सावधारणम् । तद्व्यावर्त्यं च तच्छरीरत्वाभिमानित्वमित्युक्तं भवति । कर्मिणो व्रीह्यादिशरीराभिमानित्वानङ्गीकारे यद्बाधकं तत्परिहारार्थं सूत्रभाष्ययोरन्याधिष्ठित इत्युक्तमित्यभिप्रेत्य तद्बाधकशङ्काप्रतिषेधपूर्वकमन्याधिष्ठित इति पदाभिप्रायमाह ॥ **न च तस्येत्यादिना** ॥ अतःशब्दाध्याहारं विना न तु भोगोऽस्येति भाष्यान्वयाभावात् व्रीह्यादिशरीरे प्रवेशमात्रप्रतिपादकत्वस्य साक्षाद्धेतुत्वायोगेन तेन तत्परामर्शायोगाच्च प्रमाणाभावेनार्थतः सिद्धमर्थाभावं तत्परामृश्यं कथयन् न त्विति भाष्यं व्याचष्टे ॥ **यतश्चेति** ॥

## भावदीपः

**व्रीह्यादीति** ॥ व्रीह्यादिश्रुतेर्व्रीह्याद्यभिमन्तृजीवाधिष्ठितदेहप्रवेशमात्रार्थत्वोक्त्येति भावः । एतेन पूर्वमचिरेणैव योनिमापद्यन्त इत्युक्तमयुक्तम् । योनिप्रवेशात्पूर्वमेव भुक्तपुण्यानां मेघपर्यन्तेन पथा वर्षेण 'सहावनिमाप्तानां व्रीह्यादिरूपेण बहुधा जन्मोक्तेरिति शङ्कोदयाद्वा तैस्तैर्धूमादिदेवैः सहावस्थानेन सुखवत् व्रीह्यादिदुःखिजीवैः सहावस्थानेन दुःखमपि स्यादिति शङ्कनाद्वा धूमो भूत्वेत्यादेर्बाधकवशादन्यथा व्याख्यानेऽपि तथा धूमो भवतीत्यादिबहुस्थानगमन श्रुतिविरोधेनाभ्याशश्रुतेरतिचिरगमनमात्रनिषेधपरत्वार्थत्वव्याख्यानेऽपि न व्रीह्यादिश्रुतेरन्यथा व्याख्याबाधकाभावादिति वा शङ्कनात्सङ्गतिः सूचिता । फलफलिभावं व्यनक्ति ॥ **सुखेति** ॥ 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिना स्वर्गादिरूपसुखेत्यर्थः ॥ **वेदविहितेति** ॥ 'ब्राह्मणो निर्वेदमायात्' 'नाविरतो दुश्चरितात्' 'श्रोतव्यो मन्तव्य' इत्यादिवेदविहितेत्यर्थः । प्राक्पादसङ्गतिस्फोरणाय वैराग्यायेत्येवोक्तावपि तुल्यन्यायतया सर्वसाधारण्याय वैराग्यादावित्युक्तम् । सर्वप्रयोजकमपि वैराग्यप्रयोजकं च भवतीति भावः । व्युत्क्रमेण भाष्यं व्याकुर्वन् अनर्थफलत्वं यज्ञादेरित्युक्तिलब्धार्थमाह ॥ **अस्त्येवेति** ॥ **त इहेति** ॥ ते पूर्वत्र प्रकृताः कर्मकृतः इह भूमौ व्रीह्याद्यात्मना जायन्त इत्यर्थः । श्रुतावितिशब्दः आद्यर्थः । श्रुतेर्धूमादिभवनमश्रुतिवत्तत्स्वाभाव्यार्थकत्व-

(भावदीपः)

मात्रपरत्वप्रतीतिनिरासाय तदर्थं व्यनक्ति ॥ **तेषामिति** ॥ तावता कुतो दुःखमित्यतो हेतुसाध्यभावं व्यनक्ति ॥ **तद्भाव इति** ॥ तत्स्वाभाव्यसूत्रेण गतार्थत्वमाशङ्क्य वैषम्यमाह ॥ **न चेति** ॥ **तद्वदिति** ॥ तत्रान्यभावादृष्ट्यादिरूपबाधकवदिह व्रीह्यादिवाक्ये जीवस्य व्रीह्यादिशरीराभिमानि-रूपेण जन्मसम्भवेन बाधकाभावादित्यर्थः । नन्वत्रापि व्रीह्याद्याधिष्ठातृजीवैक्यायोग एव बाधक इत्यतोऽभ्युपेत्याधिष्ठातृजीवान्तरं दोषान्तरमाह ॥ **अनुपयुक्ता चेति** ॥ अमुख्यार्थत्वकल्पनेत्यनु-षङ्गः । कर्मणः सुखहेतुताबोधकवेदेऽनाश्वासनिरासाय कर्मफलरूपव्रीह्यादिभवनश्रुतेर्व्रीह्यादि-जीवस्वाभाव्यापत्तिरूपगौणार्थकत्वं वाच्यम् । तादृशार्थोक्तावपि यथा व्रीह्याद्यात्मना जन्मरूप-मुख्यार्थत्वे तस्य दुःखरूपत्वेन कर्मणो दुःखहेतुत्वमनिवार्यं एवं तत्स्वभाव्यापत्त्यर्थत्वेऽपि दुःख-प्राप्त्यनिवारणमित्यर्थः । कुत इत्यतो व्रीह्यादिजीवैः सहावस्थानाद् दुःखप्राप्तिरित्यन्यत्रोक्तं सङ्गमयति ॥ **व्रीह्यादीति** ॥ एतेन इति श्रवणादिति भाष्यस्य इति व्रीह्यादिजीवैः सहावस्थान-श्रवणादित्यप्यर्थो दर्शितः । सूत्रे अन्याधिष्ठित इत्यनेन तद्भावापत्तेः पूर्ववदित्यनेन तत्स्वाभाव्य-पत्तिविशेषशङ्कायाश्च निरासस्य सूचनादिति भावः ।

ननु तत्रापि च तद्व्यापारादित्यत्रोक्तदिशा ईश्वरस्येवास्तु कर्मिणो दुःखाभाव इत्यत आह ॥ **न हीति** ॥ जीवास्वातन्त्र्यस्य बहुधा पूर्वमुक्तत्वादिति भावः । तावता कथमनर्थफलत्वं यज्ञादेरित्यतो भाष्योक्तं तद्घटयति ॥ **तच्चेति** ॥ **प्रतिपादितत्वादिति** ॥ चरणादिति चेदिति भावः । ततश्च किमित्यतः फलोक्त्या पूर्वपक्षभाष्यमुपसंहरति ॥ **अत इति** ॥ दुःखहेतु-व्रीह्यादिभावश्रवणात् मुख्यार्थत्यागे बाधकाभावात् अमुख्यार्थत्वकल्पनेऽपि कर्मिणो दुःख-प्राप्त्यनिवारणाच्चेत्यर्थः । श्रुताविति शब्दः 'इतिहेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरोक्तेः प्रभृत्यर्थक इति भावेनाह ॥ **इतिशब्द इति** ॥ श्रुतेरन्यार्थत्वोक्तिपरतया सूत्रभाष्ये व्याकुर्वन् पूर्वपक्षं निराह ॥ **नागताविति** ॥ भाष्यं सावधारणं व्याख्याय तद्व्यावर्त्यस्य न तु तच्छरीराभिमानित्वमित्यस्योक्त्या व्रीह्यादिदेहाभिमतिरूपतद्भावाख्यकारणाभावादिति हेतुरुक्तो भवति । अन्याधिष्ठित इत्युक्तेरुपयोग-माह ॥ **न च तस्येति** ॥ न तु भोगोऽस्येति भाष्यं व्यनक्ति ॥ **यतश्चेति** ॥ व्रीह्यादिशरीराभिमतिः ॥ **नैवेति** ॥ तुरेवेति भावः । अनुपयुक्ता चेत्यादिनोक्ता दोषनिवर्तकतया । न तु भोगोऽस्येति भाष्यं प्रकारान्तरेण व्याचष्टे ॥ **व्रीह्यादीति** ॥ कुतो न भोगो ईश्वरवत्स्वातन्त्र्याभावा-दित्युक्तत्वादित्यतः पापाख्यकारणाभावादित्यन्यत्रोक्तहेतुं तदानीं दुःखभोगहेतुपापाख्यकारणा-

(भावदीपः)

भावादित्यर्थकमुपेत्य तात्पर्योक्त्या व्यनक्ति ॥ **सहावस्थानेऽपीति** ॥ **अनवसरेति** ॥ रेतस्सेकादूर्ध्वमेव देहाभिमत्या अवसरात् स्थूलाच्छरीराद्भोगाननुभुङ्क्त इति श्रुतेरिति भावः ॥ **तद्भाव इति** ॥ व्रीह्यादिदेहाभिमतिरित्यर्थः ॥ **इत्येतत्कुत इति** ॥ कुतो मानादित्यर्थः । कारणाभावस्य सहावस्थानेऽपीत्यादिना प्रागेव प्रतिपादनादिति भावः ।

## अभिनवचन्द्रिका

**वैराग्यायेति** ॥ ननु कर्मिणो व्रीह्यादिभावनिरासेनाऽदुःखित्वाभिधाने न कर्मणि विरज्येत किंत्वनुरज्येत दुःखाभावात् । किं चैवं सति प्राचीनं गतागतक्लेशस्य कर्मफलत्वसाधनमयुक्तं स्यात् । अपि च 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्त' इति श्रुत्युक्तरमणीयचरणफलस्यापि अतिदुःखरूपत्वेन तत्फलत्वं निषेध्यं स्यात् । अन्यथा श्रुत्युक्तसुखसाधनस्यापि दुःखहेतुत्वे श्रुत्युक्तवैराग्येऽपि तच्छङ्का स्यात् । अथ गतागतादिक्लेशस्य कर्मफलत्वं, वैराग्योपयोगीति, प्राचीनं तत्समर्थनमुपपन्नं हन्त तर्हि व्रीह्यादिभावस्यापि कर्मफलत्ववैराग्योपयोगीति तन्निषेधो व्यर्थः स्यात् अविशेषादिति चेत्, न वैषम्यात् । युक्तं गतागतक्लेशस्य कर्मफलत्वव्युत्पादनम् । तस्य क्लेशस्य सुखोत्पत्तिनान्तरीयकत्वेन वेदोक्तकर्मजन्यत्वे वेदाप्रामाण्यप्रसक्त्यभावेन वैराग्यविधायकशास्त्राऽऽश्वासाऽविघातात् । न हि ज्योतिष्टोमादिकर्मण इष्टोत्पत्तिनान्तरीयक दुःखजनकत्वमात्रेण इष्टसाधनत्वं विहन्यते । नापि तच्छास्त्रप्रामाण्यं विहन्यते । शास्त्रार्थस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य सत्वात् । व्रीह्यादिभावस्य कर्मफलत्वे तु ज्योतिष्टोमादिशास्त्राऽप्रामाण्यमापतति । व्रीह्यादिभावापदितस्य दुःखस्य बलवत्त्वात् । ततश्च वैराग्य विधायकशास्त्राऽप्रामाण्यशङ्कया वैराग्याऽनुष्ठानमपि न स्यादिति निरसनीयमेव व्रीह्यादिभावस्य कर्मफलत्वम् । यदत्रोक्तम् योनिप्राप्ते रमणीयचरणफलत्वं निवारणीयमिति । इष्टमेवैतत् । अस्माभिरपि दुष्कर्मसाध्ययोनिप्राप्तौ रमणीयत्वमात्रस्य रमणीयचरणफलत्वाङ्गीकारात् । 'तद्य इह रमणीयचरणा' इति श्रुतिरपि रमणीयचरणस्याऽन्यतो जायमानायां योनिप्राप्तौ रमणीयत्वाधायकत्वमात्रमाचष्टे **न पुनस्तद्धेतुत्वमिति । दुःखवन्तो न वेति** ॥ इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखवन्तो न वेति सन्देह इत्यर्थः । एतेन गतागतक्लेशस्य समर्थितत्वात् सन्देहानुपपत्तिरिति परास्तम् ॥ **दुःखिना सहावस्थानेऽपीति** ॥ दुःखिना एकदेहावस्थानेऽपीत्यर्थः ॥ एतेन ताड्यताडकयोः सहावस्थितत्वेऽपि ताडकस्य

(अभिनवचन्द्रिका)

दुःखाभावात् अयुक्तमिदमिति परास्तम् । 'व्रीहियवा, ओषधिवनस्पतयः, तिला, माषा, जायन्त' इत्येतावतैव पूर्णत्वात् इति शब्दो व्यर्थ इत्यत आह– **इति शब्द इति** ॥ व्रीह्यादिशब्दा न स्वार्थमात्रपराः, अपि तु प्रियङ्ग्वाद्युपलक्षका इति सूचनार्थ इत्यर्थः । एतेन व्रीह्यादिशब्देनैव उपलक्षणसम्भवात् प्रियङ्ग्वादीनामितिशब्दशक्यसम्बन्धाऽभावाच्च न तेन लक्षणा युक्तेति परास्तम् । दृष्टं हिंसात्वेनेति ॥ ब्रह्महिंसायाः पापहेतुत्वं हिंसात्वेनोपाधिना 'ब्राह्मणो न हन्तव्य' इत्यादौ श्रुतमित्यर्थः । हरिणा दृष्टत्वेन श्रुतीनां दृष्टशब्दवाच्यत्वात् । तदुक्तम् 'यतस्ता हरिणा दृष्टाः श्रुता एव परैर्जनैः । श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः' इति ॥ **अतो हेतुत्वाभावादिति** ॥ हिंसात्वेन हेतुना यागीयहिंसाया अपि पापसाधनत्वसिध्या दुःखहेतुत्वसद्भावादित्यर्थः ।

पूर्वपक्षस्तु अस्त्येव कर्मिणामिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तबलवद्दुःखं तेषां 'त इह व्रीहियवा' इति व्रीह्यादिभावश्रवणात् । तद्भावे च छेदनादिना दुःखावश्यंभावात् । न चेयं श्रुतिः व्रीह्यादिप्रवेशमात्रपरा न तद्भावपरेति वाच्यम् । बाधकाभावे मुख्यार्थत्यागायोगात् । व्रीह्यादिप्रवेश-मात्राङ्गीकारेऽपि दुःखाऽनिवारणात् । न हि दुःखिसहावस्थानेऽपि दुःखाऽभोगे कारणमीश्वर-वत्स्वातन्त्र्यमस्ति । येन दुःखभोगो न स्यात् । तच्च दुःखं यज्ञादिकर्मफलमेव । अतः सुखसाधन-तया वेदोपदिष्टकर्मणो दुःखजनकत्वे मोक्षहेतुत्वेनोपदिष्टवैराग्यादावपि आश्वासाऽभावात् अननुष्ठेयताऽस्येति ।

सिद्धान्तस्तु न कर्मिणां व्रीह्यादिभावेन दुःखं मन्तव्यम् । तत्रैव मानाभावात् । अस्यां श्रुतौ कर्मिणो व्रीह्यादिशरीरप्रवेशमात्राऽभिधानात् । न च दुःखिसहाऽवस्थानात् दुःखप्राप्तिः । सहावस्थानस्याऽप्रयोजकत्वात् । तत्प्रयोजकस्य पापस्याऽभावात् । ननु व्रीह्यादिशरीरप्रवेश एव श्रुत्यर्थः, न तु तद्भाव इति कुतो निश्चेयमिति चेत्, 'सोऽवाग्गतस्थावरान् प्रविश्याऽभोगेनैव व्रजन् स्थूलं शरीरमेति' इति समाख्यानादिति गृहाण । ननु ज्योतिष्टोमादेर्हिंसाविशिष्टत्वेन पापमिश्रत्वात् व्रीह्यादिभावेन दुःखमवर्जनीयमिति चेत्, न व्रीह्यादि हिंसायाः पापहेतुत्वेऽपि 'वायव्यं श्वेतमालभेत भूतिकाम' इत्यादिना विहितहिंसायाः पुण्यहेतुत्वेन यज्ञादेः पापमिश्रत्वाभावात् । तदुक्तम् हिंसात्ववैदिकी या 'तु तयाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवाऽनर्थः कथंचन' इति । अतो यज्ञादेः सुखसाधनतया उपदिष्टस्य दुःखकारणत्वाऽभावात् युक्तं वैराग्याद्यनुष्ठानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**व्रीह्यादिभावनिरासादिति** ॥ निरन्तरातीताधिकरणद्वयेन यथेतमाकाशमित्याद्यागमनप्रतिपादकवाक्ये 'मेघो भूत्वा प्रवर्षतीत्यन्ते सविशेषं विचारिते अत्र त इह व्रीहियवा ओषधयो वनस्पतयस्तिला माषा इति जायन्त' इति तदनन्तरवाक्यविचारः क्रियत इत्यनन्तरसङ्गतिरिति भावः । ननु दुःखसाधनीभूतव्रीह्यादिभावनिरासो वैराग्यविरोधीति कथं तन्निरासस्य पादसङ्गतित्वमित्यत आह ॥ **सुखसाधनतयेति** ॥ **किमिति** ॥ कर्मिणः किमागमनवन्तो न वेति चिन्ता । तदर्थं तिला माषा जायन्त इति व्रीह्यादिभावप्रतिपादिका श्रुतिर्मुख्यर्था उत तैस्सहावस्थानमादायामुख्यार्थेति । तदर्थं मुख्यार्थस्वीकारेऽपि दुःखमस्ति न वेति । तदर्थं दुःखकारणमस्ति न वेति । तदर्थं यागीयहिंसा पापकारणं न वेति । याज्ञीयहिंसायाः पापकारणत्वे सामग्रीसद्भावात् तेषां दुःखसद्भावे 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इत्यमुख्यार्थग्रहणवैय्यर्थ्यान्मुख्यार्थत्वमिति । कर्मिण आगमने दुःखमिति पूर्वपक्षे फलफलिभावस्तद्वैपरीत्येन सिद्धान्तेऽनुसन्धेयः ॥ **लोकदृष्टेरिति** ॥ लोके भोगदेशादागमनकाले दुःखदर्शनादिति भावः ॥ **पुरुषार्थत्वमिति** ॥ 'रमणीयचरणा रमणीयां योनिमापद्यन्त' इति योनिप्राप्तिपर्यन्तस्य धर्मफलत्वोक्त्यागमनस्य पुरुषार्थत्वमिति भावः । अनर्थफलत्वं यज्ञादेरित्यस्यार्थमाह ॥ **अस्त्येव कर्मिणामिति** ॥ **व्रीह्यादिभावदर्शनादिति** ॥ व्रीह्यादिरूपेण जायन्त इति स्थावरभावदर्शनादित्यर्थः । तत्स्वाभाव्यापत्तिरित्यनेन गतार्थतामाशङ्क्य परिहरति ॥ **न चेयमिति** ॥ **बाधकाभावादिति** ॥ अस्यां हि श्रुतौ व्रीह्यादिदेहवत्त्वेन जननमुच्यते । जायन्त इत्युक्तत्वात् । न तु व्रीह्यादिषु प्रागेव विद्यमानजीवान्तरमुच्यते । भिन्नयोरैक्यायोगात् । एकस्थानगतत्वमेवोच्यत इति भावः ।

एवं व्रीह्यादिभावश्रवणादनर्थफलत्वं यज्ञादेरिति व्याख्याय तद्विहाय सहावस्थानाङ्गीकारेऽप्यनर्थफलत्वं यज्ञादेरवर्जनीयम् । ततो वरं मुख्यार्थत्वमिति सहस्थानमित्युक्तन्यायप्रदर्शकतया तदेव भाष्यं व्याचष्टे ॥ **अनुपयुक्ता चेति** ॥ नन्वस्त्वेवमागमने दुःखं, तच्च न यज्ञादिहेतुकं, किन्तु प्राक्तनपापफलमेवातः सुखसाधनतया वेदोक्तकर्मणो दुःखसाधनत्वाभावात् सुखसाधनत्वेनोपदिष्टे वैराग्ये नानाश्वासः । अशुद्धमिति चेदित्युक्तपूर्वपक्षप्रदर्शकत्वेनाप्यनर्थफलत्वं यज्ञादेरिति भाष्यं व्याचष्टे ॥ **तच्च दुःखमिति** ॥ एवेति न प्राक्तनपापफलं आगमनस्य यज्ञादिपापफलत्वस्योक्तत्वात् । तत्फलानुभवकाले क्रियान्तरफलानुभवावसराभावात् । यज्ञादेर्हिंसारूपत्वेन तत्फलस्यौचित्याच्चेति

(वाक्यार्थमुक्तावली)

भावः ॥ **इतिशब्द इति** ॥ 'तिला माषा जायन्त' इति श्रुत इतिशब्द इत्यर्थः । इतिशब्दो हि तिलमाषरूपेण जायन्त इति तन्नियमस्यावरत्वादिरूपप्रकारवाचीति तत्प्रकारावच्छिन्नप्रियङ्ग्वाद्युपलक्षकः । व्रीह्यादिशब्देष्वेकस्य विनिगमनाविरहान्नोपलक्षकत्वम् । वैय्यर्थ्यान्न सर्वेषामुपलक्षकत्वमिति भावः । अत एव इतिशब्द आद्यर्थे इति तत्र तत्रोक्तिः । केचित्तु व्रीह्यादिशब्दा अन्योपलक्षका इति सूचनार्थ इतिशब्द इत्यर्थमाहुः । श्रुतिगतिप्रदर्शकतया सूत्रं व्याख्यातुं पूर्वपक्षं तावत्प्रतिक्षिपति ॥ **नागताविति** ॥ सत्कर्मिणो व्रीह्यादिभावस्तेन च न दुःखमिति न मन्तव्यमित्यर्थः ॥ **तत्रैवेति** ॥ सत्कर्मणा व्रीह्यादिभाव इति तयोः कार्यकारणभाव एवेत्यर्थः । तथा च प्रसक्तस्य कारणत्वाभावात्प्रागर्जितपापपुण्यभोगकालेऽनवसरप्राप्तत्वात् कारणाभावान्न कर्मिणो व्रीह्यादिभाव इति भावः । एतेन कारणाभावन्यायोऽपि विवृतः ॥ **न चोक्तश्रुतिरिति** ॥ 'त इह व्रीहियवा' इत्यत्र इष्टादिकारिणो व्रीह्यादिरूपेण जायन्त इति कर्मव्रीह्यादिभावयोः कार्यकारणभावमानायितेनेत्यर्थः । सूत्रे अन्याधिष्ठिते इत्यधिकरणसप्तमीबलात् प्रवेश इति लभ्यते । तच्च सावधारणं विवक्षितम् । 'त इह व्रीहियवा' इति श्रुतावुच्यत इति शेष इति भावेन प्रवृत्तं भाष्यं व्याचष्टे ॥ **यतोऽस्यामिति** ॥ एवकारव्यवच्छेद्यप्रदर्शकं न त्वित्येतदध्याहारेण व्याचष्टे ॥ **न तु तच्छरीरीति** ॥ **मानित्वमिति** ॥ व्रीह्यादिदेह इत्यनुक्त्वा अन्याधिष्ठित इति विशेषणोक्तेः प्रयोजनमाह ॥ **न चेति** ॥ इदानीं न तु भोगोऽस्येति समग्रं यतोऽत इति पदद्वयाध्याहारेण व्याचष्टे ॥ **यतश्चास्येति** ॥ एतेन दुःखं प्रति शरीराभिमानाख्यकारणाभावान्न भोगस्येति कारणाभाव इत्युक्तन्यायः प्रकारान्तरेण भाष्यारूढो दर्शितः । न तु भोगस्येत्येतत्प्रकारान्तरेण व्याचष्टे ॥ **व्रीह्यादीति** ॥ **दुःखमिति** ॥ छेदादिजातदुःखमित्यर्थः । एवमुत्तरत्रापि । **अनवसरप्राप्तत्वादिति** ॥ यज्ञफलभोगकाले क्रियान्तरभोगस्यानवसरप्राप्तत्वात् पापाख्यकारणाभावात् सहावस्थानमात्रस्याप्रयोजकत्वादिति भावः । पूर्वोक्तिवदिति भाष्यस्य यथा धूमो भूत्वाभ्रं भवतीति पूर्वोक्तिर्धूमादिदेवतादेहप्रवेशे स्थानैक्याभिप्राया । तथा 'त इह व्रीहियवा' इति सामानाधिकरण्योक्तिरपीत्यर्थः ।

ननु स्थानैक्यतत्स्वाभाव्यपदेन कथं लाभ इति चेन्न । धूमादिदेवतावत्कर्मिणामपि तच्छरीरस्थत्वेन तत्स्वभाव इव स्वभावो यस्येत्यनेनैव तल्लाभात् । तदुक्तं तत्वप्रदीपे । धूमादिसुखस्थानदेशत्वादिसादृश्यापत्तिरेवास्येति पूर्ववदिति दृष्टान्तत्वेनोपादत्त इति । विष्णुतत्त्वनिर्णये च

(वाक्यार्थमुक्तावली)

देहात्मनोरप्येकदेशस्थत्वादिसादृश्यमस्त्येवेति । ननु तर्ह्येकदेशस्थत्वसादृश्येन सामानाधिकरण्योक्तिर्गौणी स्यान्न लाक्षणिकी । तथा च तत्प्रवेशेन स्थानैक्याभिप्रायं वा एतद्वाक्यमिति प्राचीनटीकाविरोधः । तत्र लघुत्वादिसदृशगुणयोगेन गौण्याः स्थानैक्येन लक्षणायाश्च उक्तत्वादिति चेत्सत्यमेतत् । लघुत्वादिवदेकदेशगतत्वस्य गुणत्वाभावात् । केवलं तत्स्वाभाव्यपदेन तल्लाभोपपादनमात्रस्य तत्त्वप्रदीपे कृतत्वात् लक्षणाश्रयणस्यैव युक्तत्वात् । अन्यथा 'स्वातन्त्र्यं च विशिष्टत्वं स्थानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक्सम्यक्सावकाशा यथेष्टत' इति स्थानैक्येन लक्षणोक्तेरयुक्तत्वप्रसङ्गादित्यलम् ।

## तत्त्वसुबोधिनी

**व्रीह्यादिभावनिरासादिति ॥** निरन्तरातीताधिकरणद्वयेन यथेतमित्याद्यागमनप्रतिपादकवाक्ये मेघो भूत्वा प्रवर्षतीत्यन्ते सविशेषं विचारिते 'त इह व्रीहियवा ओषधिवनस्पतय' इति तदनन्तरवाक्यविचारोऽत्र क्रियत इत्यनन्तरसङ्गतिरिति भावः । ननु वैराग्यार्थं दुःखहेतुगत्यादिनिरूपणार्थं प्रवृत्तेऽस्मिन्पादे कर्मिणां व्रीह्यादिभावेन दुःखाभावसमर्थनपरस्यास्याधिकरणस्य कथमन्तर्भाव इत्यतोऽन्तर्भावं सूचयन् तत्प्रतिपादनस्यावश्यकत्वमाह ॥ **सुखसाधनतयेति** ॥ अस्तु व्रीह्यादिभावस्ततः किमित्यत आह ॥ **तद्भाव इति** ॥ व्रीह्यादिभाव इत्यर्थः ॥ **तद्वदिति** ॥ कर्मिणां धूमादिदेवतैक्ये अन्यस्यान्यभावायोगलक्षणबाधकस्य सत्त्वात् सा श्रुतिः स्वाभाव्यापत्तिपरत्वेन व्याख्यातुं शक्यते । इह तु कर्मिणां न व्रीह्यादिजीवैक्यं श्रुत्यर्थः । किन्तु तेषामेव व्रीह्यादिशरीरवत्त्वेन भवनरूपो व्रीह्यादिभावः । अत्र च बाधकाभावादियं श्रुतिः तद्वन्न व्याख्येयेति भावः ।

ननु बाधकाभावेऽप्यमुख्योऽर्थः किं न स्यादित्यत आह ॥ **न हीति** ॥ दुःखप्राप्तिमेवोपपादयति ॥ **व्रीह्यादीति** ॥ दुःखिना सहावस्थानेऽपीश्वरवत्तदभावः किन्न स्यादित्यत आह ॥ **न हीति** ॥ नन्वस्त्येवागमने दुःखम् । ततः किमित्यत आह ॥ **तच्च दुःखमिति** ॥ आगमनादौ जातस्य दुःखस्य कर्मफलत्वं कुत इत्यत आह ॥ **आगमनादेरिति** ॥ **इतिशब्द इति** ॥ 'इति जायन्त' इति श्रौतेतिशब्दः प्रियङ्ग्वाद्युपलक्षक इत्यर्थः ॥ **तत्रैवेति** ॥ व्रीह्यादिभावे इत्यर्थः ॥ **यतोऽस्यामिति** ॥ अनेनान्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः इति भाष्ये यतोऽस्यां श्रुतावुच्यत इत्यध्याहारः प्रवेश इति सावधारणम् । तद्व्यावर्त्यं च तच्छरीराभिमानित्वमित्युक्तं भवति ।

(तत्त्वसुबोधिनी)

कर्मिणो व्रीह्यादिशरीराभिमानित्वानङ्गीकारे प्राप्तबाधकपरिहारार्थं सूत्रभाष्ययोरन्याधिष्ठित इत्युक्तमित्यभिप्रेत्य तद्बाधकशङ्कानिषेधपूर्वकमन्याधिष्ठित इति पदाभिप्रायमाह ॥ **न च तस्येत्यादिना** ॥ अतःशब्दाध्याहारं विना न तु भोगोऽस्येति भाष्यस्यान्वयाभावात् श्रुतेः व्रीह्यादिशरीरे प्रवेशमात्रप्रतिपादकत्वस्य साक्षाद्धेतुत्वायोगेन तेन तत्परामर्शायोगाच्च प्रमाणाभावेनार्थतः सिद्धमर्थाभावं परामृश्य न त्विति भाष्यं व्याचष्टे ॥ **यतश्चेति** ॥ कथमेतावता दुःखप्राप्तिः-परिहृतेत्यत आह ॥ **सहावस्थानेऽपीति** ॥ अभोगेनैवेत्यत्र भोगाभावमात्रं प्रतीयतेऽतो व्याचष्टे ॥ **अभोगेनेति** ॥

## वाक्यार्थविवरणम्

व्रीह्यादिभावः व्रीह्यादिदेहाभिमानित्वम् वेदोपदिष्टकर्मिणाम् । वेदोक्तकर्मानुष्ठातॄणाम् । तच्छङ्का दुःखहेतुत्वशङ्का ॥ **धूमादिभावश्रुतिवदिति** ॥ व्रीह्यादिस्वाभाव्यापत्तितत्प्रवेशाभ्यामित्यर्थः । अमुख्यार्थकल्पना कुतो न युक्तेत्यत आह ॥ **दुःखप्राप्तीति** ॥ तदुपपादयति ॥ **व्रीह्यादीति** ॥ धूमादिदेवतासहावस्थाने तु न दुःखम् । तासां निर्दुःखत्वादिति हृदयम् । अस्त्वेवं व्रीह्यादिभावेन दुःखं तथापि यज्ञादेः कुतोऽनर्थफलत्वमित्यत आह ॥ **तच्चेति** ॥ **अन्येति** ॥ प्रियंग्वादीनामित्यर्थः ॥ **तत्रैवेति** ॥ व्रीह्यादिभाव एवेत्यर्थः ॥ **तस्य कर्मिणः** ॥ **वृद्ध्यादीति** ॥ शरीररूपव्रीह्यादेरित्यर्थः । तदन्येन कर्मभिन्नजीवेनेत्यर्थः ॥ **दुःखं स्यादिति** ॥ दुःखिना सहावस्थानादित्यर्थः ॥ **अनवसरेति** ॥ यतः पुण्यफलभोगस्यैव ह्ययमवसरो नान्यस्येति भावः । तद्भावः तच्छरीराभिमानित्वम् । व्रीहियवा इति सामानाधिकरण्यं भाष्ये पूर्वोक्तिवदित्येव पाठः । तथा तत्र प्रवेशमङ्गीकृत्य स्थानैक्येन तद्व्यपदेशो यथा व्याख्यायते तथाऽयमपि व्यपदेशो व्रीह्यादौ प्रवेशेन व्रीह्यादिरूपस्थानैक्येन निमित्तेन व्याख्येय इत्यर्थः ॥ **सहेति** ॥ दुःखिनेति शेषः । भाष्ये इतरः कर्मापेक्षया । तथा व्रीह्यादीतरदेहगः व्रीह्यादिरूपेतरकर्मनिर्मितदेहग इत्यर्थो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

व्रीह्यादिभावः व्रीह्यादिशरीरकत्वेन भवनम् ॥ **सुखसाधनतयेति** ॥ स्वर्गादिसुखसाधनं यज्ञादिकर्मेति श्रुतिविहितयज्ञादिकर्म कुर्वतामित्यर्थः । **तच्छङ्का** दुःखसाधनशङ्का । श्रुतिविहितत्वादविशेषादिति भावः ॥ **पुरुपार्थत्वमिति** ॥ तत्रापि दुःखसत्त्वे पुरुषैरर्थ्यत्वं न स्यादिति

(वाक्यार्थमञ्जरी)

भावः । व्याख्येया तत्प्रवेशादिमात्रार्थत्वेन ॥ **तद्वदिति** ॥ कर्मिणा धूमादिदैवतैक्येऽन्यस्यान्यभावायोग्यतालक्षणस्य बाधकस्य सत्त्वात्सा श्रुतिः प्रवेशादिमात्रार्थत्वेन व्याख्यातुं शक्यते । इह तु कर्मिणो न व्रीह्यादिजीवैक्यं श्रुत्यर्थः । किंतु तेषामेव व्रीह्यादिशरीरकत्वेन भवनरूपो व्रीह्यादिभावः । न च तत्र बाधकमस्ति । अतो नेयं श्रुतिस्तद्व्याख्येयेति भावः । ईश्वरे व्यभिचारान्नायं नियम इत्यत आह ॥ **न हीति** ॥ तथा चौत्सर्गिकोऽयं नियम इति भावः । नन्वस्त्वेवमागमेन दुःखं तस्यापि वैराग्यहेतुत्वादित्यत आह ॥ **तच्च दुःखमिति** ॥ **प्रतिपादितत्वादिति** ॥ चरणादित्यत्रेति शेषः ॥ **इतिशब्द इति** ॥ 'इति जायन्त' इति श्रुतौ इतिशब्दः प्रियंग्वाद्युपलक्षक इत्यर्थः ॥ ॐ **अन्याधिष्ठिते पूर्ववदभिलापात्** ॐ ॥ व्रीह्यादिभावो नामान्येन जीवेनाधिष्ठितेऽभिमानित्वेनाश्रिते व्रीह्यादिदेहे प्रवेश एव । न तु तदाभिमानित्वम् । कथम् ? पूर्ववत् धूमो भूत्वेत्यादिपूर्वोक्तवत् । कुतः? अभिलापात् । 'सोऽवाग्गतः स्थावरान्प्रविशति' इति श्रुतौ तथोक्तत्वादित्यर्थः । तत्रैव व्रीह्यादिभाव एव ॥ **अनवसरप्राप्तत्वादिति** ॥ कारणाभावेन तस्मिन्कालेऽप्राप्तत्वादित्यर्थः । सामानाधिकरण्यं कर्मिणो व्रीह्यादयो जायन्त इत्यादि ।

## सूत्रभाष्यम्

**॥ ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥ २७ ॥**

**हिंसारूपत्वात्पापस्यापि सम्भवाद्दुःखं च भवत्विति चेन्न । शब्दविहितत्वात् ।**

**'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।**
**वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन' इति वाराहे ॥**

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **अशुद्धमिति** ॥ यदुक्तं व्रीह्यादिभावेन तत्प्रवेशेन वा कर्मिणो दुःखं न मन्तव्यं कारणाभावादिति न तद्युक्तम् । यज्ञानां हिंसायुक्तत्वेन ततः पापस्य सम्भवात् । दुःखकारणाभावस्यासम्प्रतिपत्तेः । दृष्टं हि हिंसात्वेन ब्रह्म-, हिंसायाः पापहेतुत्वम् । अतो दुःखहेतुभावादन्यतरप्रकारेणास्ति कर्मिणो दुःखमिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ भवेदनर्थफलत्वं च यज्ञादेः यदि पापहेतुत्वं भवेत् । नैतदस्ति ।

(तत्त्वप्रकाशिका)

**न हि ब्रह्महिंसायाः पापहेतुत्वे हिंसात्वं प्रयोजकम् । येन यागीयहिंसायास्तत्स्यात् । किं नाम निषिद्धत्वमेव । न च तद्यागीयहिंसायामस्ति प्रत्युत शब्दविहितत्वात् 'वायव्यं श्वेतमालभेत' इत्यादाविति भावः । सोपाधिकत्वेन दूषितानुमानस्य स्मृतिविरोधं च दर्शयति ॥ हिंसेति ॥ अतो यज्ञादेः सुखसाधनतयोपदिष्टस्य दुःखकारणत्वाभावाद्युक्तं वैराग्याद्यनुष्ठानं मुमुक्षूणामिति सिद्धम् ।**

## भावबोधः

**अन्यतरप्रकारेणेति** ॥ व्रीह्यादिभावसहावस्थानयोरन्यतरप्रकारेणेत्यर्थः ॥ **प्रत्युत शब्दविहितत्वादिति** ॥ अनेन शब्दविहितत्वेन पापाख्यकारणाभावादिति न्यायविवरणमप्युक्ततात्पर्यं भवति ॥ **सोपाधिकत्वेनेति** ॥ किं नाम निषिद्धत्वमेवेत्यनेन साध्यव्यापकत्वस्य न च तद्यागीयहिंसायामस्तीत्यनेन च साधनाव्यापकत्वस्य चोक्तत्वादिति भावः ।

## भावदीपः

**व्रीह्यादिभावेनेति** ॥ व्रीह्यादिदेहाभिमतिरूपव्रीह्यादिभावेन तत्प्रवेशेन वा यद्दुःखं तन्न मन्तव्यम् । व्रीह्यादिभावाख्यकारणाभावात् । तत्प्रवेशोऽपि तदानीं दुःखभोगापादककारणाभावादिति च यदुक्तं न तद्युक्तमित्यर्थः ॥ **दृष्टं हीति** ॥ अनेन यागीयहिंसा दुःखकारणपापहेतुः हिंसात्वात् ब्रह्महिंसावदिति प्रयोगो दर्शितः ॥ **अत इति** ॥ अज्ञानां हिंसायुतत्वादित्यर्थः ॥ **अन्यतरेति** ॥ व्रीह्यादिभावतत्प्रवेशान्यतरप्रकारेणेत्यर्थः । यद्यपि न्यायविवरणे व्रीह्यादिजीवैः सहावस्थानाद्दुःखप्राप्तिरित्येवोक्तम् । तथापि इति श्रवणादिति पूर्वपक्षादिभाष्यदिशा तद्भावस्यापि प्रापकत्वेन व्याख्यानादेवमुक्तम् । तेनान्यत्रोक्तिरुपलक्षणमिति सूचितम् । ननु प्रागुक्तहिंसात्वानुमानस्य भाष्ये शब्दविहितत्वोक्त्या किं दूषणमुक्तं स्यादित्यतो न च व्रीह्यादिजीवैः सहावस्थानाद्दुःखप्राप्तिः शब्दविहितत्वेन पापाख्यकारणाभावादित्यन्यत्रोक्तहेतुं समर्थयितुं सोपाधिकत्वदूषणोक्तिपरतयाऽर्थमाह ॥ **भवेदित्यादिना** ॥ निषिद्धत्वमेवेत्येवकारेण तस्य पापहेतुत्वरूपसाध्यव्यापकत्वमुक्तम् । साधनाव्यापकत्वं चाह ॥ **न चेति** ॥ वायव्यं वायुदेवताकम् । श्वेतं श्वेतपशुमालभेत हिंसेदित्यर्थः । येन प्रकारेणालंभे कृते अयं श्वेतपशुर्वायुदेवताको भवति तथा कार्य इत्यर्थः ॥ **स्मृतिविरोधं चेति** ॥ एतेन यत्सांख्यप्रभृतिभिः 'न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः' इत्यादिमन्त्रैः पापफलपशुशरीरप्रहाणेन उत्कृष्टभोगसाधनदिव्यदेह-

(भावदीपः)

सम्पादकत्वावगमात् यागीयहिंसाया हिंसात्वमेव नास्ति । हिंसात्वेऽपि वा असंकुचद्वृत्तिना न हिंस्यादित्यनेन निषिद्धतया पापहेतुत्वेऽपि महाफलसाधनवेदविहितक्रतूपकारकत्वात् पापमल्पं सुपरिहरं पुण्यं च महदित्युक्तम् । तत्स्मृतौ हिंसापदादिप्रयोगान्निरस्तम् । स्पष्टं चैतद् गीतातात्पर्ये द्वितीयेऽध्याये । सांख्यैर्योगैश्च विहितहिंसाया अनर्थहेतुत्वाङ्गीकारादित्यादिना । विस्तरस्तु तर्कताण्डवे द्वितीयपरिच्छेदे द्रष्टव्यः । नयार्थस्य वैराग्यफलकत्वं व्यञ्जयन्नुपसंहरति ॥ **अत इति** ॥ यज्ञादेरित्यादिनोक्तार्थे हेतुः । 'त इह' इति श्रुतेः कर्मिणो दुःखाभोगेनैव व्रीह्यादिदेहप्रवेश-मात्रार्थोक्तिपरत्वस्य श्रुत्यादिसिद्धत्वात् यज्ञादेर्विहितत्वेन पापाहेतुत्वाच्चेत्यर्थः । यज्ञादेरित्यादि-स्तात्पर्यलब्धार्थः । मोक्षहेतुत्वेन वेदोपदिष्टे वैराग्यादावनाश्वासायोगादित्यपि बोध्यम् ।

## वाक्यार्थमुक्तावली

यदुक्तं व्रीह्यादिभावेन तत्प्रवेशेन वेति । अन्याधिष्ठिते प्रवेश एव न तु तच्छरीराभिमानित्वं पापाख्यकारणाभावात् । अत एव न तु दुःखभोगः अभिमानाख्यकारणाभावात् । प्रवेशेन सहावस्थानेऽपि न दुःखभोगः पापाख्यकारणाभावादिति यदुक्तमित्यर्थः । अनन्तभट्टीये तु व्रीह्यादि भावेनेत्यस्यार्थस्तत्प्रवेशेनेति । क्वचित्तत्प्रवेशेन वेति वाशब्दो दृश्यते । तत्र मन्तव्यमित्यनन्तरं व्रीह्यादिभावे मानाभावादिति शेष इत्युक्तम् ॥ **दृष्टं हीति** ॥ श्रुतमित्यर्थः । श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैरिति श्रुतेर्दृष्टिशब्दवाच्यत्वात् ॥ **अन्यतरप्रकारेणेति** ॥ व्रीह्यादिभावसहावस्थान-योरन्यतरप्रकारेणेत्यर्थः । एतेन प्रकृतं कर्माशुद्धं दुःखसाधनं कुतः ? अशुद्धं पापसाधनं, तदपि कुतः? हिंसारूपतयाशुचीति सूत्रार्थः भाष्याक्षरारूढो दर्शितः । प्रकृतं कर्म नाशुद्धं न दुःखसाधनं पापसाधनत्वाभावात् । हिंसात्वेऽपि न पापसाधनं, कुतः? यतो न निषिद्धमिति । नञर्थमाह ॥ **भवेदित्यादिना** ॥ **प्रत्युतेति** ॥ न केवलं निषेधकशब्दाभावादपापसाधनत्वं प्रत्युतेत्यर्थः । अत्र देहप्रयुक्तदुःखाभावसाधनान्न विरोधः । अत्राद्ये स्वपक्षसाधकोक्तिः । द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु हिंसायाः पापहेतुत्वे हिंसात्वं प्रयोजकं क्व दृष्टमित्यत आह ॥ **दृष्टं हीति** ॥ **अन्यतर-प्रकारेणेति** ॥ व्रीह्यादिभावसहावस्थानयोरन्यतरप्रकारेणेत्यर्थः । ननु हिंसायाः पापहेतुत्वे

(तत्त्वसुबोधिनी)

हिंसात्वस्य प्रयोजकत्वात् कथमेतदित्यत आह ॥ **न हीति** ॥ **सोपाधिकत्वेनेति** ॥ किं नाम सोपाधिकत्वमेवेत्यनेन साध्यव्यापकत्वस्य न च तद्यागीयहिंसायामस्तीत्यनेन साधनाव्यापकत्वस्य चोक्तत्वादिति भावः ।

## वाक्यार्थविवरणम्

हिंसायुतत्वे पापं कुतः । दृष्टान्ताभावेन व्याप्त्यसिद्धेरित्यत आह ॥ **दृष्टं हीति** ॥ अनेन 'याज्ञीयहिंसा पापसाधनं हिंसात्वात् । ब्राह्मणहिंसावत् इति अनुमानमुक्तं भवति ॥ **दुःखहेतुभावादिति** ॥ दुःखहेतोः पापस्य भावादित्यर्थः ॥ **अन्यतरप्रकारेणेति** ॥ कर्मिणो व्रीह्यादिभावे छेदनादिना दुःखं स्यादिति व्रीह्यादौ प्रवेशमात्रमङ्गीकृत्य व्रीह्यादिजीवेन सहावस्थानानङ्गीकारे दुःखिना सहावस्थानाद्दुःखं स्यादित्येवं व्रीह्यादिभावतत्प्रवेशाख्यतत्प्रकारेणेत्यर्थः । उक्तानुमाने निषिद्धत्वमुपाधिरित्याह ॥ **न हीत्यादिना** ॥

## वाक्यार्थमञ्जरी

पशुहिंसारूपत्वाद्यज्ञादिकमशुद्धं पापसाधनमिति चेन्न शब्दविहितत्वादित्यर्थः ॥ **अन्यतरप्रकारेणेति** ॥ व्रीह्यादिभावसहभावयोरन्यतरप्रकारेणेत्यर्थः ॥ **वायव्यमिति** ॥ ऐश्वर्यकामो वायव्यं वायुदेवताकं श्वेतवर्णं पशुं बस्तापरपर्यायमजमालभेत हन्यादित्यर्थः ॥ **सोपाधिकत्वेनेति** ॥ किं नाम निषिद्धत्वमेवेत्यनेन पापसाधनत्वरूपसाध्यव्यापकत्वस्य न तद्याज्ञीयपशुहिंसायामस्तीत्यनेन हिंसात्वरूपसाधनाव्यापकत्वस्य चोक्तत्वादिति भावः ।

॥ इति अन्याधिष्ठिताधिकरणम् ॥ १८ ॥

## १९. रेतोऽधिकरणम्

'स्वर्गादवागगतश्चापि मातुरेवोदरं व्रजेत्' इति वचनात् 'य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति' इति श्रुतिः कथमित्यत आह—

**॥ ॐ रेतःसिग्योगोऽथ ॐ ॥ २८ ॥**

'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुत' इति कौण्ठरव्यश्रुतेः पितरमेव प्रथमतो प्रविशति । मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥

### तत्त्वप्रदीपिका

'य एव गृही भवति यो वा रेतस्सिञ्चति तमेवानुविशति'ति श्रुतिः तस्य स्थास्नुपु प्रविष्टस्य स्वकर्मणा निर्मीयमाणं शरीरं भोगायतनं प्राप्स्यतस्तावद्रेतःसिक्प्रवेशार्था 'यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद्भूय एव भवति' इत्यादिकया समानप्रकरणपठितया च सह कथं युज्यत इत्यत आह ॥ **ॐ रेतस्सिग्योगोऽथ ॐ** ॥ स व्रीह्यादिस्थो जीवोऽन्नेन सह प्रथमतो रेतस्सिंच पितरमेव प्रविशति, अथ मातरम् । मातृप्राप्तेः पश्चादपि भाव्यत्वेन 'मातुरेवोदरं व्रजेत्' इति वचनस्य सावकाशत्वात् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय स्वर्गादवतीर्णस्य पितृप्रवेशसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि न कर्मिणः पितृप्राप्तिस्तदा नातिविरक्तिः स्यादतः सा साधनीया । कर्मी व्रीह्यादिशरीरं प्रविशतीत्युक्तम् । तस्यैव पितृप्रवेशः श्रुत्योच्यते 'य एव गृही भवति' इति । स कर्म्यत्र विषयः । किं पितरं प्रविशति न वेति सन्देहः । श्रुतिः प्रयोजनादर्शनं च सन्देहबीजम् । पूर्वपक्षयति ॥ **स्वर्गादिति** ॥ न जीवस्य पितृप्रवेशोऽस्ति । 'स्वर्गादवाग्गतश्च' सति वचनात् । न चास्य वचनस्य पितृप्रवेशश्रुतिविरोधः । युक्तिसाहित्येन बलवत्त्वात् । न हि पितृशरीरगमने किञ्चित्प्रयोजनं पश्यामः । अतः श्रुतिरेव वचनविरुद्धा न प्रतीतार्थे प्रमाणम् । न च निरर्थता युक्ता । प्रामाण्यस्य सिद्धत्वात् । अतः प्रतीतार्थायोगादर्थान्तरस्यावश्यम्भावात्सा कथं किमर्थेति वक्तव्यम् । एवं च महायासाभावेन नातिवैराग्यं कर्मादावपेक्षितमिति भावः ।

(तत्त्वप्रकाशिका)

**सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्त्येव पितृप्रवेशः प्रथमं जीवस्य 'ततो रेतःसिचमेव' इति श्रुतेः । न च पितृप्रवेशस्य व्यर्थत्वात् श्रुतेर्दौर्बल्यम् । किमुत्पत्तौ पितुरेवानुपयोगात्तत्प्रवेशस्य वैयर्थ्यमुच्यते उत प्रवेशमात्रस्य । नाद्यः । शरीरपरिणामाय रेतसोऽपेक्षितत्वेन रेतःसेचकस्योपयोगित्वात् । न द्वितीयः । तत्प्रवेशस्येश्वरकल्पितत्वात् । 'ईशकृत्स्यैव पितरं प्रविश्यायाति मातरम्' इत्यादेरिति भावः । एवं चेन्मातुरेवोदरं व्रजेदिति वचनमप्रमाणं प्राप्तमित्यत आह ॥ मातृप्राप्तेरिति ॥ मातृप्राप्तेः प्रथममेवाभावेऽपि रेतः सिग्योगानन्तरमपि विद्यमानत्वान्न वचनस्याप्रामाण्यम् । एवकारस्त्वयोगव्यावर्तक इति भावः । अतः पितृप्राप्तेर्विद्यमानत्वाद्भवितव्यं कर्मादावतिवैराग्येणेति सिद्धम् ।**

## गुर्वर्थदीपिका

कथं किमर्थेति वक्तव्यमित्यत्र कथमित्यस्य किमर्थेत्यर्थकथनम् । कः अर्थो यस्या इति किमर्था इति शब्दोपरि वक्तव्यमित्यध्याहृत्य इत्येतत्प्रमेयं वक्तव्यमत आहेति योजनीयमिति भावः । वस्तुतस्तु सा श्रुतिः कथं घटत इत्यत आहेति यथास्थितैव योजना । ननु पितुरुत्पत्तौ प्रयोजकत्वे तत्प्रवेशस्याप्यावश्यकत्वात् प्रवेशमात्रस्येति कथं कोट्यन्तरोत्थापनमिति चेन्न । मातापित्रोरन्योन्यरेतस्संयोगकाले तत्रैव प्रवेशेन देहोपचयसम्भवादिति शङ्कितुरभिप्रायोपपत्तेः । मातुरेवोदरं व्रजेदित्यत्रोक्तैवकारस्य व्रजेदेवेति क्रियायोगस्यापि सम्भवान्न बाधकतेत्याह **॥ एवकार इति ॥**

## भावबोधः

**अस्त्येव पितृप्रवेश इति** ॥ तथा च 'तिला माषा इति जायन्त' इति पूर्वाधिकरणविचारितवाक्यानन्तरं प्राप्तेन 'अतो वै खलु दुर्निष्प्रयतनं यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद्भूय एव भवति इति' वाक्येन समानार्थकस्य 'य एव भवति यो वा रेतः सिञ्चति तमेवानुविशति इति' वाक्यस्यात्र विचारादनन्तरसङ्गतिरिति भावः ॥ **किं पितरमिति** ॥ अत्र कर्मी किं पितरं न प्रविशत्युत प्रविशतीति चिन्ता । तदर्थं तत्प्रतिपादिका 'य एव गृही भवति' इति श्रुतिः 'मातुरेवोदरं व्रजेत्' इति वचनबाधिता न वेति । तदर्थं मातुरेवोदरं व्रजेदिति वचनमवधारणार्थस्यान्ययोगव्यवच्छेदकत्वेन निरवकाशमुतायोगव्यवच्छेदकत्वेन सावकाशमिति । तदर्थं 'य एव गृही भवति' इति श्रुतिः किं दुर्बलोत नेति । तदर्थं 'मातुरेवोदरं व्रजेत्' इति वचनस्य प्राबल्यसम्पादकं

(भावबोधः)

पितृप्रवेशवैयर्थ्यमस्त्युत नेति । तथा च पितृप्रवेशवैयर्थ्ये मातुरेवेति श्रुतेस्तद्रूपयुक्त्युपेतत्वेन प्रबलत्वात्, पितृप्रवेशप्रतिपादिकया 'य एव भवति' इति श्रुत्या पितृप्रवेशो न सिध्यतीति पूर्वपक्षे पितृप्रवेशस्यावश्यकत्वेन वैयर्थ्याभावे मातुरेवेति श्रुतेरुपोद्बलकयुक्त्यभावेन तत्प्रतिपादकश्रुतेर्दौर्बल्याभावात्तदनुरोधेनावधारणस्यायोगव्यवच्छेदपरत्वकल्पने मातुरेवेति श्रुतेः सावकाशत्वेन तद्बाधकाभावात् 'य एव गृही भवति' इति श्रुत्या पितृप्रवेशः सिद्ध्यतीति सिद्धान्ते फलफलिभावः । वैयर्थ्यात् पितृशरीरगमनमिति न्यायविवरणं संयोजयितुमाह ॥ **न चेति** ॥ श्रुतिसूत्राभ्यां न्यायविवरणेन च निवर्तनीयौ पक्षौ विकल्पयति ॥ **किमुत्पत्ताविति** ॥ **शरीरपरिणामायेति** ॥ अत एव श्रुतिसूत्रयोः पितरमेवानुविश्येति पितृयोग इति वक्तव्ये 'रेतः सिचमेव' इति 'रेतः सिग्योगः' इत्युक्तमिति भावः ॥ **तत्प्रवेशस्येति** ॥ अनेन 'ईशाक्रम्यैव पितरं प्रविश्यायाति मातरम्' इतीशाक्रान्तत्ववचनादिति न्यायविवरणं व्याख्यातं भवति । 'मातुरेवोदरं व्रजेत्' इति श्रुतेः सावकाशत्वं वक्तुं सूत्रे अथेत्युक्तमित्यभिप्रेत्य प्रवृत्तं मातृप्राप्तेः पश्चादपि भाव्यत्वादिति भाष्यमवतार्य व्याचष्टे ॥ **एवं चेदिति** ॥ अत एव पश्चादिति भाष्यं रेतः सिग्योगादनन्तरमपीति व्याख्यानम् ॥ **अयोगव्यावर्तक इति** ॥ अनेन व्रजेदेवेत्यन्वयः सूचितः इति भावः ।

## भावदीपः

**पितृप्रवेशति** ॥ प्रयोजनोक्त्येति भावः । तथा च पूर्वोक्तन्यायेन 'सोऽवागगत' इति श्रुत्या 'त इह' इति श्रुतेरिव 'यो यो ह्यन्नमत्ति यो वा रेतस्सिञ्चति तद्भूय एव भवति' इति उत्तरश्रुतेरपि 'य एव गृही भवति' इति श्रुत्या पूर्वन्यायेन च पितृप्रवेशार्थकत्वे सिद्धे सतीह वैयर्थ्येन तत्प्रवेशाभावमाशङ्क्य समर्थ्यत इति पूर्वसङ्गतिरिति भावः । फलफलिभावं व्यनक्ति ॥ **यदीति** ॥ पितृप्रवेशासिद्ध्या विशेषविचारानवसरमाशङ्क्याह ॥ **कर्मीति** ॥ **श्रुत्येति** ॥ यो यो ह्यन्नमत्तीत्यादिसमानार्थकया य एव गृही भवतीति श्रुत्येत्यर्थः । एतावतैव पूर्तौ व्रीह्यादिशरीरं प्रविशतीत्युक्तमित्युक्तिः पूर्वन्यायसिद्धत्वद्योतनाय वा तत्राप्येतच्छंकानुसंधानाय वेति बोध्यम् । मातुरेवेत्येवकारेण सर्वप्रवेशव्यवच्छेदात् वैयर्थ्येशक्तिरूपपूर्वोत्तरपक्षन्याययोः साम्याच्चेति । सिद्धान्तभाष्ये विशतीत्युक्तेस्तद्व्यावर्त्य प्रतिज्ञामाह ॥ **नेति** ॥ सौत्ररेतःसिक्पदव्यावर्त्यां वैयर्थ्यं पितृशरीरगमने इत्यन्यत्रोक्तयुक्तिं भाष्येण शङ्कानिवर्तकतया सङ्गमयति ॥ **न चेत्यादिना** ॥

(भावदीपः)

**किञ्चिदिति** ॥ शरीरपरिणामस्य पितृप्रवेशं विनैव मातरं प्रविष्टस्य मात्रुदरे पित्रा सिक्तेन मातृस्थितेनैव वा रेतसोपपत्त्या पितुरेवानुपयोगाद्वेति भावः । यद्यपि वचने मातुरेवेत्येवकारेण अन्यप्रवेशस्य व्यवच्छेदाद्विद्यैव त्वित्यत्र पूर्वपक्षे कर्मणैव त्विति स्मृतेरिव प्राबल्यं सुवचम् । अन्यथा सूत्रेऽथपदेन तस्य सावकाशत्वोक्तिर्न स्यात् । तथापि तस्य स्फुटत्वाद्वा सावकाशत्वमुपेत्य वा रेतस्सिक्पदव्यावर्त्यस्यैवान्यत्रोक्तस्यास्फुटत्वात्तद्व्यक्तीकरणमेतदित्यदोषः । तेन व्रीह्यादि-प्रवेशोऽप्याक्षिप्तो ध्येयः । कथं पदार्थं विवृण्वन् फलोक्त्योपसंहरति ॥ **अत इति** ॥ सयुक्तिकत्वेन वचनस्य बलवत्त्वादित्यर्थः । सयुक्तिकवचनविरुद्धत्वेन श्रुत्यप्रामाण्यपूर्वपक्षे सति द्वितीये निवेशापत्तेः प्रतीतार्थ इत्युक्तिः ॥ **सिद्धत्वादिति** ॥ द्वितीये सर्वविरोधनिरासेन कृत्स्नवेदप्रामाण्य-स्योक्तत्वादित्यर्थः । यद्वा देवतानये अत एव च नित्यत्वमित्यत्र वेदस्यानादिनित्यत्वादेवानादि-नित्यवाच्यार्थवत्त्वरूपप्रामाण्यस्य साधितत्वादिति वा 'न विलक्षणत्वात्' इत्यत्रानादिनित्यत्वादिना वेदप्रामाण्यस्य सिद्धत्वादित्यर्थः ॥ **अत इति** ॥ सयुक्तिकवचनविरुद्धत्वाद्वाक्यप्रामाण्याच्चेत्यर्थः ॥ **किमर्थेति** ॥ लक्षणादिना मातृप्रवेशार्थैव वाच्येति भावः ॥ **एवं चेति** ॥ श्रुतेः पितृशरीर-प्रवेशाप्रापकत्वे सतीत्यर्थः । व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ प्रागुक्तयुक्तिविरोधमाशङ्क्य श्रुतौ सूत्रे च रेतस्सिक्पदप्रयोगसूचितयुक्त्या विकल्पपूर्वं निरस्यति ॥ **न चेत्यादिना** ॥ **उपयोगि-त्वादिति** ॥ न च मातृस्थितेनैव रेतसा उपपत्तिः । वक्ष्यमाणेशक्लृप्तिवचनविरोधेन पितृसिक्तस्यैव जीवदेहपरिणामहेतुत्वकल्पनादिति भावः । द्वितीयकल्पनिवर्तकतया ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरमितीशक्लृप्तत्ववचनादित्यन्यत्रोक्तयुक्तिं सङ्गमयति ॥ **न द्वितीय इत्यादिना** ॥ एतेन व्रीह्यादिप्रवेशोऽपि समाहितः । **ईश्वरकल्पितत्वादेवेति** ॥ रेतस्सिक्पदसूचितयुक्त्या अन्यत्रोक्त-युक्त्या च युक्तिविरोधं निरस्य वचनविरोधनिरसनपरतया भाष्यशेषं व्याचष्टे ॥ **एवं चेदिति** ॥ भाष्ये पश्चादित्येतत्सौत्राथपदव्याख्यानमिति दर्शयन्नर्थमाह ॥ **रेतस्सिग्योगादनन्तरमिति** ॥ तेन सूत्रे रेतस्सिक्पदार्थ एव सन्निधानादथपदार्थानन्तर्यप्रतियोगीति सूचितम् ॥ **अयोगेति** ॥ विद्यैवेत्यत्र कर्मणैवेत्येवकारस्य तृतीयपादे वक्ष्यमाणदिशेति भावः । सूत्रार्थस्य वैराग्यफलकत्वं व्यञ्जयन्नुप-संहरति ॥ **अत इति** ॥ वचनस्य सावकाशत्वेन पितृप्रवेशश्रुत्यविरोधकत्वात्पितृप्रवेशस्यार्थ-वत्त्वेनेशक्लृप्तत्वेन च साधकभावाद्बाधकाभावाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**नाऽतिविरक्तिः स्यादिति ॥** इष्टोत्पत्तिनान्तरीयकदुःखस्याऽल्पत्वादिति भावः । श्रुतिः, प्रयोजनाऽदर्शनं च, **सन्देहबीजमिति ॥** श्रुत्या तावत् पितृप्रवेश उच्यते । तत्प्रवेशस्य च प्रयोजनं नोपलभ्यते । ततश्च श्रुतिः प्रतीतार्थे प्रमाणं न वेति सन्देहः सन्देहबीजमिति भावः । एतेन श्रुतिप्रयोजनाऽदर्शनयोः श्रुतेः प्रबलत्वेन निर्णयसम्भवात् न सन्देह इति निरस्तम् । किमर्थेति **वक्तव्यमिति ॥** किमः अर्थो यस्याः सा किमर्था । काकुस्वरेण पितृप्रवेशाक्षेपार्था श्रुतिरिति वक्तव्यमित्यर्थः । एतेन श्रुतेरर्थान्तरस्यैव वक्तव्यत्वेन तद्विहाय किमर्थेति प्रश्नकरणमयुक्तमिति परास्तम् ॥ **किमुत्पत्ताविति ॥** किं पितुरेवानुपयोगात् तत्प्रवेश आक्षिप्यते, उत पितुरुपयोगमङ्गीकृत्य प्रयोजनाभावात् प्रवेशो नेत्याक्षिप्यत इति भावः ॥ **तत्प्रवेशस्य ईशक्लृप्तत्वादिति ॥** पितृप्रवेशो बीजानां दावदहनमिव जीवानां संस्कारतया ईश्वरेण क्लृप्तत्वात् । प्रयोजनाभावोऽसिद्ध इति भावः ॥ **रेतः सिग्योगाऽनन्तरमपीति ॥** साधारणजीवानां रेतःसिग्योगानन्तरं नियमेन मातृशरीरप्रवेशसद्भावान्न वचनस्याऽप्रामाण्यमिति भावः । एवकारस्त्वयोगव्यावर्तक इति । पितृप्रवेशानन्तरं मातृप्रवेशिजीवपरतादशायामेवकारोऽयोगव्यावर्तकः । गर्भस्थितसिद्धदेहप्रवेशिजीवपरतादशायां तु अन्ययोगव्यवच्छेदार्थ इत्यपि द्रष्टव्यम् । 'देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत' इति वचनात् । उक्तं च सुधायाम् 'क्वचित् बीजादिसम्बन्धाभावस्यापि विद्यमानत्वेन तद्विषयत्वादिति ।

पूर्वपक्षस्तु न जीवस्य पितृप्रवेशोऽस्ति । 'मातुरेवोदरं व्रजेत्' इति वचनात् । न च 'य एव गृही भवति' इति पितृप्रवेशवचनविरोधः प्रयोजनाभावयुक्तियुक्ततया बलवदेतच्छ्रुतिविरुद्धत्वेन तच्छ्रुतेः काकुस्वरेण पितृप्रवेशनिषेधपरत्वात् । ततश्च अत्यायासाभावेन नाऽतिवैराग्यं कर्मादावपेक्षितमिति ।

सिद्धान्तस्तु अस्त्येव पितरि प्रवेशो जीवस्य । 'ततो रेतः सिचमेवाऽनुप्रविशत्यथ मातरम्' इति श्रुतेः । न च पितृप्रवेशो व्यर्थः । पितृप्रवेशस्य उत्पत्स्यमानसाधारण-जीवसंस्कारतया ईशक्लृप्त्या तस्य संस्कारार्थत्वात् । न च मातुरेवोदरं व्रजेत्' इति स्मृत्यप्रमाण्यम् । पितृप्रवेशानन्तरं मातृप्रवेशस्याप्यङ्गीकारात् । न च 'मातुरेव' इत्यवधारणानुपपत्तिः स्मृतेः साधारणजीव-

(अभिनवचन्द्रिका)

परतादशायाम् अवधारणस्य अयोगव्यवच्छेदार्थत्वाङ्गीकारात् । गर्भस्थितसिद्धशरीरप्रवेशिजीवपरता दशायां तु अन्ययोगव्यवच्छेदस्यापि भावात् । अतः पितृप्राप्ते र्विद्यमानत्वात् भवितव्यं कर्मादावतिवैराग्येणेति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं दर्शयति ॥ **कर्मीति** ॥ यः कर्मी व्रीह्यादिशरीरं प्रविशतीति 'त इह व्रीहियवा' इति श्रुत्यर्थनिर्णयेनोक्तं तस्यैव तदनन्तरभाविन्यायो ह्यन्नमत्ति 'यो वा रेतःसिञ्चति तत्तद्भूय एव भवति' इति श्रुत्या तत्समानार्थया स्पष्टया य एव गृहीति श्रुत्या चोच्यते । तद्विचारा-दनन्तरसङ्गतिरिति भावः । अत एव भाष्ये इति च श्रुतिरिति चशब्दः । अत एव तत्त्वप्रदीपे यो यो ह्यन्नमत्तीत्यादिकया समानप्रकरणात् रूढितया च सहेति चशब्दार्थ उक्तः । कर्मी किं पितरं न प्रविशतीत्युत प्रविशतीति चिन्ता । तदर्थं मातुरेवोदरमिति युक्तिसाहित्येन बलवत्युतैवकारस्या-योगव्यवच्छेदकत्वेन वैय्यर्थ्याद्धेत्वसिद्ध्या च दुर्बलेति ॥ **श्रुतिःप्रयोजनादर्शनं चेति** ॥ प्राबल्याद्य-विवेकदशायामुभयोः समकक्षतया संशयबीजत्वमिति भावः ॥ **न चास्य वचनस्येति** ॥ स्मृतेः श्रुत्यपेक्षया दुर्बलत्वादिति भावः । अव्यवधानेनास्योत्पादनायावश्यापेक्षणीयायास्तस्या मातुरेवोदरं व्रजेत् । न तु पितुः सद्भावेऽपि मात्रपेक्षणादिति स्मृत्यैव सूचितं रेतस्सिग्पदव्यावर्त्यं वैय्यर्थ्य-मित्युक्तन्यायं विशदयति ॥ **युक्तीति** ॥ **वचनविरुद्धेति** ॥ 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनाद्व्याख्यानभूतया स्मृत्या युक्त्या विरुद्धम् । प्रतीतार्थेऽप्रमाणमित्यर्थः । सा कथमित्यनुवादः । किमर्थेति व्याख्या । वक्तव्यमिति शेषः । भवद्भिरिति च शेषः । किमर्थे-त्यस्माभिः पृष्टे भवद्भिरुत्तरं वक्तव्यं अर्थान्तरमेव चिन्तनीयम् । न प्रतीतार्थः कार्य इति भावः । यद्वा इति श्रुतिः कथमिति काका किमित्याक्षेपे वर्तते इति भाष्यार्थमभिप्रेत्य व्याचष्टे किमर्थे वक्तव्यमिति । किमोऽर्थो यस्याः सा किमर्था । तमो वानुप्रविशतीति किमिति काकुस्वरेण पितृप्रवेशाक्षेपार्था श्रुतिरिति वक्तव्यमित्यर्थः । रेतस्सिग्योग इत्यंशव्याख्यापरं पितरमेव प्रथमतो विशतीति भाष्यं व्याचष्टे ॥ **अस्त्येव पितृप्रवेश इति** ॥ अथ मातृप्रवेश इत्युक्त्या सूत्रे प्रथम-मित्यादौ लभ्यते इति भावेन प्रथमत इत्युक्तम् । रेतस्सिगिति सौत्रपदसूचितां ततो रेतःसिचमिति श्रुतिमुदाहरद्भाष्यं व्याचष्टे ॥ **ततो रेत इति** ॥ अन्यथा सूत्रे पितृयोग इत्यवक्ष्यदिति भावः ।

(वाक्यार्थमुक्तावली)

प्रकारान्तरेण रेतस्सिक्पदप्रयोगप्रयोजनं वक्तुं वैय्यर्थ्यं विकल्पयति ॥ **किमुत्पत्ताविति** ॥ **उत प्रवेशमात्रस्येति** ॥ पितुरुपयोगसद्भावेऽपि मातृप्रवेश एवास्तु न पितृप्रवेशः । तदभावेऽपि रेतःसेचकत्वोपपत्तेरिति वैय्यर्थ्यमुच्यते एवेत्यर्थः । आद्योत्तरत्वेन रेतःसिक्पदं घटयति ॥ **नाद्य इति** ॥ प्रथमं रेतस्सिचमेवानुविशतीति नियमोक्त्या सूचितं क्लृप्तिरित्युक्तन्यायं द्वितीयोत्तरत्वेनाह ॥ **न द्वितीय इति** ॥ अथेत्यनन्तरं मातृप्रवेश इति शेषः । एतच्च मातुरेवोदरं व्रजेदित्यवधारणस्य सावकाशत्वप्रदर्शनायेत्यभिधायकं मातुः प्राप्तेरिति भाष्यमवतार्य व्याचष्टे ॥ **एवं चेदिति** ॥ **अयोगव्यावर्तक इति** ॥ व्रजेदेवेत्येवकारान्वय इति भावः ।

## तत्त्वसुबोधिनी

**तस्यैव पितृप्रवेश इति** ॥ तथा च 'तिला माषा इति जायन्त' इति पूर्वाधिकरण-विचारितवाक्यानन्तरं प्राप्तेन 'ततो वै खलु दुर्निष्प्रपतनं यो यो ह्यन्नमत्ति यो रेतःसिञ्चति' इति वाक्येन समानार्थकस्य 'य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति' इति वाक्यस्यात्र विचारादनन्तरसङ्गतिरिति भावः । युक्तिसाहित्येनेत्युक्तयुक्तिमाह ॥ **न हीति** ॥ **सा किमर्थेतीति** ॥ पितृशरीरप्रवेशश्रुतिः किमर्था व्यर्थेत्यर्थः ॥ **शरीरपरिणामायेति** ॥ अत एव श्रुतिसूत्रयोः पितर-मेवानुप्रविशतीति पितृयोग इति च वक्तव्ये रेतःसिचमेवेति रेतःसिग्योग इति चोक्तमिति भावः । किमत्र प्रमाणमित्यत आह ॥ **ईशेति** ॥ मातुरेवोदरं व्रजेदिति श्रुतेः सावकाशत्वं वक्तुं सूत्रेऽथेत्युक्तमित्यभिप्रेत्य प्रवृत्तं मातृप्राप्तेः पश्चादपि भाव्यत्वादिति भाष्यमवतार्य व्याचष्टे ॥ **एवं चेदिति** ॥ अत एव पश्चादिति भाष्यं रेतः सिग्योगानन्तरमपीति व्याख्यातम् ॥ **अयोगेति** ॥ अनेन व्रजेदेवेत्यन्वयः सूचितो भवतीति भावः ।

## वाक्यार्थविवरणम्

**नातिविरक्तिरिति** ॥ पितृशरीरप्राप्तिरूपदुःखस्य न्यूनत्वादिति भावः । वैय्यर्थरूपयुक्तिमेव दर्शयति ॥ **न हीति** ॥ **किमर्थेति** ॥ केनार्थेनोपपन्नप्रामाण्यकेत्यर्थः ॥ **एवं हीति** ॥ वैय्यर्थ्येन पितृशरीरप्रवेशाभावे सिद्धे सतीत्यर्थः ॥ **उतेति** ॥ पितुरुपयोगमङ्गीकृत्य तत्प्रवेशमात्रस्य वैय्यर्थ्य-मुच्यते इत्यर्थः ॥ **आहेति** ॥ सौत्रार्थशब्दार्थमाहेत्यर्थः । तर्हि मातुरेवेति पितृशरीरप्रवेशनिषेधका-वधारणविरोध इत्यत उक्तम् ॥ **एवकारस्त्विति** ॥ तथा च मातुरुदरं व्रजेदेव, न व्रजेदिति नेत्यर्थः ।

## वाक्यार्थमञ्जरी

**नातिविरक्तिरिति** ॥ अत्यायासाभावादिति भावः ॥ **वचनादिति** ॥ तत्रैवकारेणान्यप्रवेशनिषेधादिति भावः । सिद्धत्वान्न विलक्षणत्वाधिकरणे । कथमित्यनुवादः ॥ **किमर्थेति** ॥ कोऽर्थो यस्याःसा किमर्था कीदृशार्थवतीत्यर्थः ॥ **ॐ रेतःसिग्योगोऽथ ॐ** ॥ कर्मिणः आदौ रेतःसिग्योगः रेतःसिंचतीति रेतःसिक् पिता तस्य योगःसम्बन्धो भवति । अथ तस्मादनन्तरं मातृयोगो भवतीत्यर्थः ॥ **प्रवेशमात्रस्येति** ॥ पितुरुपयोगमङ्गीकृत्य तत्प्रवेशमात्रस्य वैय्यर्थ्यमुच्यत इत्यर्थः ॥ **शरीरपरिणामायेति** ॥ अनेन श्रुतिसूत्रयोःपितृग्रहणमकृत्वा रेतःसिग्ग्रहणे प्रयोजनमुक्तमिति ध्येयम् ॥ **अयोगव्यावर्तक इति** ॥ तथा च व्रजेदेवेत्यन्वय इति भावः ।

॥ इति रेतोऽधिकरणम् ॥ १९ ॥

## २०. योन्यधिकरणम्

'देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत' इति वचनात्पश्चादेव प्रविशतीत्यत आह—

**॥ ॐ योनेः शरीरम् ॐ ॥ २९ ॥**

पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरमाप्नोति ।

'दिवः स्थास्नून्गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत' इति सम्मितम् ।

'अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वा' इति पौष्यायणश्रुतेः ।

'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् ।
पुरुषात्स्त्रियमापन्नस्ततो देहं यथाक्रमम् ॥
देहेन जायते जन्तुरिति सामान्यतो जनिः ।
विशेषजननं चापि प्रोच्यमानं निबोध मे ॥
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।
गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च' इति ब्राह्मे ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये
तृतीयाध्यायस्य प्रथमः पादः ॥ ३, १ ॥

## तत्त्वप्रदीपिका

'देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत' इति वचनाद्रेतोरक्तसंयोगात्पश्चादेव प्रविशतीत्यत आह– **ॐ योनेः शरीरम् ॐ** ॥ पितृक्रमेण मातृयोनेः प्रवेशानन्तरमेव शरीरं लभते पूर्वोक्तन्यायेन । सम्मितं साधारणं जननम् । अथासम्मितं, असाधारणं विशिष्टमुत्तमानामेव लभ्यम् । स्थास्नुभ्यो जायते यथा शुकोऽरण्याम् । पितुर्मान्धाता । मातुरेवाङ्गः । अतश्चैतदाह 'स्वर्गादवाग्गतो देही मातुरेवोदरं व्रजेत्' इति । अन्तरे द्रुपदादयः । गर्भे प्रवेशो विरलः । अतः सूत्रावतारकवचन एतत्सूचनार्थत्वेन च युक्ते क्वापीत्युक्तम् । अतश्चातिविशिष्टविषयं बहिःप्रवेशवचनमवगम्यते । सञ्जाते शरीरे प्रवेष्टुर्गर्भवासादिप्रसूत्यादिदुःखग्रामलेशास्पर्शाद्विनैव यथाकामं देहग्रहणसम्भवात्तस्य च

(तत्त्वप्रदीपिका)

जन्मभाजामतिदुर्लभत्वात् । अतो नारायणपरायणस्य कस्यचित्तत्प्रसादसामग्रीसमुद्भूतप्रभूतप्रभावस्यैव तत्सुलभमुपलभामहे । स्वयं चावोचदनुव्याख्याने–

'बीजपूरुषयोनीनां सङ्गातिनियमोज्झर्ति अथशब्देन भगवानाह कारणतश्च ताम्' इति ॥ कारणं च भगवदनुग्रहातिशय एव विवक्ष्यते ॥

॥ इति तत्वप्रदीपिकायां तृतीयाध्यायस्य प्रथमः पादः ॥

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनवैराग्याय जीवस्य पितृद्वारा योनिं प्रविश्य शरीरप्राप्तेः समर्थनादस्ति शास्त्रादिसङ्गतिः । यदि सिद्धदेहप्रवेशाद्येव भवेन्न तर्ह्यतिविरज्येतातस्तत्प्रतिषेद्धव्यम् । जीव एव विषयः । किं पितृद्वारा मातृयोनिमनुप्रविश्याथ शरीरं प्राप्नोति उत नेति सन्देहः । पक्षद्वयेऽप्यनुपपत्त्यदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **देहमिति** ॥ पितृशरीरान्मातृयोनिमनुप्रविश्य शरीरप्राप्तिरिति नियमो नास्ति । योनिप्रवेशस्तावन्न विद्यते । देहं गर्भस्थितमिति वचनात् । न ह्यत्र योनिप्रवेश उच्यते । न च विशेषप्रमाणमस्ति येन कल्पयामः । व्यर्थश्च योनिप्रवेशः । पितुः सकाशादेव तस्मिन् बहिरेवोत्पत्तिसम्भवात् । मातृप्राप्तेरपेक्षितत्वे वा पितुः सकाशात्संस्पर्शद्वारेण मातृप्राप्त्युपपत्तेः । पितृप्रवेशोऽयुक्त उक्तवचनादेव । न चेशाक्तृप्तिवचनविरोधः । वैपरीत्यस्यापि वक्तुं शक्यत्वात् । न च पितृप्राप्तिमन्तरेण मातृप्रवेशानुपपत्तिः । अन्यथोऽन्नादेरेव मातृप्रवेशोपपत्तेः । मातृस्थरेतसैव शरीरपरिणामोपपत्तेः पितुरेवानुपयोगः । शरीरप्राप्तिरप्यनुपपन्ना । पूर्वसिद्धतत्प्रवेशस्योक्तत्वात् । स च मातुरुदरस्थगर्भस्थिते वा बहिर्निर्गते वोपपद्यते । क्वापीत्युक्तत्वात् । अतोऽत्यायासाभावान्नातिवैराग्येण कृत्यमिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अस्त्येव जीवस्य पितृशरीरप्रवेशः । ततो योनिद्वारैव मातृशरीरप्रवेशः । तत्रैव प्रागसिद्धशरीरप्राप्तिरित्यर्थः । नैतद्युक्तम् । अप्रामाणिकत्वादित्यत आह ॥ **दिव इति** ॥ संमितं विशेषकारणमन्तरेण साधारणं जन्म । असाधारणजन्मविषयं प्रागुक्तमिति भावः । स्थाणुपु शुकादयः । पुरुपे मांधातृमुखाः । प्रमदायामास्तिकप्रभृतयो जरत्कार्व्यनुग्रहात् । गर्भे पूर्वसिद्धमेव शरीरं केचित् । बहिर्द्रुपदादयः पितृसापेक्षाः । स्थानांतरे धृष्टद्युम्नादयः पित्रादिनिरपेक्षाः । एतदेवांतर इति श्रुत्युक्तम् । मातापित्रोर्मध्ये अन्योन्यदर्शनमात्रेण वा । अतः

(तत्त्वप्रकाशिका)

**सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेनापवर्गादितरत्र सर्वत्रापि महादुःखाविनाभावात्तत्र विरक्तेन भगवान् भजनीय इति सिद्धम् ।**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां तृतीयाध्यायस्य प्रथमः पादः ॥**

## गुर्वर्थदीपिका

न तर्ह्यतिविरज्येतेत्यस्य गर्भवासादिजनितदुःखाननुभवादिति भावः । तस्मिन्बहिरेव वेत्यस्य मान्धातृवत्तस्मिन् पितर्येव द्रोणादिवद्बहिरेव वेत्यर्थः । द्रोणादिदेहस्य पुरेतोमात्रेणोत्पत्तिवत्केवलं मातृरेतसोऽपि देहोऽस्त्विति शङ्कते ॥ **मातृस्थरेतसेति** ॥ गर्भे पूर्वसिद्धमेव शरीरं केचिदित्यत्र यथा मध्वावतारे मुख्यवायुरित्युदाहरणमूह्यम् । वायोर्योग्यतया द्वात्रिंशल्लक्षणभरितत्वेन मातुरुदर एव गर्भजदुःखानुभवजनयितृजीवान्तरप्रवेशात्परिणतं प्रसवकाले तन्निष्कास्य वायुः स्वयं प्रविवेशेति भावः । स्थास्नुभ्य इति पञ्चम्येव । पितुर्मातुरिति पञ्चम्यपि । केवलं पितुरुदरजातस्य मातुरुदर-जातस्यापि सङ्गतत्वादन्तरेवायातीति श्रुत्युक्तमन्तरपदं मातापितरौ विहाय केवलाग्न्यादि-स्थानान्तरेजातधृष्टद्युम्नादि सङ्ग्राहकमेवेति भावेनोक्तं एतदेवेति ।

**॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तत्त्वप्रकाशिकाटिप्पण्यां तृतीयाध्यायस्य प्रथमः पादः ॥**

## भावबोधः

**पितृद्वारा योनिं प्रविश्येति** ॥ तथा च 'ततो रेतः सिञ्चमेवानुविश्याथ मातरमथ प्रसूय' इति श्रुत्यनुसारेण पूर्वाधिकरणविषयवाक्यानन्तरं प्राप्तं 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्त' इति यद्वाक्यं तत्रोक्तो मातृप्रवेशो विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किं पितृद्वारेति** ॥ अत्र जीवः किं पितृद्वारा मातृयोनिमनुप्रविश्याथ शरीरं प्राप्नोत्युत नेति चिन्ता । तदर्थं 'देहं गर्भस्थितं क्वापि' इति वचनं सकलजीवसामान्यजन्मविषयकं वोत ज्ञानतपःकारणकजीवविशेषजन्मपरं वेति । तदर्थं पितृप्रवेशादिनियमप्रमाणप्रयोजने न स्त उत स्त इति । योनिप्रवेशस्तावदिति पितृप्रवेशोऽ-प्युक्त इति वक्ष्यमाणापेक्षया तावच्छब्दः । पितुः सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेः योनिप्रवेशाभाव इति न्यायविवरणं मनसि निधायाह ॥ **व्यर्थश्चेत्यादि** ॥ पितुः सकाशादेवेत्यनेन

(भावबोधः)

पितुः सकाशाच्छरीरमेव प्रवेष्टुमुपपत्तेरित्यन्वयमभिप्रेत्य तावानंशो व्याख्यातः । तस्मिन्निति पितरि मान्धात्रादिवदित्यर्थः ॥ **बहिरिति** ॥ द्रुपदादिवदित्यर्थः । पितुः सकाशादौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति न्यायविवरणं प्रकारान्तरेण व्याचष्टे ॥ **मातृप्राप्तेरिति** ॥ योनिप्रवेशनिरासार्थं संस्पर्शद्वारेणेति शेषोक्तिः ॥ **वैपरीत्यस्यापीति** ॥ अस्यापि प्रामाणिकत्वेनेशङ्क्षिप्तमूलकत्वादित्यर्थः । अन्यत औदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति न्यायविवरणं प्रकारान्तरेण व्याचष्टे ॥ **अन्यत इति** ॥

नन्वन्नादिद्वारा मातृप्रवेशोपपत्तावपि शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेश आवश्यक इति पूर्वाधिकरणेऽभिहितमित्यत अन्यत इति न्यायविवरणं प्रकारान्तरेण व्याचष्टे ॥ **मातृस्थरेतसैवेति** ॥ औदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति न्यायविवरणांशं व्याचष्टे ॥ **स चेति** ॥ योनिप्रवेशस्तावन्न विद्यते । पितृप्रवेशोऽप्ययुक्तः । शरीरप्राप्तिरत्यनुपपन्नेति वाक्यत्रयेण योनिप्रवेशाभाव इति न्यायविवरणांश उपलक्षणपर इति योजितो भवति ॥ **अस्त्येव जीवस्य पितृप्रवेश इति** ॥ अनेन सूत्रे योनिशब्द उपलक्षक इत्यभिप्रेत्य पितृशरीरान्मातृयोनिमनुप्रविश्य तत एवं शरीरं प्राप्नोतीति भाष्यं प्रवृत्तमित्युक्तं भवति । तदुक्तं सुधायाम्– 'यद्यप्यत्र योनिशब्दो जीवाद्युपलक्षणपरः शक्यो व्याख्यातुम्' इति ।

ननु तर्हि 'देहं गर्भस्थितं क्वापि' इति प्रागुदाहृतवचनस्य का गतिरित्यत आह ॥ **असाधारणजन्मविषयमिति** ॥ तथा च–

'बीजपूरुषयोनीनां सङ्गतिं नियमोज्झिताम् ।
अथशब्देन भगवानाह कारणतश्च ताम् ॥'

इत्यनुव्याख्यानोक्तरीत्या 'रेतः सिग्योगोऽथ' इति पूर्वसूत्रादनुवर्तमानेन 'योनेः शरीरम्' इत्यनेनाऽन्वितेनाथशब्देन यत्तपोज्ञानादिविशेषकारणकजीवजन्मलक्षणं पक्षान्तरं तद्रूपासाधारणजन्मविषयं प्रागुदाहृतं वाक्यमित्यर्थः । अत एव भाष्ये'ऽथासंमिताम्' इति 'विशेषजननं च' इति श्रुतिस्मृतिविशेषस्य न्यायविवरणे विशेषकारणादेवेत्यस्य चोदाहरणमिति भावः । ननु 'उत्पत्त्यसम्भवात्' इत्यधिकरणे 'केवलाभ्यो न हि स्त्रीभ्यः' इत्युक्तत्वात् कथं प्रमदायामित्युक्तमित्यत आह ॥ **जरत्कार्वादीति** ॥ **एतदेवेति** ॥ अनेन 'पुरुषे प्रमदायां स्थानान्तरेषु च' इति

(भावबोधः)

स्मृत्यनुसारेण पितुर्जायते मातुर्जायते अन्तरे स्थानान्तरे जायत इति श्रुतिवाक्यं प्रत्येकं व्याख्यातं भवति । मातापित्रोर्मध्य इति पितुर्मातुरन्तर इत्येकवाक्यतया व्याख्यातं भवति ॥ **सामान्यजन्मनीति** ॥ अनेन सामान्यतो गत्यन्तराभावादिति न्यायविवरणभुक्ततात्पर्यकं भवति ।

अत्राद्यपादे आद्याधिकरणषट्कं भूतवियोगाभावप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– सामान्यतो भूतवियोगाभावे प्रश्नव्याख्यानरूपप्रमाणोक्तिः । द्वितीये– सर्वभूतगमने आर्थिककल्पना । तृतीये– तन्मूलभूतप्रमाणगतिलक्षणानुमानरूपविशेषप्रमाणोक्तिः । चतुर्थे– तस्य स्वरूपासिद्ध्याशङ्कापरिहारः । पञ्चमे आर्थिककल्पनायां कल्पकाभावमाशङ्क्य तत्परिहारः । षष्ठे तु– सर्वगमने प्रत्यक्षाश्रवणमाशङ्क्य विशेषश्रुत्युक्तिरिति । सप्तमाष्टमयोः– वैराग्यादिसाधनावश्यकताप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका । तत्राद्ये– मोक्षस्य कर्मसाधनत्वान्न ज्ञानसाधनवैराग्यसाध्यत्वमित्याक्षेपपरिहारः । द्वितीये तु भोगेनैव कर्मक्षयसम्भवेन तन्मूलसंसारोच्छेदः स्वयमेव सिध्यतीत्याक्षेपपरिहारः । नवमदशमैकादशासु पुनरावृत्तिलक्षणैकविषयप्रतिपादकत्वेन तदधिकरणत्रयमेका पेटिका । तत्राद्ये– गमनमार्गस्य स्मरणविषयत्वेनागमनं गतिप्रकारेणैवेति प्राप्ते गतिप्रकारेणान्यथा चेति समर्थनम् । द्वितीये– पुनरावृत्तेश्च चरणफलत्वाशङ्कापरिहारपूर्वकं करणफलत्वसमर्थनम् । तृतीये अनिष्टादिकारिणामपि तत्समर्थनम् । यद्वा स्यादनिष्टादिकारिणां गतागतव्यतिरिक्तनरकादिदुःखप्रतिपादकत्वेनोत्तरपेटिकायामन्तर्भावः । द्वादशत्रयोदशयोः– नरकरूपैकविषयप्रतिपादकत्वेनाधिकरणद्वयमेका पेटिका । तत्राद्ये– नरकाणां नित्यत्वविभागोक्तिः । द्वितीये– दुःखत्वसमर्थनम् । चतुर्दशे जीवानां गतिस्वातन्त्र्यनिरासः । पञ्चदशे– अन्धे तमसि दुःखमात्रसमर्थनम् । इतः परमापादसमाप्तेरधिकरणपञ्चकमागमनरूपैकविषयप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– कर्मिणामागमने धूमादिदेवतैक्यतत्पदप्राप्तिनिरासार्थं धूमो भवतीत्यादिश्रुत्यर्थतया तद्गतौ गतिरित्यादितत्स्वाभाव्यापत्त्युक्तिः । द्वितीये कर्मिणः स्वर्गादवाग्गतस्याचिरेण गर्भवासादिप्राप्तिसमर्थनम् । तृतीये– कर्मिणः स्वर्गादवाग्गतस्य 'त इह व्रीहियवाः' इत्यादिना प्राप्तव्रीह्यादिभावनिरासार्थमन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशोक्तिः । चतुर्थे अस्य पितृप्रवेशसमर्थनम् । पञ्चमे– तस्य मातृयोनिप्रवेशानन्तरं तत्र प्रागसिद्धशरीरप्राप्तिसमर्थनमिति ।

॥ श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते तत्वप्रकाशिका
भावबोधे तृतीयाध्यायस्य प्रथमः पादः ॥

## भावदीपः

**प्रविश्येति** ॥ स्थितस्येति शेषः । तेन ल्यबन्तोपपत्तिः ॥ **शरीरेति** ॥ प्रागसिद्धेति योज्यम् ॥ **समर्थनादिति** ॥ पितृद्वारकत्वादस्य प्राक्समर्थनेऽपीह विशेषाशङ्कायां कांचित्कान्यथाभावस्य बलवत्कारणरूपापवादायत्तत्वकथनेन समर्थनमिति भावः । एतेन प्रागथपदेनाथ मातरमित्युक्त-मातृप्रवेशाक्षेपेण वा मातृप्रवेशमुपेत्य योनिप्रवेशाक्षेपेण वा ततो रेतस्सिचमित्यादिनोक्तस्य पितृक्रमेण मातृयोगरूपस्य कृत्स्नपूर्वसूत्रार्थस्याक्षेपेण वेह शङ्कोदयात्पूर्वसङ्गतिरिति सूचितम् । अस्फुटत्वा-त्फलफलिभावं व्यनक्ति ॥ **यदीति** ॥ **अत इति** ॥ तत्प्रतिषेधस्यातिविरागापादकत्वादित्यर्थः । पश्चादेवेति भाष्यस्थैवकारव्यवच्छेद्यं व्यनक्ति ॥ **पितृशरीरादिति** ॥ **शरीरेति** ॥ प्रागसिद्धशरीरेत्यर्थः । कथमित्यतः योनिप्रवेशाभाव इत्यन्यत्रोक्तरीत्या पश्चात्प्रविशतीति भाष्यं योनिप्रवेशाभावोक्तिपरतया व्याचष्टे ॥ **योनीति** ॥ तत्र भाष्यस्थं हेतुमाह ॥ **देहमिति** ॥ **अत्र** वचने । अत्र पितुः सकाशादेवान्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेर्योनिप्रवेशाभाव इति न्यायविवरणम् । तत्र योनिप्रवेशाभावरूपे साध्ये पूर्वन्यायविवरणाद्वैयर्थ्यहेतुमनुवर्त्य तदुपपादकतया पितुः सकाशाच्छरीरमेव प्रवेष्टुमुपपत्तेरित्यन्वयं एवकारस्य सकाशादित्यन्यत्रान्वयं चोपेत्य सकाशादेवेत्यंशं द्वेधा व्याचष्टे ॥ **व्यर्थश्चेति** ॥ **तस्मिन्** पितरि । युवनाश्वादौ मांधात्रादेः । बहिरेव द्रुपदद्रोणादेरुत्पत्तिदर्शनादिति भावः । शरीरं प्रवेष्टुमुपपत्तेरित्यस्य तात्पर्यार्थं उत्पत्तिसम्भवादिति । पूर्वं गर्भस्थशरीरमिति विशेषणोक्त्यनुरोधेन पश्चादेव प्रविशतीति भाष्यस्य पितुः सकाशाच्छरीरमेव प्रवेष्टुमुपपत्तेरित्यन्वयेनैवकारस्य सकाशादित्यन्यत्रान्वयमुपेत्य शरीर-मित्यादेः जीवभोग्यशरीरार्थत्वमुपेत्योत्पत्तिसम्भवादित्यर्थ उक्तः । अधुना शरीरशब्दस्य मातृ-शरीरार्थत्वं एवकारस्य यथान्यासान्वयं चोपेत्यार्थमाह ॥ **मातृप्राप्तेरिति** ॥ **संस्पर्शेति** ॥ जरत्कारुनामिकायां योषिति जरत्कारोः पुंसः सकाशादास्तिकस्य योनिप्रवेशं विनैव मातृप्रवेशेन जन्मदर्शनादिति भावः । एतेन पश्चादेव प्रविशतीति भाष्यस्य रेतस्सेककालीनप्रवेशं विनाऽन्यकाल एव प्रविशति मातरमित्यर्थ उक्तो भवति । एवं देहं गर्भस्थितमिति वचनात् अन्यथोत्पत्त्युपपत्त्या योनिप्रवेशवैयर्थ्याच्च पश्चादेव प्रविशति योनिप्रवेशं विनैव मातरं प्रविशतीति भाष्यव्याख्यया योनिप्रवेशाभावोपपादनेन नातिचिरेणेत्यत्रोक्तयोनिमापद्यन्त इति श्रुतिविरोधो भाष्योक्तवचनस्येति शङ्काऽपोढा । पूर्वतनपूर्वपक्ष इव सयुक्तिकत्वेन बलवद्वचनविरोधेन योनिप्राप्तिश्रुतेः प्रतीतार्थे

(भावदीपः)

प्रामाण्यायोगादिति तात्पर्यात् । एवं योनिमनुप्रविश्येत्येतन्नास्तीत्युक्तमुपपाद्येदानीं पश्चादेव पितृप्रवेशं विनैव मातरं प्रविशतीत्यर्थं भाष्यस्योपेत्य पितृशरीरान्नास्तीत्येतदंशं प्राक्प्रतिज्ञात-मुपपादयति ॥ **पितृप्रवेशोऽपीति** ॥ भाष्योक्तमेव हेतुमाह ॥ **उक्तेति** ॥

नन्वेवं पूर्वनयोक्तेशक्लृप्तिवचनार्थवत्त्वरूपयुक्तिभ्यां रेतस्सिचमिति श्रुत्या च विरोध इत्याशङ्क्येशक्लृप्तिवचनं तावन्निराह ॥ **न चेति** ॥ **वैपरीत्यस्यापीति** ॥ देहं गर्भस्थितमित्यस्यापि वचनत्वेनानेनेशक्लृप्त्यैव पितरमिति वचनस्य बाधोऽस्त्वित्यर्थः । वचनस्यान्यथानुपपत्तियुक्त्याऽर्थ-वत्त्वयुक्त्या च साहित्येन बलवत्त्वमाशङ्क्य अन्यतो वा शरीरमेव प्रवेष्टुमुपपत्तेरिति न्यायविवरणा-न्वयं शरीरशब्दस्य मातृशरीरार्थत्वमुपेत्यान्यत इत्यस्यापि पितृशरीरादन्यतः पितृशरीरस्थरेत-सोऽन्यत इत्यर्थद्वयमभिप्रेत्य शङ्कां निराह ॥ **न चेति** ॥ **मातृस्थेति** ॥ आस्तिकशरीरमेव दृष्टान्त इति भावः । एतेन देहमिति भाष्योक्तवचनस्य देहोत्पत्तेरन्यथोपपत्त्या पितृप्रवेशवैयर्थ्यरूपयुक्त्यु-पेतत्वेन प्राबल्यं सूचितम् । तेन रेतस्सिचमनुप्रविशतीति प्रागुक्तश्रुतिविरोधोऽप्यपोढः । वैपरीत्यस्यैव सम्भवादिति । अथेदानीमन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरित्यन्यत्र भाष्ये च गर्भस्थितमिति क्वापीति च शरीरविशेषणोक्त्यनुरोधेन संयुक्तरेतोरक्तपरिणामात्पश्चादेवेति वा प्रसवात्पश्चादेवेति वा प्रविशति शरीरमित्यर्थं भाष्यस्योपेत्य प्रागुक्तं शरीरप्राप्तिर्नास्तीतीममंशमुपपादयति ॥ **शरीरेति** ॥ प्रागसिद्धशरीरप्राप्तिरित्यर्थः ॥ **उक्तत्वादिति** ॥ संस्पर्शद्वारेणेत्यत्रोक्तप्रायत्वादित्यर्थः । यद्वा देहं गर्भस्थितमिति वचनेनोक्तत्वादित्यर्थः । तद् द्वेधा व्यनक्ति ॥ **स चेति** ॥ पूर्वसिद्धशरीरप्रवेश इत्यर्थः ॥ **बहिरिति** ॥ एतेनान्यतो वेत्यस्यान्यत्र बहिस्थितं वा शरीरमिति न्यायविवरण-स्थान्यशब्दार्थ उक्तो भवति । पूर्णप्रज्ञप्रभृतिरेव दृष्टान्तः । यथोक्तम् । 'संपूर्णलक्षणचणं नवराजमानद्वारान्तरं परमसुन्दरमन्दिरं तत् । राजेव सत्पुरवरं भुवनाधिराजो निष्कासयन् परमसौ भगवान्विवेश' इति ।

ननु भाष्योक्तवचने बहिर्निर्गतं वा प्रविशेदित्यनुक्तेः इति वचनात्पश्चादेव प्रविशतीति कथं भाषणमित्यत आह ॥ **क्वापीत्युक्तत्वादिति** ॥ क्वापि बहिस्थितं देहमित्यन्वयादिति भावः । फलोक्त्या भाष्यार्थमुपसंहरति ॥ **अत इति** ॥ पितृशरीरान्मातृयोनिं प्रविश्य शरीरमाप्नोतीत्ये-तदभावस्य वचनयुक्तिसिद्धत्वादित्यर्थः ॥ भाष्ये शरीरप्राप्त्यंश एव विधिरन्यांशेऽनुवाद इति

(भावदीपः)

भ्रमनिरासायाक्षिप्तसर्वांशविधिपरत्वेन तद् व्याचष्टे ॥ **अस्त्येवेति** ॥ एतेन रेतस्सिग्योगोऽथेत्यनुवृत्तिं सूचयति । अथेत्यस्यार्थस्तत इति । भाष्योक्तश्रुतौ स्मृतौ च पुरुषान्मातृप्रवेशमात्रस्योक्तेस्तस्य च योनिप्रवेशं विनैव संस्पर्शद्वारेण प्रागुक्तदिशोपपत्तेर्योनिमनुप्रविश्येति भाषणस्याप्रामाणिकत्वशङ्का- व्युदासाय योनिद्वारेण देहं च प्राप्नोति प्रायशो नर इति वचनात्सामान्यतो गत्यन्तरा- भावादित्यन्यत्रोक्तप्रमाणसूचनाय योनिद्वारैवेत्युक्तम् । तेन योनेरिति सौत्रपञ्चम्यर्थो विवृतः । मातृशरीरं प्राप्नोतीति भ्रमनिरासायाह ॥ **प्रागसिद्धेति** ॥ स्वोपभोग्येत्यर्थः । भाष्ये जायत इत्यन्तोक्त्यैव पूर्तौ इति संमितमित्यादिश्रुतिशेषोक्तिः प्रागुक्तवचनस्य गत्युक्तिपरेति भावेनाह ॥ **असाधारणेति** ॥ भिन्नविषयत्वान्न विरोध इति भावः ॥ **शुकेति** ॥ अरणेर्जातत्वात् ॥ **आस्तिकेति** ॥ व्यक्तमेतत्सम्भवपर्वणि । स्त्रीमात्रादुत्पत्त्यसम्भवस्योक्तत्वादाह ॥ **जरत्कार्विति** ॥ **जरत्कारुर्भर्ता** । केचित् आचार्यप्रभृतयः । प्रागव्याख्यातमन्तर इतिपदं सौकर्यादिह व्यनक्ति ॥ **एतदेवेति** ॥ **अत इति** ॥ प्रमाणभावात् । क्वचिदन्यथोक्तेरसाधारणजन्मविषयत्वादित्यर्थः । उत्तरपादोपक्षेपाय फलमाह ॥ **भगवान्भजनीय इति** ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते तृतीयाध्यायस्य प्रथमः पादः ॥

## अभिनवचन्द्रिका

**जीवस्य पितृद्वारेति** ॥ अत्र स्वर्गादागतजीवस्य पितृप्रवेशस्ततो योनिप्रवेशः, अथ मातृ- प्रावेशः, ततः कललत्वं, ततो बुद्बुदादिक्रमेण असिद्धदेहप्राप्तिरिति एतावन्ति प्रमेयानि साध्यानि इति ध्येयम् ॥ **सिद्धदेहप्रवेशाद्येवेति** ॥ आदिशब्देन अन्नद्वारेण मातृप्रवेशः, पितर्येव देहप्राप्तिः, बहिर्वा पितुः सकाशात् देहप्राप्तिः । स्थानान्तरे पितृनिरपेक्षेण देहप्राप्तिरित्यादयो ग्राह्याः । 'पश्चादेव प्रविशति' इति भाष्यमुपलक्षणमिति भावेनाह– **पितृशरीरादिति** ॥ पितृशरीरात् मातृयोनिमनुप्रविश्य, शरीरप्राप्तिरिति विशिष्टं नाऽस्तीत्यर्थः । स्वर्गादागतेषु कस्यचित् योनिप्रवेशो नास्ति । अन्यत्सर्वं विद्यते । अन्यस्य तु पितृशरीरप्रवेश एव नाऽस्ति । अपरस्य गर्भस्थसिद्ध शरीरप्राप्तिः । अन्यस्य तु बहिर्निसृतशरीरप्राप्तिः । न तु स्वर्गादागतमात्रस्य सर्वमिति भावः । **योनिप्रवेशस्तावदिति** ॥ स्वर्गादागतानां केषाञ्चिज्जीवानामिति शेषः ॥ **न च विशेषप्रमाण- मिति** ॥ सर्वेषां योनिप्रवेश इत्यत्र विशेषप्रमाणं नेत्यर्थः ॥ **तस्मिन्निति** ॥ पितरीत्यर्थः ।

(अभिनवचन्द्रिका)

मातृप्रवेशिनां योनिप्रवेशाभावमाह – **मातृप्राप्तेरिति** ॥ केषाञ्चित् मातृप्राप्तेरपेक्षितत्वेऽपि संस्पर्श-द्वारेण मातृप्राप्त्युपपत्तेः योनिप्रवेशो न विद्यत इति पूर्वेण सम्बन्धः ॥ **पित्रप्रवेशोऽपीति** ॥ केषाञ्चित् अपेक्षितोऽपि पितृप्रवेशोऽन्येषामयुक्त इत्यर्थः । तत्र हेतुमाह– **उक्तवचनादेवेति** ॥ 'देहं गर्भस्थितं क्वापि' इति वचनात् । पितृप्रवेशमन्तरा सिद्धदेहप्रवेशः कस्यचिद्वक्तव्यः । अन्यथा पितृप्रवेशमनुक्त्वा सिद्धदेहप्रवेशोक्तिरनुपपन्ना स्यादिति भावः ॥ **न चेशक्कपीति** ॥ पितृप्रवेशा-नङ्गीकार ईशक्कस्यैव पितरं प्रविशत्यथ मातरमिति वचनेन बाध इति न च वाच्यमित्यर्थः ॥ **वैपरीत्यस्येति** ॥ 'देहं गर्भस्थितम्' इति वचनस्य विशेषवचनत्वेन अनेन बाध इति भावः । केषाञ्चिदुत्पत्तौ पितुरेवाऽनुपयोगात् न तेषां पितृप्रवेशादीत्यत्र हेतुमाह ॥ **मातृस्थेति** ॥ केषाञ्चित् कललबुद्बुदादिक्रमेण शरीरप्राप्तिरप्यनुपपन्नेत्याह– **शरीरप्राप्तिरपीति** ॥ ननु मातुरुदरस्थसिद्धदेह-प्रवेश इत्युपपन्नं, 'देहं गर्भस्थितम्' इति प्रमाणसद्भावात् । बहिरेव निर्गते प्रवेश इत्यनुपपन्नं, प्रमाणाभावादित्यत उक्तम्– **क्वापीत्युक्तत्वादिति** ॥ तस्मिन्वचने क्वापीत्युक्तिबलात् बहिस्थितदेह-प्रवेशो लभ्यत इति भावः । स्मृतिं व्याख्याय, सिंहावलोकनन्यायेन 'पितुर्मातुरन्तेरेव' इति श्रुति-व्याख्यानं सूचयति– **एतदेवेति** ॥ अनेन श्रुतेः स्थास्नुभ्यो जायते, पितुर्जायते, अन्तरे स्थानान्तरे जायत, इति व्याख्यानं सूचितमिति बोध्यम् । 'पितुर्मातुरेव' इति श्रुत्यंशं प्रकारान्तरेण व्याचष्टे– **मातापित्रोर्मध्येति** ॥

पूर्वपक्षस्तु स्वर्गादागतस्य पापिवत् पितरं प्रविश्य, योनिद्वारा मातरं प्रविश्य, कलल-बुद्बुदादिक्रमेण देहप्राप्तिर्नास्ति, किंतु कस्यचित् स्वर्गादागतस्य पितरं प्रविष्टस्य पुण्यवशेन योनि-प्रवेशमन्तरा संस्पर्शद्वारेण मातृप्रवेशेन देहलाभः । अपरस्य तु पितृप्रवेशं विनैवाऽन्नादिद्वारा मातृप्रवेशेन देहलाभः । ततोऽप्यतिशयितपुण्यवत्त्वात् । पक्षद्वयेऽपि आदौ कललप्राप्तिः ततो बुद्बुदस्य ततो देहस्ये क्रमः । अपरस्य मातृप्रवेशमन्तरा पितृदेहमध्ये देहप्राप्तिः । अन्यस्य कललबुद्बुदादिक्रममपहाय मातृदेहस्थजरायुगतसिद्धदेहप्राप्तिः । अन्यस्य तु बहिर्निर्गतसिद्धदेह-प्राप्तिः । परं तु कस्यापि स्वर्गादागतस्य पापिवत्पितृशरीरात् योनिद्वारा मातृशरीरं प्राप्य, कललबुद्बुदादिक्रमेण देहप्राप्तिरिति नियमो नास्ति । ततश्चाऽत्यायासाभावात् नातिवैराग्येण कृत्यमिति ।

**(अभिनवचन्द्रिका)**

सिद्धान्तस्तु अस्त्येव स्वर्गादागतस्यापि पितृप्रवेशः । अथ योनिद्वारा मातृप्रवेशः । ततः कललबुद्बुदादिक्रमेण देहप्राप्तिश्च । 'दिवस्थास्नून् गच्छति स्थास्नुभ्यः पितरं, पितुर्मातरं, मातुः शरीरं, शरीरेण जायत' इति वचनात् । न च 'देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गत' इत्यादिवचनविरोधः । केषाचित् तथाभावस्यापि सत्त्वेन तद्वचनानां तन्मात्रविषयत्वेन यावत्स्वर्गिविषयत्वाभावात् । तदुक्तम् 'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् । पुरुषात् स्त्रियमापन्नस्ततो देहं तथा क्रमम् । देहेन जायते जन्तुरिति सामान्यतो जनिः । विशेषजननं चापि प्रोच्यमानं निबोध मे । स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ क्वचित् स्थानान्तरेषु च' इति । अतः सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेन, अपवर्गादितरत्र सर्वत्रापि महादुःखाऽविनाभावात् तत्र विरक्तेन भगवान् भजनीय इति सिद्धम् ।

**॥ इति श्रीसत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां तृतीयाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमुक्तावली

**जीवस्य पितृद्वारेति ॥** तेन रेतस्सिग्पदसूचितप्रयोजनस्य शरीरपरिणामस्य मातृरेतसान्यथासिद्धिमाशङ्क्य पितृद्वारत्वस्यापि समर्थनादनन्तरसङ्गतिरपीत्युक्तं भवति । पितृद्वारत्वस्य मातृयोनिप्राप्तेः शरीरप्राप्तेश्च समर्थनादित्यर्थः ॥ **यदि सिद्धेति** ॥ मातुरुदर इति शेषः । अत्र जीवः किं पितृद्वारा मातृयोनिमनुप्रविश्याथ शरीरं प्राप्नोतीति नियमो नास्त्युतास्तीति चिन्ता । तदर्थं देहं गर्भस्थितं क्वापीति वचनं सकलजीवविषयमुत पुरुषविशेषविषयमिति ॥ **पितृशरीरादिति** ॥ पितृशरीरप्रवेशो मातृयोनिप्रवेशः देहेन सह जायत इत्यन्यत्रोक्तदिशा शरीरप्राप्तिरिति त्रिविधोऽपि नियमो नास्तीति भावः । मातृयोनिप्राप्त्यभावश्च द्वेधा । मातृप्राप्तेरनपेक्षितत्वाद्वा तदपेक्षायामपि तद्योनिप्राप्त्यभावाद्वा । मातृप्राप्त्यनपेक्षा च द्वेधा । मातृगर्भस्थदेहमात्रप्राप्तावपि साक्षान्मातृप्राप्त्याभावाद्वा सर्वथा मातृनिरपेक्षत्वाद्वा । तत्र मातृदेहस्थगर्भस्थदेहप्राप्तिरेव न तु योनिद्वारा मातृप्राप्तिरिति पक्षप्रदर्शकतया भाष्यं व्याचष्टे ॥ **योनिप्रवेशस्तावदिति** ॥ पक्षान्तराणि क्रमेण दूषयिष्याम इति तावच्छब्दः । पश्चादेव प्रविशतीति भाष्यस्य शुक्लरक्तयोर्योनौ सम्पर्कात् पश्चादेव तत्परिणतं मातृदेहस्थं गर्भं विशति, न तु योनिद्वारा साक्षात् मातरं प्रविशतीत्यर्थ इति भावः ।

(वाक्यार्थमुक्तावली)

ननु गर्भस्थदेहप्रवेशस्य योनिद्वारा जीवस्य मातृप्राप्त्यैवेति क्लृप्तत्वादत्र योनिप्रवेश उच्यत एवेत्यत आह ॥ **न च विशेषेति** ॥ योनिद्वारैव गर्भप्रवेश इत्यत्रेति शेषः । योनिद्वारा मातृप्राप्तिं विना पश्चादेव गर्भस्थदेहप्रवेशेन जन्मेति भाष्योक्त्यान्यथागतिरिति न्यायोऽप्यन्यथा योनिप्रवेशं विनैव जन्मनो गतेर्योनिप्रवेशवैय्यर्थ्यमिति सूचित इत्याह ॥ **व्यर्थश्चेति** ॥ सर्वथा मातृनिरपेक्षया जन्मावगमात् योनिप्रवेशो न युक्त इति द्वितीयपक्षप्रदर्शकतया तदेव भाष्यं व्याचष्टे ॥ **व्यर्थश्चेति** ॥ पितुस्सकाशादेव तस्मिन् पितरि मान्धातृवत् बहिर्द्रुपदादिवज्जन्मसम्भवात् मातुरेवानपेक्षितत्वात् योनिप्रवेशो व्यर्थ इत्यर्थः ॥ **उक्तवचनादेवेति** ॥ वक्ष्यमाणसम्भवादित्यनन्तरमपि सम्बध्यते । एतेन स्वर्गत गतः क्वापि पितृगर्भस्थितं देहं क्वापि बहिःस्थितं प्रविशेदिति लभेदिति वचनात् पश्चादेव पृथगेव मात्रपेक्षां विनैव देहं लभत इति भाष्यार्थ उक्तो भवति । न्यायोऽपि प्रकारान्तरेणारूढो भवति ।

एवं मातृप्राप्तेरनपेक्षितत्वान्मातृयोनिप्रवेशोऽयुक्त इति पक्षं द्वेधोपपाद्य मातृप्राप्त्यपेक्षायामपि तद्योनिप्रवेशो नास्तीति द्वितीयपक्षप्रदर्शकतयापि तदेव भाष्यं व्याचष्टे ॥ **मातृप्राप्तेरिति** ॥ अत्राप्युक्तवचनादेवेति वक्ष्यमाणं मत्वेति । एतेन 'स्वर्गतो गतःक्वापि केनापि संस्पर्शद्वारेणापि मातृप्राप्त्या तद्गर्भस्थं देहं लभत' इति वचनात्पश्चादेव पृथगेव योनिद्वारमन्तरेण विशतीति भाष्यार्थ उक्तो भवति । पितृप्रवेशनियमानियमपूर्वपक्षान्तरप्रदर्शकतया तदेव भाष्यं व्याचष्टे ॥ **पितृप्रवेशोऽप्ययुक्तः उक्तवचनादेवेति** ॥ एतेन 'स्वर्गतः गतः क्वापि गर्भस्थितं मातृगर्भस्थितं देहं प्रविशेत्' इति स्वर्गादवाग्गतस्य अन्तरा अन्यथा क्वापि गर्भस्थदेहप्रवेशस्य वचनात् पश्चात् पितरमन्तरैव देहं प्रविशतीत्यर्थ उक्तो भवति ॥ **न चेशक्लृप्तीति** ॥ ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरमिति पूर्वाधिकरणोदाहृतन्यायविवरणवचनविरोध इत्यर्थः ॥ **वैपरीत्यस्येति** ॥ अस्यापि देहं गर्भस्थितं क्वापीत्यादिविशेषवचनसिद्धत्वेनेश्वरक्लृप्तिमूलकत्वादित्यर्थः ॥ **न च पितृप्राप्तिमिति** ॥ रेतोद्वारा प्रवेशस्य वाच्यत्वादिति भावः ॥ **अन्यतो अन्नादेवेति** ॥ रेतसोऽन्यस्मादन्नादेवेत्यर्थः । शरीरपरिणामाय शुक्लमपेक्षितमित्यत आह ॥ **मातृस्थेति** ॥ एतेन 'पश्चाद्रेतसः परिणतं देहं प्रविशति' इति भाष्यार्थ उक्तो भवति । तृतीयं पूर्वपक्षमाह । **शरीरप्राप्तिरिति** ॥ शुक्लान्तर्गतस्य शोणितसम्पर्कानन्तरं कलिलं त्वेकरात्रं स्यादित्युक्तक्रमेण परिणम्यमानशुक्लशोणितसम्बन्धिन एव करचरणाद्यात्मकशरीरप्राप्तिरित्यर्थः ॥ **क्वापीत्युक्तत्वादिति** ॥ ततश्च गर्भस्थितं देहं क्वापि गर्भे वा

(वाक्यार्थमुक्तावली)

बहिर्वा प्रविशतीति वचनात्पश्चात् गर्भे शरीरसिद्धेः पश्चात् प्रविशति । शरीरस्य बहिर्निर्गमनात् पश्चात् प्रविशतीत्यर्थ उक्तो भवति । शरीरप्राप्तिं विनोक्तरीत्या जन्मनोऽन्यथोपपत्तिरिति न्यायोऽपि भाष्यारूढोऽपि भवति । अस्त्येव जीवस्य पितृशरीरप्रवेश इति । व्रीह्यादिद्वारेति भावः **॥ ततो योनीति ॥** पितृशरीराद्रेतोद्वारा योनिं प्रविश्य योनिद्वारेत्यर्थः । एतेन सूत्रे योनिपदं व्रीह्यादेः पितुः तद्रेतसश्चोपलक्षणम् **॥ शरीरमिति ॥** मातृशरीरं तत्र प्रागसिद्धशरीरं चेत्यर्थः । तथा च भाष्येऽपि व्रीह्यादेः पितृशरीरमनुप्रविश्येत्यादावुपस्कर्तव्यम् । पितृशरीरान्मातृयोनिमित्यत्र रेतोद्वारेत्यनुसन्धेयम् । अत एव श्रुतौ दिवः स्थास्नून्गच्छति स्थास्नुभ्यः पितरमिति । स्पष्टं च सुधायां योनिशब्दो बीजाद्युपलक्षणपरो, बीजशब्देन व्रीह्यादिकं रेतश्चोच्यत इति । तथा च स्वर्गादवाग्गतो जीवो व्रीह्यादिद्वारा पितृशरीरं प्रविश्य पितृशरीराद्रेतोद्वारा योनिमनुप्रविश्य योनेर्मातृशरीरं प्रविशति । तत्र च कलिलबुद्बुदादिरूपेण जायमानशरीरमाप्नोतीति सूत्रार्थः ।

**अप्रामाणिकत्वादिति ॥** प्रमाणशून्यत्वात् । देहं गर्भस्थितमिति पठित्वा प्रमाणविरुद्धत्वा-दित्यनेनोक्तनियमे प्रमाणविरोधव्यवस्थापकं प्रमाणं चाहेत्यर्थः **॥ विशेषकारणमिति ॥** ज्ञानतपोयोगाद्यतिशयलक्षणविशेषकारणमित्यर्थः । समित्यस्य ज्ञानतपोयोगाद्यतिशयलक्षणा-साधारणहेतुकं जन्मोच्यत इत्यर्थमभिप्रेत्यान्या गतिरित्युक्तन्यायमेतदारूढतया दर्शयति **॥ असाधारणेति ॥** एतेन देहं गर्भस्थितमित्यादिप्रागुक्तस्यान्या गतिर्गत्यन्तरं विषयान्तरमिति न्यायार्थ उक्तो भवति । ननु सूत्रे पित्रादिनियम एव प्रतीयते न तु क्वाचित्कः तदभावोऽपि । तथा च श्रुतिस्मृत्युदाहरणपूर्वं भाष्ये क्रियमाणं व्यवस्थापनमुत्सूत्रमेवेति चेन्न । अस्य चोद्यस्यानुव्याख्याने एव परिहृतत्वात् । 'बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् । अथ शब्देन भगवानाह कारणतश्च ताम्' इति । सुधायां चायमर्थो द्रष्टव्यः । रेतः सिग्योगोऽथ' इति सूत्रादथशब्दस्तत्राप्यनुवर्तते । स च प्रकृतार्थादर्थान्तरे वर्तते । तथा च योनेः शरीरमापद्यते, क्वचित्तदभावोऽपीत्यथशब्देन भगवान् सूत्रकारः बीजादिसम्बन्धनियमाभावं सूचितवानित्यतो नोत्सूत्रितत्वपर्यनुयोगो युक्त इति ।

ननु उत्पत्त्यसम्भवादित्यधिकरणे केवलाभ्यो न हि स्त्रीभ्यः इत्युक्तत्वात् कथं प्रमदाया-मित्युक्तमित्यत आह **॥ जरत्कार्वादीति ॥ गर्भपूर्वसिद्धशरीरमिति ॥** गर्भ एव वा बहिर्वा केचिद्विशन्तीति शेषः । स्पष्टमेतदन्यत्र । बहिरित्येतत् बहिर्द्रुपदादयः पित्रादीत्यनेनाप्यन्वेति

(वाक्यार्थमुक्तावली)

॥ **एतदेवेति** ॥ स्थानान्तर इति स्मृत्युक्तमेवान्तर इति श्रुत्याप्युच्यते । स्मृत्यनुसारेण श्रुत्यर्थस्य वाच्यत्वादिति भावः । तथा च श्रुतौ पितुर्जायते मातुर्जायते अन्तरे स्थानान्तरे वा जायते इति वाक्यत्रयमिति भावः । पितुर्मातुश्चान्तरे मध्ये इत्येकवाक्यतया च योजयति ॥ **मातापित्रोरिति** ॥ नन्वेवं पित्रादिनिरपेक्षया जन्मसद्भावेऽपि पित्रादिप्रवेशनियमोऽयुक्त इत्यतोऽन्यस्य योनिद्वारेण जन्मप्रतिपादकवाक्यस्यावाग्गतेः गत्यन्तराभावात् सामान्यजन्मनि पित्रादिनियमपरमेव तद्वाक्यं न तु सर्वजन्मनियमपरमिति भावेनान्या गतिरित्युक्तन्यायं प्रकारान्तरेण विशदयन्नुपसंहरति ॥ **अत इति** ॥ अत्राद्यमधिकरणषट्कं भूतावियोगेन गमनसमर्थनाय प्रवृत्तम् । प्रथमे तु प्राप्यस्य स्वर्गस्य पुनरावृत्तित्वसमर्थनम् । ततः परमधिकरणचतुष्टयं पुनरावृत्तावित्थम्भावप्रतिपादकम् । ततः परमधिकरणचतुष्टयमधोगतिविषयम् । ततः परमधिकरणपञ्चकं स्वर्गादवाग्गतस्य मार्गक्रमेण योनिप्राप्तिनियमपरमिति पेटिका द्रष्टव्या ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य प्रथमः पादः ॥**

## तत्त्वसुबोधिनी

**पितृद्वारा योनिं प्रविश्येति** ॥ तथा च 'ततो रेतःसिचमेवानुप्रविशत्यथ मातरमथ प्रसूयत' इति श्रुत्यनुसारेण पूर्वाधिकरणविषयवाक्यानन्तरं प्राप्तं 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्त' इति यद्वाक्यं तत्रोक्तो मातृप्रवेशो विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **योनिप्रवेशस्तावन्न विद्यत इति** ॥ पितृप्रवेशोऽप्ययुक्त इति वक्ष्यमाणापेक्षया तावच्छब्दः । ननु प्रमाणान्तरबलादेवं कल्प्यत इत्यत आह ॥ **न चेति** ॥ न केवलं योनिप्रवेशोऽप्रामाणिकः किन्तु व्यर्थश्चेत्याह ॥ **व्यर्थश्चेति** ॥ विगतप्रयोजन इत्यर्थः ॥ **बहिरिति** ॥ द्रुपदादिवदित्यर्थः । ननु लोके सर्वत्र मातृप्राप्तेर्दृष्टत्वात् कथं योनिप्रवेशो व्यर्थ इत्यत आह ॥ **मातृप्राप्तेरिति** ॥ **वैपरीत्यस्यापीति** ॥ अस्यापि प्रामाणिकत्वेन ईशक्लृप्तिमूलकत्वादित्यर्थः ।

नन्वन्नादिद्वारा मातृप्रवेशस्योपपत्तावपि शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेश आवश्यक इति पूर्वाधिकरणेऽभिहितमित्यत आह ॥ **मातृस्थरेतसैवेति** ॥ कुत इत्यत आह ॥ **क्वापीति** ॥ **अस्त्येवेति** ॥ अनेन सूत्रे योनिशब्द उपलक्षक इत्यभिप्रेत्य पितृशरीरान्मातृयोनि-

(वाक्यार्थमुक्तावली)

बहिर्वा प्रविशतीति वचनात्पश्चात् गर्भे शरीरसिद्धेः पश्चात् प्रविशति । शरीरस्य बहिर्निर्गमनात् पश्चात् प्रविशतीत्यर्थ उक्तो भवति । शरीरप्राप्तिं विनोक्तरीत्या जन्मनोऽन्यथोपपत्तिरिति न्यायोऽपि भाष्यारूढोऽपि भवति । अस्त्येव जीवस्य पितृशरीरप्रवेश इति । व्रीह्यादिद्वारेति भावः ॥ **ततो योनीति** ॥ पितृशरीराद्रेतोद्वारा योनिं प्रविश्य योनिद्वारेत्यर्थः । एतेन सूत्रे योनिपदं व्रीह्यादेः पितुः तद्रेतसश्चोपलक्षणम् ॥ **शरीरमिति** ॥ मातृशरीरं तत्र प्रागसिद्धशरीरं चेत्यर्थः । तथा च भाष्येऽपि व्रीह्यादेः पितृशरीरमनुप्रविश्येत्यादावुपस्कर्तव्यम् । पितृशरीरान्मातृयोनिमित्यत्र रेतोद्वारेत्यनुसन्धेयम् । अत एव श्रुतौ दिवः स्थास्नून्गच्छति स्थास्नुभ्यः पितरमिति । स्पष्टं च सुधायां योनिशब्दो बीजाद्युपलक्षणपरो, बीजशब्देन व्रीह्यादिकं रेतश्चोच्यत इति । तथा च स्वर्गादवाग्गतो जीवो व्रीह्यादिद्वारा पितृशरीरं प्रविश्य पितृशरीराद्रेतोद्वारा योनिमनुप्रविश्य योनेर्मातृशरीरं प्रविशति । तत्र च कलिलबुद्बुदादिरूपेण जायमानशरीरमाप्नोतीति सूत्रार्थः ।

**अप्रामाणिकत्वादिति** ॥ प्रमाणशून्यत्वात् । देहं गर्भस्थितमिति पठित्वा प्रमाणविरुद्धत्वादित्यनेनोक्तनियमे प्रमाणविरोधव्यवस्थापकं प्रमाणं चाहेत्यर्थः ॥ **विशेषकारणमिति** ॥ ज्ञानतपोयोगाद्यतिशयलक्षणविशेषकारणमित्यर्थः । समित्यस्य ज्ञानतपोयोगाद्यतिशयलक्षणासाधारणहेतुकं जन्मोच्यत इत्यर्थमभिप्रेत्यान्या गतिरित्युक्तन्यायमेतदारूढतया दर्शयति ॥ **असाधारणेति** ॥ एतेन देहं गर्भस्थितमित्यादिप्रागुक्तस्यान्या गतिर्गत्यन्तरं विषयान्तरमिति न्यायार्थ उक्तो भवति । ननु सूत्रे पित्रादिनियम एव प्रतीयते न तु क्वाचित्कः तदभावोऽपि । तथा च श्रुतिस्मृत्युदाहरणपूर्वं भाष्ये क्रियमाणं व्यवस्थापनमुत्सूत्रमेवेति चेन्न । अस्य चोद्यस्यानुव्याख्याने एव परिहृतत्वात् । 'बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् । अथ शब्देन भगवानाह कारणतश्च ताम्' इति । सुधायां चायमर्थो द्रष्टव्यः । रेतः सिग्योगोऽथ' इति सूत्रादथशब्दस्तत्राप्यनुवर्तते । स च प्रकृतार्थादर्थान्तरे वर्तते । तथा च योनेः शरीरमापद्यते, क्वचित्तदभावोऽपीत्यथशब्देन भगवान् सूत्रकारः बीजादिसम्बन्धनियमाभावं सूचितवानित्यतो नोत्सूत्रितत्वपर्यनुयोगो युक्त इति ।

ननु उत्पत्त्यसम्भवादित्यधिकरणे केवलाभ्यो न हि स्त्रीभ्यः इत्युक्तत्वात् कथं प्रमदायामित्युक्तमित्यत आह ॥ **जरत्कार्वादीति** ॥ **गर्भपूर्वसिद्धशरीरमिति** ॥ गर्भ एव वा बहिर्वा केचिद्विशन्तीति शेषः । स्पष्टमेतदन्यत्र । बहिरित्येतत् बहिर्द्रुपदादयः पित्रादीत्यनेनाप्यन्वेति

(वाक्यार्थमुक्तावली)

॥ **एतदेवेति** ॥ स्थानान्तर इति स्मृत्युक्तमेवान्तर इति श्रुत्याप्युच्यते । स्मृत्यनुसारेण श्रुत्यर्थस्य वाच्यत्वादिति भावः । तथा च श्रुतौ पितुर्जायते मातुर्जायते अन्तरे स्थानान्तरे वा जायते इति वाक्यत्रयमिति भावः । पितुर्मातुश्चान्तरे मध्ये इत्येकवाक्यतया च योजयति ॥ **मातापित्रोरिति** ॥ नन्वेवं पित्रादिनिरपेक्षया जन्मसद्भावेऽपि पित्रादिप्रवेशनियमोऽयुक्त इत्यतोऽन्यस्य योनिद्वारेण जन्मप्रतिपादकवाक्यस्यावागगतेः गत्यन्तराभावात् सामान्यजन्मनि पित्रादिनियमपरमेव तद्वाक्यं न तु सर्वजन्मनियमपरमिति भावेनान्या गतिरित्युक्तन्यायं प्रकारान्तरेण विशदयन्नुपसंहरति ॥ **अत इति** ॥ अत्राद्यमधिकरणषट्कं भूतावियोगेन गमनसमर्थनाय प्रवृत्तम् । प्रथमे तु प्राप्यस्य स्वर्गस्य पुनरावृत्तित्वसमर्थनम् । ततः परमधिकरणचतुष्टयं पुनरावृत्तावित्थम्भावप्रतिपादकम् । ततः परमधिकरणचतुष्टयमधोगतिविषयम् । ततः परमधिकरणपञ्चकं स्वर्गादवागगतस्य मार्गक्रमेण योनिप्राप्तिनियमपरमिति पेटिका द्रष्टव्या ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य प्रथमः पादः ॥**

## तत्त्वसुबोधिनी

**पितृंद्वारा योनिं प्रविश्येति** ॥ तथा च 'ततो रेतःसिचमेवानुप्रविशत्यथ मातरमथ प्रसूयत' इति श्रुत्यनुसारेण पूर्वाधिकरणविषयवाक्यानन्तरं प्राप्तं 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्त' इति यद्वाक्यं तत्रोक्तो मातृप्रवेशो विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **योनिप्रवेशस्तावन्न विद्यत इति** ॥ पितृप्रवेशोऽप्ययुक्त इति वक्ष्यमाणापेक्षया तावच्छब्दः । ननु प्रमाणान्तरबलादेवं कल्प्यत इत्यत आह ॥ **न चेति** ॥ न केवलं योनिप्रवेशोऽप्रामाणिकः किन्तु व्यर्थश्चेत्याह ॥ **व्यर्थश्चेति** ॥ विगतप्रयोजन इत्यर्थः ॥ **बहिरिति** ॥ द्रुपदादिवदित्यर्थः । ननु लोके सर्वत्र मातृप्राप्तेर्दृष्टत्वात् कथं योनिप्रवेशो व्यर्थ इत्यत आह ॥ **मातृप्राप्तेरिति** ॥ **वैपरीत्यस्यापीति** ॥ अस्यापि प्रामाणिकत्वेन ईशक्लृप्तिमूलकत्वादित्यर्थः ।

नन्वन्नादिद्वारा मातृप्रवेशस्योपपत्तावपि शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेश आवश्यक इति पूर्वाधिकरणेऽभिहितमित्यत आह ॥ **मातृस्थरेतसैवेति** ॥ कुत इत्यत आह ॥ **कापीति** ॥ **अस्त्येवेति** ॥ अनेन सूत्रे योनिशब्द उपलक्षक इत्यभिप्रेत्य पितृशरीरान्मातृयोनि-

(तत्त्वसुबोधिनी)

मनुप्रविश्य तत एव शरीरं प्राप्नोतीति भाष्यं प्रवृत्तमित्युक्तं भवति । ननु तर्हि 'देहं गर्भस्थितं क्वापी'ति प्रागुदाहृतवचनस्य का गतिरित्यत आह ॥ **असाधारणजन्मेति** ॥ तथा च रेतस्सिग्योगेति पूर्वसूत्रादनुवर्तमानेन योनेः शरीरमित्यन्वितेनाथशब्देन ज्ञानादिविशेषकारणकजीवविशेषजन्मलक्षणं पक्षान्तरमुक्तं तद्रूपासाधारणजन्मविषयं प्रागुदाहृतं वाक्यमित्यर्थः । अत एव भाष्ये अथासम्मितमिति विशेषजननं चेति च श्रुतिस्मृतिशेषोदाहरणमिति भावः । ननु उत्पत्त्यसम्भवात् इत्यत्र केवलाभ्यो न हि स्त्रीभ्य इत्युक्तत्वात् कथं प्रमदायामित्युक्तमित्यत आह ॥ **जरत्कार्वादीति** ॥ **एतदेवेति** ॥ अनेन पुरुषे प्रमदायां स्थानान्तरेषु चेति स्मृत्यनुसारेण पितुर्जायते मातुर्जायते अन्तरा जायत इति श्रुतिवाक्यं प्रत्येकं व्याख्यातं भवति । मातापित्रोर्मध्य इति पितुर्मातुरन्तर इत्येकवाक्यतया व्याख्यातं भवति ॥ **सामान्यजन्मनीति** ॥ ज्ञानादिविशेषकारणशून्य इत्यर्थः ।

**॥ इति श्रीतत्त्वप्रकाशिकाविवृतौ पाण्डुरङ्गि श्रीनिवासाचार्यविरचित-**
**तत्त्वसुबोधिन्यां तृतीयेऽध्याये प्रथमःपादः ॥**

## वाक्यार्थविवरणम्

॥ **अतीति** ॥ पितृद्वारा योनिप्रवेशादिदुःखस्य न्यूनत्वादिति भावः । भाष्ये स्वर्गतोगत आगत इत्यर्थः ॥ **पितृशरीरादिति** ॥ पितृशरीरप्रवेशद्वारेत्यर्थः । पितृशरीरान्मातृयोनिं प्रविश्य शरीरप्राप्तिरिति नास्तीति प्रतिज्ञातं त्रयमप्युपपादयति ॥ **योनिप्रवेश इत्यादिना** ॥ ननु योनिप्रवेशद्वारा देहं गर्भस्थितमिति कल्प्यत इति चेत्तत्राह ॥ **न चेति** ॥ पितृशरीरान्मातृयोनिप्रवेशप्रतिपादकमिति शेषः ॥ **तस्मिन्** ॥ पितरि । **मान्धातृवत्** ॥ **बहिः** ॥ द्रुपदवत् ॥ **मातृप्राप्तेरिति** ॥ पितृद्वारेति शेषः ॥ **ईशक्लृप्तिवचनेति** ॥ ईशक्लृप्त्यैव पितरं प्रविशतीत्यादिपूर्वाधिकरणोदाहृतेत्यर्थः ॥ **वैपरीत्यस्येति** ॥ आदौ मातरमेव प्रविशतीत्यपीशक्लृप्तिरस्त्विति श्रुत्युक्तवैपरीत्यस्यापीत्यर्थः ॥ **अन्यतः** ॥ पितृप्रवेशभिन्नप्रकारतः । **तदेव प्रदर्शयति** ॥ **अन्नादेरिति** ॥ मात्रुपभुक्तान्नादेः सकाशात् । तद्वारेण' इति शेषः ।

ननु शरीरपरिणामार्थं रेतसोऽपेक्षितत्वात् तदर्थं पितुरुपयोग इति चेत्तत्राह ॥ **मात्रिति** ॥ **पूर्वसिद्धेति** ॥ पूर्वमेव मातृगर्भे सिद्धशरीरेत्यर्थः । 'पश्चादेव प्रविशतीति भाष्यार्थानुवादः पूर्वसिद्ध्येति । तथा च पश्चाद्देहसिद्धेः पश्चाद्देहसिद्ध्यनन्तरमिति यावत् । प्रविशतीति भाष्य-

स्यार्थो ज्ञातव्यः ॥ **स चेति** ॥ पूर्वसिद्धदेहप्रवेशः । स्थिते । शरीरे । देहं गर्भस्थितमित्युक्तत्वादिति द्रष्टव्यम् । **बहिर्मातुरुदरात्** ॥ **विशेषकारणम्** ॥ तपःप्रभावादि । देहं गर्भस्थितमिति वाक्यस्य तर्हि निर्विषयत्वमापन्नमित्यत आह ॥ **असाधारणेति** ॥ तपोज्ञानादिरूपविशेषकारणकजीवविशेषजन्मरूपासाधारणजन्मविषयं प्रागुदाहृतवाक्यमित्यर्थः । **भाष्ये** ॥ **स्थास्नून्** ॥ व्रीह्यादीन् । **स्मृतौ** ॥ **स्थावराणि** ॥ **व्रीह्यादीनि** ॥ **विशेपजननम्** ॥ तपोज्ञानदिनिमित्तकम् ॥ **शुकादयः** ॥ अरणीमथनेनोत्पन्नत्वात्स्थास्नुषु स्थावरेषूत्पत्तिः शुकादेरित्यर्थः ।

ननु केवलं स्त्रीभ्य उत्पत्त्यभावस्योत्पत्त्यसम्भवादिति निर्णीतत्वादनुपपन्नमेतदित्यत आह ॥ **जरत्कार्वादीति** ॥ अस्ति त्वदुदरे कश्चिदिति तेषां वाङ्मात्रेणत्यर्थः । तथा च अनुग्राहकपुरुषसद्भावान्नोक्तविरोध इत्याशयः ॥ **केचित्** ॥ मध्वाचार्यप्रभृतयः । यथोक्तं 'सम्पूर्णलक्षणचणं नवराजमानद्वारान्तरं परमसुन्दरमन्दिरं तत् राजेव सतुरवरं भुवनाधिराजो निष्कासयन् परमसौ भगवान् विवेश' इति ॥ **बहिः गर्भात्** ॥ पित्रिति द्रुपदादीनां पृषदादेरप्सरस्त्रीदर्शनिन प्रस्कन्नरेतसोत्पन्नत्वात् पितृसापेक्षत्वमिति भावः ॥ **स्थानान्तरे** ॥ यज्ञकुण्डे तत्समीपवर्तिवेद्यादिरूपे च स्थानान्तरे धृष्टद्युम्नद्रौपद्यादेरुत्पन्नत्वेन पितृनिरपेक्षत्वं तेषामिति भावः ॥ **एतदेवेति** ॥ ब्राह्मपुराणपौष्यायणश्रुत्योरेकार्थत्वेन पुराणे स्थानान्तर इत्यनेनोक्तमेव प्रमेयं श्रुतावन्तर इत्यनेनोच्यते । तथा चान्तर इत्यस्य स्थानान्तर इत्यर्थो द्रष्टव्य इति ध्येयम् । एवं 'पितुर्जायते,' 'मातुर्जायते,' 'अन्तरे जायत' इति भिन्नभिन्नवाक्यमङ्गीकृत्यान्तर इत्यस्य पुराणानुसारेण स्थानान्तर इत्यर्थ उक्तः । अधुना पितुर्मातुरन्तरे इत्येकवाक्यमङ्गीकृत्याप्यर्थान्तरमाह ॥ **मातापित्रोर्मध्य इति** ॥ पितुर्मातुरित्यस्यार्थो **मातापित्रोरिति** । अन्तर इत्यस्यार्थो **मध्य इति** । परस्परसम्बन्धशून्ययोर्मात्रापित्रोः मध्ये कथमुत्पत्तिरित्यत आह ॥ **अन्योन्येति** ॥ मयूरप्रभृतय एतदुदाहरणमिति सम्प्रदायविदः ॥ **सामान्यजन्मनि** ॥ दिवः स्थास्नून् गच्छतीत्याद्युक्तसामान्यजन्मनीत्यर्थः ॥ **तत्र** ॥ अपवर्गादितरत्र सर्वत्रेत्यर्थः । अत्रायं विवेकः । अतः सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेन महादुःखाविनाभावादित्यन्वयः ॥ **नियमेन** ॥ नियतत्वेन तत्र वेशस्य महादुःखाविनाभूतत्वादित्यर्थः । अनेनैतदधिकरणार्थसङ्ग्रहः । अपवर्गादितरत्र सर्वत्रापि स्वर्गादौ महादुःखाविनाभावात् तत्र विरक्तेनेति पादार्थकथनम् । भगवान् भजनीय इत्युत्तरपादसङ्गतिकथनम् ।

॥ इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासवर्यकृते वैराग्यपादः समाप्तः ॥

## वाक्यार्थमञ्जरी

**योनिप्रवेशस्तावदिति** ॥ पितृप्रवेशोऽप्ययुक्त इति वक्ष्यमाणापेक्षया तावच्छब्दः । तस्मिन्निति विपर्यय एवेत्यर्थः । मान्धातृमुखानांऽपितृदेहादेवोत्पत्तिदर्शनादिति भावः ॥ **बहिरिति** ॥ देहाद्बहिरित्यर्थः । द्रुपदादीनां तथा दर्शनादित्यर्थः । ननूत्पत्त्यसम्भवादित्यत्र स्त्रीमात्रादुत्पत्तेर्निषिद्धत्वात्कथं प्रमदायामित्युक्तमित्यत आह ॥ **जरत्कार्विति** ॥ तत्स्पर्श एवानुग्रह इति भावः ॥ **संस्पर्श इति** ॥ जरत्कारुनायिकायां योषिति जरत्कारोः पुंसः सकाशादास्तिकस्य योनिप्रवेशं विनैव मातृशरीरप्रवेशेन जन्मादिदर्शनादिति भावः ॥ **ईशक्लृप्तीति** ॥ ईशक्लृप्त्यैव पितरं प्रविशत्यथ मातरमिति वचनविरोधादित्यर्थः ॥ **वैपरीत्यस्येति** ॥ अस्याप्यर्थस्य देहं गर्भस्थितमिति प्रमाणसिद्धत्वेनेशक्लृप्तिमूलत्वात्तस्यैवेतद्विरोधोऽपि वक्तुं शक्यत इत्यर्थः । अन्यत इत्यस्यैव विवरणमन्नादेरिति । मातृभुक्तान्नादिद्वारेत्यर्थः । शरीरपरिणामाय रेतसोऽपेक्षितत्वेन पितृप्रवेश आवश्यक इत्यत आह ॥ **मातृस्थेति** ॥ **शरीरप्राप्तिरपीति** ॥ रेतःकलिलबुद्बुदाद्यवस्थाविशिष्टदेहसम्बन्ध इत्यर्थः ॥ **पूर्वसिद्धेरिति** ॥ स्वप्रवेशात्पूर्वमेवोक्तक्रमेण परिणतेत्यर्थः । उक्तत्वाद्देहं गर्भस्थितं क्वापीत्यनेनैव । विकल्पे बीजमाह ॥ **क्वापीति** ॥ **ॐ योनेःशरीरं ॐ** ॥ कर्मी योनेःप्रवेशानन्तरं शरीरं लभत इत्यर्थः । ततः पितुस्तत्रैव मातृदेहे । विशेषकारणं तपोवरादि ॥ **केचिदिति** ॥ मध्वाचार्या इत्यर्थः । 'संपूर्ण लक्षणचणं नवराजमानद्वारान्तरं परमसुन्दरमन्दिरं तत् । राजेव सत्पुरवरं भुवनाधिराजो निष्कासयन् परमसौ भगवान्विवेश' इति मध्वविजयोक्तेः ॥ **पितृसापेक्ष इति** ॥ अप्सरादेर्दर्शनेनावस्कन्धितपृषतरेतोमर्दनजन्यत्वादिति भावः । स्थानान्तरे कुण्डादौ ॥ **निरपेक्षा इति** ॥ याजोपयाजप्रभावेन रेतोनिरपेक्षेण जन्यत्वादिति भावः । तदेव स्थानान्तर इत्येतदेव ॥ **अन्योन्य इति** ॥ मयूरप्रभृतीनामिदमित्याहुः ।

॥ इति श्रीमत्तत्त्वप्रकाशिकाव्याख्यायां वाक्यार्थमञ्जर्यां तृतीयाध्यायस्य प्रथमः पादः ॥

॥ इति योन्यधिकरणम् ॥ २० ॥

# अथ तृतीयाध्यायस्य द्वितीयः पादः

## १. सन्ध्याधिकरणम्

भक्तिरस्मिन्पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ।

**॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥**

न स्वप्नोऽपि तं विना प्रतीयते ।

'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजत' (बृ.उ. ६-३-१०) इत्यादिश्रुतेः ।

### तत्त्वप्रदीपिका

प्रथमपादे संसारगतीनामनित्यतादुःखबहुलताप्रदर्शनेन नित्यनिरयस्य दुःखैकरूपताप्रख्यापनेन च ततो विरक्तिः प्रतिपादिता । तस्य च विरक्तस्य संसारदुःखतारके भगवति भक्तिरस्मिन्पादे प्रतिपाद्यते । भक्तिर्नाम सस्नेहा बहुमतिः । सा चोपकारकत्वं महत्त्वं च विशेषादजानतो न समीचीना सङ्गच्छत इति भक्तिप्रतिपादनार्थं भगवन्महिमोच्यते ॥ उपकारकत्वं च स्वप्नाद्यवस्थाऽऽविष्कारतिरस्कारमोचकत्वादिलक्षणं महिम्नयेवान्तर्भूतमित्यपृथग्वचनम् । सर्वस्वातन्त्र्यलक्षणश्च महिमाऽतिवेलः सर्वस्य तदधीनत्वे पृथक्पृथग्प्रविस्तृते बुद्धौ प्रकटतामाटीकत इति देहिनां स्वप्नादेस्तदधीनत्वमेकैकशः प्रपञ्चयति । शरीरप्रवेशात्प्राचीनानां चोत्क्रान्त्यादीनां 'स्वात्मना चोत्तरयोः' 'तत्रापि च' इत्यादौ वेदयामास । शरीरप्रवेशस्य 'योनेः शरीरम्' इति निरूपितत्वात्तदनन्तरमेव स्वप्नादिनिरूपणावसरसिद्धिः **॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥** 'सन्ध्यं' स्वप्नः, 'सन्ध्यं तृतीयं स्वप्नस्थानम्' इति श्रुतेरिति वक्ष्यति । तं प्रस्तुतं परमात्मानं विना न स्वप्नोऽपि प्रतीयते । अपिशब्दाज्जाग्रदादिप्रतीतिरपि तस्मादेवेत्यर्थः । तत्प्रत्यायनस्यैव सृष्टित्वात्सृष्टिशब्दः प्रतीयत इति व्याख्यातः ।

### तत्त्वप्रकाशिका

एतत्पादप्रतिपाद्यं दर्शयति **॥ भक्तिरिति ॥** यद्दार्ढ्यार्थं वैराग्यं निरूपितं पूर्वपादे या चोपासनस्याङ्गं सा भक्तिरवसरप्राप्ताऽस्मिन्पादे निरूप्यत इत्यर्थः । ननु भक्तिरुच्यत इति कोऽर्थः ।

(तत्त्वप्रकाशिका)

किं तत्स्वरूपं निरूप्यते कर्तव्येति विधीयते वा । नाद्यः । अभावात् । न द्वितीयः । पुरुपप्रयत्नाविषयत्वेन विधेरयोगात् इत्यत आह ॥ **भक्त्यर्थमिति** ॥ नात्र भक्तिस्वरूपनिरूपणं तद्विधानं वा क्रियते । किं नाम भक्त्युत्पादनार्थं भगवन्महिमोच्यते । माहात्म्यज्ञानपूर्वकस्नेहो हि भक्तिः । न हि माहात्म्यानुक्तौ तज्ज्ञानं भवति स्नेहो वा । एवं साधनवचनस्यापि फल एव तात्पर्यात् भक्तिरुच्यत इत्युक्तमिति भावः । स्यादेतत् । न स्नेहार्थं महिमोक्तिर्युक्ता । तदभावेऽपि पुत्रादौ स्नेहदर्शनात्कचित्तदुक्तावप्यदर्शनादिति । मैवम् । कारणान्तरेण फलसिद्धावप्यन्यस्य कारणत्वाविरोधात् । न हि विनापि कारीर्या वृष्टिर्दृष्टेति तदनुष्ठानं वृष्टावकारणं भवति । श्रुतमाहात्म्येऽपि स्नेहानुत्पत्तिर्मत्सरादिनिरुद्धा न माहात्म्यश्रवणस्य कारणत्वमाक्षिपति । न हि भर्जितं वीजमङ्कुरं नोत्पादयतीत्येतावता वीजस्याङ्कुरकारणत्वं नास्ति । सर्वस्यापि माहात्म्यस्य प्रथमाध्याय एवोक्तत्वात्किमत्रोच्यत इति । सत्यम् । तदेव कचिद्विविच्योच्यते कचित्समर्थ्यत इत्यदोपः ।

अत्रादौ भगवत्प्राप्तिसाधनभक्त्यर्थं स्वप्नविषयतत्प्रतीत्योर्भगवदधीनत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । सर्वं भगवदधीनमिति प्रागुक्तम् । स्वप्नतत्प्रतीत्योरीश्वरानधीनत्वे तदयुक्तं स्यादिति तद्वर्णनीयम् । स्वप्नोऽत्र विषयः । भगवदधीनो न वेति सन्देहः । विप्रतिपत्तिः सन्देहबीजम् । न स्वप्नो भगवदधीन इति पूर्वः पक्षः । तस्यासत्वात् । सत्वे च वक्तव्यं किं स्वाप्नविषयो नित्योऽनित्यो वेति । उभयथापि पूर्वोत्तरकालं दर्शनप्रसङ्गः । न च तदा दृश्यते । अतः प्रातीतिकत्वादसन्नेव शुक्तिरजतादिवत् । न च वक्तव्यं प्रतीतिकाल एव सृष्टिनिरोधावतो न दोष इति । प्रमाणाभावात्कर्त्रुपादाननिमित्तानामभावाच्च । किं च स्वप्नविषयं किमयं शरीरे स्थित्वैव पश्यति निर्गत्य वा । नाद्यः । मेरुमन्दरादिदर्शनायोगात् । न द्वितीयः । कुरुपु सुप्तस्य पाञ्चालान्पश्यतस्तत्रैव प्रबोधे शरीरप्रवेशोऽस्य पश्चादेवेति प्राप्तेः । किं च हेमन्ते सुप्तस्य वसन्तप्रतीतिस्तावदस्ति । न च वसन्तसत्ता तदास्ति । न च प्रतीतिकारणं वास्ति । इन्द्रियवृत्तीनामुपरतत्वान्मनसो बाह्यार्थेष्वस्वातन्त्र्यात् । यदि चैते विपया द्रष्टुर्भिन्नास्तदा समीपस्थैर्दृश्येरन् । बाह्यार्थत्वात् । अथ न ततोऽतिरिक्तास्तर्ह्यागतं कल्पितत्वमेव । परमार्थतोऽस्य करितुरगादिभावाभावात् । तत्काल एव सृष्टिनिरोधपक्षे च प्रागुत्तरकालं मृत्पिण्डकपालादीनि दृश्येरन् । न च दृश्यन्ते अतः प्रातीतिकत्वान्मरुमरीचिकाजलादिवन्न स्वप्नविषयस्येश्वराधीनत्वमिति न तस्य महामहिमत्वमिति ।

**सिद्धान्तयत्सूत्रं पठित्वाऽधिकरणतात्पर्यं तावदाह ॥ सन्ध्य इति ॥ तं विना परमेश्वरं विना। तदधीन इत्यर्थः। अत्रोक्तदोषपरिहाराय सूत्रम्। यदुक्तं स्वाप्नस्य पश्चाददृष्टेरसत्त्वाद्भगव दधीनत्वा-योग इति। तदनुपपन्नम्। यतो जाग्रत्सुषुप्तिसन्धौ भवतीति सन्ध्ये स्वप्ने प्रागसतामर्थानां सृष्टिः। अनन्तरमेव निरोधश्चाङ्गीक्रियत इति। ननूक्तमत्र प्रमाणं नास्तीति तत्राह ॥ नेति ॥**

## गुर्वर्थदीपिका

भक्तिरस्मिन्पाद उच्यत इति भक्त्यर्थं भगवन्महिमोक्तिरिति च भाष्यद्वयस्य सार्थक्यं दर्शयति **एवमिति** ॥ एवमुपरितनसूत्रैर्वक्ष्यमाणप्रकारेण स्वज्ञानद्वारा भक्तिसाधनमहिम्नां वचनस्यापि भक्तिरूपफल एव तात्पर्यात्तात्पर्यविषयभक्तिरपि मुख्यतः पादप्रतिपाद्येति साऽपि प्रतिज्ञातव्या। तत्साधनानि निरूपणीयानि। अतो भक्तिरस्मिन्पाद उच्यत इत्युक्तमिति भाष्यकृतोऽभिसन्धिरिति भावः। इदं चोपलक्षणम्। क्षीरादौ स्वादुत्वादितद्गुणकीर्तनेनैव स्नेहोत्पत्तिदर्शनात्स्नेहरूपभक्तेः प्रकारान्तरेणोत्पादयितुमशक्यत्वाद्भक्त्यर्थं भगवन्महिमोच्यत इति चोक्तमित्यप्यूह्यम्। अनयैव दिशा वैराग्यपादस्यापि वैराग्यमस्मिन्पाद उच्यत इति वाक्यस्योहः कर्तव्यः। अतो न भाष्यकारस्यैकत्र न्यूनता वाऽन्यत्राऽऽधिक्यं वेति ज्ञेयम्। अविद्याकर्मजनिताहंममतारूपाभिमानवशात्स्वदेहे स्वपुत्रादौ व स्नेहो जायते। न तथा परमात्मनि लोकानामभिमानः। यद्यपि क्वचित्प्रद्युम्नसाम्बादीनां भगवत्पुत्राणामस्ति भगवत्यभिमानजो स्नेहः, तथापि न सा भक्तिः। माहात्म्यज्ञानपूर्वकत्वाभावात्। अतो भक्त्यर्थं भगवन्महिमैव वक्तव्य इति भाष्यकृतो गूढाभिसन्धिमजानानः शङ्कते **स्यादेतदिति** ॥ क्वचिदुक्तावप्यदर्शनादित्यस्य क्वचिद्दर्शनादौ कारणान्तरेण फलसिद्धावित्यङ्गीकारवादोऽयम्। उक्तविधया प्रकारान्तरेण भगवति भक्त्यनुदयस्य भाष्यकारेणैव सूचितत्वादिति ज्ञेयम्। तदेव क्वचिद्विविच्योच्यते क्वचित्समर्थ्यत इत्युपलक्षणम्। सकललोकापेक्षितसुषुप्त्यादिप्रापकत्वेनाहरहः स्वोपकारत्ववर्णनाद्भक्तेरतिशयेनान्तरङ्गसाधनभूतमहिमोच्यत इत्यपि द्रष्टव्यम्। अत एव सूत्रकृता 'सन्ध्ये सृष्टिराह हि' इत्यादिना सकलजीवापेक्षितस्वप्नाद्यवस्थाप्रेरकत्वरूपमाहात्म्यमेव प्रपञ्चितम्। स्वाप्नविषयमित्यत्र स्वाप्नविषयपदेन स्वाप्नपदार्था गृह्यन्ते। कुरुषु सुप्तस्येत्यत्र मासमात्रं पाञ्चालविषयान्प्रति गच्छतो मासमात्रेण तत आगच्छतश्च जीवस्य तस्मिन्नेव प्रतिबुद्धे देहे मासद्वयानन्तरं प्रवेशप्रसङ्गात्त्वरया गमनागमनयोश्च तस्मिन्नेव जीवे प्रागुत्तरत्र चादर्शनेनाप्रामाणि-कत्वादिति भावः। अनेन प्रबोधक्षण एव पुनरागमनमिति कुचोद्यानवकाश इति ज्ञेयम्।

## भावबोधः

भक्तिरस्मिन्निति 'इदं' शब्दाभिप्रायमाह– **यद्वाद्व्यर्थमिति** ॥ ननु भगवन्महिमोक्तौ कथं भक्त्युत्पत्तिरित्यत आह– **माहात्म्येति** ॥ स्नेहो वेति । माहात्म्यज्ञानकार्यत्वात् स्नेहस्येत्यर्थः । कथं तर्हि भक्तिरस्मिन् पादे उच्यत इति प्रतिपाद्योक्तिरित्यत आह– **एवं साधनवचनस्यापीति** ॥ इतो भगवन्महिमैव स्नेहोत्पादक इति भावेन साधनस्येत्युक्तम् । यद्वा विषयिपरसाधनपदेन विषयस्य माहात्म्यस्योपलक्षणम् ॥ **कारणान्तरेणेति** ॥ वह्नित्वादिसामान्यधर्मपुरस्कारेण प्रमितानेककारणके कार्ये व्यतिरेकव्यभिचारस्यादोषत्वादिति भावः ॥ **श्रुतमाहात्म्येऽपीति** ॥ प्रतिबन्धकसत्त्व-निबन्धनान्वयव्यभिचारस्य दोषत्वे सर्वत्र कार्यकारणभावोच्छेदप्रसङ्ग इति भावः ॥ **मत्सरादि-निरुद्धेति** ॥ मात्सर्यादिदोषरहितानां सच्छिष्यादीनां ज्ञातमाहात्म्ये गुर्वादौ स्नेहोत्पत्तेरनुभव-सिद्धत्वादिति भावः । तदेव क्वचिद्विविच्योच्यते; कचित्समर्थ्यत इति । 'सन्ध्ये सृष्टिः' इत्याद्यधिकरणसप्तकेन जन्मादिसूत्रोक्तं सृष्ट्याद्यष्टकर्तृत्वलक्षणमाहात्म्यं विविच्योच्यते । 'सन्ध्ये सृष्टिः' इत्यनेन स्वाप्नपदार्थानां सृष्टिसंहारकर्तृत्वस्य 'पराभिध्यानात्' इत्यत्र ज्ञानाज्ञानबन्ध-मोक्षहेतुत्वस्य 'देहयोगाद्वासोऽपि' इत्याद्यधिकरणपञ्चकेन जाग्रदाद्यवस्थानियमकर्तृत्वस्य च विवेचनात् । 'न स्थानतोऽपि' इत्यत्रानन्दमयाद्यधिकरणोक्तेश्वररूपाभेदसमर्थनम् । 'अरूपवदेव हि' इत्यत्र 'अन्यभावव्यावृत्तेश्च' इत्युक्तप्राकृतशरीरराहित्यसमर्थनम् । 'अत एव चोपमा' इत्यत्र प्रथमसूत्राद्युक्तजीवाभेदनिरसनविवेचनम् । 'अम्बुवदग्रहणात्तु' इत्यत्र प्रथमसूत्रस्था'तः' शब्दे-नोक्तस्य भक्तेर्मोक्षसाधनत्वस्य च समर्थनम् । 'वृद्धिह्रासभाक्त्वम्' इत्यत्र तस्यैव विवेचनम् । 'प्रकृतैतावत्त्वम्' इत्यत्र द्वितीयसूत्रोक्तस्य स्थितिकर्तृत्वस्य समर्थनम् । 'तदव्यक्तमाह हि' इत्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वसमर्थनम् । 'उभयव्यपदेशात्' इत्यत्र समस्ताध्यायोक्त-गुणित्वसमर्थनम् । 'परमतः' इति 'स्थानविशेषात्' इत्यधिकरणद्वये आद्याध्यायोक्तब्रह्मगुणा-नामलौकिकत्वस्य ब्रह्माद्यानन्दादिगुणबिम्बत्वस्य च क्रमेणोपपादनेनोक्तविवेचनम् । 'तथान्य-त्प्रतिषेधात्' इत्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वस्य प्रकारान्तरेण समर्थनम् । 'अनेन' इत्यत्र जन्मादिसूत्रोक्ताशेषजगज्जन्मादिकर्तृत्वसमर्थनम् । 'फलमतः' इत्यत्र जिज्ञासासूत्रस्था-'तः'शब्दोक्तस्य फलदातृत्वस्य समर्थनमिति क्वचिदुक्तस्य समर्थनम् । क्वचिद्विवेचनमित्यर्थः ।

(भावबोधः)

**स्वप्नविषयतत्प्रतीत्योरिति** ॥ अनेन 'योनेः शरीरम्' इत्येतदवसानैः सूत्रैः जीवस्य जन्मावगतम् । जातस्य च स्वप्नाद्यवस्थासम्बन्धः प्रसिद्धः । तत्र स्वप्नावस्थाप्रेरकत्वलक्षणो महिमा भगवतोऽत्राधिकरणे निर्णीयते इति सुधायामुक्तानन्तरसङ्गतिः सूचिता ॥ **भगवदधीन इति** ॥ अत्रार्थज्ञानात्मकः स्वप्नः भगवदधीनो न भवत्युत भवतीति चिन्ता । तदर्थं सः किमसन्नुत सन्निति । तदर्थं सत्त्वविशेषान्नित्यत्वाद्युपेतो न भवत्युत भवतीति । तदर्थमनुपपन्नानादिनित्यत्वकोऽयं नोत्पत्तिमानुतोत्पत्तिमानिति । तदर्थं किं कर्त्रुपादाननिमित्तादिकारणरहित उत तत्सहित इति । तदर्थं कर्त्रुपादानादिकं प्रसिद्धकर्त्रादिसदृशमुत विसदृशमिति । तथा च कर्त्रुपादानादीनां प्रसिद्धकर्त्रादिसादृश्येना सदृशकर्त्राद्युपलम्भनाभावादनुपपन्नानादिनित्यत्वकस्य सत्त्वविशेषानित्यत्वाद्ययोगेनासत्त्वप्राप्त्या न तस्य भगवदधीनत्वमिति पूर्वपक्षे प्रसिद्धविसदृशत्वे चानुपलम्भस्याबाधकत्वेन तादृशकर्त्रादियुक्तत्वेनोत्पत्तिमत्त्वादनुपपन्नानादिनित्यत्वोपपत्त्या सत्त्वसम्भवात्तस्य भगवदधीनत्वमिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः । पश्चाद् दृष्टेः स्वप्नविषयस्यासत्त्वं वाच्यमिति न्यायविवरणं योजयितुमाह– **सत्त्वे वक्तव्यमिति** ॥ पूर्वोत्तरकालमित्यनेन पश्चादित्येतत्पूर्वकालस्याप्युपलक्षकमित्युक्तं भवति । इदानीं तदभिप्रायमाह– **न च तदा दृश्यत इति** ॥ प्रथमसूत्रस्थेन 'आह हि' इत्यनेन निवर्तनीयं पूर्वपक्षं वक्तुमाह– **न च वक्तव्यमिति** ॥ तात्कालिकविद्युदादिवदित्यर्थः । द्वितीयतृतीयसूत्रनिवर्तनीयपूर्वपक्षयुक्तिमाह– **कर्त्रिति** ॥ तृतीयसूत्रस्थेन 'मायामात्रम्' इत्यनेन निवर्तनीयां पूर्वपक्षयुक्तिमाह– **किं च स्वप्नविषयमित्यादिना** ॥ तदेव न्यायविवरणं प्रकारान्तरेण व्याचष्टे– **तत्कालेति** ॥ अनेन स्वप्नविषयकारणानामिति शेष उक्तः । स्वाप्नपदार्थानां सन्ध्य एव सृष्टत्वेन पूर्वकालीनादृष्टेरबाधकत्वेऽपि पश्चाददृष्टिर्बाधिका भवेदेवेत्यतः सौत्रं सृष्टिपदं निरोधस्याप्युपलक्षकमित्यभिप्रेत्याह– **अनन्तरमेव निरोधश्चेति** ॥ अनेन सृष्ट्वा संस्कारतामापाद्येति न्यायविवरणांशोऽप्युक्ततात्पर्यो भवति ।

## भावदीपः

भक्तेरत्र पादे काचित्कोक्तिभ्रमनिरासायाह ॥ **एतत्पादप्रतिपाद्यमिति** ॥ अत्र भक्तेरुक्तौ का पूर्वोत्तरसङ्गतिरित्यतः पादार्थोक्तिः सङ्गतिसूचनायेति भावेन 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत्' इत्यनुभाष्यसूचितां तामाह ॥ **यद्दाढ्यार्थमिति** ॥ **अङ्गमिति** ॥ अनुबन्धादिभ्य इति

(भावदीपः)

वक्ष्यमाणदिशेति भावः ॥ **अभावादिति** ॥ यद्यपि अम्बुवदग्रहणादित्यत्र भक्तिपदं हित्वाऽम्बुवद-ग्रहणपदयोरुक्त्या भक्तिस्वरूपमुच्यते । तथापि प्राधान्येन तत्स्वरूपोक्तिर्नास्तीति भावः ॥ **पुरुपेति** ॥ भक्तेः स्नेहरूपत्वात्तस्य च विषयवैलक्षण्याधीनत्वात् विधेश्च पुरुषप्रवर्तनारूपस्य तत्प्रयत्नयोग्य एव प्रवर्तकत्वादिति भावः । महिमोक्तेर्भक्त्यर्थत्वं व्यनक्ति ॥ **माहात्म्येति** ॥ 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिः' इति महाभारततात्पर्यनिर्णयोक्तेः, 'सर्वोत्तमतया ज्ञानपूर्वकः स्नेह एव तु । भक्तिर्विष्णौ समुद्दिष्टा तदन्येषां तु योग्यतः' इति प्रथमे बृहद्भाष्योक्तेश्चेति भावः ॥ **एवं साधनेति** ॥ ज्ञानद्वारा साधनरूपमाहात्म्यवचनस्य भक्तिरूपफल एव तात्पर्यादित्यर्थः । अन्वयव्यतिरेकव्यभिचारान्न ज्ञानद्वारा महिमोक्तिः स्नेहहेतुरित्याशङ्क्य समाधत्ते ॥ **स्यादेतदिति** ॥ **क्वचिदिति** ॥ दुर्योधनचैद्यमागधादावित्यर्थः ॥ **अकारणमिति** ॥ अत एव 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इत्यादौ विकल्पाश्रयणम् । एककार्ये कारणद्वयोपनिपात एव विकल्पावकाशात् कारणान्तरकृतव्यभिचारस्यादोषत्वात् । एकस्य फलोपधानदशायामन्यस्य तत्र तदभावेऽपि शक्तेः सत्वादिति भावः ॥ **मत्सरादीति** ॥ मत्सरादिप्रतिबन्धकनिमित्तेत्यर्थः । प्रतिबन्धककृतव्यभिचारस्यादोषत्वात् व्यभिचार्यपवादेन मानमेव भविष्यतीत्यनुभाष्योक्तेरिति भावः । प्रकारान्तरेण शङ्कते ॥ **सर्वस्यापीति** ॥ नामलिङ्गात्मकाशेषशब्दप्रवृत्तिनिमित्तानां परमैश्वर्यादीना-मीशगतत्वस्यान्यगतप्रवृत्तिनिमित्तस्वातन्त्र्यस्य च वर्णनेनाशेषशब्दसमन्वयोक्तेस्तद्द्वारा तद्युक्ताशेष-वाक्यप्रकरणस्थानानां तत्सिद्ध्या च सर्ववेदोक्ताशेषमाहात्म्यस्य विष्णावेव सिद्धेरिति भावः ॥ **तदेवेति** ॥ एतच्च यथास्थानं तत्र तत्र विवरिष्यामः ।

**अत्रादाविति** ॥ प्रथमाधिकरण इत्यर्थः । 'योनेः शरीरम्' इति जीवानां जन्मावगतौ अवस्थावर्णनस्यावसरप्राप्तत्वात् तत्र जाग्रत्स्वप्नसुषुप्त्यवस्थानां मध्ये जाग्रति जीवानां स्वातन्त्र्याभि-मानभावेनेशाधीनत्वस्यादावेव बुद्ध्यनारोहात्सुषुप्तिप्राप्तेः स्वप्नदशाप्राप्तिपूर्वकत्वनियमात्स्वाप्नसत्यत्वे सर्ववादिविप्रतिपत्तेः 'वैधर्म्याच्च न स्वप्नादिवत्' इत्युक्त्या 'स्वप्नमाया सरूपा' इत्यादिश्रुत्यादिना च प्रसक्तसर्वस्वाप्नासत्यत्वस्यावश्यमादौ निरस्यत्वात् । पूर्वसूत्रे जीवानां जन्मोक्त्याऽत्र तद्भोग्यानां जन्मोक्तेः सङ्गतत्वाच्च कठश्रुतौ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिन इति योनिद्वारा शरीरं प्राप्तं जीवं प्रति ईश्वरस्य 'य एषु सुप्तेषु' इति उत्तरवाक्ये स्वाप्नस्रष्टृत्वोक्तेश्च पूर्वं स्वाप्नचिन्ता युक्तेति सूचयत्यादाविति । यद्वा जीवानां योनिद्वारा शरीरप्राप्तिभावाभावचिन्तेव पूर्वत्र अत्रापि

(भावदीपः)

स्वप्नाद्यवस्थाभावाभावचिन्तैवादाववसरप्राप्तेत्यत उक्तम् । आदौ तदधीनत्वमहिम्नो **वर्णनादिति** ॥ स्वप्नाद्यवस्थासम्बन्धस्य जीवेषु सुप्रसिद्धत्वेन तत्रापवादशङ्कानुदयादिति भावः । यथोक्तं सुधायां जाग्रदाद्यवस्थासम्बन्धः प्रसिद्ध इति ॥ **साधनेति** ॥ ज्ञानहेतूपासनांगतयेति भावः । एवमग्रेऽपि ॥ **भक्त्यर्थमिति** ॥ प्रागथपदेनाधिकारिविशेषणतयोक्तभक्त्यर्थमित्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ॥ **वर्णनादिति** ॥ स्वाप्नार्थानामीशसृष्टत्वेन सत्यत्वोक्त्येति भावः । एतेनैतन्निरस्तम् । सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वादेव युज्यत इति भाषणात् स्वाप्नपदार्थानां जीवगतावस्थायाश्च सत्यत्वादिति टीकोक्तेश्च परमार्थाशेषार्थतत्वज्ञतया सर्वज्ञस्येशस्य स्वप्नद्रष्टृत्वोक्त्या स्वाप्नपदार्थानां सिद्धं सत्यत्वमिह पुनर्न वाच्यमिति । अत्रोक्तसत्यत्वमुपजीव्यैव तत्र सर्वज्ञत्वहेतुना स्वप्नद्रष्टृत्वोक्तेः । न चैवं जीवस्य स्वप्नद्रष्टृत्वमेव नेति कथं तत्प्रतीतेर्जीव-स्येशाधीनत्वमुच्यत इति वाच्यम् । मुख्यस्येशगतत्वेऽप्यमुख्यस्याल्पस्येशाधीनस्य जीवेऽपि भावात् । अत एवात्र तस्य प्रपञ्चनम् । अत्र भगवत्प्राप्तीत्युक्त्या शास्त्रे साधनेत्यध्याये भक्त्यर्थं महिम्न इति पादेऽतर्भावरूपसङ्गतित्रयमुपपादितं भवति । एवमग्रेऽपि ।

एतच्चिन्तायाः पूर्वनयैः सङ्गतिं फलान्तरं चाह ॥ **सर्वमिति** ॥ 'जन्माद्यस्य यतः' इत्यारभ्य 'योनेश्शरीरम्' इत्यन्तं क्वचिदर्थात्क्वचित्कण्ठतः प्रागुक्तमित्यर्थः । तथा हि । सर्वशब्दप्रवृत्तिहेतूनां स्वातन्त्र्यतद्गतत्वाभ्यामीशे समन्वयोक्त्या सर्वस्य तदधीनतायाः प्राप्तत्वादन्तर्यामिनयादौ तदधीनत्वादर्थवत्' इत्यत्र तदनन्यत्वनयादौ च वियत्प्राणपदाभ्यां सर्वस्येशाधीनविशेषावाप्ति-रूपजन्मादिप्रपञ्चनेन स्वात्मना चोत्तरयोरित्यादिना तत्रापि च तद्व्यापारादित्यादिना योनिद्वारा शरीरप्राप्त्युक्त्या तदधीनत्वस्य स्फुटत्वादिति भावः । विप्रतिपत्तिः सत्त्वासत्त्वाभ्यां वादि-विप्रतिपत्तिरित्यर्थः । यद्वा सत्त्वासत्त्वहेतुका भगवदधीनत्वादिविप्रतिपत्तिरित्यर्थः । सूत्रेषु सृष्ट्याद्युक्त्या सत्वोक्तावपि स्वप्नोऽपीत्यादि भाष्यव्यावर्त्यं पूर्वपक्षफलं दर्शयितुं एवं सूत्रतात्पर्य-विषयकोटिकसंशयविप्रतिपत्ती दर्शिते । सूत्रादौ स्वाप्नार्थानां सृष्ट्याद्युक्तेरसांगत्यनिरासाय तद्व्यावर्त्य-पूर्वपक्षमन्यत्रोक्तं व्यनक्ति ॥ **नेति** ॥ पश्चाददृष्टेः स्वप्नविषयस्यासत्त्वं न वाच्यमित्यन्यत्रोक्तमसत्त्वं हेतुतया योजयति ॥ **तस्यासत्त्वादिति** ॥ यद्यप्यसतोऽपीशाधीनत्वं 'एतेन सर्वे व्याख्याता' इत्यत्रोक्तम् । यथोक्तं भाष्ये एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेनेति । सर्वस्य तदधीनत्वा-त्तत्तच्छब्दाभिधेयतेति च । तथापि स्थूलबाह्यप्रपञ्च इव स्वरूपसत्ताप्रतीत्यादिषु भगवन्नियतो नेति

(भावदीपः)

प्रतिज्ञार्थः । असत्तु असत्त्वेनैव तन्नियतमिति भावः । स्वाप्नस्यापि तथात्वे प्रागुक्तस्वप्नद्रष्टृत्वभङ्गापत्तेः । असत्त्वमेव कुत इत्यतः पश्चाददृष्टेरित्यन्यत्रोक्तं हेतुमप्रयोजकत्वशङ्कानिरासपूर्वं योजयति ॥ **सत्त्व इत्यादिना** ॥ पश्चादित्युक्तिरूपलक्षणमित्युपेत्याह ॥ **पूर्वेति** ॥ **दर्शनेति** ॥ स्वाप्नार्थानां स्वप्नदशायामुपलभ्यमानानामयोग्यताशङ्कानवकाशादिति भावः ॥ **अत इति** ॥ प्रागूर्ध्वमदर्शनादित्यर्थः । प्रातीतिकत्वात् प्रतीतिमात्रशरीरत्वादित्यर्थः । समग्रं न्यायविवरणवाक्यं प्रकारान्तरेण व्याचष्टे ॥ **न चेत्यादिना** ॥ एतेन पश्चात् प्रागूर्ध्वं स्वाप्नविषयस्यासत्त्वम् । स्वप्नकाल एव सृष्टिनिरोधाविति यावत् । इति न वाच्यम् । अदृष्टेः दृष्ट्यभावः प्रमाणमात्राभावोपलक्षणम् । प्रमाणाभावादित्यर्थः इति योजना सूचिता । अदृष्टेरित्यस्य कर्त्रादेरनुपलम्भादित्यप्यर्थान्तरमुपेत्याह ॥ **कर्त्रिति** ॥ द्रष्टुर्जीवस्य निर्व्यापारत्वादीश्वरस्य कर्तृत्वे मानाभावादिति भावः ।

ननु प्राक् सिद्धानामेव बाह्यार्थानां स्वप्ने दर्शनमस्तु । एवं च न प्रागूर्ध्वमदर्शनदोषः । नापि कर्त्राद्यभावदोष इत्यत आह ॥ **किं चेत्यादिना** ॥ यद्वा एवं कर्त्राद्यभावादिना स्वाप्नविषयस्य करितुरगादेरसत्त्वमुक्त्वेदानीं तत्प्रतीतेरपि जीवादेर्द्रष्टृत्वाद्यनुपपत्त्या कर्तृकरणयोरभावेनासत्त्वमाह ॥ **किं चेत्यादिना** ॥ **दर्शनायोगादिति** ॥ एतेनादृष्टेरित्यस्य दृष्टेरयोगादसत्त्वं स्वाप्नार्थस्य तद्विषयकप्रतीतेर्वेत्यप्यर्थो दर्शितः ॥ **पश्चादेवेति** ॥ एतेन पश्चात्प्रवेशास्यादृष्टेरदर्शनादननुभवादित्यर्थ उक्तो भवति । बहिरन्तर्वा जीवस्य द्रष्टृत्वायोगेन प्रतीतेरसत्त्वमुक्त्वा अर्थशून्यत्वाच्चासत्त्वमिति भावेनाह ॥ **किं च हेमन्त इति** ॥ प्रतीत्युत्पादकहेत्वभावाच्च प्रतितेरसत्त्वमिति भावेनाह ॥ **न चेति** ॥ एतेन पश्चात् इन्द्रियवृत्त्युपरमानन्तरं स्वप्नविषयस्यादृष्टेर्दर्शनायोगादसत्वं प्रतीतेरित्यर्थ उक्तो भवति । अतिप्रसङ्गेनापि प्रत्याह ॥ **यदि चेति** ॥ **समीपस्थैरिति** ॥ एतेन पश्चात् पश्चात्तनैः । उपलक्षणं पश्चात्तनादिभिः । समीपस्थैरिति यावत् । अदृष्टेरदर्शनात् । स्वप्नविषयस्य द्रष्ट्रपेक्षया पृथगसत्त्वमित्यर्थो दर्शितः ॥ **परमार्थत इति** ॥ एतेन पश्चात्प्रबोधानन्तरं आत्मनो गजाश्वादिभावादृष्टेरसत्त्वं कल्पितत्वं स्वाप्नविषयस्येत्यर्थो दर्शितः । पश्चात् प्रागूर्ध्वं मृत्पिण्डकपालादेरदृष्टेरित्यर्थान्तरं चाऽऽह ॥ **तत्काल इति** ॥ **अत इति** ॥ मृत्पिण्डादेरदर्शनादित्यर्थः ॥ **न तस्य महामहिमत्वमिति** ॥

यद्यपि स्वाप्नार्थानामसत्त्वादेव तत्सत्ताप्रतीत्यादेरीश्वरानधीनत्वेऽपि न तस्य महामहिमत्वच्युतिः । अन्यथा शशशृङ्गकूर्मरोमादीनां स्वरूपसत्तादिष्वीश्वरानधीनत्वात्तस्य महिमच्युतिः

(भावदीपः)

स्यात्तथापि ज्योतिर्दर्शनादित्यादौ जीवस्य स्वप्नसुषुप्त्याद्यशेषव्यापारनियंतृत्वमहिमा ईश्वरस्याभिमतः स न स्यात् स्वाप्नविषयस्यासत्त्वादिति भावः ॥ **तात्पर्यमिति** ॥ अन्यथाऽत्रैव सूत्रे तं विनेति स्वाप्नप्रतीतेरीशाधीनत्वोक्तौ निर्मातारमिति सूत्रवैयर्थ्यादिति भावः । तं विनेत्यस्य तेन सहेत्यर्थ-भ्रान्तिं तेनैव स्वाप्नभ्रान्तिरिति भ्रान्तिं वा निराह ॥ **तदधीन इत्यर्थ इति** ॥ न तत्रेत्यादिभाष्यं सङ्गमयितुमाह ॥ **अत्रोक्तदोपेति** ॥ सन्ध्ये सृष्टिरित्यंशस्यार्थं स्वयमाह ॥ **यदुक्तमित्यादिना** ॥ तत्वप्रदीपे तु तं प्रस्तुतं परमात्मानं विना न स्वप्नोऽपि प्रतीयते । अपिशब्दाज्जाग्रदादिप्रतीतिरपि तस्मादेवेत्यर्थः । तत्प्रत्यायनस्यैव सृष्टित्वात् सृष्टिशब्दः प्रतीयत इति व्याख्यायत इति ग्रन्थेन न स्वप्न इत्याद्यपि सूत्राक्षरार्थत्वेन व्याख्यातम् । तदनुरोधेन वा न स्वप्न इत्यादिभाष्यं सूत्रारूढतया दर्शयति ॥ **यदुक्तमित्यादिना** ॥ चतुर्थे तन्वभावे सन्ध्यवदुपपत्तेरित्यत्र सन्ध्यं स्वप्न इत्यादिभाष्यं हृदि कृत्वा परिशेषादिति वक्ष्यमाणसौकर्याय स्वप्नार्थलाभप्रकारमाह ॥ **जाग्रदिति** ॥ **सन्धौ** कण्ठदेशे । तत्र भव इति भवार्थे यत्प्रत्यय इति भावः । श्रुत्यनुरोधादाह ॥ **प्रागसतामिति** ॥ कार्यरूपेणेति भावः । असद्यत्कार्यरूपेण कारणात्मतयास्ति हीति तदनन्यत्वनयानुभाष्योक्तेः । संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेरित्यन्यत्रोक्तिमनुरुध्य सूत्रे सृष्टिपदमुपलक्षणं मत्त्वाह ॥ **अनन्तरमेवेति** ॥ तेन यदुक्तमित्यादिनाऽनूदितशङ्कानिरास इति भावः । इति यतोऽत इति इतिशब्दस्य पूर्वेणान्वयः ॥ **नेतीति** ॥ श्रुत्यर्थस्तु 'स्वप्नेऽन्तरिक्षे स्वर्गे वा न रथाद्याः पुरा स्थिताः । तदैव तत्कर्मयोग्यान्निर्मिमीते हरिस्स्वयम्' इति षष्ठबृहद्भाष्याद् व्यक्तः ।

## अभिनवचन्द्रिका

**एतत्पादप्रतिपाद्यमिति** ॥ 'तर्हि अध्यायस्यैकार्थत्वात्पादभेदः किं निबन्धन इत्यतः साधनेऽप्यवान्तरभेदेनेति भावेन' इति वर्तते । तस्य 'एतत्पादप्रतिपाद्यं दर्शयति'त्यनेन सम्बन्धः ॥ **श्रुतमाहात्म्येऽपीति** ॥ श्रुतमाहात्म्येऽपि दृश्यमानस्नेहानुत्पत्तिः माहात्म्यश्रवणस्य स्नेहेऽकारणत्वं न साधयति । साधनशक्तेर्मत्सरादिना निरुद्धत्वादिति भावः ॥ **स्वप्नविषयतत्प्रतीत्योरिति** ॥ स्वप्नशब्दार्थयोः विषयतत्प्रतीत्योरित्यर्थः यद्यपि अत्र टीकायां विषयाऽसत्वमेवाऽऽशङ्क्य तदुत्तरत्वे नाधिकरणं व्याख्यायते, तथापि सुधोक्तरीत्या ज्ञानाऽसत्त्वशङ्कापि अनेनाऽधिकरणेन निवर्त्यत इत्यभिप्रायेण 'स्वप्नविषयतत्प्रतीत्योः' इत्युक्तम् । सर्वं भगवदधीनमिति 'यतो वा इमानि भूतानि

**(अभिनवचन्द्रिका)**

जायन्ते । अथ रथान् रथयोगान् पथः सृजत' इत्यादि श्रुतीनां समन्वयद्वारा तच्छ्रुतौ सृज्यत्वेनोक्तानां सर्वेषां भगवदधीनत्वमुक्तमित्यर्थः ॥ **स्वप्नतत्प्रतीत्योरिति** ॥ सृज्यत्वेन श्रुत्युक्तयोरपि स्वप्नतत्प्रतीत्योरीश्वरानधीनत्वे अविशेषात्प्रागुक्तं सर्वस्य तदधीनत्वमयुक्तं स्यादिति तद्वर्णनीणीयमित्यर्थः । सत्त्वस्य नित्यत्वाऽनित्यत्वाऽन्यतरव्याप्तत्वात् व्यापकनिवृत्त्या व्याप्यनिवृत्तिं साधयितुं पृच्छति **सत्त्वे वक्तव्यमिति** ॥ **उभयथापीति** ॥ नित्यत्वपक्षे प्रागूर्ध्वमुपलम्भः स्फुटः । स्वप्नावस्थायामुपलब्धत्वेन अयोग्यत्वाभावात् । अनित्यत्वपक्षे तु तत्कालोत्पत्तिविनाशयोरसम्भवात् स्थायित्वमेव वाच्यमिति भावेन प्रागूर्ध्वमुपलम्भप्रसङ्गो निरूपितो बोध्यः । **अत इति** ॥ अतोऽसन्नेवेति सम्बन्धः ।

ननु नित्यत्वानित्यत्वयोर्निवृत्त्या नाऽसत्त्वं निर्धारयितुं शक्यं, घटादिवत्प्रतीतिविषयत्वाऽन्यथाऽनुपपत्त्या सत्त्वसिद्धेरित्यत उक्तम् **प्रातीतिकत्वादिति** ॥ युक्तमेव नित्यत्वाऽनित्यत्वाभावेनाऽसत्त्वसाधनम् । शुक्तिरजतादौ सत्त्वेन विनापि दृष्टस्य प्रतीतिविषयत्वस्य सत्त्वाऽसाधकत्वेन बाधकाऽभावादिति भावः । अनेन अतोऽसन्नित्येतावतैव पूर्णत्वात् 'प्रातीतिकत्वात्' इति 'शुक्तिरजतादि वत्' इति च व्यर्थमिति परास्तम् । बाधकनिरासार्थं तदुपादानस्याऽऽवश्यकत्वादिति । ननु सत्या एव स्वप्नविषयाः यदत्रोक्तम् किंनित्या, उताऽनित्या इति । तत्र केचन नित्याः केचनाऽनित्या इति ब्रूमः । यदत्रोक्तं प्रागुत्तरकालं दृश्येरन्निति । तन्न इष्टत्वात् दृश्यन्तेऽहि घटपटादयः सर्वैः पूर्वोत्तरकालयोरित्यतो जाग्रदवस्थापन्नैर्दृश्यमानानां घटपटादीनां स्वप्नविषयत्वे बाधकमाह– **किंचेति** ॥ प्रागूर्ध्वमन्यैर्दृश्य मानं स्वप्नविषयं, किं शरीरे स्थित्वा पश्यति बहिर्निर्गत्य वेत्यर्थः । **मेरुमन्दरादीति** ॥ व्यवहितत्वादिति भावः । शरीरे स्थित्वा पश्यति । बहिर्निर्गत्य पश्यतीति पक्षद्वयेऽपि बाधकान्तरमाह– **किं च हेमन्त इति** ॥ 'न च वसन्तसत्ता तदास्ति' इत्यतः परं 'येन शरीरे स्थित्वा, बहिर्निर्गत्य वा पश्येत्' इति शेषः । न च प्रतीतिकारणं वाऽस्तीति । बाह्यानां मेरुमन्दरादीनां प्रतीतिकारणं वा नास्तीत्यर्थः । मनस एव तत्कारणत्वमस्त्वित्यत आह– **मनस इति** ॥ स्वप्नविषयाः, किं द्रष्टृभिन्ना उत नेति विकल्पं मनसि निधाय आद्यपक्षं दूषयति **यदि चेति** ॥ द्रष्टृभिन्नत्वेऽपि समीपस्थैर्दृश्यमानत्वं कुतः । आन्तरत्वेनाऽदर्शनसम्भवादित्यत आह– **बाह्यार्थत्वादिति** ॥ द्रष्टृभिन्नानां महापरिमाणानां शरीरान्तस्थत्वाऽनुपपत्तेरिति भावः । द्वितीयमाशङ्क्य इष्टसिद्धिमाह– **अथेति** ॥ **कल्पितत्वमिति** ॥ भ्रमविषयत्वमित्यर्थः ।

(अभिनवचन्द्रिका)

ननु द्रष्टृभिन्नत्वाभावे कल्पितत्वं कुतः । तदात्मकत्वेन पारमार्थिकत्वसम्भवादित्यत आह– **परमार्थतोऽस्येति** ॥ **अतः प्रातीतिकत्वादिति** ॥ सत्त्वायोगेनाऽसत्त्वादित्यर्थः ॥ **न तस्य महामहिमत्वमिति** ॥ श्रुत्या सृज्यत्वेनोक्तस्यापि स्वाप्नार्थस्याऽसत्त्वेन भगवदनधीनत्वे श्रुत्य-प्रमाण्यान्न तस्य श्रुत्युक्तं महामहिमत्वमिति भावः ॥ **तदधीन इत्यर्थ इति** ॥ अनेन – 'न स्वप्नोऽपि तं विना प्रतीयत' इति भाष्यम् स्वप्नोऽपि स्वप्नगजादिरपि तं विना तदनधीनत्वेन न प्रतीयते, किंतु तदधीनत्वेनैव मीमांसाऽभिज्ञानां प्रतीयत इति व्याख्यातमिति बोध्यम् । अनेन भाष्ये 'न स्वप्नोऽपि तं विना प्रतीयत' इति स्वप्नप्रतीतेः भगवदधीनत्वं प्रतिज्ञाय, स्वाप्नपदार्थस्य भगवदधीनत्वे 'न तत्र रथा' इति श्रुत्युदाहरणमयुक्तमिति परास्तम् ॥ **तस्य सुप्तत्वादिति** ॥ सुप्तवदपहृतचक्षुरादीन्द्रियशक्तित्वादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । एतेन स्वप्नावस्थागतत्वेन सुप्तत्वाऽभावात् सुप्तत्वाभिधानमयुक्तमिति परास्तम् ॥ **तत्प्रमाणाभावादिति** ॥ 'न तत्र रथा' इति श्रुतेरीश्वरपरत्वनिर्णायकसमाख्याप्रमाणाऽभावादित्यर्थः । एतेन 'रथान् रथयोगान् पथः सृजत' इति प्रमाणस्योदाहृतत्वात् प्रमाणाभावादित्ययुक्तमिति परास्तम् । श्रौतसृष्ट्यनुपपत्त्या जीवो वा ईश्वरो वा कर्ता भविष्यति इत्यत आह– **न च पक्षद्वय इति** ॥ जीवस्य कुलालवदिति ॥ चक्रचीव्रा(चीवरा)दिसाधनशून्यस्येति शेषः ॥ **प्रकरणप्राप्तत्वादिति** ॥ यथा 'भुञ्जानो नो सृजेद्वाचम्' इत्यत्र भोजनप्रकरणात् वाङ्नियमस्य भोजनसमानकालता गम्यते, तथेहापि 'सुप्तेषु जागर्ति' इति सुप्तिप्रकरणात् निर्माणस्य तत्समानकालता गम्यत इत्यर्थः ॥ **असत्वनिरासायेति** ॥ स्वशिरच्छेदादीनामननुभूतत्वेन उपादानीभूतसंस्काराभावात् स्वप्ने तत्सृष्ट्ययोगेन प्राप्तस्याऽसत्त्वस्य निरासायेत्यर्थः ॥ **जाग्रत्पदार्थत्वमेवेति** ॥ ननु कुतो जाग्रत्त्वस्याऽसत्त्वमंगीक्रियते, गजतुरगादिवत् जाग्रत्त्वस्यापि संस्काररूपोपादानसम्भवेन उत्पत्तिसम्भवादिति चेत्, न ब्रूमो वय मुपादानादि-सम्भवमात्रेण स्वाप्नार्थस्य सत्यत्वमिति । किंनाम बाधाभावे च सति, न चेह बाधाभावोऽस्ति । स्वप्न एवासौ न जाग्रत्पदार्थ इति जाग्रत्त्वस्य बाधदर्शनात् ॥ **सत्त्वं न प्राप्नोतीति** ॥ 'स्वप्नार्था न सन्त नित्यविलक्षणत्वे सति सम्भावितकारणा जन्यत्वात्, शुक्तिरजतवत्' इत्यनुमानविरोधादिति भावः ॥ **शुभाऽशुभसूचकत्वेनेति** ॥ सूचकशब्देनाऽप्रधान कारणमुच्यते । ततश्च अर्थक्रिया-कारित्वेन तत्सत्ताया निश्चितत्वात् बाधितविषयं प्राचीनानुमानमिति भावः ।

(अभिनवचन्द्रिका)

ननु स्वाप्नार्थस्य ज्ञापकत्वमेव किं नोच्यते स्वारस्येन प्रतीतज्ञापकत्वपक्षमपहाय कारकत्वाऽङ्गीकारे कारणाऽभावात् । एवं शाकुनस्याऽपि ज्ञापकत्वमेव वाच्यम् न तु कारकत्वमिति चेत् न । ज्ञापकत्वस्य कथमप्यसम्भवात् । तथा हि किं स्वाप्नार्थाः स्वप्नाऽवस्थायामेव भाविशुभाशुभज्ञापकाः, उत प्रबोधानन्तरम् । नाद्यः अनुभवविरोधात् । द्वितीये तु न स्वाप्नार्थानां ज्ञापकत्वम् । अपि तु तत्स्मरणस्य । स्वप्नार्थस्य जागरेऽभावात् । अविद्यमानस्य ज्ञापकत्वाऽयोगात् । यदपि शाकुनं ज्ञापकमेवेति, तदपि न शपथाऽऽप्तवाक्यादिना निश्चितभाविकार्यस्य शाकुनप्रतीक्षाऽभावप्रसङ्गात् । शाकुनस्य ज्ञापकत्वं तु न व्यासेधामः, किंतु कारकत्वमपीति ब्रूमः, कारकत्वं तु उभयोरपि दधिदर्शनदूर्वास्पर्शनस्येवाऽदृष्टद्वारा उपपद्यते । 'यदा कर्मसु काम्येषु' इति श्रुतिरपि स्वाप्नार्थस्य भाविशुभहेतुत्वं श्रावयति । 'सुवृष्टिश्चेत् सुभिक्षं जानीयात्' इत्युक्ते वृष्टिसुभिक्षयोः कार्यकारणभावाऽवगमात् । स्वाप्नार्थस्याऽदृष्टजनकत्वादेव हि दुःखप्रदर्शने तज्जन्यदुरदृष्टनिवृत्तये 'उपोष्य पायसंस्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वा' इत्यादिना प्रायश्चित्तमुपदिश्यते । भागवते च 'स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम् । 'शुचयः प्रातरुत्थाय दुःस्वप्नास्युपशान्तये' इति चोक्तम् । न हि एतस्य कारकत्वाऽभावे तन्निवृत्तये प्रायश्चित्तोपदेश उपपद्यते । प्रबोधे तस्य निवृत्तत्वात् ।

अदृष्यहेतुत्वे तु तन्नाशाय सर्वमुपपद्यते । भाष्ये 'भावाभावसूचकत्वेनेश्वरो दर्शयति' इति प्रतिज्ञाय भावशब्दवाच्यशुभसूचकत्व एव 'यदा कर्मसु' इति श्रुतिरुदाहृता न त्वभावशब्दवाच्याऽशुभसूचकत्वे । अतः स्वयमाह– **एवं पुरुषमिति** ॥ भाष्ये 'हिशब्दात् दर्शनाच्च' इत्यतः परम् अध्याहार्यमाह– **इति सूचितमिति शेप इति** ॥ सूत्रे हिशब्देन दर्शनादित्येतत् सूचितम् 'शब्दाधिक्येऽर्थाधिक्यम्' इति न्यायादिति भावः । कारकत्वहेतोः श्रुत्यवष्टम्भेन सत्त्वव्यभिचारमाशङ्क्य निषेधति ॥ **न च मन्तव्यमिति** ॥ अस्तु तर्हि तद्वदेव अन्यथाज्ञातस्याऽधिष्टानं निषेधति **न च मन्तव्यमिति** ॥ अस्तु तर्हि तद्वदेव अन्यथाज्ञातस्याऽधिष्टानस्यैव सूचकत्वं न स्वप्नार्थस्येत्यत आह– **न चैवमिति** ॥ 'चन्द्रमा इवाऽऽदित्यो दृश्यत' इत्युक्तिसद्भावात् चन्द्रत्वेन ज्ञातस्याऽऽदित्यस्याऽनिष्टहेतुत्वमभ्युपगम्यते, स्वप्ने तु नैवमुक्तिरस्ति, किंनाम 'स्त्रियंस्वप्नेऽभिपश्यति' इति स्वाप्नार्थस्यैव सूचकत्वाभिधानात् तथैवाभ्युपगन्तव्यमिति भावः । अधिष्टानाऽभावाच्च स्वाप्नार्थस्यैव कारकत्वमभ्युपगन्तव्यमित्याह– **न चेति** ॥

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु स्वप्नविषयो नेश्वराधीनः असत्त्वात् । न चाऽसिद्धो हेतुः । प्रागूर्ध्वमनुपलम्भात् । न च तत्कालसृष्टिनिरोधाऽङ्गीकारात् प्रागूर्ध्वं मुपलम्भाभावो न दोषायेति वाच्यम् । प्रमाणाभावात् कर्त्रुपादाननिमित्तानामभावाच्च । ननु बाह्यार्था एव स्वप्न उपलभ्यन्ते । ते च प्रागूर्ध्वमुपलभ्यन्त एवेति चेत् अत्र वक्तव्यम् । किं बाह्यार्थान् शरीरे स्थित्वा पश्यति, उत बहिर्निर्गत्येति । नाद्यः व्यवहितमेरुमन्दरादिदर्शनाऽभावप्रसङ्गात् । न द्वितीयः कुरुषु सुप्तस्य पाञ्चालान्प्रपश्यतः प्रबोधे शरीरप्रवेशोऽस्य पश्चादेवेति प्राप्तेः । किं च हेमन्ते सुप्तस्य वसन्तप्रतीतिस्तावदस्ति, न च वसन्तसत्ता तदाऽस्ति । येन शरीरे स्थित्वा बहिर्निर्गत्य वा पश्येत् । नापि बाह्यार्थप्रतीतिकारण-मस्ति इन्द्रियाणामुपरतत्वात् मनसो बाह्यार्थेष्वस्वातन्त्र्यात् । किञ्च एते विषया द्रष्टृभिन्ना उत न । आद्ये पार्श्वस्थैरुपलभ्येरन् । द्रष्टृभिन्नानां महापरिमाणानाम् आन्तरत्वाऽसम्भवेन बाह्यत्वात् । द्वितीये तु आगतं कल्पितत्वम् । न च जीवात्मकत्वेन सत्यत्वं किं न स्यादिति वाच्यम् । परमार्थतोऽस्य करितुरगादिभावाभावात् । तत्काल सृष्टिनिरोधपक्षे च प्रागूर्ध्वं मृत्पिण्डकपालादीनि दृश्येरन् । न च दृश्यन्ते । अतोऽसत्त्वेन परमेश्वराधीनत्वाऽभावान्न तस्यं महामहिमत्वमिति ।

सिद्धान्तस्तु ईश्वराधीन एव स्वप्नविषयः सत्यत्वात् । न च प्रागुत्तरकालमुपलम्भप्रसङ्गः । तत्काल एव सृष्टिनिरोधाङ्गीकारात् । न च तत्र प्रमाणाभावः 'अथ रथान् रथयोगान् पथः सृजत' इति श्रुतेः । न च कर्तुरभावात् सृष्ट्ययोगः– 'य एषु सुप्तेषु जागर्ति एतस्माद्ध्येव पुत्रो जायते' इति श्रुतिभ्यामीश्वरस्यैव कर्तृत्वाङ्गीकारात् । न चोपादाननिमित्ताभावः 'मनोगतांश्च संस्कारान्' इति स्मृतिबलेन वासनाया उपादानत्वेन ईश्वरेच्छायाश्च निमित्तत्वेनाङ्गीकारात् । एतेन उक्तकण्ठ-कोलाहलाः प्रत्युक्ताः । वासनामयानां मेर्वादीनां मनसैव दर्शनसम्भवात् । बाह्यकारणाभावात्, प्राक्मृत्पिण्डादीनाम्, ऊर्ध्वं कपालादीनां च, प्रतीतेरप्रसङ्गात् । ननु यदि न स्वप्नविषया बाह्यार्थजन्याः, तर्हि सत्त्वं न प्राप्नोति शुक्तिरजतादिवत् इति चेत्, न शुभाशुभकारणत्वेन सत्त्वस्यैव निश्चितत्वात् । 'यदा कर्मसु काम्येषु' इति, 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' इति श्रुतिभ्याम्, अन्वयव्यतिरेकसध्रीचीनप्रत्यक्षेण च, कारणत्वस्य सिद्धेः । अपि च एवं व्यासादयो मन्यन्ते 'यद्वापि ब्राह्मणो ब्रूयात् देवतावृ(ऋ)षभोऽपि वा । स्वप्नस्थमथवा राजा तत्तथैव भविष्यति' इति । अतः स्वप्नविषयस्य भगवदधीनत्वसिद्धेर्महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**पादप्रतिपाद्यमिति ।** अध्यायस्यैकार्थत्वात्पादभेदः किन्निबन्धन इत्यतः साधनेऽप्यवान्तरभेदेनेति सङ्गतिं सूचयन्नित्यादावुपस्कर्तव्यम् । अस्मिन्निति इदंशब्दाभिप्रेतं सङ्गतिप्रकारमुपपादयति ॥ **यद्वाद्व्यर्थमिति** ॥ ननु भगवन्महिमोक्तौ कथं भक्त्युत्पत्तिरित्यत आह ॥ **माहात्म्येति** ॥ **स्नेहो वेति** ॥ स्नेहोऽप्युपकारकत्वज्ञानाद्भवति । उपकारकत्वं च स्वप्राप्याविष्कारतिरस्कारमोचकत्वादिमहिम्न्येवान्तर्भूतमिति तत्त्वप्रदीपोक्तरीत्या माहात्म्यानुक्तौ न स्नेहोऽपि भवतीति भावः । कथं तर्हि भक्तिरस्मिन् पादे उच्यत इति पादप्रतिपाद्योक्तिरित्यत आह **एवं साधनवचनस्यापीति** ॥ साधनं च तद्वचनं चेति विग्रहः । एवमुक्तरीत्या भक्तिसाधनस्य माहात्म्यवचनस्यापि भक्तिलक्षणफलोत्पादने एव तात्पर्याद्भक्तिसाधनमाहात्म्यवचनमत्र क्रियत इति वक्तव्ये भक्तिरुच्यत इत्युक्तम् । तात्पर्यगत्या भक्तिपादत्वं युज्यत इति भावः । यद्वा विषयिपरसाधनपदेन विषयस्य माहात्म्यस्योपलक्षणमिति भावबोधरीत्या पक्षद्वयं बोध्यम् ।

ननु माहात्म्यज्ञानार्थं तद्वचनस्योपयोगित्वेऽपि स्नेहार्थं न तदुपयोगोऽन्वयव्यतिरेकव्यभिचारादिति शङ्कते ॥ **स्यादेतदिति** ॥ **मत्सरादिनिरुद्धेति** ॥ मत्सरादिप्रतिबन्धनिमित्तकेत्यर्थः । मात्सर्यादिदोषरहितानां सच्छिष्याणां ज्ञातमाहात्म्ये गुरौ स्नेहोत्पत्तेरनुभवसिद्धत्वादिति भावः ॥ **तदेव क्वचिदिति** ॥ सन्ध्ये सृष्टिरित्यत्र स्वाप्नार्थस्रष्टृत्वस्य पराभिध्यानादित्यत्र ज्ञानाज्ञानबन्धहेतुत्वस्य देहयोगादित्यधिकरणपञ्चके जाग्रदाद्यवस्थानियामकत्वोक्त्या जन्मादिसूत्रार्थविवेचनं, न स्थानादित्यत्रानन्दमयाधिकरणोक्तस्वरूपाभेदसमर्थनं, अरूपवदेवेत्यत्र अन्यभावव्यावृत्तेरित्यत्रोक्तप्राकृतशरीरराहित्यसमर्थनम्, 'अत एव चोपमा' इत्यत्र तस्यैव समर्थनम्, प्रकृतैतावत्त्वमित्यत्र द्वितीयसूत्रोक्तस्थितिकर्तृत्वसमर्थनम्, तदव्यक्तमित्यत्र अदृश्यत्वाधिकरणार्थसमर्थनम्, उभयव्यपदेशादित्यत्र प्रथमाध्यायोक्तगुणित्वसमर्थनम्, परमतः स्थानविशेषादित्यधिकरणद्वये चाद्याध्यायोक्तब्रह्मगुणानामलौकिकत्वस्य ब्रह्मादिगुणबिम्बत्वस्य समर्थनेनाथशब्दार्थभक्तेः समर्थनम्, तथान्यत्प्रतिषेधादित्यत्रादृश्यत्वाधिकरणोक्तादृश्यत्वस्य प्रकारान्तरेण समर्थनम्, अनेन सर्वगतत्वेत्यत्र द्वितीयसूत्रोक्ताशेषजगज्जन्मादिहेतुत्वसमर्थनम्, 'फलमत उपपत्तेः' इत्यत्र जिज्ञासासूत्रोक्तफलदातृत्वसमर्थनम् क्वचिद्विवेचनमित्यर्थः ।

**(वाक्यार्थमुक्तावली)**

**अत्रादाविति** । 'योनेः शरीरम्' इत्येतदवसानैः सूत्रैर्जीवस्य जन्मावगतम् । जातस्य स्वप्नाद्यवस्थासम्बन्धः प्रसिद्धः । तत्र स्वप्नावस्थाप्रवर्तकत्वलक्षणो महिमा भगवतोऽत्राधिकरणे निर्णीयत इति सुधायामेवानन्तरसङ्गतिरुक्ता ज्ञातव्या । ननु जाग्रदवस्था प्रथमप्राप्ता, शरीरावाप्त्यनन्तरमेव स्वप्नभावादित्यत उक्तं **आदाविति** ॥ शरीरादिसृष्टिप्रसङ्गे सृष्टित्वात् स्वाप्नपदार्थसृष्टेरेव प्राप्तत्वेन प्राथम्योपपत्तेः ॥ **स्वाप्नसृष्टिरिति** ॥ कौतुकवत्त्वेनाशक्यकर्तृता शक्त्या घटनीयत्वेनार्थतः प्राप्तत्वात् **प्राधान्याच्चेति** ॥ **प्रागुक्तमिति** ॥ 'जन्माद्यस्य यत' इति प्रागुक्तमित्यर्थः । स्वप्नः भगवदधीनो न भवत्युत भवतीति चिन्ता । तदर्थं किमसदुत सदिति । तदर्थं कर्त्रुपादाननिमित्तकारणरहितः उत तत्सहित इति । तदर्थं जन्यपदार्थसत्त्वं प्रसिद्धोपादानादिमत्त्वेन व्याप्तं न वेति ॥ **विप्रतिपत्तिरिति** ॥ तदधीनत्वोक्तिः । 'अविद्यमानो ह्यनुभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथो यथा' इत्याद्युक्तिरिति वचनविप्रतिपत्तिरित्यर्थः । न स्वप्नोऽपि तं विना प्रतीयत इति पूर्वपक्षप्रतिक्षेपकसिद्धान्तभाष्यानुसारेण पूर्वपक्षमाह ॥ **न स्वप्न इति** ॥ सूत्रे सृष्टिपदव्यावर्त्यं हेतुमाह ॥ **तस्येति** ॥ असत्वहेतोः स्वरूपासिद्धिं परिहर्तुं सन्ध्यपदव्यावर्त्यं पश्चाददृष्टिरित्युक्तन्यायं विकल्पेनोपपादयति ॥ **सत्वे चेति** ॥ पश्चात् पृष्ठतः पूर्वकालं पश्चादुत्तरकालं अदृष्टिरिति न्यायाभिप्रायमभिप्रेत्योक्तं **पूर्वोत्तरकालमिति** ॥ पश्चाददृष्टेरप्रयोजकत्वमाशङ्क्याह हीतिपदव्यावर्त्यमाह ॥ **न च वक्तव्यमिति** ॥ विद्युदादिवदिति भावः । निर्मातारं मायामात्रम्' इति सूत्रद्वयव्यावर्त्यमाह ॥ **कर्त्रुपादानेति** ॥ द्वितीयसूत्रस्थेन मायामात्रमित्यनेन निवर्तनीयां पूर्वपक्षयुक्तिमाह ॥ **किञ्चेत्यादिना** ॥ एवं विषयाणामसत्त्वेनेश्वरानधीनत्वमुपपाद्य तज्ज्ञानस्यापि निमित्ताभावेनापरमार्थत्वमाह ॥ **न च प्रतीतिकारणमिति** ॥ एतदपि मायामात्रपदव्यावर्त्यं, वासनामयत्वोक्त्यान्तरार्थत्वेन मानसत्वस्य वक्तुं शक्यत्वात् ॥ **मनस इति** ॥ न च साक्षिणस्तत्करणत्वम् । प्राकृतरूपादिमत्यर्थे स्वातन्त्र्याभावात् । मायामात्रपदेन वासनामयत्वप्रतिपादकेन व्यावर्त्यं दूषणान्तरमाह ॥ **यदि चैत इति** ॥ **परमार्थत इति** ॥ एकस्याविचित्रस्य विचित्रानेकात्मतया विनारोप्तुमनुपपत्तेरिति भावः । मायामात्रपदेनातीन्द्रियवासनोपादानकत्वोक्त्यैव व्यावर्त्यं पश्चाददृष्टिरिति न्यायं प्रकारान्तरेणाह ॥ **तत्काल इति** ॥ सूचकश्चेति सूत्रव्यावर्त्यं दर्शयन् पूर्वपक्षफलमाह ॥ **अत इति** ॥ **तात्पर्यमिति** ॥ सृष्टिपदाकथनादिति भावः । स्वप्नस्तं विना नास्ति, नापि प्रतीयत इति सत्ताप्रतीत्योस्तदायत्तत्वमिति भाष्यार्थः । सूत्रेऽध्याहार्यमाह

**(वाक्यार्थमुक्तावली)**

**॥ यदुक्तमिति ॥** हिशब्दार्थो यत इति । स्वप्न इत्यनुक्त्वा सन्ध्यपदप्रयोगेण पश्चाददृष्टिन्यायविरोधः परिहृत इति भावेनाह **॥ जाग्रदिति ॥** स्वाप्नार्थानां सन्ध्य एव सृष्टत्वेन पूर्वकालीनादृष्टेरबाधकत्वेऽपि पश्चाददृष्टिविरोधो न परिहृत इत्यतः सृष्टिपदं निरोधस्याप्युपलक्षणं मत्वाह ॥ **अनन्तरमेव निरोधश्चेति** ॥ तथा च हि यस्मात् सन्ध्य एव सृष्टिर्निरोधश्च तस्माद्दृष्टिविरोधाभावेनासत्त्वाभावात् भगवदधीनत्वाभावो नेति सूत्रार्थः । **ननूक्तमत्रेति ॥** तत्काले च सृष्टौ निरोधे चेत्यर्थः । तेन हि यस्मात् श्रुतिरेवमाह तस्मात्सन्ध्य एव सृष्टिः निरोधश्चेत्यर्थ उक्तो भवति । भाष्ये इत्यादिश्रुतिरिति आदिपदेन तत्काले एव निरोधप्रतिपादिका श्रुतिर्गृह्यते ।

## तत्त्वसुबोधिनी

**भक्तिरस्मिन्पाद इति ॥** इदंशब्दाभिप्रायमाह ॥ **यद्वाढ्यर्थमिति ॥ पुरुपेति ॥** तस्यास्नेहरूपत्वेन विधातुमशक्यत्वात् इति भावः । ननु भगवन्महिमोक्तौ भक्त्युत्पत्तिः कथमित्यत्राह ॥ **माहात्म्येति** ॥ ततः किमित्यत आह ॥ **न हीति ॥ स्नेहो वेति ॥** माहात्म्यज्ञानकार्यत्वात् स्नेहस्येत्यर्थः । ननु माहात्म्यमस्मिन्पाद उच्यत इति वक्तव्ये भक्तिरस्मिन् पाद उच्यत इति कथं पादप्रतिपाद्यकथनमित्यत आह ॥ **एवं साधनवचनस्यापीति ॥** ननु साधनवचनस्येत्युक्तं तदयुक्तम् । माहात्म्यज्ञानस्यैव भक्तिसाधनत्वात् । अत्र तु तद्वचनाभावात्, किन्तु माहात्म्यस्यैव वचनादिति चेन्न । यथा वह्निमत्वादिसामान्यधर्मपुरस्कारेण ज्ञातो धूमो वह्निप्रमां प्रति कारणं तथा ज्ञातो भगवन्महिमैव भक्त्युत्पादक इत्यभिप्रायेण तथोक्तत्वात् । यद्वा माहात्म्यज्ञानमेव साधनशब्देन गृह्यते । न च तदनुक्तिः कथमिति वाच्यम् । माहात्म्यज्ञानरूपविषयिपरसाधनपदेन माहात्म्यरूपविषयस्य उपलक्षणादिति भावः । कुत एवमकारणमेव कुतो न स्यादित्यत आह ॥ **न हीति** ॥ तथात्वे कारीरियागस्यापि वृष्टिकारणत्वं न स्यादिति भावः । ननु माहात्म्यश्रवणेऽपि भक्तिः नोपपद्यत इत्यन्वयव्यभिचारात् न माहात्म्यस्य भक्तिकारणत्वमित्यत आह ॥ **श्रुतमाहात्म्येऽपीति** ॥ प्रतिबन्धकसत्वनिबन्धनान्वयव्यभिचारस्य दोषत्वे सर्वत्र कार्यकारणमात्रोच्छेदप्रसङ्ग इति भावः ॥ **मत्सरादिनिरुद्धेति** ॥ मात्सर्यादिदोषरहितानां सच्छिष्यादीनां ज्ञातमाहात्म्ये गुर्वादौ स्नेहोत्पत्तेरनुभवसिद्धत्वादिति भावः ।

तदेव क्वचिद्विविच्योच्यत क्वचित् समर्थ्यत इति । सन्ध्ये सृष्टिरित्याद्यधिकरणसप्तकेन जन्मादिसूत्रोक्तं सृष्ट्याद्यष्टकर्तृत्वलक्षणं माहात्म्यं विविच्योच्यते । सन्ध्ये सृष्टिरित्यनेन स्वाप्नपदार्थानां

(तत्त्वसुबोधिनी)

सृष्टिसंहारकर्तृत्वस्य पराभिध्यानादित्यत्र ज्ञानाज्ञानबन्धमोक्षहेतुत्वस्य देहयोगादित्याद्यधिकरणपञ्चके जाग्रदाद्यवस्थानियमनकर्तृत्वस्य विवेचनम् । न स्थानतोऽपीत्यत्रानन्दमयाद्यधिकरणोक्तस्वरूपाभेदसमर्थनम् । अत एव चोपमेत्यत्र प्रथमसूत्रोक्तजीवाभेदनिरसनविवेचनम् । अम्बुवदग्रहाणात्त्वित्यत्र प्रथमसूत्रस्थातः शब्देनोक्तस्य भक्तेः मोक्षसाधनत्वस्य समर्थनम् । वृद्धिह्रासभाक्त्वमित्यत्र तस्यैव विवेचनम् । प्रकृतैतावत्त्वमित्यत्र द्वितीयसूत्रोक्तस्य स्थितिकर्तृत्वस्य समर्थनम् । तदव्यक्तमाह हीत्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वसमर्थनम् । उभयव्यपदेशात्त्वित्यत्र समस्ताध्यायोक्तब्रह्मगुणानामलौकिकत्वस्य ब्रह्मानन्दादिगुणबिम्बत्वस्य च क्रमेणोपपादनेनोक्तविवेचनम् । तथान्यत्प्रतिषेधादित्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वस्य प्रकारान्तरेण समर्थनम् । अनेनेत्यत्र जन्मादिसूत्रोक्ताशेषजगज्जन्मादिकर्तृत्वसमर्थनम् । फलमत इत्यत्र जिज्ञासासूत्रस्थातःशब्दोक्तस्य फलदातृत्वस्य समर्थनमिति क्वचिदुक्तस्य विवेचनमित्यर्थः ।

**स्वप्नविषयतत्प्रतीत्योरिति** ।। अनेन 'योनेः शरीरम्' इत्येतदवसानैः सूत्रैः जीवस्य जन्मावगतम् । जातस्य च स्वप्नाद्यवस्थाप्रेरकत्वलक्षणो महिमा भगवतोऽत्राधिकरणे निर्णीयत इत्यनन्तरसङ्गतिरिति भावः । अर्थज्ञानात्मको हि स्वप्नः । तत्र न तावत् स्वाप्नानामर्थानां भगवदधीनत्वं युक्तमित्याशयेन पूर्वपक्षयति ।। **नेति** ।। उभयथापि नित्यत्वेऽनित्यत्वे चेत्यर्थः । अस्तु तर्हि इत्यत आह ।। **न चेति** ।। ननु यदा स्वाप्नपदार्थप्रतीतिः भवति तदैवोत्पत्तिविनाशयोरङ्गीकारात् नाश्यत्वमित्याशङ्क्य निषेधति ।। **न च वक्तव्यमिति** ।। तात्कालिकविद्युदादिवदित्यर्थः । किञ्च कार्यस्य कर्त्रुपादाननिमित्तव्याप्तत्वात् तदभावात् कथं कार्यं स्यादित्यत आह ।। **कर्त्रिति** ।। **मेरुमन्दरादीति** ।। तेषां दूरदेशस्थत्वादिति भावः ।। **कुरुष्विति** ।। तच्च प्रमाणविरुद्धमिति भावः । एवं स्वाप्नानामर्थानामसत्त्वान्न भगवदधीनत्वमित्युपपाद्यापि तज्ज्ञानस्य तस्यापि निमित्ताभावेनापरमार्थत्वादित्याशयेनाह ।। **न च प्रतीतिकारणं वास्तीति** ।। तत्र न तावच्चक्षुरादीनां निमित्तत्वम् । तेषामुपरतत्वादित्याह ।। **इन्द्रियवृत्तीनामिति** ।। नापि मनसो रूपादिमत्यर्थेऽस्वातन्त्र्यादित्याह ।। **मनस इति** ।। उपलक्षणमेतत् । रूपादिमत्यर्थेऽस्वातन्त्र्यात् न साक्षिणोऽपि प्रवृत्तिः । इन्द्रियावृत्तेः न श्रुतिलिङ्गयोरवकाश इति द्रष्टव्यम् । किञ्च एते विषयाः द्रष्टुभिन्ना अभिन्ना वा । नाद्य इत्याह ।। **यदि चैत इति** ।। **बाह्यार्थत्वादिति** ।। न चान्तरत्वाद्बाह्यार्थत्वमसिद्धमिति वाच्यम् । संवृते देहदेशे रथादीनामवकाशानुपपत्त्यान्तरत्व-

(तत्त्वसुबोधिनी)

स्यानुचितत्वादिति भावः । द्वितीये आह ॥ **अथेति** ॥ स्वाप्नविषयाणां द्रष्टृभिन्नत्वेऽपि सत्यत्वमेव किन्न स्यादित्यत आह ॥ **परमार्थत इति** ॥ एकस्य विचित्रानेकात्मकताया भ्रान्तिं विनानुपपत्तेरिति भावः । विद्युदादिवत्तात्कालिकोत्पत्तिविनाशत्वे दोषान्तरं चाह ॥ **तत्काल इति** ॥ स्वाप्नपदार्थानां सन्ध्य एव सृष्टत्वेन पूर्वकालीनादृष्टेरबाधकत्वेऽपि पश्चाददृष्टिः बाधिका भवति । अतः सौत्रं सृष्टिपदं निरोधस्याप्युपलक्षकमित्यभिप्रेत्याह ॥ **अनन्तरमेवेति** ॥

## वाक्यार्थविवरणम्

**अभावादिति** ॥ महिम्न एव निरूपणेन माहात्म्यज्ञानपूर्वकसुदृढसर्वतोऽधिकस्नेहरूप-भक्तिस्वरूपनिरूपणस्याभावादित्यर्थः ॥ **तज्ज्ञानम्** ॥ माहात्म्यज्ञानम् । माहात्म्यानुक्तौ तज्ज्ञानासम्भवेऽपि स्नेहः सम्भवत्येव । स्नेहं प्रति माहात्म्यवचनस्य व्यतिरेकतोऽन्वयतश्च व्यभिचारेणाकारणत्वात् । तथा हि पुत्रादौ माहात्म्यवचनाभावेऽपि स्नेहदर्शनेन महिमोक्त्यभावे स्नेहाभाव इति व्यतिरेकव्याप्त्ययोगात् । क्वचित् दुर्योधनं प्रति कृष्णमाहात्म्योक्तावपि तस्य तत्र स्नेहादर्शनेन माहात्म्योक्तौ स्नेह इत्यन्वयव्याप्तेरयोगादित्याशङ्क्य व्यतिरेकतो व्यभिचारः स्नेहस्यानेककारणकत्वमेव कल्पयिष्यति, न तु महिम्नोऽकारणत्वम् । यथा कारीरीयागाभावेऽपि क्वचिद्वृष्टिदर्शनेन व्यतिरेकतो व्यभिचारो वृष्टेरनेककारणकत्वकल्पक एव । न कारीरीयागस्या-कारणत्वकल्पकः । अन्वयव्यभिचारोऽपि श्रुतकृष्णमाहात्म्यं दुर्योधनं प्रति महिमोक्तावपि स्नेहानुत्पत्तेर्मत्सरादिप्रतिबद्धत्वाक्षेपक एव । नाकारणत्वकल्पकः । न हि प्रतिबद्धं कारणं कार्यमजनयदकारणं भवत्विति प्रसङ्गादित्याशयेन परिहरति । स्यादेतदित्यादिना अस्तीत्यन्तेन । कारणान्तरेण केनचित् ॥ **अन्यस्य महिम्नः** ॥ **अकारणं भवतीति** ॥ किन्तु वृष्टेरनेककारणकत्वं कल्पयिष्यतीति शेषः ॥ **विप्रतिपत्तिः** । वादिविवादः ॥ **पूर्वेति** ॥ स्वप्नात्पूर्वं जाग्र-दवस्थायामित्यर्थः ॥ **सर्वदेति यावत्** ॥ **दर्शनप्रसङ्ग इति** ॥ नित्यत्वपक्षे दर्शनप्रसङ्गः स्पष्ट एव । अनित्यत्वपक्षे तन्नाशानन्तरं कपालावयवानां दर्शनप्रसङ्ग इत्यर्थः । प्रातीतिकत्वात् प्रातिभासि-कत्वात् । प्रबोधे पाञ्चालेष्वेवेति शेषः ॥ **शरीरेति** ॥ कुरुदेशस्थेति शेषः । पश्चात् प्रबोधानन्तरं परावृत्य गमनेनेत्यर्थः ॥ **बहिरिति** ॥ मनसो बाह्येन्द्रियाधिष्ठानेनैव बाह्यपदार्थज्ञानजनकत्वं दृष्टं न तदनधिष्ठानेन । इन्द्रियाणां तदोपरतत्वादिति भावः । कथमित्यत आह ॥ **परमार्थत इति** ॥ अस्य

(वाक्यार्थविवरणम्)

द्रष्टुः । न स्वप्नोऽपीति वाक्यस्य फलितमाह ॥ **तदधीन इति** ॥ **तं प्रकारं दर्शयति** ॥ यदुक्तमित्यादिना । सन्धौ मध्ये ॥ **तदिति** ॥ ईश्वरस्य कर्तृत्वे इत्यर्थः ।

## वाक्यार्थमञ्जरी

**अवसरप्राप्तेति** ॥ उक्तरीत्योभयनिरूपणमध्यकाल एव निरूपणीयत्वेन प्रसक्तेत्यर्थः ॥ **अभावादिति** ॥ लक्षणप्रमाणादिना तत्स्वरूपनिरूपणाभावादित्यर्थः । भगवन्महिमोक्तौ कथं भक्त्युत्पत्तिरित्यत आह ॥ **माहात्म्येति** ॥ **स्नेहो वेति** ॥ माहात्म्यज्ञानपूर्वकार्थत्वात्स्नेहस्येति भावः । तर्हि कथं भक्तिरित्युच्यत इत्युक्तमित्यत आह ॥ **एवं ज्ञानसाधनेति** ॥ साधनीभूतज्ञान-विषयवचनस्यापीत्यर्थः ॥ **क्वचित् शत्रौ** ॥ तथा चान्वयव्यतिरेकव्यभिचारान्न माहात्म्यज्ञानस्य स्नेहाख्यभक्तिहेतुत्वमिति भावः । कारणान्तरेण स्ववीर्यजातत्वादिना । तथा च प्रमितानेककारणके व्यतिरेकव्यभिचारो न दोष इति भावः । एतदेवाह ॥ **न हीति** ॥ **मत्सरादिनिरुद्धेति** ॥ तथा च सति प्रतिबन्धेऽन्वयव्यभिचारो न दोष इति भावः । इदमेवाह ॥ **न हीति** ॥ **क्वचिद्विविच्योच्यत इति** ॥ सन्ध्ये सृष्टिराह हीत्यादौ जन्मादिसूत्रोक्तसृष्ट्याद्यष्टकर्तृत्वादिमाहात्म्यसमर्थनादिति भावः ॥ **क्वचित् समर्थ्यत इति** ॥ न स्थानतोऽपीत्यादिनानन्दमयादिसूत्रोक्तस्वरूपाभेदादिमाहात्म्य-समर्थनादिति भावः ॥ **स्वाप्नविषयेति** ॥ स्वाप्नावस्थास्थितगजादीत्यर्थः । स्वप्नेति पाठेऽप्यय-मेवार्थः । एवमग्रेऽपि । विप्रतिपत्तिः वादिनां । कुत इत्यतः सत्वे बाधकसद्भावादित्याशयेनाह ॥ **सत्वे च वक्तव्यमित्यादिना** ॥ **पूर्वोत्तरकालमिति** ॥ स्वप्नादर्शनादिति शेषः ॥ **प्रातीतिकत्वादिति** ॥ प्रतीतिमात्रशरीरकत्वादित्यर्थः ॥ **प्रतीतिकाल एवेति** ॥ तात्कालिक-विद्युदादिवदिति भावः । **निरोधो नाशः** ॥ **अयोगादिति** ॥ व्यवहितत्वादिति भावः । **पश्यतः सतः** ॥ **पश्चादिति** ॥ प्रबोधानन्तरं परावृत्य गमनेनेत्यर्थः ॥ **इन्द्रियेति** ॥ बाह्येन्द्रियव्यापारा-भावादित्यर्थः । सत्यत्वे बाधकान्तरमाह ॥ **यदि चेति** ॥ ततः द्रष्टुःसकाशात् । कुत इत्यत आह ॥ **परमार्थतोऽस्येति** ॥ द्रष्टुरित्यर्थः ॥ **मरुमरीचिकाजलेति** ॥ मरुदेशस्थसूर्यकिरणारोपितजल इत्यर्थः । **मृगतृष्णेति नामान्तरम्** ॥ ॐ **सन्ध्ये सृष्टिराह हि** ॐ ॥ सन्ध्ये स्वप्ने पदार्थानां सृष्टिर्भवति । कुतः ? हि यस्मात् 'अथ रथान्' इति श्रुतिस्तथाहेत्यर्थः । **अदृष्टेः** अदृष्टत्वान्निमित्तात् ॥ **सृष्टिरिति** ॥ भगवदभिजाता तात्कालिकीति शेषः ।

## सूत्रभाष्यम्

**ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ २ ॥**

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' (कठ.उ.५-८) इति च 'एतस्माद्ध्येव पुत्रो जायत एतस्माद्भ्रातैतस्माद्भार्या यदेनं पुरुषमेष स्वप्नेनाभिहन्ति' इति गौपवनश्रुतिश्च ।

## तत्त्वप्रदीपिका

सा च सृष्टिः परमात्मन एवेति दाढर्यार्थमाह ॥ **ॐ निर्मातारं चैके पुत्रादयश्च ॐ** ॥ 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रितास्सर्वे तदुनात्येति कश्चन' इति निर्मातारं च परमात्मानं कठाः पठन्ति ।

## तत्त्वप्रकाशिका

कर्तुरभावान्न सृष्टिरुपपन्ना । न हि जीवस्तत्कर्ता । तस्य सुप्तत्वात् । नापीश्वरः । तत्प्रमाणाभावात् । न च पक्षद्वये सृष्टिरुपपन्ना । तत्काल एव सृष्टिनाशकर्तुरदर्शनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुती उदाहरति ॥ **निर्मातारमिति** ॥ न स्वप्नसृष्टौ कर्तुरभावः । जीवानां सुप्तत्वेऽपि परमात्मनः कर्तृत्वात् । न च तत्र प्रमाणाभावः । यतो 'य एषु सुप्तेषु' इतीश्वरं निर्मातारमाहुरेके शाखिनः । अत एव तस्यान्याशक्यकरणशक्तिमत्त्वेन तात्कालिकी सृष्टिरुपपन्नेति भावः । एके तु मन्यन्ते जीवपरैवेयं श्रुतिः ईश्वरलिङ्गाभावात् । जीवस्य कुलालवत्कर्तृत्वायोगात् कल्पकत्वमेव । अस्तु वेश्वरपरता । तथापि नात्र तस्य स्वप्नकर्तृत्वं श्रूयते निर्मातृत्वमात्रस्यैव श्रवणादिति । तन्न युक्तम् । 'सुप्तेषु जागर्ति' इति ईश्वरलिङ्गश्रवणात् । 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यत' इति वाक्यशेषाच्च । न च ब्रह्मैक्यं तस्योच्यते । तस्य दूषितत्वात् । 'तस्मिंल्लोकाः श्रिताः सर्वे' इत्युक्तविशिष्टेनैक्यानङ्गीकाराच्च । लक्षणा चागतिका गतिः । न चेश्वरस्य स्वप्नकर्तृत्वं न प्रतीयते । 'भुञ्जानो नोत्सृजेद्वाचम्' इत्यादाविव प्रकरणप्राप्तत्वात् । एतस्मादिति स्पष्टम् । पुत्रादयश्च स्वाप्ना हरेरेव जायन्त इत्येके शाखिन आहुरिति सूत्रार्थः ।

## गुर्वर्थदीपिका

न चेश्वरस्येत्यत्र कश्चित् 'कामं कामं निर्मिमाणः पुरुषः सुप्तेषु जागर्ति' इति श्रुतेरर्थोऽस्तु । अतो नेयं श्रुतिः सुप्तिकालीनसृष्टिपरेति शङ्कितुरभिप्रायः । एतस्मादित्यत्र 'एतस्मात्पुत्रो जायत'

(गुर्वर्थदीपिका)

इति श्रुतौ पुत्रादयश्च पुत्रो जायते भ्राता जायते भार्या जायत इत्युक्ताः पुत्रभ्रातृभार्याश्च स्पष्टमेतस्मादिति पञ्चम्योक्ताद्धरेरेव जायन्त इति एके शाखिन आहुरित्यर्थः । अतो न केवलं प्रकरणबलान्निर्माता हरिः । किन्तु स्पष्टश्रुतिबलाच्चेति भावः । 'पुत्रादयश्च' इति सूत्रखण्डस्य योजना तु श्रुतिस्थमेतस्मादिति पदं जायत इति पदं च बहुवचनान्ततया सम्बध्य एतस्मात्पुत्रादयश्च जायन्त इति एके शाखिन आहुरिति घटनीया । भाष्यस्थगौपवनश्रुतिश्चेति वाक्यं च यत एवं गौपवनश्रुतिश्च अत एतस्मात्पुत्रादयश्च जायन्त इति एके शाखिन आहुरिति सौत्रपदयोगेन घटनीयम् ।

## भावबोधः

**अत एवेति** । 'एषु सुप्तेषु जागर्ति' इति जीवसुषुप्तिकाले जागरणलिङ्गेन 'तदेव शुक्रं तद् ब्रह्म' इति वाक्यशेषेण चावगतादीश्वरत्वादेवेत्यर्थः । अनेनाशक्यकर्तृशक्तित्वादीश्वरस्येति न्यायविवरणांशो व्याख्यातः ॥ **प्रकरणप्राप्तत्वादिति** ॥ 'भुञ्जान' इति भोजनप्रकरणाद्वागुत्सर्जनाभावस्य भोजनसमानकालीनत्ववदिहापि 'सुप्तेषु' इति सुप्तिप्रकरणान्निर्माणस्य स्वप्नसमानकालीनत्वलाभेन स्वाप्नपदार्थनिर्मातृत्वस्यैव लाभादित्यर्थः ।

## भावदीपः

शङ्कते ॥ **कर्तुरिति** ॥ सूत्रे जीवस्य कर्तृतानुक्तौ वीजं शङ्कायामेवाह ॥ **न हीति** ॥ **सुप्तत्वादिति** ॥ निर्व्यापारत्वादित्यर्थः । सूत्रे एक इत्यादिप्रमाणोक्तिव्यावर्त्यमाह ॥ **नापीति** ॥ यद्यपि न तत्रेति श्रुतिशेषे स हि कर्तेत्यप्यस्ति प्रमाणं तथापि तस्य स्वाप्नार्थकर्तृत्वस्याऽस्फुटत्वाद्वा तदाच्छादनेन वैवमुक्तिः । निर्मातृपदसूचितन्यायविवरणोक्ताशक्तयेत्यादियुक्तिव्यावर्त्यमाह ॥ **न चेति** ॥ जीवकर्तृत्वेश्वरकर्तृत्वरूपपक्षद्वयेऽपीत्यर्थः ॥ **अदर्शनादिति** ॥ लोके तादृशविचित्रपुरुषस्यानुपलम्भादित्यर्थः । इति चेत्यन्तभाष्यस्य निर्मातारं चैक इति सूत्रांशेनान्वयमुपेत्य परिष्कारपूर्वकं शङ्कानिवर्तकत्वेन सूत्रं व्याचष्टे ॥ **न स्वप्नेति** ॥ **एक इति** ॥ कठशाखिनः 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' । 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चन' इत्याहुरित्यर्थः । न चेत्यादिनोक्तं निराह ॥ **अत एवेति** ॥ ईशाकर्तृत्वस्य प्रामाणिकत्वादेवेत्यर्थः । तस्य ईश्वरस्य । आत्मनि चैवं विचित्राश्च हीत्युक्तन्यायेनेति भावः । एतेनाशक्यकरणशक्तित्वादीश्वरस्येत्यन्यत्रोक्तेः सङ्गतिरुक्ता भवति । भाष्ये य

(भावदीपः)

एषु इति पूर्वांशोक्तेरुपयोगं व्यनक्ति ॥ **एके त्वित्यादिना** ॥ सुप्तेष्विन्द्रियेषु निर्व्यापारेष्वित्यर्थं मन्वाना इत्यर्थः । 'यथामरणं प्राप्यात्मा भवति गोतम । योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये नु संयन्ति यथाकर्म यथाश्रुतम्' इति पूर्ववाक्ये जीवस्य प्रकृतत्वादिति भावः ॥ **ईश्वरलिङ्गेति** ॥ सुप्तेष्वित्युक्त्यैव स्वप्नपरत्वं सिद्धम् । जीवस्यापि तदा सुप्तत्वादिति भावः । लिङ्गेत्युपलक्षणम् । 'ततो ज्यायांश्च पूरुष' इत्यादौ च्छन्दोनयोक्तदिशा विष्ण्वेकनिष्ठपुरुष-श्रुतेश्चेत्यपि बोध्यम् ।

यः प्रलयादिषु जीवेषु जागर्ति स विष्णुः परंब्रह्मेत्यर्थ इति काठकभाष्यदिशा निरवकाश-वाक्यशेषं चाह ॥ **तदेवेति** ॥ शुक्रं शोकरहितम् । यथामरणमिति पूर्ववाक्ये जीवस्य प्रकृतत्वेऽपि ततः पूर्वतन एव वाक्ये हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म वक्ष्यामि यथा मरणं प्राप्य जीवो भवति तच्च वक्ष्यामि जीवेश्वरभेदज्ञापनाय यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः परंब्रह्मेत्यर्थः । न हि जीवस्य योन्यादिगमनं ब्रह्म जीवाद्भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवतीति । तत्रैक्योक्तौ न्यायविरोधादिदर्शनेन भेदज्ञापनायेत्युक्तं भेदपरत्वं विशदयति ॥ **न चेत्यादिना** ॥ पूर्ववाक्यप्रकृतं जीवं तदेवेत्यनूद्य तद्ब्रह्मेति ब्रह्मतादात्म्यमत्रोच्यते । तथा च जीवस्यैव कल्पकत्वं प्राप्तमिति न स्वाप्नार्थानां सत्यत्वमिति भावः ॥ **दूषितत्वादिति** ॥ पृथगुपदेशादित्यत्रेत्यर्थः ॥ **लक्षणा चेति** ॥ चिन्मात्रलक्षणा चेत्यर्थः । अस्तु वेत्यादिना शङ्कितं निराह ॥ **न चेति** ॥ **प्रकरणेति** ॥ यथा भुञ्जान इत्युक्त्या भोजनकालीनत्वं मौनस्य लभ्यते तथा सुप्तेषु निर्मिमाणो जागर्तीत्युक्त्या निर्माणजागरणयोः सुप्तिकालीनत्वं लभ्यते । अर्थात्प्रकरणा-ल्लिङ्गादौचित्यादर्थनिर्णय इति न्यायादिति । नन्वेवं सुप्तेष्वित्यस्य स्वप्नदशायां सुप्तेष्वित्यर्थवत् प्रलये सुप्तेष्वित्यप्यर्थात्स्वाप्नसृष्टेरिव विश्वसृष्टेरपि लयकालीनत्वं स्यादिति चेत् स्यादेव । यथोक्तं श्रुतिगीतातात्पर्ये । 'लयस्य त्वष्टमो भागः सृष्टिकाल' इति । काठकभाष्ये यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति निर्ममाणश्च स विष्णुरित्यनुक्त्वा जागर्तीत्येवोक्तिस्तु सुप्तिमत्त्वजाग्रत्त्वोक्तिमात्रेण भेदज्ञापनस्य लाभादित्येवाशया न तु सुप्तेषु जागर्ति अन्यदा तु निर्ममाण इत्याशयेति भावः । एतस्मादिति श्रुत्युक्तेरुपयोगं वदन् पुत्रादयश्चेति सूत्रांशारूढतया भाष्यं व्याचष्टे ॥ **एतस्मादिति** ॥ स्पष्टमित्युपयोगोक्तिः ।

## वाक्यार्थमुक्तावली

**तत्प्रमाणाभावादिति** ॥ 'न तत्र रथा' इति श्रुतेरीश्वरविषयकत्वे निर्णायकप्रमाणाभावेन तस्य तत्र प्रमाणत्वाभावादिति भावः । सौत्रसृष्ट्यनुपपत्त्या जीवो वेश्वरो वा कर्ता भविष्यतीत्यत आह ॥ **न च पक्षद्वय इति** ॥ **अदर्शनादिति** ॥ दृष्टिविरोधात् प्रमाणाभावाच्चेत्यर्थः । एके शाखिनः काठकशाखिन इत्यर्थः । प्रमाणेनैव तात्कालिकसृष्टेरदृष्टिविरोधोऽप्यपास्तः । **तत्र** वाक्यशेषे । 'तदेव शुक्रं तदेव ब्रह्म' इति निखिलशक्त्युपबृंहितत्वस्योक्तत्वात् इति भावेनाशक्यकर्तृता शक्तिरित्युक्तन्यायारोहं दर्शयति ॥ **अत एवेति** ॥ सूत्रखण्डमवतार्य व्याख्यातुं शङ्कामुत्थापयति । **एके त्विति** । ननु जीवपरत्वेऽपि कर्त्रभावान्न सृष्टिरिति चोद्यानवकाश इत्यत आह ॥ **जीवस्येति** ॥ चक्रतुर्यादिबाह्यसामग्रीविकलत्वादिति भावः । ननु 'य एषु सुप्तेषु' इत्यत्र जीवस्य कल्पकत्वमुक्त्वा कथं तस्य सुप्तेषु जागरणं ब्रह्मलिङ्गमित्यतः तदेव शुक्रमिति ब्रह्मैक्यमुच्यते । अतो न लिङ्गविरोधो नापि वाक्यशेषविरोध इत्यत आह ॥ **न च ब्रह्मैक्यमिति** ॥ **विशिष्टेनेति** ॥ लोकाधारत्वादिविशिष्टेन जीवेन ब्रह्मण ऐक्यायोगादित्यर्थः । लक्षणा च भागत्यागलक्षणा चेत्यर्थः ॥ **प्रकरणप्राप्तत्वादिति** ॥ भुञ्जान इति भोजनप्रकरणाद्वागुत्सर्जनाभावस्य भोजनसमान-कालीनत्ववदिहापि सुप्तेष्विति सुप्तिप्रकरणान्निर्माणस्य स्वप्नकालीनत्वलाभेन स्वाप्नपदार्थनिर्मातृ-त्वस्यैव लाभादित्यर्थः । न केवलं परमेश्वरं सन्ध्यर्थं निर्मातारमेके शाखिन आहुः किन्तूपपत्ति-निरपेक्षं स्पष्टमेवैके शाखिनः स्वप्नार्थं पुत्रादयश्च हरेरेव जायन्त इत्याहुरिति सूत्रखण्डार्थमाह । **एतस्मादिति** ॥

## तत्त्वसुबोधिनी

**न च पक्षद्वयेति** ॥ जीवकर्तृत्वपक्षे ईश्वरकर्तृत्वपक्ष इत्यर्थः ॥ **अत एवेति** ॥ 'य एषु सुप्तेषु जागर्ति' इति जीवसुप्तिकाले जागरणलाभेन तदेव शुक्रं तद्ब्रह्मेति वाक्यशेषाच्च तत्र ब्रह्मशब्दादि-श्रवणादित्यत आह ॥ **तदेवेति** ॥ ननु लक्षणया ब्रह्मैक्यं तदर्थः किन्न स्यादित्यत आह ॥ **लक्षणेति** ॥ मुख्यार्थासम्भवे हि तदाश्रयणं, न च तदस्तीति भावः ॥ **प्रकरणप्राप्तत्वादिति** ॥ **भुञ्जान इति** भोजनप्रकरणात् वागुत्सर्जनाभावस्य भोजनसमानकालीनत्ववदिहापि सुप्तेष्विति सुप्तिप्रकरणत्वा-त्तन्निर्माणस्य स्वप्नकालीनत्वलाभेन स्वाप्नपदार्थनिर्मातृत्वस्यैव लाभादित्यर्थः ।

## वाक्यार्थविवरणम्

**पक्षद्वये** ॥ जीवकर्तृत्वपक्षे ईश्वरकर्तृत्वपक्षे चेत्यर्थः ॥ **कर्तुः जीवस्येश्वरस्य वेत्यर्थः** ॥ **अदर्शनात्** ॥ प्रत्यक्षेणेति शेषः ॥ **परिहरदिति** ॥ जीवः कर्तैव न किन्त्वीश्वर एव । तस्य च कर्तृत्वमागमेनोपलभ्यत इत्याशयेनेत्यर्थः ॥ **कल्पकत्वमेवेति** ॥ तथा च तत्कल्पितत्वेन स्वप्नस्यापि मिथ्यात्वसिद्धिरिति भावः ॥ **न चेति** ॥ य एष्विति श्रुतिर्जीवपरैव । न चेश्वरलिङ्गविरोधः । तयोरैक्येनेश्वरलिङ्गस्य जीवेऽप्युपपत्तेरिति भावः ॥ **विशिष्टेन** इश्वरेण ॥ जीवस्येति शेषः । ननु विशिष्टयोरैक्यायोगेऽपि भागत्यागलक्षणया चिन्मात्रैक्यमुपपद्यत एवेत्यत आह ॥ **लक्षणा चेति** ॥ अगतिका गतिः । गतिर्गमनिका व्याख्यानं गतिशून्या गमनिकेत्यर्थः । गत्यन्तराभावे ह्येषा । व्याख्यानं त्वस्मदुक्तरीत्या सति गत्यन्तर इति भावः । तथापीत्युक्तशङ्कायाः दूषणानन्तरं चाह ॥ **न चेति** ॥ न प्रतीयते न श्रूयत इति न हि । किन्तु श्रूयत एवेति भावः । कथं श्रूयत इत्यत आह ॥ **भुञ्जान इति** ॥ तथा चार्थिकश्रवणमश्रवणबाधकमेवेति भावः ।

## वाक्यार्थमञ्जरी

**अदर्शनात्** लोके ॥ **ॐ निर्मातारं चैके पुत्रादयश्च ॐ** ॥ य एष्वित्येके शाखिनः परमात्मानं स्वाप्नपदार्थानां निर्मातारं कर्तारमाहुः । **एके** शाखिनः स्वाप्नपुत्रादयश्च तस्मादेव जायन्त इत्याहुरित्यर्थः ॥ **अत एवेति** ॥ जीवसुप्तिकाले जागरणादिनावगतैश्वर्यादेवेत्यर्थः । एके मायिनः । तर्हि स एव कर्तास्त्वित्यत आह ॥ **जीवस्येति** ॥ **अयोगादिति** ॥ तदानीं तथाननुभवादिति भावः । **कल्पकत्वं** आरोपकत्वम् । **शुक्रं** शुद्धम् । ननु य एष्वित्यादिना जीवमनूद्य तदेवेत्यादिना तस्य ब्रह्माभेद उच्यते । अतो यच्छब्दवाच्यो जीव एवेति तस्यैव कर्तृत्वमित्याशङ्क्य निराकरोति ॥ **न चेति** ॥ **दूषितत्वात्** पृथगुपदेशादित्यादौ । अन्तरङ्गानुपपत्तिं चाह ॥ **तस्मिन्निततीति** ॥ तदेवेत्यनेनोक्तब्रह्मणो लोकाधारकत्वेन विशिष्टब्रह्मत्वाद्विशिष्टेन च ब्रह्मणा विरुद्धधर्माधिकरणस्य जीवस्य त्वयैक्यानङ्गीकारादिति भावः । ननु विशिष्टांशत्यागेन चिन्मात्रलक्षणयैक्योक्तिरियमस्त्वित्यत आह ॥ **लक्षणा चेति** ॥ गत्यन्तराभावे हि लक्षणासङ्गतिः । अत्र तु भेदेन मुख्यार्थसम्भवान्न गत्यन्तराभाव इति भावः ॥ **प्रकरणप्राप्तत्वादिति** ॥ यथा भुंजान इति भोजनप्रकरणाद्वागुत्सर्जनाभावस्य भोजनसमानकालीनत्वलाभस्तथेहापि सुप्तेष्विति सुप्तप्रकरणान्निर्माणस्य स्वाप्नसमानकालीनत्वलाभेन स्वाप्नपदार्थनिर्मातृत्वस्यैव प्राप्तत्वादित्यर्थः ।

## सूत्रभाष्यम्

केन साधनेन ?

**॥ ॐ मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ३ ॥**

अनादिमनोगतान्संस्कारान्स्वेच्छामात्रेण प्रदर्शयति नान्येन साधनेन, सम्यगनभिव्यक्तत्वात्। ब्रह्माण्डे च—

'मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयते ॥
यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता ।
अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्' इति ॥

## तत्त्वप्रदीपिका

केन साधनेनेश्वरः स्वप्नं सृजतीत्याशङ्क्याऽऽह ॥ **मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्** ॥ पूर्वानुभवसंस्कार एवोपादानम्। ईश्वरेच्छैव निमित्तम्।

'त्रिगुणात्मिकाऽथ ज्ञानं च विष्णुशक्तिस्तथैव च ।
मायाशब्देन भण्यन्ते शब्दतत्वार्थवेदिभिः' इति शब्दनिर्णये ॥

अतो मनोमयः संस्कारोऽपि मायाशब्देनोच्यते ।

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यत' इति च स्कान्दे ॥

मायाभ्यां निर्मितं मायया त्रातं चेति मायामात्रम्। यथा घटादीनां मृदादिभिः सृष्टिः प्रदर्शनं चक्षुरादिभिर्नात्र तथा। किन्तु मनसैव तदुभयमपीति नान्येन साधनेनेत्याह। यथा जागरितार्थानामभिव्यक्तिर्न तथा स्वाप्नार्थानामिति सम्यगनभिव्यक्तत्वादित्याह।

न चानिर्वाच्याविद्यात्मकत्वं मायामात्रत्वमिति वाच्यम्। तत्र प्रमाणाभावात्। न च सम्यगनभिव्यक्तस्वरूपत्वमनिर्वाच्याविद्यात्मकत्वे हेतुरिष्यते तैर्युज्यते वा। ख्यातिबाधाभ्यां ह्यनिर्वाच्यत्वं प्रतिपिपादयिषितम्। न च विषयस्य बाधोऽस्ति, अविद्यमानत्वादेव। असतः

(तत्त्वप्रदीपिका)

ख्यातिः प्रसाधिता । अन्यथा तद्वैलक्षण्यासिद्धेः । अथ सद्विलक्षणमेवास्त्वनिर्वाच्यमित्युच्यते, तर्ह्यसज्जगदिति शब्दान्तरेण ब्रुवतो निरस्तयवनिकमेव शून्यवादित्वं प्राप्तम् । सन्निषेधस्यासदवधिकत्वादसंन्निषेधाभावाच्च । ब्रह्मणोऽभ्युपगमान्नेति चेन्न । ब्रह्मवाक्यानामविद्यारोपितातद्रूपनिरासमात्रपरत्वेनापोहार्थतोपपत्तेः । विधिपदगोचरत्वाभ्युपगमे ब्रह्मणः सविशेषत्वप्रसङ्गात् । यदि कश्चिद् ब्रूयात्, निषेध्यत्वेऽप्यभावरूपविशेषप्रसक्तेस्समानोऽयं दोष इति तर्ह्युभयविधलक्षणाभावाल्लक्ष्यस्य ब्रह्मण उभयवैलक्षण्यं प्राप्तम् । न च ज्ञानस्य बाधः । आसीदेव मम भ्रान्तिरिति प्रतीतेर्भ्रान्त्यपायेऽपि । अतोऽन्यथाज्ञाते सम्यग्बोध एव बाधो नामाभ्युपेयताम् ।

## तत्त्वप्रकाशिका

उपादाननिमित्ताभावान्न स्वप्ने सृष्टिरुपपन्नेत्याक्षिपति ॥ **केनेति** ॥ तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ **मायेति** ॥ न स्वप्नस्योपादानाद्यभावेन सृष्ट्यभावः । यतः सन्ध्यं मायामात्रम् । मनोगतान्पूर्वानुभूतवस्तुसंस्कारानुपादानीकृत्य निमित्तभूतया स्वेच्छयैवेश्वरेण निर्मितमित्यर्थः । स्वशिरश्छेदादीनामसत्त्वनिरासायाऽनादिमनोग्रहणम् । कुतोऽस्य वासनामयत्वमिति वदन्प्रष्टव्यो जायते । किमस्य कल्पितत्वमभिप्रेयते नित्यत्वं वा उत बाह्यमेव वा कारणम् । न प्रथमद्वितीयौ । सृष्टिवाक्येनैव निरासात् । द्वितीये स्वप्रयुक्तैवादृष्टिपिशाची स्वात्मानमभिधावति । तृतीयं प्रतिषेधति ॥ **नेति** ॥ अनेनावधारणार्थस्तुशब्दो व्याख्यातः । अत्र हेतुमाह ॥ **सम्यगिति** ॥ यदि वाह्यकारणकाः स्वप्नविषयास्तदा सम्यगभिव्यज्येरन् । न चैवम् । अतः संस्कारोपादानका एवेति भावः । एतेनोक्तकण्ठकोलाहलाः प्रत्युक्ताः । वासनामयानां मेरुमन्दरवसन्तादीनां शरीरादनिर्गत्यैव मनसा दर्शनसम्भवात् । बाह्यकारणाभावान्मृत्पिण्डादिप्रतीतेरप्रसङ्गात् । सूत्रार्थे स्मृतिसंमतिं च दर्शयति ॥ **ब्रह्माण्डे चेति** ॥ नन्वविद्यमानानेव करितुरगादीनपश्यमित्युत्तरकालीनानुभवात्कथमुत्पत्तिः स्वाप्नस्योच्यत इत्यत आह ॥ **यदिति** ॥ प्रतीतं स्वप्नविषयाणां जाग्रत्पदार्थत्वमेव बाध्यत इति तत्प्रतीतिर्भ्रान्तिरस्तु न स्वप्नप्रतीतिरिति भावः । **तत्कृता** अन्यथात्वहेतुकृता । ईश्वरकृतेति वा ।

## गुर्वर्थदीपिका

निर्मितमित्यर्थ इति वदता 'माङ् माने' इति धातोः कर्मणि क्तप्रत्यये कृते निष्पन्नोऽयं शब्द इत्यभिप्रैति । एवं च मायया निमित्तभूतभगवदिच्छया, मायया उपादानभूतसंस्काराख्यमायया च

(गुर्वर्थदीपिका)

मात्रं निर्मितमित्यर्थस्सूचितो भवति । स्वप्रयुक्तैव दृष्टिपिशाचीत्यस्य स्वेन सत्यत्ववादिनं प्रति सत्यत्वे प्रागूर्ध्वं च दर्शनं स्यादिति प्रयुक्ता उक्ता दृष्टिस्सैव पिशाची नित्यत्ववादिनं त्वामेवाभि-धावति नित्यत्ववादिनस्तव सुतरां प्रागूर्ध्वं च दृष्टिः स्यादित्यर्थः । अन्यथात्वहेतुकृतेत्यस्य स्वाप्नेषु पदार्थेषु जाग्रत्वस्य विपरीताख्यहेतुकृतेत्यर्थः ।

## भावबोधः

सौत्रमायापदस्य मनोगतसंस्कारेश्वरेच्छारूपोभयपरत्वमिति प्रतिपादयन् मनोगतानिति भाष्यं व्याचष्टे– **मनोगतानित्यादिना ॥ निर्मितमिति ॥** अनेन निर्मितमित्यनुव्याख्यानानुसारेण सौत्रो 'मात्र' शब्दो व्याख्यातः । बाह्यार्थक्रियासामर्थ्यरहितत्वरूपस्य कात्स्न्र्येनानभिव्यक्तत्वरूपत्वस्य कथं मायामात्रत्वे हेतुत्वमित्यतो नायं तत्र हेतुः । किं तु स्वाप्नपदार्थानां परिशेषेण मायामात्रत्वं साधयितुं प्रसक्तेषु प्रकारेषु कल्पितत्वनित्यत्वरूपयोः प्रकरणयोः 'सन्ध्ये सृष्टिः' इत्यादिना प्रतिषिद्धयोर्बाह्यमृदादिकारणत्वरूपप्रकारान्तरप्रतिषेध इत्यभिप्रेत्य प्रवृत्तम् । कात्स्न्र्येनानभिव्यक्त-स्वरूपत्वादिति सौत्रहेतोः साध्यप्रदर्शनपरं नान्येन साधनेनेति भाष्यमवतारयति– **कुतोऽस्येत्यादि ॥ बाह्यमेव वा कारणमिति ॥** उपादानकारणमित्यर्थः । अनादिनित्यत्वे दोषान्तरमाह– **द्वितीय इति ॥ अनेनेति ॥** व्यावर्त्यकथनेनेत्यर्थः । **सम्यगभिव्यज्येरन्निति ॥** जलाहरणादि-बाह्यार्थक्रियासमर्थाः स्युरित्यर्थः । भाष्याभिप्रेतं परिशेषानुमानं सूचयन्नाह– **अत इति ॥** तथा च स्वाप्नविषया वासनोपादानका उत्पन्नभावत्वे सति वासनाभिन्नानुपादानत्वाद् व्यतिरेकेण घटवदिति परिशेषानुमानम् **॥ संस्कारोपादानका एवेति ॥** सिध्यतीति भावः । **दर्शनसम्भवादिति ॥** न चातीन्द्रियोपादानकानामैन्द्रियकत्वानुपपत्तिः । अतीन्द्रिय द्व्यणुकोपादानकत्र्यणुकस्येवातीन्द्रिय-संस्कारोपादानकानामपि स्वाप्नार्थानां **दर्शनसम्भवादिति ॥ प्रतीतेरिति ॥** अनेन जाग्रत्त्व-प्रतीतिमात्रस्य भ्रान्तित्वादिति न्यायविवरणमप्युक्तार्थं भवति । तथा च स्वाप्नपदार्थेषु यज्जाग्रत्त्वं तस्यान्यथात्वम् । बाध्यत्वमिति यावत् । सा तज्जाग्रत्वविषयिणी प्रतीतिरन्यथात्वहेतुकृता । बाध्यत्वहेतुजन्या भ्रान्तिरिति योजनेत्यर्थः ।

## भावदीपः

उक्तशङ्कानिरासहेतुतया सूत्रभाष्ये व्यनक्ति **॥ नेत्यादिना ॥** दर्शयतीत्यन्तं भाष्यं 'अतः प्रज्ञाऽत्र मायोक्ता जैव्युपादानमेव सा । निमित्तमैश्वरी मुख्या निर्मितं त्रातमेव च । ताभ्यां सह

(भावदीपः)

पृथक्त्वैव मायामात्रमितीर्यते इत्यनुभाष्यदिशा मायामात्रमिति सूत्रांशारूढं करोति ॥ **सन्ध्यमिति** ॥ पूर्वस्मात्सन्ध्यपदानुवृत्तिरिति भावः । 'त्रिगुणात्मिकार्थज्ञानं च विष्णुशक्तिस्तथैव च । मायाशब्देन भण्यन्त' इति स्मृत्या वा माया वयुनं ज्ञानमिति प्रज्ञानामसु पाठाद्वा प्रज्ञार्थकसौत्रमायाशब्दस्य तज्जन्यसंस्कारार्थत्वम् । 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यत' इति तत्वनिर्णयोक्तस्कान्दस्मृत्या भगवदिच्छार्थकत्वं चेति भावः ॥ **निर्मितमिति** ॥ माङ्माने इत्यतः कर्मण्यौणादिकस्त्रन्प्रत्यय इत्युक्तं भवति । स्वाप्ननिर्माणस्य प्रदर्शनरूपत्वाद्भाष्ये मात्रमित्येतदुत्तरस्मृत्यनुसाराद्दर्शयतीति व्याख्यातमिति भावः । संस्कारेऽविद्यमानं रूपादिकं कार्ये वायोरग्निरित्याद्यङ्गीकुर्वतां वेदान्तिनां सिद्धमेव । संस्काराणां मनोवृत्तित्वेन द्रव्यत्वादुपादानत्वं च युक्तमिति भावः ।

नन्वननुभूतस्वशिरश्छेदादेः स्वप्ने दर्शनात्तत्र च संस्काररूपोपादानाभावादसत्त्वं तेषामनिवार्यमित्यतः 'वासनास्सर्ववस्तूनामनाद्यनुभवागताः । सन्त्येवाशेषजीवानामनादिमनसि स्थिता' इत्याद्यनुभाष्यदिशाऽनादिमनोगतेत्युक्तिभावमाह ॥ **स्वशिर इति** ॥ अस्मिन् जन्मन्यननुभवेऽपि जन्मान्तरीयानुभवजन्यसंस्कारसम्भवान्नासत्त्वमिति भावः । दोषान्तरं चाह ॥ **द्वितीय इति** ॥ उभयथापि पूर्वोत्तरकालमित्यादिना प्रागुक्तैवेत्यर्थः । प्रागूर्ध्वं दर्शनप्रसङ्गदोषः प्राक् त्वयोक्तस्तवापि प्रसज्यत इति भावः ॥ **अत्रेति** ॥ 'मायामात्रमेव नान्यजन्यमित्यत्रेत्यर्थः । मनोविकारा विषयाः स्वाप्ना यद्बाह्यवन्न ते । स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित्' इत्यनुभाष्यदिशा व्याचष्टे ॥ **यदीति** ॥ **अनिर्गत्यैवेति** ॥ प्रायशः । तेन 'बहिः कुलायादमृतश्चरित्वा' इति श्रुत्या । अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् । स्वप्नेषु फाल्गुनं यद्वत्कृष्णः कैलासमानयत् । वासनारूपकान्न्रायस्त्वन्तरेव प्रदर्शयेत् । अतो बहिः कुलायादित्यपि वाङ्न विरुध्यत' इति षष्ठबृहद्भाष्येण चाविरोधः । उक्तं चानुव्याख्याने । 'क्वचित्स्पष्टा अपि स्युष्टे' इति ॥ **दर्शनसम्भवादिति** ॥ दर्शनं चानुभव एवेति सुधायां स्पष्टमुपपादितम् ॥ **पिण्डेति** ॥ मृत्पिण्डकपालादीत्यर्थः । जाग्रत्त्वप्रतीतिमात्रस्य भ्रान्तित्वादित्यन्यत्रोक्त्यनुरोधेन शेषोक्त्या स्मृतिवाक्यं व्याचष्टे ॥ **प्रतीतमिति** ॥ मात्रपदव्यावर्त्योक्तिर्नेति ।

## वाक्यार्थमुक्तावली

अतीन्द्रियाणां संस्काराणां परिणामं विना प्रदर्शनायोगात् संस्कारान् स्वेच्छया प्रदर्शयतीति भाष्यवाक्यं परिणामतात्पर्यकमिति भावेनाह ॥ यत इति ॥ एतेन सूत्रे सन्ध्यमित्यस्ति । मायेति तन्त्रेणेशेच्छा वासना चोच्यते । यद्यपि 'त्रिगुणात्मिकार्थज्ञानं च विष्णुशक्तिस्तथैव च । माया-शब्देन भण्यन्ते' इत्यर्थज्ञानमेव माया । तथापि तज्जन्यवासना लक्ष्यत इति तत्त्वप्रदीपोक्तेः । इच्छायां महामायेत्यविद्येति मायाशब्दस्य प्रसिद्धत्वादविरोधः ॥ **मात्रमिति** ॥ माङ् मान इत्यस्माद्धातोः कर्मणि त्रन्प्रत्ययः । तथा च सन्ध्यं मायाभ्यां संस्कारेश्वरेच्छाभ्यामुपादानाभ्यां ईश्वरेण निर्मितमित्यर्थ इत्युक्तं भवति ॥ **स्वशिरच्छेदादीनामिति** ॥ स्वशिरच्छेदादीनामननु-भूतत्वेनोपादानीभूतसंस्काराभावात् स्वप्ने तत्सृष्ट्ययोगेन प्राप्तस्यासत्त्वस्येत्यर्थः । उद्बन्धनादिवत् स्वशिरच्छेदादेः जन्मान्तरेऽनुभवसम्भवादिति भावः । बाह्यार्थक्रियाराहित्यरूपस्य कार्त्स्न्येनान-भिव्यक्तस्वरूपस्य कथं वासनामयत्वे हेतुत्वं, अन्वयदृष्टान्ताभावात् । मनोरथस्य पक्षसमत्वाच्च व्यतिरेके सुखादौ व्यभिचारात् । शुक्तिरजतादौ व्यभिचाराच्चेत्यतो नायं साक्षाद्वासनामयत्वे हेतुः, किन्तु सन्ध्यं वासनामयं जन्यत्वे सति बाह्याकारणकत्वादित्यनुमानेऽसिद्धिं परिहर्तुं हेतुसाधकोऽयं हेतुरिति सूत्रे बाह्यकारणकत्वव्यवच्छेदकस्तुशब्द इति भावेन शङ्कामुत्थापयति ॥ **कुतोऽस्येति** ॥ न कुतोऽपीत्यर्थः ॥ **वदन्निति** ॥ आक्षिपन्नित्यर्थः । वासनामयत्वाद्याक्षेपस्य त्रेधोपपत्तेर्विकल्प्य पक्षद्वयं दूषित्वा तृतीयदूषणपरत्वेन तुशब्दार्थं नान्येनेति भाष्यं संयोज्य तल्लब्धं बाह्याकारणकत्वमेव सौत्रप्रतिज्ञायां हेतुरिति विवक्षित्वा तत्साधकतया कार्त्स्न्येनेत्येतदिति योजयति ॥ **किमस्येत्यादिना** ॥ एतेन सन्ध्यं वासनामयं बाह्याकारणकत्वादिति हेतोः कल्पितत्वा-जन्यत्वाभ्यामुपपत्तेरप्रयोजकतेति निरस्तं । प्रागेव निरस्तत्वेन जन्यत्वे सतीति विशेषणादिति । यद्वा कुतः प्रमाणाद्वासनामयत्वमित्याशङ्क्य स्वप्ने वासनामयत्वबाह्यकारणकत्वयोर्द्वयोरेव प्रसक्तत्वात्कल्पितत्वनित्यत्वयोरप्रसक्तत्वात् प्रसक्तयोर्द्वयोर्मध्ये बाह्यहेतुकत्वे निरस्ते परिशेषा-द्वासनामयत्वमेव सम्भवतीति भावेन प्रसक्तप्रतिषेधाय तुशब्दः । तत्र हेतुतया कार्त्स्न्येनेत्येतत् इत्यभिप्रेत्य व्याचष्टे किमस्येत्यादिना । द्वितीये दोषान्तरमाह ॥ **द्वितीय इति** ॥ पूर्वं पश्चाच्चादृष्टपिशाचीत्यर्थः ॥ **सम्यगभिव्यज्येरन्निति** ॥ बाह्यार्थक्रियासमर्थाः स्युरित्यर्थः । यद्वा बाह्यार्थवत्स्पष्टतया प्रतीयेरन्नित्यर्थः ॥ **कण्ठकोलाहला इति** ॥ कण्ठोऽस्तीत्येतावन्मात्रेण

(वाक्यार्थमुक्तावली)

प्रमाणमनालोच्य कण्ठादुद्गताः कोलाहलाः कलकलध्वनितुल्याः पूर्वपक्षिवाग्विखृम्भा इत्यर्थः । **वासनामयानामिति** ॥ मेर्वादीनां वासनामयत्वेनाल्पे एव स्थाने शरीरे दर्शनसम्भवात् । पाञ्चाला-दीनामपि शरीरादनिर्गत्य दर्शनसम्भवात् वासनामयत्वेन मनसि दर्शनसम्भवात् । वासनामयत्वादेव समीपस्थैरदर्शनसम्भवाच्चेत्यर्थः ॥ **मृत्पिण्डादिप्रतीतेरिति** ॥ प्राङ्मृत्पिण्डादिप्रतीतेः पश्चात्कपालादि-प्रतीतेरित्यर्थः । न चातीन्द्रियोपादानकानामैन्द्रियकत्वानुपपत्तिः । अतीन्द्रियद्व्यणुकोपादानक-त्र्यणुकस्येवातीन्द्रिवासनोपादानकानामपि स्वाप्नार्थानां दर्शनसम्भवात् । ततः स्वाप्नपदार्थेषु प्रतीतं यज्जाग्रत्वं तस्यान्यथात्वं बाध्यत्वं सा तत्कृता बाध्यत्वहेतुकृता । जाग्रत्वप्रतीतिरेव भ्रान्तिरिति भाष्यार्थः ।

## तत्त्वसुबोधिनी

सौत्रमायापदस्य मनोगतसंस्कारेच्छारूपोभयपरत्वमिति प्रतिपादयन् मनोगतानिति भाष्यं व्याचष्टे ॥ **मनोगतानित्यादिना** ॥ ननु भाष्ये मनोगतानिति वक्तव्ये अनादिग्रहणं किमर्थमित्यत आह ॥ **स्वशिर इति** ॥ तेन तेषामेतज्जन्मनि अननुभूतत्वात् कथं स्वशिरश्छेदादीनां स्वप्ने दर्शनमित्यपास्तं भवति । बाह्यार्थक्रियासामर्थ्यं परिशेषेण मायामात्रत्वं साधयितुं प्रसक्तेषु प्रकारेषु कल्पितत्वनित्यत्वरूपयोः प्रकारयोः सन्ध्ये सृष्टिरित्यादिना प्रतिषिद्धयोः बाह्यमृदादिकारणत्व-रूपप्रकारान्तरप्रतिषेध इत्यभिप्रेत्य प्रवृत्तं कार्त्स्न्येनानभिव्यक्तत्वादिति सौत्रहेतोः साध्यप्रदर्शनपरं नान्येन साधनेनेति भाष्यमवतारयितुमाह ॥ **कुतोऽस्येत्यादिना** ॥ **बाह्यमेवेति** ॥ उपादानकारण-मित्यर्थः । अनादिनित्यत्वे दोषान्तरमाह ॥ **द्वितीय इति** ॥ प्रागूर्ध्वं च दर्शनप्रसङ्ग इति स्वप्रयुक्तेत्यर्थः ॥ **अनेनेति** ॥ नान्येति व्यावर्त्यकथनेनेत्यर्थः ॥ **सम्यगभिव्यज्येरन्निति** ॥ जलाहरणाद्यर्थक्रियासमर्थाः स्युरित्यर्थः । भाष्येऽभिप्रेतं परिशेषानुमानं सूचयन्नाह ॥ **अत इति** ॥ तथा च स्वप्नविषयाः वासनोपादानकाः उत्पन्नभावत्वे सति वासनाभिन्नोपादानकत्वाभावात् व्यतिरेकेण घटवदिति परिशेषानुमानात् संस्कारोपादानका एवेति सिद्ध्यतीति भावः ॥ **दर्शन-सम्भवादिति** ॥ न चातीन्द्रियोपादानकानामैन्द्रियकत्वानुपपत्तिः । अतीन्द्रियद्व्यणुकोपादानक-त्र्यणुकस्येवातीन्द्रियसंस्कारोपादानकानामपि स्वाप्नार्थानां दर्शनसम्भवादिति । तत्कालसृष्टि-निरोधाङ्गीकारे मृत्पिण्डादिदर्शनं स्यादिति दूषणं परिहरति ॥ **बाह्येति** ॥ **प्रतीतमिति** ॥ तथा च

(तत्त्वसुबोधिनी)

तत्र स्वाप्नपदार्थेषु यज्जाग्रत्वं तस्यान्यथात्वं बाध्यत्वमिति यावत् सा तज्जाग्रत्वविषयिणी प्रतीतिरन्यथाहेतुजन्या भ्रान्तिरिति योजनोक्ता भवति ।

## वाक्यार्थविवरणम्

**उपादानीकृत्येत्यादि** ॥ तथा च मायाशब्दो वासनालक्षको निमित्तभूतेश्वरप्रज्ञावाचीति युगपद्वृत्तिद्वयं न विरुद्धमिति ज्ञेयम् । गङ्गायां 'मीनघोषौ' इत्यत्र दर्शनात् ॥ **असत्त्वेति** ॥ एतज्जन्मन्यननुभवादिति भावः ॥ **अनादिमन इति** ॥ न ह्यनादौ जन्मनि कदापि स्वशिरश्छेदो नानुभूतः । येन तदनुभवजनितसंस्कारो मनसि न स्यादिति भावः ॥ **निरस्तत्वादिति** ॥ न हि कल्पितस्यासतः नित्यस्य सृष्टिरुपपन्नेति भावः । नित्यत्वपक्षे दोषान्तरं चाह ॥ **द्वितीय इति** ॥ नित्यत्वे प्रागूर्ध्वं चोपलब्धिः स्यात् । न चोपलभ्यन्तेऽतो नित्यत्वं न युक्तमिति भावः । तत्कालसृष्टत्वनिरोधत्वपक्षे चेत्युक्तदोषं परिहरति ॥ **बाह्यकारणाभावादिति** ॥ बाह्यमृदादिकारणकत्वाङ्गीकारादित्यर्थः ॥ प्रागुत्तरकालमिति शेषः ॥ **जाग्रत्पदार्थत्वम्** ॥ जाग्रद्दृष्टपदार्थभेदः । बाध्यते यतोऽतस्तत्प्रतीतिर्जाग्रत्पदार्थत्वप्रतीतिर्भ्रान्तिरस्त्विति योज्यम् ।

## वाक्यार्थमञ्जरी

स्वाप्नपदार्थजातं मायामात्रं तु मायाभ्यां संस्कारेच्छाभ्यां मात्रं तु निर्मितमेव नान्यनिर्मितम् । कुतः ? कार्त्स्न्येन साकल्येनानभिव्यक्तस्वरूपत्वात् बाह्यार्थक्रियासामर्थ्यरहितत्वादिति यावत् ॥ **अनादिमनोग्रहणमिति** ॥ तथा चैतेषामेतज्जन्मन्यननुभूतत्वेऽपि अनादौ संसारे जन्मान्तरे तदनुभवसम्भवे संस्कारोत्पत्त्युपपत्तेरिति भावः । कारणमुपादानम् । नित्यत्वे दोषान्तरमाह ॥ **द्वितीय इति** ॥ स्वाप्नविषयस्यानादिनित्यत्वमाशङ्क्य प्रागूर्ध्वमनुपलब्धिरूपा या पिशाची त्वया मोचिता सेदानीं तन्नित्यत्वमङ्गीकुर्वाणं त्वां प्रत्येवाभिधावतीत्यर्थः ॥ **अनेनेति** ॥ व्यावर्त्यकथनेनेत्यर्थः ॥ **सम्यगभिव्यज्येरन्निति** ॥ जलाहरणादिबाह्यार्थक्रियासमर्थाः स्युरित्यर्थः ॥ **एतेनेति** ॥ किञ्च स्वाप्नेत्यादिनोक्ता दोषाः संस्कारोपादानकत्वाभ्युपगमेनैव निरस्ता इत्यर्थः । तेषां कण्ठशोषणमात्रहेतुत्वं न त्वस्मत्पराजय इत्याशयेनोक्तम् ॥ **कण्ठकोलाहल इति** ॥ न चातीन्द्रियसंस्कारोपादानकत्वान्नेन्द्रियग्राह्यत्वमिति वाच्यम् । अतीन्द्रियद्व्यणुकोपादानकत्र्यणुकस्येन्द्रियग्राह्यत्ववदुपपत्तेरिति भावः ॥ **जाग्रत्पदार्थत्वमिति** ॥ जाग्रत्पदार्थभेद इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥ ४ ॥**

साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शन' (छां.उ.५-२-९)

इत्यादिश्रुतेः । हिशब्दाद्दर्शनाच्च ।

'यद्वाऽपि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।
स्वप्नस्थमथवा राजा तत्तथैव भविष्यति' इत्याद्याचक्षते च स्वप्नविदो व्यासादयः ॥

## तत्त्वप्रकाशिका

ननु यदि बाह्यार्थजन्याः स्वाप्नविषया न भवन्ति तर्हि तेषां सत्त्वं न प्राप्नोति शुक्तिरजतादिवदित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **सूचकश्चेति** ॥ स्वप्नविषयाणां बाह्यसाधनजन्यत्वाभावेऽपि न सत्त्वहानिः । शुभाशुभसूचकत्वेन सत्त्वस्यैव निश्चितत्वात् । न ह्यविद्यमानं शाकुनं कस्यचित्सूचकमिति भावः । स्वाप्नार्थानां भावाभावसूचकत्वमेव कुत इत्यत आह ॥ **यदेति** ॥ काम्येषु कर्मसु क्रियमाणेषु यदा यदि स्त्रियं पश्यति तत्र तर्हि तस्मिन् स्वप्नाख्ये निदर्शने जाते समृद्धिं जानीयादित्यर्थः । एवं 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतिश्चोदाहर्तव्या इति सूचितमिति शेषः । न च मन्तव्यं चन्द्रमा इवादित्यो दृश्यते इति भ्रान्तार्थस्यापि सूचकत्वं श्रूयत इति । अन्यथाज्ञातस्याधिष्ठानस्यैव सूचकत्वाभिधानात् । न चैवमत्रोक्तिरस्ति । न चात्राधिष्ठानमस्ति । आत्मनः पृथक् प्रतीतेः । अतः स्वप्नस्य भगवदधीनत्वसिद्धेर्महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति सिद्धम् ।

## गुर्वर्थदीपिका

ननु यदि बाह्यार्थजन्या इत्यत्र आन्तरमनउपादानकज्ञानादीनां बाह्योपादानाजन्यत्वेऽपि सत्वदर्शनेनाऽऽन्तरवासनोपादनककरितुरगादीनामपि बाह्योपादानाजन्यत्वमात्रेण कथं सत्वस्याप्राप्तिरिति विपरीतशङ्का स्यादेव । तथापि करितुरगत्वादिना बाह्यकार्यसजातीयानां बाह्योपादान-

(गुर्वर्थदीपिका)

जन्यत्वमावश्यकमिति शङ्कितुरभिप्रायः । वस्तुतस्तु घटत्वेन सजातीयस्यापि सौवर्णघटस्य स्वोचितविलक्षणोपादानजन्यत्वेऽपि सत्वदर्शनेनेश्वरेच्छया दहनदग्धवेत्रबीजजन्यकदलीकाण्डस्य सत्वदर्शनेन चातिसूक्ष्मतरविलक्षणस्वाप्नकरितुरगादीनामपि स्वोचितसूक्ष्मतत्तत्संस्कारोपादान-जन्यत्वमात्रेणापि सत्वसम्भवान्न काचिदनुपपत्तिः । शङ्का तु प्रकारान्तरेणोत्तरं दातुमिति ज्ञेयम् । इदं च साधनान्तरं बाह्यसाधनं, तदभावेऽपीति वदता भाष्यकृताऽवान्तरसाधनस्य सूचितत्वान्न स्वकपोलकल्पितम् । न ह्यविद्यमानं शाकुनमित्यत्राविद्यमानं शाकुनं शकुनयोग्यं गरुडादि । ननु जाग्रति सवितृसुषिरदर्शनमिवा विद्यमानस्वाप्नपदार्थदर्शनमेव सूचकं न तु स्वाप्नोऽर्थ इति तु शङ्का सूत्रशेषगृहीतात् 'यद्वाऽपि ब्राह्मणो ब्रूयात्' इति वचनादेव निरस्ता । तत्र हि ब्राह्मणदेवता-ऋषभराजादिवचनरूपार्थस्यैव शुभसूचकत्वकथनात् । एतत्प्रायपाठेन 'स्त्रियं स्वाप्नेऽभिपश्यति' इत्यादावप्यर्थकृतमेव फलं न तु ज्ञानकृतमिति गम्यते । अतः सुष्ठूक्तं सूत्रकृता 'सूचकश्च' इति ।

अत्राहुर्मायावादिनः मायामात्रपदेन स्वाप्नपदार्थानां मिथ्यात्वमेव सूत्रकृता **प्रतिज्ञातमिति** । तदतीव हास्यम् । 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति हेतौ सस्वरूपत्वमनुपलम्भबाधपरिहाराय कार्त्स्न्येनानभिव्यक्तत्वापरपर्यायमतिसूक्ष्मत्वं च वदन् सूत्रकारस्तद्विरुद्धं निःस्वरूपत्वरूपं मिथ्यात्वं कथं प्राक्प्रतिजानीयात् । 'सन्ध्ये सृष्टिः' इति प्राक्सृष्टिकथनात् उपरि 'सूचकश्च' इति सत्त्वे युक्तिकथनाच्च न मध्ये मिथ्यात्वं सिसाधयिषितम् । न हि कश्चिच्छुक्तौ रजतं पश्यतीतिवद्रजतं सृजतीति ब्रूते । यदि चाऽऽद्यसूत्रस्यैव पूर्वपक्षसूत्रता । तर्हि विश्वतोमुखत्वादिसूत्रलक्षणाभावेन सूत्रत्वमेव न स्यात् । श्रुत्युपबृंहितसूत्रस्य पूर्वपक्षतायां श्रुत्युपोद्बलितं भवदैक्यं च न सिद्धान्तस्स्यात् । अपि चोक्तविधया 'मायामात्रम्' इति सूत्रे हेतुविरोधेन मिथ्यात्वे तात्पर्याभावे किं बलेनास्य पूर्वपक्षता कल्प्यते । किञ्च परानुकूलसूत्रस्य त्वया पूर्वपक्षत्वकल्पने सोऽपि त्वदनुकूलसूत्रस्य पूर्वपक्षतां कुतो न कल्पयेत् । अतो ब्राह्मणे वध्यावध्यविभागवत् सूत्रेषु नायं विभागः प्रेक्षावतां कर्तुमुचितः । कस्तर्हि सूत्रार्थ इति चेत् ब्रूमस्तावत्तवानर्थभूतमर्थम् । त्वं च समाहितः शृणु .....। 'सन्ध्ये सृष्टिः' इति प्राथमिकसूत्रे न तत्रेति रथादीनां कारणीभूतप्रागभावं प्रागुक्त्वा 'अथ रथादीन् सृजत' इति सयुक्तिकं सृष्टिकथकश्रुत्युपस्कारेणासिद्ध्यादिदोषरहितस्रष्टृत्वाख्यहेतुना सन्ध्यस्य सत्त्वं स्वसिद्धान्ततया प्राक्प्रसाध्य सन्ध्यं न मिथ्या मिथ्यात्वोपयुक्तमायाशून्यत्वात् सस्वरूपत्वाच्च ब्रह्मवदिति परपक्षप्रतिक्षेपं च हृदि निधाय सस्वरूपत्वेनैव हेतुना पूर्वोक्तब्रह्मनिदर्शनेनैव सन्ध्ये

## सूत्रभाष्यम्

**॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥ ४ ॥**

साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शन' (छां.उ.५-२-९)

इत्यादिश्रुतेः । हिशब्दाद्दर्शनाच्च ।

'यद्वाऽपि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।
स्वप्नस्थमथवा राजा तत्तथैव भविष्यति' इत्याद्याचक्षते च स्वप्नविदो व्यासादयः ॥

## तत्त्वप्रकाशिका

ननु यदि बाह्यार्थजन्याः स्वाप्नविषया न भवन्ति तर्हि तेषां सत्त्वं न प्राप्नोति शुक्तिरजतादिवदित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **सूचकश्चेति** ॥ स्वप्नविषयाणां बाह्यसाधनजन्यत्वाभावेऽपि न सत्त्वहानिः । शुभाशुभसूचकत्वेन सत्त्वस्यैव निश्चितत्वात् । न ह्यविद्यमानं शाकुनं कस्यचित्सूचकमिति भावः । स्वाप्नार्थानां भावाभावसूचकत्वमेव कुत इत्यत आह ॥ **यदेति** ॥ काम्येषु कर्मसु क्रियमाणेषु यदा यदि स्त्रियं पश्यति तत्र तर्हि तस्मिन् स्वप्नाख्ये निदर्शने जाते समृद्धिं जानीयादित्यर्थः । एवं 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतिश्चोदाहर्तव्या इति सूचितमिति शेषः । न च मन्तव्यं चन्द्रमा इवादित्यो दृश्यते इति भ्रान्तार्थस्यापि सूचकत्वं श्रूयत इति । अन्यथाज्ञातस्याधिष्ठानस्यैव सूचकत्वाभिधानात् । न चैवमत्रोक्तिरस्ति । न चात्राधिष्ठानमस्ति । आत्मनः पृथक् प्रतीतेः । अतः स्वप्नस्य भगवदधीनत्वसिद्धेर्महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति सिद्धम् ।

## गुर्वर्थदीपिका

ननु यदि बाह्यार्थजन्या इत्यत्र आन्तरमनउपादानकज्ञानादीनां बाह्योपादानाजन्यत्वेऽपि सत्वदर्शनेनाऽऽन्तरवासनोपादनककरितुरगादीनामपि बाह्योपादानाजन्यत्वमात्रेण कथं सत्वस्याप्राप्तिरिति विपरीतशङ्का स्यादेव । तथापि करितुरगत्वादिना बाह्यकार्यसजातीयानां बाह्योपादान-

(गुर्वर्थदीपिका)

जन्यत्वमावश्यकमिति शङ्कितुरभिप्रायः । वस्तुतस्तु घटत्वेन सजातीयस्यापि सौवर्णघटस्य स्वोचितविलक्षणोपादानजन्यत्वेऽपि सत्वदर्शनेनेश्वरेच्छया दहनदग्धवेत्रबीजजन्यकदलीकाण्डस्य सत्वदर्शनेन चातिसूक्ष्मतरविलक्षणस्वाप्नकरितुरगादीनामपि स्वोचितसूक्ष्मतत्तत्संस्कारोपादान-जन्यत्वमात्रेणापि सत्वसम्भवान्न काचिदनुपपत्तिः । शङ्का तु प्रकारान्तरेणोत्तरं दातुमिति ज्ञेयम् । इदं च साधनान्तरं बाह्यसाधनं, तदभावेऽपीति वदता भाष्यकृताऽवान्तरसाधनस्य सूचितत्वान्न स्वकपोलकल्पितम् । न ह्यविद्यमानं शाकुनमित्यत्राविद्यमानं शाकुनं शकुनयोग्यं गरुडादि । ननु जाग्रति सवितृसुषिरदर्शनमिवा विद्यमानस्वाप्नपदार्थदर्शनमेव सूचकं न तु स्वाप्नोऽर्थ इति तु शङ्का सूत्रशेषगृहीतात् 'यद्वाऽपि ब्राह्मणो ब्रूयात्' इति वचनादेव निरस्ता । तत्र हि ब्राह्मणदेवता-ऋषभराजादिवचनरूपार्थस्यैव शुभसूचकत्वकथनात् । एतत्प्रायपाठेन 'स्त्रियं स्वाप्नेऽभिपश्यति' इत्यादावप्यर्थकृतमेव फलं न तु ज्ञानकृतमिति गम्यते । अतः सुष्ठूक्तं सूत्रकृता 'सूचकश्च' इति ।

अत्राहुर्मायावादिनः मायामात्रपदेन स्वाप्नपदार्थानां मिथ्यात्वमेव सूत्रकृता **प्रतिज्ञातमिति ।** तदतीव हास्यम् । 'कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' इति हेतौ सस्वरूपत्वमनुपलम्भबाधपरिहाराय कात्स्न्र्येनानभिव्यक्तत्वापरपर्यायमतिसूक्ष्मत्वं च वदन् सूत्रकारस्तद्विरुद्धं निःस्वरूपत्वरूपं मिथ्यात्वं कथं प्राक्प्रतिजानीयात् । 'सन्ध्ये सृष्टिः' इति प्राक्सृष्टिकथनात् उपरि 'सूचकश्च' इति सत्त्वे युक्तिकथनाच्च न मध्ये मिथ्यात्वं सिसाधयिषितम् । न हि कश्चिच्छुक्तौ रजतं पश्यतीतिवद्रजतं सृजतीति ब्रूते । यदि चाऽऽद्यसूत्रस्यैव पूर्वपक्षसूत्रता । तर्हि विश्वतोमुखत्वादिसूत्रलक्षणाभावेन सूत्रत्वमेव न स्यात् । श्रुत्युपबृंहितसूत्रस्य पूर्वपक्षतायां श्रुत्युपोद्बलितं भवदैक्यं च न सिद्धान्तस्स्यात् । अपि चोक्तविधया 'मायामात्रम्' इति सूत्रे हेतुविरोधेन मिथ्यात्वे तात्पर्याभावे किं बलेनास्य पूर्वपक्षता कल्प्यते । किञ्च परानुकूलसूत्रस्य त्वया पूर्वपक्षत्वकल्पने सोऽपि त्वदनुकूलसूत्रस्य पूर्वपक्षतां कुतो न कल्पयेत् । अतो ब्राह्मणे वध्यावध्यविभागवत् सूत्रेषु नायं विभागः प्रेक्षावतां कर्तुमुचितः । कस्तर्हि सूत्रार्थ इति चेत् ब्रूमस्तावत्तवानर्थभूतमर्थम् । त्वं च समाहितः शृणु .....। 'सन्ध्ये सृष्टिः' इति प्राथमिकसूत्रे न तत्रेति रथादीनां कारणीभूतप्रागभावं प्रागुक्त्वा 'अथ रथादीन् सृजत' इति सयुक्तिकं सृष्टिकथकश्रुत्युपस्कारेणासिद्ध्यादिदोषरहितस्रष्टृत्वाख्यहेतुना सन्ध्यस्य सत्त्वं स्वसिद्धान्ततया प्राक्प्रसाध्य सन्ध्यं न मिथ्या मिथ्यात्वोपयुक्तमायाशून्यत्वात् सस्वरूपत्वाच्च ब्रह्मवदिति परपक्षप्रतिक्षेपं च हृदि निधाय सस्वरूपत्वेनैव हेतुना पूर्वोक्तब्रह्मनिदर्शनेनैव सन्ध्ये

(गुर्वर्थदीपिका)

पुनराद्यहेतोरसिद्धिं परिजिहीर्षुर्मायाया अमात्रं मात्रयापि शून्यमिति साध्यनिरूपणं कृतवानिति पदसम्पदैव लभ्यस्य पूर्वोत्तरसूत्राणामत्रैवोक्तहेतोश्चानुकूलस्य सकलजनमनोरञ्जनस्याप्यर्थस्य सम्भवात् । मिथ्यात्ववादिन एवानर्थो न तु सत्यत्ववादिनामस्माकम् । अत एवैकयोक्त्या बह्वर्थलाभाय मायामात्रमित्युक्तम् । अन्यथा वासनानिर्मितमित्यवक्ष्यत् । अपि चानन्तानन्तजीवेषु प्रतिशरीरं प्रतिदिनमतिसूक्ष्मतरकरितुरगदेहगेहयोषिदन्नपरमान्नादिविचित्रस्वोपभोग्यपदार्थसर्जनेन सुखहेतौ महामहिम्नि स्वोपकारके परमात्मनि स्यादेव विवेकिनां भक्त्युद्रेकः । अत एवासाधारण्येन प्रतिदिनमुक्तविधयैकैकजीवोपकारकसन्ध्यस्रष्टृत्वमहिमप्रतिपादकमिदमेवाधिकरणमादौ निबबन्ध । सर्वसाधारणसुखदायकावस्थान्तरप्रेरकत्वरूपमहिमप्रतिपादकान्यधिकरणानि तु पश्चादेव न्यबध्नात् । मिथ्यासृष्टित्वे तु कुहकतया विप्रलम्भके मायाविनीव विवेकिनामनादर एव स्यात् । न भक्तिः । एवं च भक्तिपादानुगुण्यं चास्मदुक्त एवार्थे न परोत्प्रेक्षितकुत्सितार्थे । सुप्तावप्युपादानाविद्यायाः सत्त्वेन भ्रमरूपब्रह्मचैतन्यस्य च सत्त्वेन केवलं मायामयीयं भ्रान्तिस्तदापि कुतो नाभूत् । 'मनोगतांस्तु संस्कारान्' इति परमाप्ततमेनैव सूत्रकृताऽन्यत्रोक्तमनोगतसंस्कारोपादानकत्वस्यैव मायामात्रशब्दार्थत्वे तु मनस उपरतत्वान्न सुप्तौ तत्प्रसङ्गः । चक्षुरादीनां प्रतिबुद्धत्वेन तत्तदर्थ-प्रतीतिप्रतिरुद्धत्वान्न जाग्रतीति सर्वसामञ्जस्यसम्भवाच्च । अतो यत्किञ्चिदेतत् ।

## भावबोधः

ननु त्रिसूत्र्या सर्वशङ्कोद्धारेण स्वाप्नपदार्थानां सत्त्वस्य व्यवस्थापितत्वात् 'सूचकश्च' इति सूत्रं किमर्थमित्यतो यत्प्रथमसूत्रे स्वाप्नपदार्थानां सत्यत्वे उत्पत्तिविनाशत्वं हेतुत्वेनाभिप्रेतं तस्य स्वाप्नपदार्था असन्तः अनादिनित्यत्वरहितत्वे सति वासनाभिन्नानुपादनकत्वाच्छुक्तिरजतादिवदिति पराभिप्रेतप्रतिपक्षानुमाने बाधाप्रयोजकत्वप्रदर्शनार्थमिदं सूत्रमित्याशयेन साधनान्तराभावेऽ-पीत्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे– **ननु यदीत्यादिना** ॥ यद्वा स्वाप्नपदार्था न बाह्यमृदाद्युपादानका बाह्यार्थक्रियासामर्थ्यरहितत्वादित्यनुमानस्य तर्कपराहतिपरिहारार्थं सूत्र-मित्याशयेनापादनस्याप्रयोजकत्वं तदुपपादनाय सत्त्वस्यान्यथासिद्धिं च तत्प्रतिपादनाय साधनान्तराभावे अपीत्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे– **ननु यदीत्यादिना** ॥ न चाकाशादौ ज्ञानादौ च व्यभिचारः । अनादिनित्यत्वरहितत्वे सतीति विशेषणस्य बाह्यपदस्य

(भावबोधः)

वासनाभिन्नार्थकत्वस्य विवक्षितत्वादिति भावः । अशुभलक्षणाभावसूचकत्वे भाष्ये उपलक्षकत्वे-नाभिप्रेतां श्रुतिमाह– **एवमिति ॥ इति सूचितमिति शेष इति ॥** तथा च न केवलं शुभाशुभ-सूचकत्वं श्रुतिसिद्धम् । किं तु दर्शनार्थाच्च प्रत्यक्षादपि सिद्धमित्यर्थ इति भावः । **अन्यथाज्ञातस्येति ॥** 'आदित्यो दृश्यते' इत्यधिष्ठानप्राधान्येनोक्तेरेवमुक्तम् ।

वस्तुतस्तु 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकम्' इत्यनुव्याख्यानोक्तरीत्याधिष्ठानस्यान्यथात्वज्ञानमेव सूचकमिति ज्ञातव्यम् । ननु विद्यमानस्या-प्यधिष्ठानस्यानुक्तिः सम्भवतीत्यत आह– **न चाधिष्ठानमिति ॥** सूत्रक्रमस्तु– प्रथमसूत्रे स्वाप-पदार्थानां सत्त्वसिद्ध्यर्थं सृष्टिनिरोधोक्तिः । सृष्टिनिरोधयोः कर्तृसापेक्षत्वात् द्वितीये तदुक्तिः । तृतीये सृष्टिहेतुभूतोपादानाद्युक्तिः । तृतीयसूत्रेण 'अनभिव्यक्तस्वरूपत्वात्' इति बाह्योपादान-कत्वाभावोक्तावेव प्रतिपक्षानुमानोत्थानात् । चतुर्थे– **तस्य बाधप्रयोजकत्वोक्तिरिति ॥**

## भावदीपः

**तेषां सत्त्वं न प्राप्नोतीति ॥** अजन्यत्वजन्यत्वकल्पितत्वपक्षेषु अजन्यत्वस्य प्राङ्निरासा-ज्जन्यानां करितुरगादीनां बाह्योपादानकत्वोपलंभेनात्र तदभावे जन्यत्वायोगेन कल्पितत्वमेव परिशेषात्प्राप्नोतीत्यर्थः **॥ भाष्यं व्याचष्टे ॥** स्वप्नेत्यादिना ॥ **भावाभावेति ॥** भूत्यभूतीत्यर्थः । इत्यादीति भाष्यस्थादिपदोपात्तामशुभसूचकत्वश्रुतिं स्वयमाह **॥ एवमिति ॥** ननु कथं स्वाप्नार्थानां शुभाशुभसूचकत्वेन सत्यत्वं यदेति च्छान्दोग्यश्रुतौ पुरुषं कृष्णमित्यैतरेयश्रुतौ च स्त्रियं पश्यतीति कृष्णं कृष्णदन्तं पश्यतीति स्त्रीकृष्णकृष्णदन्तादिपुरुषदर्शनस्यैव समृद्धिमिति न चिरमिव जीविष्यतीति शुभाशुभसूचकत्वोक्त्याऽर्थानां तत्सूचकत्वानुक्तेः । न च ज्ञानस्य सूचकत्वेऽप्यर्था-वच्छिन्नस्यैव सूचकत्वेन विशेषणीभूतार्थानामपि तत्प्राप्तमिति वाच्यम् । रज्जुसर्पादिज्ञानस्य भयकम्पनादिजनकत्वमिवार्थानवच्छिन्नस्यैव ज्ञानस्य शुभादिसूचकत्वोपपत्तेः । यथोक्तं न्यायामृते । असतः साधकत्वाभावे बाधकोद्धारवादे पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादिश्रुत्या ज्ञानमेव सूचकं अन्वयव्यतिरेकाभ्यां च स्वाप्नकामिन्यादिज्ञानमेवार्थक्रियाकारीत्युपपत्तेरिति । तथा वस्तुतस्तु अर्थानवच्छिन्नज्ञानमेव हेतुरित्यादि च । उक्तं चानुभाष्ये सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकमिति ज्ञानपादे । न च तत्र सर्पादिरर्थस्यासत्त्वादस्तु

(भावदीपः)

ज्ञानमेवार्थक्रियाकारि न त्विहेति युक्तम् । अन्योन्याश्रयापत्तेरिति चेन्मैवम् । स्वाप्नार्थानां शुभाशुभयोर्लिङ्गतयाऽनुमापकत्वात् । लिङ्गे च ज्ञानमात्रस्य लिङ्गाभासेऽपि सत्त्वेन व्यभिचाराज्ज्ञातलिङ्गस्यैवानुमापकत्वात् । उक्तं च तस्मिन्नेव वादे । न चैवमनुमितिं प्रत्यपि हेतुव्याप्त्यादिज्ञानमेव कारणं न तु हेत्वादिरिति वाच्यम् । ज्ञानमात्रस्य हेत्वाभासेऽपि सत्वादिति । प्रमाणपद्धतौ च लिङ्गज्ञानं वा ज्ञातलिङ्गं वा कारणमित्युक्तम् । ज्ञानमेव सूचकमित्यादिन्यायामृतोक्तिस्तु परमतत्वेन वाऽभ्युपेत्यवादेन वा ज्ञाने स्वतो व्यावर्तकविशेषवत्त्वोपपादनाय वेति ॥ **इति सूचितमिति** ॥ प्रत्यक्षेण फलोपलंभाच्चेति सूचितमित्यर्थः । सूचकत्वहेतोर्व्यभिचारमाशङ्क्य निराह ॥ **न च मन्तव्यमिति** ॥ **अन्यथाज्ञातस्येति** ॥ विपरीतप्रकारज्ञानाभ्यामुपलक्षिताधिष्ठानस्य वा विपरीतप्रकारोपलक्षितज्ञानविशिष्टाधिष्ठानस्य वेत्यर्थः । अन्यथाऽऽदित्ये चन्द्रमस्त्वं यः पश्यतीति श्रौतनिर्देशापत्तेरिति भावः । एतेन वराह 'एनं हन्ति मर्कट एनमास्कन्दयति' इत्यादिना स्वप्ने असतो जाग्रत्त्वादेरशुभसूचकत्वमस्तीति निरस्तम् । तत्रास्कन्दयितृबाह्यवराहादितादात्म्येन ज्ञानस्य वासनामयसूक्ष्मसत्यवराहादेरेव सूचकत्वादिति । सर्पभ्रमादावपि हीत्याद्यनुभाष्यं तु परमतरीत्या वा अभ्युपेत्यवादेन वा ज्ञानान्यर्थबहिर्भविनैव स्वतो व्यावर्त्यादिरूपार्थक्रियादिमन्ति न तु न्यायमतादाविव विषयोपाधिमपेक्ष्येति न्यायव्युत्पादनार्थं वा प्रवृत्तमिति भावः । न्यायामृते च ज्ञानस्यैवार्थसाधकत्वादिप्रपञ्चनं सर्पभ्रमादावपि हीत्याद्यनुभाष्योक्तसमर्थनायेति बोध्यम् ॥ **अत इति** ॥ स्वाप्नार्थानामुक्तदिशा सत्यत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

तुशब्देन नान्येन साधनेनेति । सन्ध्यस्य बाह्यकारणकत्वं निषिध्य कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादिति तत्र हेतुरुक्तः । तत्र तर्कबाधमाशङ्क्य तत्परिहारार्थं सूचकश्चेति सूत्रमित्याशयेनापादकस्य प्रयोजकत्वं तदुपपादनाय सत्वस्यान्यथासिद्धिप्रतिपादनाय साधनान्तरभावेऽपीत्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे ॥ **ननु यदीत्यादिना** ॥ न च तर्कस्याकाशादावन्वयतो व्यभिचारः, व्यतिरेकतोऽज्ञानादौ व्यभिचार इति वाच्यम् । अनादिनित्यत्वरहितत्वे सतीति विशेषणस्य बाह्यपदस्य वासनाभिन्नार्थकत्वस्य च विवक्षितत्वादिति भावः । सूत्रे आद्यश्चो हेतौ । हिशब्दोऽनुभवप्रसिद्धिद्योतकः । स्वाप्नार्थ इति प्रकृतम् । नासत्य इति शेषः । ततश्च

(वाक्यार्थमुक्तावली)

यस्मात्स्वाप्नोऽर्थः शुभाशुभसूचकस्तस्मान्नासत्यः । न चासिद्धिः । श्रुतेरनुभवात् । यस्मात्तद्विदः तथाचक्षते तस्माच्च स्वप्नः सूचक इति सूत्रार्थं मनसि निधाय व्याचष्टे । **स्वप्नविषयाणामिति** ॥ अप्रयोजकत्वपरिहाराय विपक्षे हेतूच्छित्तिमाह ॥ **न हीति** ॥ अशुभसूचकत्वे आदिपदोपात्त-श्रुतिमाह ॥ **एवमिति** ॥ **अन्यथाज्ञातस्याधिष्ठानस्येति** ॥ आदित्यो दृश्यते इत्येतदनुसारेण कर्मप्राधान्येनेयमुक्तिः । 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि' इत्यनु-व्याख्याने तु क्रियाप्राधान्येन । अतो न विरोधः ॥ **न चैवमिति** ॥ चन्द्रमा इवेतिवत् स्त्रियमिवेतीवशब्दशिरस्कतया नोक्तिरस्ति । नाप्यादित्य इतिवदधिष्ठानस्योक्तिरित्यर्थः । ननु विद्यमानस्याप्यनुक्तिसम्भवादधिष्ठाननुक्तावपि तत्सत्वं किन्न स्यादित्यत आह ॥ **नापीति** ॥

अत्रेदं चिन्त्यते ॥ स्वप्नशाकुनयोः सूचकत्वं नाम ज्ञापकत्वमात्रं वा कारकत्वमपीति वा । तत्र केचिद्दुःस्वप्नस्य दुरदृष्टजनकत्वाभावे उपोष्य पायसं स्थालीपाकं स्रपयित्वा रात्रीसूक्तेन प्रत्युचं हुत्वेत्यैतरेये प्रायश्चित्तविधानं, भागवते च 'दुःस्वप्ननाशं कुरुवर्य श्रुण्वताम्' इति 'शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तय' इत्यादौ च दुःस्वप्ननाशाय प्रायश्चित्तोक्तिर्न स्यात् । किञ्च स्वप्नकाले सूचकत्वाभावात् प्रबोधानन्तरं स्वप्नाभावात्तत्स्मरणस्य सूचकत्वे स्वप्नस्यार्थक्रिया-कारित्वाभावप्रसङ्गात् । यदा स्त्रियं स्वप्नेऽभिपश्यति तत्र स्वप्नाख्ये सामग्रीदर्शनेन समृद्धिं तत्कार्यभूतां जानीयादिति तदर्थोपपत्तेः । माण्डूकभाष्ये स्वप्नबद्धस्तैजस इति स्वप्नस्य बन्धकत्वो-क्तेश्च । दधिदूर्वादिदर्शनादिवत्स्वप्नादेः कारणत्वं वर्णयन्ति । वस्तुतस्तु प्रायश्चित्तविधीनां स्वप्न-सूच्यदुरदृष्टवारकत्वेन स्वप्नजन्यादृष्टनाशकत्वायोगात् स्वप्नस्यैतद्बुद्धिपूर्वमनुत्पन्नत्वेन बाले क्रियावत् अदृष्टजनकत्वायोगात् दुःस्वप्नाद्युपशान्तये इत्यत्र तत्सूच्यादृष्टस्यैव विवक्षितत्वात्, स्वाप्नशाकुनयो-र्धूमवदनुमापकत्वेन ज्ञानकारणत्वात्, स्मृतस्य स्वप्नसूचकत्वोपपत्तेः, स्वप्नस्य बन्धकोक्तेरपि अवस्थानत्वेन बन्धकत्वविषयत्वादिति यत्किञ्चिदेतत् । सूत्रक्रमस्तु सृष्टौ सिद्धायां कारणत्वविचार इति । अत्राद्ये स्वप्नस्य सृष्ट्युक्तिः । द्वितीये तत्प्रधानकर्तुरुक्तिः । तृतीये तदुपादाननिमित्तयोः । तुशब्देन साधनान्तराभावस्य । चतुर्थे साधनान्तरनिषेधकानुमानस्य तर्कबाधोद्धार इति ।

## तत्त्वसुबोधिनी

ननु त्रिसूत्र्या सर्वशङ्कोद्धारेण स्वाप्नपदार्थानां सत्यत्वस्य व्यवस्थापितत्वात् सूचकश्चेति सूत्रं किमर्थमित्यतो यत्प्रथमसूत्रे स्वाप्निकपदार्थानां सत्यत्वे उत्पत्तिविनाशवत्वं हेतुत्वेनाभिप्रेतं तस्य

(तत्त्वसुबोधिनी)

स्वाप्नपदार्थाः असन्तः अनादिनित्यत्वरहितत्वे सति वासनाभिन्नानुपादानकत्वात् शुक्तिरजतवदिति पराभिप्रेतप्रतिपक्षानुमाने बाधाप्रयोजकत्वप्रदर्शनार्थं इदं सूत्रमित्याशयेन साधनान्तराभावेऽपीति भाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे ॥ **ननु यदीति** ॥ यद्वा स्वाप्नपदार्थाः न बाह्यमृदाद्युपादानकाः बाह्यार्थक्रियासामर्थ्यरहितत्वात् इत्यनुमानस्य तर्कपराहतिपरिहारार्थं सूत्रमित्याशयेनापादकस्योक्तप्रयोजकत्वं तदुपपादनाय सत्वस्यान्यथासिद्धत्वप्रतिपादनाय साधनान्तराभावेऽपीति भाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे ॥ **ननु यदीत्यादिना** ॥ न चाकाशादौ ज्ञानादौ च व्यभिचारः । अनादिनित्यत्वरहितत्वे सतीति विशेषणस्य बाह्यपदस्य वासनाभिन्नार्थकत्वस्य च विवक्षितत्वादिति भावः । असत्त्वेऽपि शुभाशुभसूचकत्वं किं न स्यादित्यत आह ॥ **न हीति** ॥ अशुभलक्षणाभावसूचकत्वेन भाष्ये उपलक्षणत्वेनाभिप्रेतां श्रुतिमाह ॥ **एवमिति ॥ इति सूचितमिति शेष इति** ॥ तथा च न केवलं शुभाशुभसूचकत्वं श्रुतिसिद्धं किन्तु दर्शनाच्च प्रत्यक्षादपि सिद्धमित्यर्थ इति भावः ॥ **अन्यथाज्ञातस्येति** ॥ आदित्यो दृश्यत इत्याद्यधिष्ठानप्राधान्योक्तेरेवमुक्तं । वस्तुतस्तु अधिष्ठानस्यान्यथाज्ञानमेव सूचकमिति ज्ञातव्यम् ।

ननु प्रकृतेऽपि स्वाप्नपदार्थानां शुभाशुभसूचकत्वं कुतः अन्यथाज्ञातस्यैवाधिष्ठानस्येव तत्किं न स्यादित्यत आह ॥ **न चैवमिति** ॥ चन्द्रमा इवादित्यो दृश्यत इतिवत् प्रकृते उक्तिर्नास्तीति भावः । ननु विद्यमानस्याप्यधिष्ठानस्यानुक्तिः किं न स्यादित्यत आह ॥ **न चात्रेति** ॥ अधिष्ठानं हि भगवदात्मान्यद्वा आत्मा वा । नाद्यः, अनङ्गीकारात् । न द्वितीय इत्याह ॥ **आत्मन इति** ॥ स्वाप्नपदार्थेभ्यः पृथगहमिति प्रतीतेरित्यर्थः । अन्यथा हि अहं घटादिरिति प्रतीतिः स्यादिति भावः । अत्राद्यसूत्रे स्वाप्नपदार्थानां सत्त्वसिद्ध्यर्थं सृष्टिनिरोधयोः कर्तृसापेक्षत्वाद्द्वितीये तदुक्तिः । तृतीये सृष्टिहेतुभूतोपादानाद्युक्तिः । चतुर्थे प्रतिपक्षानुमानस्य बाधाप्रयोजकत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**बाह्यार्थेति** ॥ बाह्यो जाग्रत्कालीनोऽर्थो मृदादिपदार्थः ॥ **श्रुतिश्चेति** ॥ स्वाप्नार्थानामशुभसूचकत्वपरेति शेषः । तेन न न्यूनतेति भावः ॥ **भाष्ये दर्शनाच्चेति** ॥ स्वाप्नशुभाशुभजन्यफलस्य प्रत्यक्षसिद्धत्वाच्चेत्यर्थः ॥ **श्रूयत इति** ॥ न चिरमिव जीविष्यतीति विद्यादित्यशुभसूचकत्वं श्रूयते । एवं भ्रान्तस्यापि स्वप्नस्य भावाभावसूचकत्वं युक्तमित्यर्थः ॥ **अन्यथेति** ॥

(वाक्यार्थविवरणम्)

चन्द्रत्वादिना ज्ञातस्यादित्यादिरूपाधिष्ठानस्यैवेत्यर्थः ॥ **न चैवमत्रेति** ॥ चन्द्रमा इवादित्य इत्यादिवत्स्वप्नस्याधिष्ठानानुक्तेः स्वप्न एव सूचक इत्यर्थः । विद्यमानस्याप्यधिष्ठानस्यानुक्तिः किं न स्यादित्यत आह ॥ **न चात्रेति** ॥ अत्र स्वप्ने वस्तुगत्येति शेषः । तथा चाभावादेवानुक्तिरिति भावः । आत्मैवाधिष्ठानमस्तीति चेत् तत्राह ॥ **आत्मन इति** ॥ पृथक् आरोप्यभूतस्वप्रा-सम्भिन्नतयेत्यर्थः । न हि भ्रमकालेऽधिष्ठानमारोप्यासम्भिन्नतया प्रतीयत इति भावः ।

## वाक्यार्थमञ्जरी

स्वाप्नविषयशुभाशुभयोः सूचकः ज्ञापकश्च यस्मात्तस्मान्नासत् । कुतः ? यदा कर्मेति श्रुतेः तद्विदः स्वाप्नपदार्थज्ञास्तथा कथयन्ति चेत्यर्थः । **शाकुनं** कन्यादिकम् । अशुभलक्षणाभावसूचिकां श्रुतिं स्वयमुदाहरति ॥ **एवमिति** ॥ स्वप्ने एतादृशं पुरुषं पश्यति तदा स पुरुष एनं हन्ति हननसूचको भवतीत्यर्थः ॥ **इति सूचितमितीति** ॥ तथा च न केवलं शुभादिसूचकत्वं श्रुतिसिद्धं किन्तु दर्शनाच्च प्रत्यक्षादपि सिद्धमित्यर्थ इति भावः ॥ **भ्रान्तार्थस्येति** ॥ आदित्याद्यारोपित-चन्द्रादेरित्यर्थः । अस्य शिरो वायतिसम्परेतोस्यात्मा न चिरमिव जीविष्यतीति विद्यादिति वाक्यशेषेण मरणादिसूचकत्वोक्तेरिति भावः ॥ **अन्यथाज्ञातस्येति** ॥ चन्द्रत्वादिना ज्ञातस्या-दित्यादेरित्यर्थः । इदं चादित्यो दृश्यत इति अधिष्ठानप्राधान्योक्त्यनुसारेणोक्तम् । वस्तुतस्त्व-धिष्ठानस्यान्यथात्वज्ञानमेव सूचकम् । सर्पभ्रमादावपि हि ज्ञानमस्त्येव ताद्दशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकमित्यनुव्याख्यानोक्तेरिति ध्येयम् । उक्तिः अधिष्ठानस्य । ननु विद्यमानस्याप्य-धिष्ठानस्यानुक्तिः सम्भवतीत्यत आह ॥ **न चेति** ॥ **पृथगिति** ॥ न हि शुक्तिकाशकलं रजतात्पृथक् प्रतीयत इत्यर्थः ।

॥ इति सन्ध्याधिकरणम् ॥ १ ॥

## २. पराभिध्यानाधिकरणम्

**॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥ ५ ॥**

बन्धमोक्षप्रदत्वात्स एव स्वप्नतिरस्कर्ता ।

'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।
तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठिता'विति कौर्मे ॥

### तत्त्वप्रदीपिका

यदभिध्याननिबन्धनोऽनादिबन्धस्तद्विमोक्षश्चातिदुरापोऽनन्तकालीनः स्वप्नतिरोधानादिशक्तिः किं तस्य वर्णनीया? अतः स एव स्वप्नतिरस्कर्ता ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य स्वप्नतिरोधायकत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । यदि न तस्यायं महिमा निरूप्यते न तर्हि तत्र निरतिशया भक्तिर्जायत इति वर्णनीयः । प्रकृतः स्वप्नस्य तिरोभावो विषयः । भगवदधीनो न वेति सन्देहः । सर्वस्य तदधीनत्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजम् । न भगवदधीनः स्वप्नतिरोभाव इति पूर्वः पक्षः । बाह्याज्ञानादेव स्वप्नः प्रतीयते । अतस्तद्विज्ञानादेव तत्तिरोभावोऽप्युपपद्यते । शक्तिर्ह्येषा ज्ञानस्य यत्समानविषयाज्ञानं नाशयतीति । अत आलोकेन तमोवज्ज्ञानेनैवाज्ञानस्य निवृत्त्या तन्निमित्तस्वप्नप्रतीत्युपरमे किमीश्वरेणेति न तस्यातिमाहात्म्यमिति ।

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **परेति** ॥ परमेश्वरेच्छयैव स्वप्नतिरोधानं न विज्ञानेन । न चाज्ञाननिमित्तत्वात्स्वप्नप्रतीतेस्तत्तिरोधानं ज्ञानेन युक्तमिति वाच्यम् । अज्ञाननिमित्तो बन्धो ज्ञाननिमित्तश्च मोक्षः सुप्रसिद्धः । न च तथापि बन्धमोक्षौ ज्ञानाद्यधीनौ । ज्ञानाज्ञानयोरचेतनत्वेनास्वातन्त्र्यात् । अतो 'बन्धको भवपाशेन भवपाशाच्च मोचकः' इत्यादेर्भगवदधीनावेव । तथा ज्ञानाज्ञाननिमित्ततया प्रतीतयोरपि स्वप्नाविर्भावतिरोधानयोः परमात्माधीनत्वमेव । ज्ञानाज्ञानयोरस्वातन्त्र्यात् । ते तु निमित्तमात्रमिति भावः । नेदं दृष्टान्तमात्रमिति भावेनात्र स्मृतिं चोदाहरति ॥ **स्वप्नादीति** ॥ अतः स्वप्नतिरोधानस्यापि भगवदधीनत्वसिद्धेस्तस्य महामहिमत्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ।

## भावबोधः

**स्वप्नतिरोधायकत्वमहिम्न इति ॥** पूर्वाधिकरणे स्वप्नप्रदर्शकत्वमभिधायानन्तरं तत्तिरोभावकत्वं विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **भगवदधीन इति ॥** अत्र स्वप्नतिरोभावो भगवदनधीन उत तदधीन इति चिन्ता । तदर्थं बाह्यविज्ञानस्य स्वातन्त्र्येण स्वप्नतिरोधायकत्वमस्त्युत नेति । तदर्थं बाह्यविज्ञानस्यैव स्वाप्नप्रतीतिहेतुत्वमस्त्युत नेति । तदर्थं बन्धमोक्षयोरज्ञानज्ञानाधीनत्वमेवोत नेति । अविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्नतिरोधानं नेशेनेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **बाह्याविज्ञानादेवेत्यादिना ॥** ननु पूर्वाधिकरणे भगवतः स्वप्नप्रदर्शकत्वमुक्तम् । यथोक्तं भाष्यादौ दर्शयतीति । अतोऽसिद्धो हेतुरिति चेत्, न; अन्वयव्यतिरेकाभ्यां विज्ञानस्यैव स्वप्नप्रतीतिं प्रति हेतुत्वसिद्धेस्तदप्यसंप्रतिपन्नमिति तदाक्षेपेण प्रवृत्तेरिति भावः । **ज्ञानाज्ञानयोर-चेतनत्वेनास्वातन्त्र्यादिति ॥** अनेन ज्ञानाज्ञानयोर्जडत्वादस्वातन्त्र्यादिति न्यायविवरणांश उक्तार्थो भवति ॥ **बन्धको भवपाशेनेति ॥** सर्वस्येशहेतुत्वे मानाच्चेति न्यायविवरणानुसारेणैवमुक्तम् । ननु तदाविर्भावतत्तिरोधानयोर्बाह्याविज्ञानतज्ज्ञानान्वयव्यतिरेकानुविधायित्वदर्शनविरोध इत्यतस्तन्मात्रनिमित्तत्वे मानाभावादिति न्यायविवरणानुसारेण तस्यान्यथासिद्धिमाह– **ते त्विति ॥**

## भावदीपः

**स्वप्नतिरोधायकत्वमहिम्नो वर्णनादिति ॥** स्वप्नतिरोधानस्य बाह्यज्ञानाधीनत्वशङ्कानिरासेनेति भावः । तेन सृष्टिराह हीत्यत्र प्राक् सृष्टिपदेनोपलक्षणतयोपात्तः स्वाप्नविषयाणां निरोधोऽस्तु न तु तस्य सृष्टेरिवेशाधीनत्वं तेन विनापि बाह्यज्ञानेनैव तन्निरोधोपपत्तेरित्याक्षेपात्पूर्वसङ्गतिः सूचिता । भक्त्यर्थमित्युक्तं व्यनक्ति ॥ **यदीति ॥** एवमग्रेऽपि ॥ **प्रकृत इति ॥** उपलक्षणतया सृष्टिपदेन प्रकृत इत्यर्थः ॥ **सर्वस्येति ॥** पूर्वनयेष्विति भावः । यद्वा तत्रापि च तद्व्यापारादिति सूत्रे सर्वं प्रवर्तयतीत्यादिभाष्योक्तश्रुतौ सर्वस्य तदधीनत्वोक्तिरित्यर्थः । अविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञान-शक्त्यैव स्वप्नतिरोधानं नेशेनेत्यन्यत्रोक्तं पूर्वपक्षं व्यनक्ति ॥ **न भगवदिति ॥** बाह्याज्ञानादेवेत्येव-कारेण मात्रशब्दार्थो व्याख्यातः । हिशब्देनान्वयव्यतिरेकप्रसिद्धत्वं वा यच्चक्षुषि स्थितं रूपं विष्णोश्चक्षुस्तदुच्यते । शब्दादेरप्यापरोक्ष्ये तद्धेतुर्विश्वनामकम् । 'तद्गतस्य ततो विष्णोः कण्ठस्थानागमो यदा । तदा स्वप्नो भवेज्जाग्रद्दर्शनं नैव जायते । चक्षुर्निमीलनं च स्यात्सर्वेन्द्रिय-

(भावदीपः)

गुणैस्सह' इति षष्ठबृहद्भाष्योक्तप्रसिद्धत्वं वोच्यते । न स्वप्नोऽपि तं विना प्रतीयत इत्यादिना प्रागुक्तदिशा परमेश्वरेण जीवस्य प्रतीयमानोऽपि स्वप्नो बाह्याज्ञानादेव निमित्तात्प्रतीयते न तु तज्ज्ञानान्नापि निमित्तान्तरादित्यर्थः । ततश्च किमित्यत आह ॥ **अत इति** ॥ अज्ञानमात्र-हेतुकत्वादित्यर्थः । कथमित्यतो ज्ञानशक्त्यैवेत्युक्तशक्तिपदतात्पर्यमाह ॥ **शक्तिर्हीति** ॥ **अत इति** ॥ ज्ञानस्याज्ञाननिवृत्तावन्यानपेक्षत्वादित्यर्थः ॥ **किमीश्वरेणेति** ॥ स्वाप्नार्थप्रदर्शनादिकार्यं कुर्वन्नपीश्वरः स्वयमीश्वरोऽपि साधनान्युपादायैव साध्यमार्जयति न तु तानि विनापीत्यर्थस्य तदनन्यत्वनये युक्तेः शब्दान्तराच्चेत्यत्र सिद्धत्वात् अत्र च बाह्यज्ञानेन च स्वप्नप्रतीतिनिमित्तस्या-ज्ञानस्यापगमे निमित्ताभावादेव तत्प्रतीत्युपरमोपपत्तौ नेश्वरेण तत्र कृत्यमस्तीत्यर्थः । बन्धेत्यादि-भाष्यं सूत्रारूढं दर्शयन् सूत्रार्थमाह ॥ **परमेश्वरेच्छयैवेति** ॥ स एवेत्युक्तेः सौत्रस्तुशब्दोऽ-वधारणार्थो व्याख्यातः । तद्व्यावर्त्यं **न विज्ञानेनेति** ॥ ईश्वर विना कृतेन विज्ञानेनेत्यर्थः । पूर्वस्मात्संध्यमित्यनुवर्तत इति भावः ।

ततो ह्यस्येत्यादिशेषं भाष्ये हेतुतयोपात्तमपि यदभिध्याननिबन्धनोऽनादिबन्धमोक्षः स्वप्र-तिरोधानशक्तिः किं तस्य वर्णनीया अतः स एव स्वप्रतिरस्कर्तेत्यादिना तत्त्वप्रदीपे स्पष्टं व्याख्यानाद्वा वक्ष्यमाणस्मृत्यनुरोधेन स्फुटत्वाद्वा तदभिध्यानादित्यत्रोक्तरीत्या व्याख्यातप्रायत्वाद्वा तद्व्याख्यानमप्रदर्श्यान्यत्रोक्तज्ञानाज्ञानास्वातन्त्र्यरूपहेत्वन्वयाय बन्धादेरीशाधीनत्वं विवृण्वन्नेव दृष्टान्तपरतयापि प्रागुक्तव्यावर्त्यशङ्कापूर्वं व्याचष्टे ॥ **न चेत्यादिना** ॥ **अज्ञाननिमित्तो बन्ध इति** ॥ ईश्वराज्ञानेत्यर्थः । सौत्रहिशब्दार्थः सुप्रसिद्ध इति । 'अनादिमायया सुप्तः' इत्यादौ 'विद्यया च विमुच्यते' इत्यादौ चेत्यर्थः । सुतरामस्वातन्त्र्यं वक्तुमचेतनत्वेनेत्युक्तम् । चेतनत्वे कर्तेत्यत्रोक्त-न्यायेन कथञ्चिदीशाधीनस्वातन्त्र्यसम्भवादिति ॥ **अत इति** ॥ ज्ञानाद्यधीनत्वायोगादित्यर्थः । सौत्रो हिशब्दः प्रमाणसूचकश्चेति भावेनाह ॥ **बन्धको इति** ॥ **इत्यादेरिति** ॥ तत्वनिर्णयोक्त-वाक्यादित्यर्थः ॥ **भगवदधीनावेवेति** ॥ एतेन भाष्योक्तहेतुसमर्थनमपि कृतं भवति ॥ **तथेति** ॥ भाष्ये सूत्रांशस्य बन्धमोक्षप्रदत्वादिति हेतुतया व्याख्यानमुपलक्षणमिति भावः । स्वप्नाविर्भावेति दृष्टान्तत्वेनोक्तिः प्रागेव तस्येशाधीनत्वसमर्थनात् । यद्वा दृष्टान्ते बन्धपदस्याप्युक्तेः स्मृतौ स्वप्नादिबुद्धीत्युपादानाच्च सूत्रे तिरोहितमित्युपलक्षणम् । पूर्वपक्षे चाविर्भावस्यापीशाधीनत्वाक्षेप इति भावः । अज्ञानाद्यधीनत्वप्रतीतेर्गतिमाह ॥ **ते त्विति** ॥ ज्ञानज्ञाने ॥ **नेदमिति** ॥ ततो

(भावदीपः)

ह्यस्येत्यादीत्यर्थः । स्वकृतव्याख्यानदिशेति भावः । किं तु हेत्वर्पकमपीति भावेनेति योज्यम् ॥ **स्मृतिं चेति** ॥ बन्धमोक्षप्रदत्वादिति स्वकृतव्याख्यानेन समुच्चये चशब्दः । अत एवोत्तरार्धे यतो ह्यस्येति हेतुत्वेनोक्तिरिति भावः । अस्मिन् पक्षे सौत्रो हिर्हेतौ ॥ **अत इति** ॥ अस्वतन्त्रतया ज्ञानादेर्निमित्तमात्रत्वात् । अनादिबन्धादिदातृत्वेनेशस्यैव शक्तत्वादित्यर्थः । न केवलमाविर्भावस्येत्यपेरर्थः । अत्र यद्यपि तदभिध्यानादेव तु तल्लिङ्गात्स इत्यत्रानादिबन्धलयकर्तुरीश्वरस्य कैमुत्यसिद्धविश्वलयसामर्थ्येन विश्वसंहर्तृत्वं तस्यैवेत्युक्त्वा 'रुद्रो माविशान्तकः' इत्यादेः 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भश्शर्वश्च कालाख्या रूपिणस्तव' इत्यादिना निमित्तमात्रपरत्वोक्त्या ज्ञानादेर्जडत्वेनात्यन्तपारतन्त्र्यान्निमित्तमात्रत्वं कैमुत्यसिद्धमिति न पुनरस्यारम्भो युक्त इति भाति । तथापि स्वप्राविर्भावस्य बाह्याज्ञानाधीनत्वाद्बाह्यज्ञाने चाज्ञानरूपनिमित्तनाशेनाविर्भावरूपकार्यस्यानुदये तिरोधानस्य स्वत एव सिद्धेर्नेशेन कृत्यम् । तस्यापि निमित्तापेक्षयैवाविर्भावकत्वादिति विशेषशङ्कायां तथा प्राग्बन्धलयस्येशाधीनत्वोक्त्या तस्य विश्वसंहर्तृत्वोक्तिरयुक्ता । बन्धस्याज्ञानाधीनत्वेन ज्ञानेनाज्ञाने निवृत्ते बन्धलयस्य स्वत एव सिद्धेस्तस्येश्वरानधीनत्वात् तस्याभिध्यानादिति श्रुतिरपि अद्वैत्याद्युक्तदिशा कथञ्चिदन्यथा योज्येत्यप्याशङ्कायां च सत्यां ज्ञानाज्ञानयोर्जडत्वेनास्वातन्त्र्याद्बन्धमोक्षयोर्द्वयोरपीशाधीनत्वमेव । 'बन्धको भवपाशेन' इत्यादेरित्याद्युक्त्या तस्यापीशाधीनत्वोक्त्या ईश्वरस्यैव स्वप्रतिरोधायकत्वं वक्तुमस्यारम्भः । अत एव टीकायां ज्ञानाद्यस्वातन्त्र्यहेतोर्दृष्टान्ते दार्ष्टान्तिके च संयोजनं कृत्वा बन्धादेरपीशाधीनत्वसमर्थनं कृतम् । उक्तं चानुभाष्ये जिज्ञासानये 'नर्ते त्वत्क्रियते किञ्चन' इत्यादेर्न हरिं विना । 'ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्याऽपि हि क्वचित्' इति यज्जन्मादिनयादावीश्वरस्य सर्वसंहारबन्धमोक्षाणां कर्तृत्वमुक्तं तदत्राज्ञानादेरस्वातन्त्र्योक्त्या एकेश्वरात्स्वाप्रार्थतत्प्रतीतितिरोधायनोक्त्या च समर्थितं बोध्यम् ।

## अभिनवचन्द्रिका

बन्धग्रहणं शक्यमकर्तुं 'पराऽभिध्यानात्तु तिरोहितं ततो ह्यस्य मोक्ष' इत्येव कर्तुं शक्यत्वात् । लघुचैवं सूत्रं भवति । अवश्यज्ञापनीयस्य ज्ञानास्वातन्त्र्यस्य मोक्षग्रहणेनैव सिद्धेः । बन्धस्य तु ज्ञानकार्यत्वाभावेन तद्ग्रहणस्य प्रकृताऽसङ्गतत्वादिति चेत्, सत्यं बन्धग्रहणं न प्रकृतोपयोगि तथापि

(अभिनवचन्द्रिका)

लोके पितुरन्यस्यैव मारकत्वदर्शनात् स्वाप्नपुत्रादीनां भगवानेव कर्तेति न तेषां निरोधकः । ततश्च न तेन स्वप्ननिवृत्तिरिति शङ्का निरासाय लौकिकानां रागिणां तथात्वासम्भवेऽपि रागादिदोषरहितस्य भगवतो देहयोगरूपबन्धस्य, तद्वियोगरूपमोक्षस्य च हेतुत्वं दृष्टमेवेति न स्वप्ननिरोधकत्वमनुपपन्नमिति द्योतनाय बन्धग्रहणम् । स्वप्नस्य तिरोभाव इति । स्वप्नज्ञानसन्ततिविच्छेद इत्यर्थः ॥ **तथा ज्ञानाऽज्ञानेति** ॥ अल्पाच्तरत्वेन ज्ञानशब्दस्य पूर्वनिपातात् यथायोगमेव निमित्तत्वं न तु यथाक्रममिति द्रष्टव्यम् ॥ **नेदं दृष्टान्तमात्रमिति** ॥ दृष्टान्तशब्देन दृष्टान्तयुक्तमनुमानमुच्यते ततश्च नेदं धूमाद्यनुमानवत् अनुमानमात्रम् । अपि तु स्मार्तमिति भावेन स्मृतिमाहेत्यर्थः ।

पूर्वपक्षस्तु न स्वप्नतिरोभाव ईश्वराधीनः । तस्य बाह्याऽज्ञानजन्यत्वेन अज्ञाननाशे सन्तत्यनुत्पादसम्भवात् । तथा च ज्ञानेनाऽज्ञानविनाशद्वारा स्वप्नतिरोभावसम्भवात् न तस्य ईश्वराधीनत्वमिति न तस्य महामहिमत्वमिति ।

सिद्धान्तस्तु ज्ञानाऽज्ञानयोरचेतनत्वेन स्वातन्त्र्याभावात् ज्ञानाऽ ज्ञानाधीनयोरपि बन्धमोक्षयोरीश्वराधीनत्वात् स्वप्ननिरोधस्यापि तदधीनत्वेन तस्य महामहिमत्वात् युक्ता तत्र भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**स्वप्नतिरोधायकत्वेति** ॥ पूर्वाधिकरणे स्वाप्नपदार्थस्रष्टृत्वं तत्प्रदर्शकत्वं चोक्तम् । इह तु स्वप्नार्थानां पुनः संस्कारतापादकत्वलक्षणं तत्प्रतीत्युपरतिहेतुत्वलक्षणं च स्वप्नतिरोधायकत्वं वर्ण्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **भगवदधीन इति** ॥ स्वप्नतिरोधानो भगवदधीनो न भवत्युत भवतीति चिन्ता । तदर्थं बाह्यविज्ञानस्य स्वातन्त्र्येण स्वप्नतिरोधायकत्वमस्ति न वेति । तदर्थं बाह्याज्ञानस्य स्वप्नाविर्भावहेतुत्वमस्ति न वेति । सूत्रे बन्धमोक्षयोरज्ञानज्ञानाधीनत्वं नास्ति किन्त्वीश्वरस्यैवेति । तथा प्रकृतेऽपीत्युक्त्या सूचितमविज्ञानेत्युक्तन्यायं विशदयति ॥ **बाह्येति** ॥ एवेतीश्वरं व्यावर्तयति । अन्वयव्यतिरेकाभ्यामज्ञानस्य स्वप्नाविर्भावहेतुत्वावगमात् पूर्वाधिकरणस्याप्ययमेवाक्षेप इति भावः । ननु बाह्याज्ञानस्य स्वप्नाविर्भावहेतुत्वे बाह्यज्ञानस्य तत्तिरोधानहेतुत्वं कुतः व्याप्त्यभावादिति चेत् स्वप्नो बाह्यज्ञानतिरस्कार्यः तन्निवर्त्यबाह्याज्ञानेनाविर्भूयमानत्वात् यद्यन्निवर्त्याज्ञानेनानुभूयते तत्तज्ज्ञानतिरस्कार्यम् । यथा शुक्तित्वप्रकारकज्ञाननिवर्त्यशुक्त्य-

(वाक्यार्थमुक्तावली)

ज्ञानेनाविर्भूयमानो भ्रमः तज्ज्ञानेन तिरस्कार्य इति प्रयोगस्य विवक्षितत्वादिति भावः । ननु बाह्यज्ञानेन निवर्त्यत्वं बाह्याज्ञानस्य नास्तीति विशेषणासिद्धो हेतुरित्यत आह ॥ **शक्तिर्ह्येपेति** ॥

ननु जन्माधिकरणे ज्ञानाज्ञानस्येशाधीनत्वस्योक्तत्वात्कथमत्र स्वातन्त्र्यशङ्केति चेत्तदेव कचिद्विविच्यते कचित्समर्थ्यत इति प्रागेवोक्तत्वादिति । ननु तथापि व्यतिरेकानवस्थितेश्वा-नपेक्षत्वादिति ईश्वरमन्तरेण कस्यापि कर्मणोऽनवस्थानोक्तेः कथं स्वप्नतिरस्कारस्यान्याधीनत्व-चोदनेति चेन्न । 'न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' इति तदुपात्तश्रुतेः सामान्याकारेण सर्वविषयत्वेन प्रत्यक्षसिद्धव्याप्तिकानुमानविरोधेन श्रुतेरेतद्व्यतिरिक्तविषयत्वोपपत्तेः । ज्ञानाज्ञानयोरीशजन्यत्वेन स्वप्नतिरस्काराविर्भावौ प्रतीशस्य परंपरया कारणत्वेन तद्विवक्षया प्रवृत्तेश्चेति भावः । सूत्रे सन्ध्यमित्यस्ति । तुरवधारणे । हिशब्दो बन्धमोक्षयोर्ज्ञानाज्ञाननिमित्तत्व-प्रसिद्धिद्योतकः, ईशाधीनत्वप्रसिद्धिद्योतकश्च, हेत्वर्थकश्च । तथा च हि यस्मात् हि ज्ञानाधीनत्वेन प्रसिद्धावपि बन्धविपर्ययौ तयोरचेतनत्वेनास्वातन्त्र्यात् । बन्धको भवपाशेन भवपाशाच्च मोचक इति प्रमाणप्रसिद्धेस्तत एवेश्वरादेव तदधीनावेव यतस्ततस्तस्माज्ज्ञानाज्ञानाधीनत्वेन प्रसिद्धयोरपि बन्धमोक्षयोस्तदधीनत्वात्तद्दृष्टान्तेनास्वातन्त्र्यहेतुना सन्ध्यमपि पराभिध्यानादेव तिरोहितमिति सूत्रार्थं मत्वा भाष्यार्थमाह ॥ **परमेश्वरेच्छयैवेत्यादिना** ॥ हिशब्दसूचितं स्वतोबोध इत्युक्तन्यायं स्वतःस्वातन्त्र्येण ज्ञानाज्ञानयोरबोधकत्वं स्वल्पप्रबोधहेतुत्वाभाव इति विवृणोति ॥ **ज्ञाना-ज्ञानयोरस्वातन्त्र्यादिति** ॥ ननु स्वप्नतन्निरोधयोर्बाह्याविज्ञानतज्ज्ञानान्वयव्यतिरेकानुविधायित्व-दर्शनविरोध इत्यत आह ॥ **ते त्विति** ॥ नेदं दृष्टान्तमात्रमित्यस्य स्वातन्त्र्येण हेतुना ज्ञानाज्ञानयोः स्वप्नतत्तिरोधानहेतुत्वं नास्तीत्येतदस्मदुत्प्रेक्षितदृष्टान्तमसिद्धं इत्येतावन्मात्रेण न भवतीति भावेनात्र सूत्रार्थे हिशब्दसूचितस्मृतिं चोदाहरतीत्यर्थः । यद्वा 'ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रं दृष्टान्तमात्रकथनपरं न भवतीति भावेनात्र सूत्रार्थे हिशब्दसूचितस्मृतिं चोदाहरतीत्यर्थः ।

## तत्त्वसुबोधिनी

**स्वप्नतिरोधायकत्वेति** ॥ पूर्वाधिकरणे स्वप्नप्रदर्शकत्वमभिधायानन्तरं तत्तिरोभावकत्वं विचार्यत इत्यनन्तरसङ्गतिरिति भावः । कुत इत्यतः प्रकारान्तरेण सिद्धत्वादित्याह ॥ **बाह्येति** ॥ एवं च विमतः स्वप्नतिरोभावः न भगवदधीनः अन्यतः सिद्धत्वात् । न च हेतुरसिद्धः, पूर्वाधिकरणे

(तत्त्वसुबोधिनी)

भगवतः स्वप्नप्रदर्शकत्वस्योक्तत्वादिति वाच्यम् । अन्वयव्यतिरेकाभ्यां विज्ञानस्यैक्यप्रतीतिं प्रति हेतुत्वसिद्धेः तदप्यसम्प्रतिपन्नमिति तदाक्षेपेण प्रवृत्तेरिति भावः । अस्तु बाह्यात् ज्ञानात् स्वप्नतिरोभावः भगवतः किं न स्यादत्राह ॥ **शक्तिर्हीति** ॥ अस्तु ततः किमित्यत आह ॥ **न चेति** ॥ कुतो नेत्यत आह ॥ **ज्ञानेति** ॥ तर्हि कस्याधीनावित्यत आह ॥ **अत इति** ॥ ननु स्वप्नतिरोधानयोः बाह्याज्ञानतज्ज्ञानान्वयव्यतिरेकानुविधायित्वदर्शनविरोध इत्यत आह ॥ **ते त्विति** ॥

## वाक्यार्थविवरणम्

**विशेपानुक्तिरिति** ॥ विशिष्य स्वप्नतिरोधानस्य भगवदधीनत्वानुक्तिरित्यर्थः ॥ **बाह्येति** ॥ बाह्यपदार्थेत्यर्थः । अज्ञाननिवृत्त्येत्यनन्तरं कारणाभावादेवेति शेषः ॥ **तदधीनत्वस्यैवेति** ॥ जागरणस्य प्रातरादिकालाधीनत्वस्यैवेत्यर्थः ।

## वाक्यार्थमञ्जरी

**विशेषानुक्तिरिति** ॥ स्वाप्ननाश ईशाधीन इति विशिष्यानुक्तिरित्यर्थः ॥ **समानविषयेति** ॥ स्वयं यद्विषय उत्पद्यते तद्विषयेत्यर्थः ॥ **ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ** ॥ परस्य परमात्मनोऽभिध्यानादिच्छायाः सकाशादेव सन्ध्यं तिरोहितं नश्यति । कुतः ? हि यस्मादस्य जीवस्य बन्धविपर्ययौ संसारमोक्षौ तत ईश्वरादेव भवतस्तस्मादेवेत्यर्थः ॥ **सुप्रसिद्ध इति** ॥ अनेन हिशब्दः प्रसिद्धत्वेनापि व्याख्यातः ॥ **दृष्टान्तमात्रमिति** ॥ प्रतिदृष्टान्तस्यापि सम्भवेन तन्मात्रस्यासाधकत्वादिति भावः ।

॥ इति पराभिध्यानाधिकरणम् ॥ २ ॥

## ३. देहयोगाधिकरणम्

**॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥**

देहयोगेन वासो जाग्रदपि तत एव ।

'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुरापाट् स एको बहुधा भवति'

इति कौण्ठरव्यश्रुतेः ।

### तत्त्वप्रदीपिका

स्वदेहाभिमानेन स्थितिर्जागरितमपि तदभिध्यानादेव । तुरापाट् वेगसहः वायुसहो वा ।

### तत्त्वप्रकाशिका

अत्र ईश्वरप्राप्तिसाधनभक्त्यर्थं जाग्रत्प्रवर्तकत्वमहिम्नो निरूपणादस्ति शास्त्रादिसङ्गतिः । अस्य च महिम्नोऽवर्णने न निरतिशया भक्तिरुत्पद्यत इति वर्णनीयः । स्वप्ननिरूपणसङ्गता जाग्रदवस्थाऽत्र विषयः । किमीश्वराधीना न वेति सन्देहः । पूर्वोक्तमेव सन्देहबीजम् । न जागरणमीश्वराधीनमिति पूर्वः पक्षः । तस्य कालाधीनत्वदर्शनात् । न च कालस्यास्वातन्त्र्याद्युक्तिः । तदधीनत्वस्य प्रत्यक्ष-सिद्धत्वात् । न चास्य प्रत्यक्षस्य बाधकमस्ति येन मन्यामहे भ्रान्तमिति । अतो जाग्रदवस्थाया भगवदधीनत्वाभावेन न महामाहात्म्यं तस्येति ।

सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **देहेति** ॥ देहाभिमानेन या स्थितिर्जीवस्य जाग्रदवस्था साऽपि पराभिध्यानादेव न कालतः । तस्याचेतनत्वेनास्वातन्त्र्यादिति भावः । जाग्रदवस्थायाः कालाधीनत्वप्रतीतेः कथमीश्वराधीनत्वमित्यत आह ॥ **स एवेति** ॥ कालस्यैव तत्प्रवर्तकत्वे श्रुतिविरोधान्निमित्तमात्रविषयं प्रत्यक्षमिति भावः । **तुराषाट्** वैरिवेगसहः । अतो हरेर्जाग्रत्प्रवर्तकत्वेन महामहिमत्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ॥

### गुर्वर्थदीपिका

करितुरगादिदर्शनस्य नानाविषयभोगस्य च स्वाप्नजाग्रदवस्थयोस्साम्यात्को विशेषस्तयोरित्यतः सहजदेहबाह्यदेहाभिमानाख्ययोगोऽस्ति जाग्रदवस्थायाम् । स्वप्ने तु नासाविति तयोर्विशेषं च

(गुर्व्रर्थदीपिका)

सूचयितुमल्पाक्षरतायां भगवानपि सूत्रकारः जाग्रदित्यनुक्त्वा 'देहयोगाद्वासोऽपि' इत्याहेति भावस्तु स्पष्टत्वान्न टीकायामुदाहृत इति द्रष्टव्यम् ।

## भावबोधः

**स्वप्ननिरूपणसङ्गतेति** । 'पराभिध्यानात्तु तिरोहितम्' इति स्वप्नतिरोधानोक्तौ तन्निमित्तत्वेन सङ्गतबाह्यज्ञानरूपजाग्रदवस्थाविचारादनन्तरसङ्गतिरिति भावः ॥ **किमीश्वराधीनेति** ॥ अत्र जाग्रदवस्था किमीश्वराधीना न भवत्युत भवतीति चिन्ता । तदर्थं तस्याः स्वातन्त्र्येण कालाधीनत्वमस्ति न वेति । तदर्थं कालाधीनत्वग्राहिप्रत्यक्षं स्वातन्त्र्यांशे प्रमोत भ्रम इति । कालापेक्षयैव जाग्रदिति न्यायविवरणानुसारेण पूर्वपक्षमाह– **न जागरणमिति** ॥ अनेनावधारणव्यावर्त्यमुक्तं भवति ।

ननु कालस्याप्यचेतनत्वेन पूर्वाधिकरणन्यायेनैव निराससम्भवेन कथमेतदधिकरणोत्थानम् ? न च पूर्वाधिकरणसिद्धान्तयुक्त्यतिदेशार्थमेतत्प्रवृत्तिः । अत एवानुव्याख्याने तदेवेति पूर्वाधिकरणसिद्धान्तन्यायातिदेशोऽत्र कृत इति वाच्यम्; अभ्यधिकाशङ्काभावेनातिदेशस्यैवानुपपत्तिरिति चेत्, न; स्वप्नप्रतीतितत्तिरोधानयोः स्वातन्त्र्येणाज्ञानज्ञानहेतुकत्वदर्शनस्य भ्रमत्वे 'स्वप्नादिबुद्धिकर्ता' इति ज्ञानाज्ञानस्वातन्त्र्यप्रतिपादकविशेषप्रमाणरूपबाधकवज्जागरावस्थायाः स्वातन्त्र्येण कालाधीनत्वग्राहिप्रत्यक्षस्य बाधकाभावादित्यभ्यधिकाशङ्कयास्योत्थानात् । अत एवोक्तम्– **न चास्य प्रत्यक्षस्य बाधकमस्तीति** ॥

यद्वा भवत्ववस्थान्तराणां भगवदधीनत्वं न जाग्रदवस्थायाः किं तु जीवाधीनैव सा । तत्र जीवस्य देहादिकं ममैवेति स्वातन्त्र्यप्रतीतिदर्शनात् । न चेयं भ्रान्तिः जीवस्य चेतनत्वेन पूर्वोक्तन्यायस्याबाधकत्वाद्बाधकान्तराभावाच्चेति पूर्वपक्षोत्थानान्नैतदारम्भवैयर्थ्यम् । अत एव सूत्रे 'जाग्रत्' इत्येव वक्तव्ये 'देहयोगाद्वासः' इत्युक्तम् । व्याख्यातं च भाष्ये **देहयोगेनेति** ॥ विवृतं टीकायां **देहाभिमानिनेति** ॥ एतदेवाभिप्रेत्योक्तं न्यायविवरणे चेतनान्तरस्यास्वातन्त्र्यादिति । अत एव च भाष्ये स्वातन्त्र्याभिमानस्य भ्रमत्वोपपादनाय जीवस्यापि भगवदधीनत्वप्रतिपादनस्य स एव जागरिते स्थापयतीति विशेषप्रमाणस्योक्तिरिति । देहयोगेन वासस्य सुप्त्यादावपि सद्भावेन जाग्रदिति कथं तत्तात्पर्योक्तिरित्यत आह– **देहाभिमानेनेति** ॥ **परभिध्यानादेवेति** । अनेन पूर्वसूत्रात्

(भावबोधः)

'पराभिध्यानात्तु' इत्येतदत्रानुवर्तत इत्युक्तं भवति ॥ **तस्याचेतनत्वेनेति** ॥ अनेनाचेतनत्वादेव कालस्येति न्यायविवरणं व्याख्यातं भवति । उपलक्षणमेतत् । चेतनान्तरस्याप्यस्वातन्त्र्यादित्यपि तत्रोक्तं द्रष्टव्यम् ।

## भावदीपः

**जाग्रत्प्रवर्तकत्वेति** ॥ कालकृतत्वशङ्कानिरासेनेति भावः । तेनास्तु तिरोभावादेरीशाधीनत्वं ज्ञानादेर्निमित्तत्वेनोपपत्तेः न तु जागरणस्य । निर्बाधप्रत्यक्षेणैव कालाधीनत्वावगमादिति शङ्कनात्सङ्गतिस्सूचिता । ज्योतिर्ब्राह्मणब्रह्मणः स समानस्सन्नुभौ लोकावनुसञ्चरतीत्यादिना श्रुतं जाग्रत्प्रवर्तकत्वं ज्योतिर्नय एव सिद्धमिति शङ्का च निरस्ता । अन्यां च सङ्गतिमाह ॥ **स्वप्रनिरूपणसङ्गतेति** ॥ स्वाप्नविषयतत्तिरोधानानां ईशाधीनत्वोक्तौ बुद्धिस्था जाग्रदवस्थेत्यर्थः । यद्वा षष्ठे काण्वश्रुतौ ज्योतिर्ब्राह्मणे स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैवेति स्वाप्नोक्त्यनन्तरं जाग्रदुक्तेः स्वप्ननिरूपणसङ्गतेत्यर्थः । जाग्रदवस्था जाग्रत्त्वेन देहाद्यभिमानेन यज्जीवस्यावस्थानं तदित्यर्थः । जागरितस्येशाधीनत्वोक्तेर्निर्बीजत्ववारणाय कालापेक्षयैव जागरितमित्यन्यत्रोक्तं पूर्वपक्षमेवकारव्यावर्त्यपूर्वं व्यनक्ति ॥ **न जागरणमिति** ॥ **कालेति** ॥ अहरादिकालेत्यर्थः । अत एव प्राण इत्यादाविवैवकारः कालापेक्षत्वहेतोर्बलवत्त्वसूचनेन पूर्वस्माद्विशेषशङ्काद्योतक इति भावेन तद्व्यनक्ति ॥ **न चेत्यादिना** ॥ **अत इति** ॥ कालाधीनत्वादित्यर्थः । भाष्यं व्याचष्टे ॥ **देहेति** ॥ स्वदेहेत्यर्थः । फलितमाह ॥ **जाग्रदिति** ॥ **सापीति** ॥ न केवलं स्वप्नाविर्भावतिरोभावावित्यर्थः । तत एवेत्येवकारव्यावर्त्यं **न कालत इति** ॥ अन्यत्रोक्तमेव हेतुमाह ॥ **तस्येति** ॥ **अत इति** ॥ अस्वतन्त्रकालाद्यधीनत्वायोगात् स एवेति श्रुतिबलाच्चेत्यर्थः । अत एव न्यायविवरणे चेतनान्तरस्याप्यस्वातन्त्र्यादित्युक्तम् ।

## अभिनवचन्द्रिका

ननु हेत्वनुपन्यासात् न्यूनमिदं सूत्रम् । न च याज्ञ्यवल्क्यप्रसङ्गे 'त्रयस्त्रिंशदिति ॐ इति होवाच' इत्यादाविव प्रतिज्ञामात्रेणार्थ सिद्धिसम्भवात् तदनुपन्यासो न दोषायेति वाच्यम् । न्यायसूत्रत्वा भावप्रसङ्गादितिचेत् । स्यादयं दोषो यद्यत्र हेतुर्न सूचितः स्यात् । न चैवं किं नाम 'देहयोगाद्वासोऽपि' इत्यपिशब्देन न केवलं स्वप्नावस्था, अपि तु जाग्रदवस्थापीति समुच्चायकेन

(अभिनवचन्द्रिका)

स्वप्नावस्थाया भगवदधीनत्वे प्रमाणतयोपन्यस्तस्य 'आह ही' त्यस्य इहापि ज्ञेयतया सूचनात् । अत एव भाष्यकार एतत्सिद्धये 'स एव जागरित' इति श्रुतिमुदाहरतीति ॥ **निमित्तमात्रविषय-मिति** ॥ यत्प्रत्यक्षं निमित्तमात्रविषयं तदेव प्रमाणम् 'अन्यत्तु श्रुतिविरोधात् अप्रमाणमित्यर्थः । एतेन प्रतीते व्याख्यानाऽनर्हत्वात् प्रतीतेर्निमित्तमात्रविषयत्वाभिधानमयुक्तमिति परास्तम् ।

पूर्वपक्षस्तु न जागरणं भगवदधीनं तस्य कालाधीनत्वात् । न चाऽचेतनत्वात् तदधीनत्वाऽनुपपत्तिः । कालाधीनत्वस्य अनुभवसिद्धत्वेन अचेतनत्वानुमानस्य बाधितविषयत्वात् । न चाऽनुभवो भ्रमः । बाधकाभावात् । अतो जाग्रदवस्थाया भगवदधीनत्वाभावात् न तस्य महामहिमत्वमिति ।

सिद्धान्तस्तु जाग्रदवस्थापि भगवदधीनैव । 'स एव जागरिते स्वाप यति स स्वप्ने स प्रभुस्तुराषाट्' इति श्रुतेः । अत एव अचेतनत्वानु मानमपि कालाधीनत्वनिवर्तकं, श्रुतिविरोधेन प्रत्यक्षस्याऽप्रामाण्यात् । कालस्य निमित्ततामात्रविषयकं प्रत्यक्षं बाधाभावात् प्रामाणमेव । अतो हरे जाग्रत्प्रवर्तकत्वेन महामहिमत्वात् युक्ता तत्र भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **स्वप्ननिरूपणसङ्गतेति** ॥ स्वप्नादुत्थाने तैजसाद्विभक्तो भवतीति माण्डूकभाष्योक्तरीत्या जाग्रदवस्थायाः स्वप्नकार्यकार्यत्वात् कारणोक्तिसङ्गता जाग्रदव-स्थेत्यनन्तरसङ्गतिरिति भावः । अत्र जाग्रदवस्था किमीश्वराधीना न भवत्युत भवतीति चिन्ता । तदर्थं जाग्रदवस्थायाः कालग्राहित्वप्रत्यक्षस्य बाधकत्वं नास्त्युतास्तीति । अत्र हि पराभिध्याना-देवेत्यनुवर्तते । तत्रैवकारेण न तु कालत इति विवक्षितम् । तत्सूचितकालत इत्युक्तपूर्वपक्षन्यायं विशदयति ॥ **तस्येति** ॥ ननु ज्ञानाज्ञानयोरिव कालस्याचेतनत्वेनास्वातन्त्र्यान्न कालाधीनत्वमिति गतार्थतां परिहरति ॥ **न च कालस्येति** ॥ अयुक्तिः' युक्तिविरोधः । **प्रत्यक्षसिद्धत्वादिति** ॥ साक्ष्यनुभवसिद्धत्वादित्यर्थः ॥ **न चास्य प्रत्यक्षस्येति** ॥ याथार्थ्यनियमात्प्रत्यक्षसिद्धस्य तदन्या-बाध्यत्वाचेति भावः । न च निमित्तमात्रविषयं प्रत्यक्षमिति वाच्यम् । बलवद्बाधकमन्तरेणैवं कल्पनायोगादिति भावः । सूत्रेऽपिपदं पराभिध्यानात्त्विति साध्यस्य हिशब्दसूचितस्याचेतनत्वेना-स्वातन्त्र्यादित्युक्तन्यायस्याप्यनुकर्षणार्थम् । तस्य इत्यस्ति ॥ तृतीयार्थे पञ्चमीति भावेन सूत्रार्थारोहं दर्शयति ॥ **देहाभिमानेनेति** ॥ जाग्रदपीति वाच्ये देहयोगाद्वास इति जाग्रत्स्वरूपोक्तिस्तु

(वाक्यार्थमुक्तावली)

भवत्ववस्थान्तराणां भगवदधीनत्वं न जाग्रदवस्थायाः । किन्तु जीवाधीनैव सा । तत्र जीवस्य देहादिकं ममैवेति स्वातन्त्र्यप्रतीतिदर्शनात् । न चेयं भ्रान्तिः । जीवस्य चेतनत्वेन पूर्वोक्तन्यायस्याबाधकत्वात् । बाधकान्तराभावाच्चेति पूर्वपक्षे देहाभिमानेन स्थितिरपि तत एव, प्रबोधे जीवस्याप्यस्वातन्त्र्यादित्युक्तम् । पूर्वाधिकरणन्यायविवरणेऽपि प्रबोधे जीवस्याप्यस्वातन्त्र्यादिति जीवपूर्वपक्षो दर्शितः ॥ **तस्याचेतनत्वेनेति** ॥ तेन स्वतोबोध इत्युक्तन्यायः स्वातन्त्र्येण कालस्याबोधः बोधशब्दितजाग्रत्कारणत्वाभाव इति विवृतो भवति ॥ **इत्यत आहेति** ॥ इति शङ्कानिरासाय हिशब्दोपात्तश्रुतिमुदाहरतीत्यर्थः ।

## तत्त्वसुबोधिनी

**स्वप्ननिरूपणसङ्गतेति** ॥ पराभिध्यानात्तु तिरोहितमिति स्वप्नतिरोधानोक्तौ तन्निमित्तत्वेन एतत्सङ्गतबाह्यज्ञानरूपजाग्रदवस्थाविचारादनन्तरसङ्गतिरिति भावः ॥ **तस्येति** ॥ ननु कालस्याप्यचेतनत्वेन पूर्वाधिकरणन्यायेनैव निराससम्भवेन कथमेतदधिकरणोत्थानम् । न च पूर्वाधिकरणसिद्धान्तयुक्त्यतिदेशार्थमेतत्प्रवृत्तिः । अभ्यधिकशङ्काभावेनातिदेशस्यायुक्तत्वादिति चेन्न । स्वप्नप्रतीतितत्तिरोधानयोः स्वातन्त्र्येणाज्ञानज्ञानहेतुत्वदर्शनस्य भ्रमत्वे स्वप्नादिषु द्विकर्तेति ज्ञानाज्ञानयोरस्वातन्त्र्यप्रतिपादकविशेषप्रमाणरूपबाधकवज्जागरावस्थायाः स्वातन्त्र्येण कालाधीनत्वग्राहिप्रत्यक्षस्य बाधकाभावादित्यभ्यधिकशङ्कयास्योत्थानात् । अत एवोक्तम् ॥ **न चास्य प्रत्यक्षस्य बाधकमस्तीति** ॥ देहयोगेन वासस्य सुप्त्यादावपि सद्भावेन जाग्रदिति । कथं तात्पर्योक्तिरित्यत आह ॥ **देहाभिमानेनेति** ॥ **पराभिध्यानादेवेति** ॥ अनेन पूर्वसूत्रात् पराभिध्यानादित्येतदत्रानुवर्तत इत्युक्तं भवति ।

## वाक्यार्थविवरणम्

ननु देहयोगेन देहसम्बन्धेन वासस्य स्थितेः सुप्त्यादावपि सत्त्वेन कथं जाग्रदवस्थालाभ इत्यत आह ॥ **देहाभिमानेनेति** ॥ देहयोगेन वास इत्यस्य फलितार्थ उक्तो भाष्ये **जाग्रदपीति** । तद्व्याख्यातं **जाग्रदवस्थेति** ॥ **अभिध्यानम्** इच्छा ॥ प्रतीतेः प्रत्यक्षेणेति शेषः । तुराशब्दस्त्वपरपर्यायो वेगवाची । तुरं वेगं सहत इति तुराषाट् । वैरीति योग्यतया सम्बन्धः ।

## वाक्यार्थमञ्जरी

**सङ्गतेति** ॥ जाग्रदवस्थायाः स्वप्नतिरोभावनिमित्तत्वे तन्निरूपणे एतत्स्मरणादिति भावः । **कालः** प्रातरादिः । **भ्रान्तं** भ्रान्तिः ॥ **ॐ देहयोगाद्वासोऽपि ॐ** ॥ जीवस्य देहयोगाद्देहाभिमानेन वासः स्थितिरूपजाग्रदपि परमात्मेच्छात एवेत्यर्थः । देहयोगस्य सुप्त्यादिसाधारण्यादाह ॥ **देहाभिमानेनेति** ॥ बाह्यदेहाभिमानेनेत्यर्थः ॥ **स्वप्नेति** ॥ वासनामयदेहाभिमानसत्वात् ।

॥ इति देहयोगाधिकरणम् ॥ ३ ॥

# ४. तदभावाधिकरणम्

**॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ७ ॥**

जाग्रत्स्वप्नाभावः सुप्तिः नाडीस्थे परमात्मनि ।

'आसु तदा नाडीषु सुप्तो भवति' (छां.उ. ८-६-३)

'सता सौम्य तदा सम्पन्नो भवति' (छां.उ. ६-८-१) इति श्रुतेः ॥ ७ ॥

## तत्त्वप्रदीपिका

'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति' इति च्छन्दोगश्रुतिः । 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति च ।

'तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यत' इति पर्यङ्कोपसनायाम् ॥

## तत्त्वप्रकाशिका

अत्र ईश्वरप्राप्तिसाधनभक्त्यर्थं सुप्तप्राप्यत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । एतदवर्णने न निरतिशया भक्तिः स्यादतोऽसौ वर्णनीयः । स्वप्नजाग्रद्विचारेऽवशिष्टा सुषुप्तिर्विषयः । भगवदधीनत्वे विवादाभावात् किं परमात्मनि नाडीषु वेति सन्देहः । 'सता सोम्य तदा सम्पन्नो भवति' । 'यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति' इति श्रुती सन्देहवीजम् । परमात्मन्येव सुप्तिर्न नाडीष्विति पूर्वः पक्षः । परमात्मनोऽन्यत्रावस्थाने सुप्तस्य दुःखित्वप्रसङ्गात् जाग्रत्स्वप्नयोरिव । न च मुक्तवत्सुप्तस्य दुःखमस्ति । तदा सुखमात्रानुभवात् । न च तत्र प्रमाणाभावः । सुखमहमस्वाप्समित्युत्तरकालीनस्मृतेः । न चाननुभूतं स्मर्यते । न च वाच्यं दुःखाभावः स्मर्यते न सुखमिति । तदनुभवाभ्युपगमे किमपराद्धं सुखेन । दुःखाभावोऽनुमीयते न च स्मर्यत इति चेन्न । पक्षभूतावस्थास्मरणाभावेन तदनुदयात् । आत्मपक्षीकारेऽपि प्रतिज्ञाविशेषणतयाऽवस्थास्मरणस्यावश्यंभावित्वात् । अतः सुषुप्तौ सुखैकानुभवात्परमात्मन्येव सुप्तिर्न नाडीष्वित्यतस्तत् श्रुतेरप्रामाण्यमिति ।

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तदिति** ॥ सुप्तिर्जीवस्य नाडीषु भवति । न चैवं दुःखप्राप्तिः । परमात्मनि सुप्त्यङ्गीकारात् । न चैकस्योभयत्र सुप्तिर्विरुद्धा । नाडीस्थपरमात्मनि

(तत्त्वप्रकाशिका)

**सुप्त्यङ्गीकारेणोभयोपपत्तेः । परमात्मन्येव किं न स्यात् सुप्तिः किं नाडीस्थविशेषणेनेति चेत् । न । उभयविधश्रुतेरन्यथानुपपत्तेः । एवं च सति तदुपपत्तेः । एवं चाभ्युपगमेनोपपन्नेन प्रमाणभूतश्रुतिद्वयव्यवस्थोपपत्तौ तदनभ्युपगमे सर्वत्राप्यव्यवस्थैवेत्यतिप्रसङ्ग इति भावः । सुप्तः प्राप्तः । अतः परमात्मनो नाडीस्थस्य सुप्तप्राप्यत्वमाहात्म्यवत्त्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ।**

## गुर्वर्थदीपिका

भगवदधीना न वेति सन्देहाभावादित्यत्र सुप्तस्य जीवस्य सर्वव्यापाररहितत्वेनाकिञ्चित्करत्वात्सुप्तेर्भगवदधीनत्वे न सन्देह इति भावः । पक्षीभूतावस्थास्मरणाभावेन तदनुदयादित्यत्र सुप्त्यवस्थां पक्षीकृत्य दुःखाभावोऽनुमीयत इति चेत्तदा पक्षीभूतावस्थाज्ञानं वाच्यम् । अतीतायाश्च नेदानीमनुभवः । अतः स्मरणमेव वाच्यम् । तच्चानुभवं विना न भवतीति सुप्तावनुभवो वाच्य इति भावः । आत्मपक्षींकरणेऽपीत्यत्र अतीतावस्थायां दुःखाभाववानित्यनुमानेऽपि प्रतिज्ञाविशेषणतयाऽवस्थास्मरणस्यावश्यम्भावादित्यर्थः । अहमेतावन्तं कालं दुःखानुभववानित्यनुमानेऽप्येतावत्पदसूचितावस्थाया अतीतकालस्य च स्मरणमावश्यकमित्यप्यूह्यम् । 'यत्रैतत्सुप्तः समस्तः सम्प्रसन्न' इति श्रुतिखण्डे सुप्तस्य प्रागेवोक्तत्वात्पुनः 'आसु तदा नाडीषु सुप्तो भवति' इत्युक्ते पौनरुक्त्यं स्यात् । अतः सुप्तः प्राप्त इत्युक्तम् । नाडीष्विति चेति बहुवचनं च प्रतिशरीरं नाडीबाहुल्यादिति ज्ञेयम् । 'तदभावो नाडीषु' इत्यत्र सुप्तेः स्वरूपविवरणाय सुप्तिरित्यनुक्त्वा तदभाव इत्युक्तम् ।

## भावबोधः

**अवशिष्टा सुषुप्तिरिति ॥** जाग्रदवस्थादौ श्रान्तस्य श्रमापनोदनार्थं सुप्तिरिति सात्र विचार्यत इत्यनन्तरसङ्गतिरिति भावः । स्वप्नजाग्रद्वत् सुप्तेर्भगवदधीनत्वं कुतो न विचार्यत इत्यत आह– **भगवदधीनत्वे विवादाभावादिति ॥** न चैवं सुप्तिस्वरूपमात्रविचारपरस्य भगवन्माहात्म्याप्रतिपादकत्वे न पादान्तर्भाव इति वाच्यम्; सुप्तिस्वरूपविचारपरस्यापि सुप्तेर्भगवदधीनत्वलक्षणमाहात्म्याप्रतिपादकत्वेऽपि सुप्तप्राप्यत्वलक्षणमाहात्म्यप्रतिपादकत्वात् । एतदेवाभिप्रेत्योक्तं प्राक्– **सुप्तप्राप्यत्वमहिम्न इति ॥** अज्ञानकालयोरचेतनत्वेनास्वातन्त्र्यस्योक्तत्वात् तदरिक्तकारणस्याप्रतीतेरभ्यधिकाशङ्काभावात् पूर्वसूत्रे 'वासोऽपि' इति सौत्रा'पि'पदेनानुक्तस्यापि समुचितत्वाभि-

(भावबोध:)

प्रायेण भाष्ये स्वप्न इति श्रुतिशेषोदाहरणाच्च पूर्वन्यायेनैव सुप्तेरपि भगवदधीनत्वसिद्धौ तत्र विवादाभाव इति भावः । **परमात्मनि नाडीषु वेति** । अत्र सुप्तिः किं परमात्मन्येवोत नाडीष्वपीति चिन्ता । तदर्थं परमात्मनोऽन्यत्र सुप्त्यङ्गीकारे दुःखप्राप्तिरस्त्युत नेति । तदर्थं नाडीपरमात्मनोर्विशेषणविशेष्यभावो नास्त्युतास्तीति । एवं च नाडीपरमात्मनोर्विशेषणविशेष्यभावे एकस्योभयत्र सुप्त्यङ्गीकारस्य विरुद्धत्वेन परमात्मनोऽन्यत्रैव सुप्त्यङ्गीकारप्राप्त्या दुःखित्वप्रसङ्गेन परमात्मन्येव जीवस्य सुप्तिरिति पूर्वपक्षे, विशेषणविशेष्यभावे चान्यत्र सुप्त्यङ्गीकारेऽपि परमात्मनि सुप्त्यङ्गीकारेण दुःखाप्राप्त्या नाडीष्वपि सुप्तिरिति सिद्धान्ते च फलफलिभावः । परमात्मनोऽन्यत्रावस्थाने दुःखित्वप्राप्तेर्नाडीषु सुप्तिर्न भवतीति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **परमात्मन्येवेति** ॥ अनेन नाडीषु सुप्तिर्न भवतीत्येतद्व्याख्यातम् । परमात्मनोऽन्यत्रावस्थान इत्यनेन परमात्मनोऽन्यत्रेत्यादि व्याख्यातं भवति । इष्टापत्तिमाशङ्क्य परिहरति– **न च मुक्तवदिति** ॥ **किमपराद्धं सुखेनेति** ॥ सज्जीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्यान्येषां परमात्मसम्बन्धलक्षणनिमित्तोत्पन्नसुखस्य चानुभवादिति भावः । यथोक्तं षट्प्रश्नभाष्यटीकायाम् 'यस्मादेवं परमेश्वरतेजसाभिभूतो भवत्यथ तस्मात् तत्सन्निधानसामर्थ्योद्भूतरूपं यत्सुखं तदस्मिन् शरीरे भवतीति । सुप्तौ सर्वेन्द्रियाणामुपरतत्वात् किंनिमित्तं सुखं केन वा जीवोऽनुभवतीत्यभिप्रायेण परमेश्वरसन्निधानसामर्थ्योद्भूतं सुखमात्मस्वरूपज्ञानेनानुभवतीति परिहारोऽभिप्रेतः' इति । अत्रोद्भूतरूपमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसम्बन्धनिमित्तजन्यं सुखमुच्यत इति सम्प्रदायविदः ।

ननु कथं दुःखाभावोऽनुमीयते? किं देवदत्तसुप्त्यवस्था न देवदत्तसमवेतदुःखोपेता तत्कारणशून्यत्वादिति वा सुप्त्यवस्थाविशिष्टो देवदत्तो न दुःखसमवायी तत्कारणरहितत्वादिति वेति विकल्पं मनसि निधायाऽऽद्ये दोषमाह– **पक्षभूतावस्थास्मरणाभावेनेति** ॥ दुःखाभावानुमानवादिना सुषुप्तिकालेऽवस्थानुभवस्याङ्गीकारात् । अन्यथा दुःखाभावानुभवस्यापि सम्भवेन तत्स्मरणापलापासम्भवादिति भावः । द्वितीयं दूषयति– **आत्मेति** ॥ न च देवदत्तमात्रपक्षीकारेणावस्थास्मरणाभावो न दोषायेति वाच्यम्; तथात्वे जाग्रदाद्यवस्थाविशिष्टस्य देवदत्तस्य दुःखसमवेतत्वेन तदभावसाधने बाधप्रसङ्गात्, सौषुप्तिकदुःखाभावासिद्ध्यार्थान्तरत्वाच्चेति । 'तदभावो नाडीष्वात्मनि' इति सूत्रभागं योजयति– **सुप्तिर्जीवस्येति** ॥ नाडीस्थेति भाष्यं व्याख्यातुमाह– **न चैकस्येति** ॥ उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणमित्यनवस्थितिदोषा-

(भावबोधः)

दतिप्रसङ्गादिति न्यायविवरणमिति श्रुतेरिति भाष्यैकवाक्यत्वेन व्याचष्टे– **एवं चाभ्युपगमेनेति** ॥ तथा चैवं वाभ्युपगमेनोपपन्नेन प्रमाणभूतश्रुतिव्यवस्थोपपत्तावित्यनेनोभयस्वीकारेण प्रमाणभूतश्रुतिद्वयव्यवस्थोपपत्ताविति । तदनभ्युपगम इत्यनेन मानक्लृप्त्यकारणमित्येतन्मानस्य श्रुतिद्वयस्य या क्लृप्तिः नाडीस्थपरमात्मनि सुप्तिरिति तदकारणं तदनभ्युपगम इति कृत्वेति सर्वत्राव्यवस्थैवेत्यतिप्रसङ्ग इत्यनेनानवस्थितिदोषादतिप्रसङ्गादित्येतद्व्याख्यातं भवति ।

## भावदीपः

**सुप्तप्राप्यत्वेति** ॥ नाडीस्थरूपविशेषात्मकस्य भगवत इति योज्यम् । तेनेक्षतिकर्मव्यपदेशात्स इत्यत्र सदेव सोम्येति वाक्यस्थसन्नामसमन्वयोक्त्या वा स्थानं लिङ्गमनुग्रह इति तत्रत्यानुभाष्योक्तेः सन्नामसमन्वयद्वाराऽनेकप्रकरणजातस्थानसमन्वयोक्त्या वा तत्स्थानमध्यस्थसुप्तप्रकरणगतसतासोम्येति वाक्योक्तसुप्तप्राप्यत्वमहिम्नोऽपि लाभाद् व्यर्थोऽयमारम्भ इति निरस्तं बोध्यम् । तस्यात्र प्रपञ्चनात् । प्रपञ्चनं च नाडीषु सुप्त इति सता सोम्येति च छन्दोगश्रुत्यर्थव्यवस्थोपपादनार्थम् । सङ्गतिमाह ॥ **स्वप्नेति** ॥ श्रुतिषु निर्दिष्टासु वा जीवे लोकप्रसिद्धासु वा तिसृष्ववस्थासु स्वप्नजाग्रद्विचार इत्यर्थः । एतेन जाग्रदादौ दुःखस्याप्यनुभवेन जीवस्य ईशादन्यत्रावस्थानेऽपि न सुप्तस्य सुखमात्रानुभवेनान्यत्रावस्थानं किंत्वीश एवेत्यर्थोपपादकत्वात्स्वप्नजाग्रदुक्त्यनन्तरं सुप्तप्राप्यत्ववर्णनमिति सङ्गतिरपि सूचिता । भाष्ये तदभावोऽस्य पराभिध्यानादेवेति योजनानुक्तौ बीजमाह ॥ **भगवदधीनत्व इति** ॥ कालादेरस्वातन्त्र्येणाऽन्याधीनत्वशङ्काप्रापकाभावादिति भावः ॥ **परमात्मनीति** ॥ परमात्मन्येव नाडीष्वपि वेत्यर्थः । अन्यथा परमात्मनि नाडीषु वेति सन्देहे नाडीस्थपरमात्मनीति सिद्धान्तस्य व्यधिकरणतापत्तेः । अत एव परमात्मन्येवेति पूर्वपक्षोक्तिः । यद्वाऽत्र वाऽत्र वेति सन्देहेऽत्रैवेति प्राप्ते उभयत्रापीति सिद्धान्तोपपत्तेरेव सन्देहोक्तिः । यद्वा परमात्मनि नाडीषु वा उभयत्र वेत्यपि कोटिर्ध्येया । तथा दुःखित्वप्राप्तेरेकस्योभयप्राप्तेर्विरुद्धत्वाच्च नोभयत्र प्राप्तिरित्यपि पूर्वपक्षोऽग्रे ध्येयः ॥ **यत्रेति** ॥ यदा एतत्सुप्तः एष सुप्तः समस्तः उपसंहृतेन्द्रियवृत्तिः । प्रतिशरीरं नाडीभेदाद्बहुवचनम् । अन्यथा तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यत इत्यष्टमच्छान्दोग्यभाष्येण ताभिः प्रसृत्य पुरीतति शेत इति चतुर्थे काण्वश्रुत्या सुषुम्नासंस्थितं विष्णुमेति तत्सुप्तिमेष्यतीति द्वितीयाध्यायबृहद्भाष्येण तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययमिति

(भावदीपः)

षष्ठाध्यायबृहद्भाष्येण च विरोधादित्येके । 'मध्ये सुषुम्ना विज्ञेया वज्रिकाऽऽर्या प्रकाशिनी । वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनि' इति तन्त्रसारोक्तेस्तदभिप्रायेण बहुवचनमित्यन्ये । जीवपरत्वज्ञापनाय पूर्वांशोक्तिः ॥ **श्रुती इति** ॥ न चैवं श्रुत्यविगानपरपादान्तर्भाव इति शङ्क्यं श्रुत्यविगानस्य फलत्वेऽपि सुप्तिचिन्तात्वेनात्र निवेशोपपत्तेः । परमात्मनोऽन्यत्रावस्थाने दुःखित्वप्राप्तेर्नाडीषु सुप्तिर्न भवतीत्यन्यत्रोक्तं व्यनक्ति ॥ **परमात्मन्येवेति** ॥ एतेन नाडीषु सुप्त्यभावे निराश्रया सुप्तिः स्यादिति निरस्तम् । **अन्यत्र** नाड्याम् ॥ **जाग्रदिति** ॥ यद्यपि जाग्रदादावपीशादन्यत्रावस्थानं जीवस्य न भवति । 'हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः । जीवानां स्थानमुदिष्टः सर्वदैव सनातनः ।' हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः । 'मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिता' इति षष्ठबृहद्भाष्योक्तेः । तथाऽपि 'अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ । प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा' इति स्मृत्या हृदयस्थात्पराज्जीव इति वक्ष्यमाणस्मृत्या च रूपविशेषमवस्थानविशेषं वाऽभिप्रेत्यैवमुक्तम् । तदुक्तं षष्ठे बृहद्भाष्ये सदा प्रतिष्ठितानि भवन्ति विशेषतोऽपि प्रतिष्ठितानि सुप्ताविति ॥ **सुखमात्रानुभवादिति** ॥ 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति श्रुतिस्तु मनोवृत्तिसुखदुःखाद्यनुभवाभावपरा । अत्राऽपि मात्रपदेन दुःखाद्येव व्यावर्त्यं बोध्यम् । 'नात्मानं न परांश्चैव न सत्यं नापि चानृतम् । प्राज्ञः किञ्चन संवेत्ति'. इति श्रुतौ किञ्चन संवेत्ति किञ्चिन्न संवेदयेत्प्राज्ञ इति किञ्चित्पदेनापि दुःखाद्येव व्यावर्त्यम् । अन्यथा 'प्राज्ञः संवेदयेत्किञ्चिज्जीवकालतमो विना । सुप्त्यवस्थां सुखं वापि नान्यत्किञ्चित्प्रदर्शयेदिति माण्डूकभाष्योक्तस्मृतिविरोधा' इति भावः ॥ **स्मृतेरिति** ॥ तत्स्वरूपमुक्तमस्माभिर्जिज्ञासानये ।

स्वरूपसुखहीनानां तादृशस्मृतेर्गतिसूचनाय शङ्कामाह ॥ **न वाच्यमिति** ॥ सुखस्वरूपजननाभिप्रायेणाह ॥ **किमपराद्धं सुखेनेति** ॥ पुंस्त्वादिवदित्यत्रोक्तन्यायेन स्वरूपसुखादेस्तदापि भावात् । न च नित्योपलब्ध्यनुपलब्धीत्युक्तदिशा अविद्यावृतत्वात् न भानमिति शङ्क्यम् । परमेश्वरसन्निधानसामर्थ्योद्भूतं सुखं आत्मस्वरूपज्ञानेनानुभवतीति षट्प्रश्नभाष्यटीकोक्तदिशा तदनुभवोपपत्तेरिति भावः । तार्किकरीतिमाशङ्क्य निराह ॥ **दुःखाभाव इति** ॥ सुप्त्यवस्था दुःखहीनेति वा सुप्त्यवस्थावान् जीवो वा न दुःखवान् तद्धेत्वप्रियज्ञानादिशून्यत्वाद्यदेवं तदेवमित्यादिरूपेणानुमीयत इत्यर्थः ॥ **अत इति** ॥ सुखाभावानुमित्ययोगादौत्तरिकानुस्मृत्यन्यथानु-

(भावदीपः)

पपत्तिबलादन्यत्रावस्थाने दुःखित्वप्रसङ्गाच्चेत्यर्थः । सुखैकेत्युक्तार्थम् ॥ सूत्रार्थमाह ॥ **सुप्तिरिति** ॥ अस्येत्यनुवृत्तस्यार्थो **जीवस्येति** । तत्त्वप्रदीपे तूत्तरसूत्रे यतस्तस्मिन्परमात्मनि सुप्तिस्तदभिध्यानादेवेत्यनुवादादत्र तदभावोऽस्य पराभिध्यानादेवेति योजनाऽभिमता । नाडीस्थे परमात्मनीत्येतद् व्याचष्टे ॥ **न चैकस्येत्यादिना** ॥ **नाडीस्थेति** ॥ 'न चांगुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ । प्रविशन्ति सुषुप्तौ तु' इति बृहद्भाष्योक्तस्मृतिविरोध इति शङ्क्यम् । मन्दिरे मणिमालेतिवत् 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिंत्सर्वं प्रतिष्ठितम्' इतिवच्च कर्णिकाग्रस्थनाडीस्थपरमात्मनीत्युपपत्तेः । न च 'देहांगुष्ठमितो देहे जीवांगुष्ठमितो हृदि । जीवस्य स तु विज्ञेयो जीवाद्भेदेन मुक्तय' इति काठकभाष्योक्तेर्देहांगुष्ठमानस्य रूपस्य यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्य इति वाजसनेये षष्ठाध्यायोक्त्यातिसूक्ष्मतमनाडीस्थत्वायोग इति वाच्यम् । अचिन्त्यशक्त्याऽल्पश्रुतेरित्यत्रोक्तदिशोपपत्तेः । उभयस्वीकारोपपत्तौ मानस्य क्लृप्यकारणमित्यव्यवस्थितिदोषादतिप्रसङ्गादित्यन्यत्रोक्त्यनुरोधेन इति श्रुतेरिति भाष्यशेषभावमाह ॥ **परमात्मन्येवेत्यादिना** ॥ नाडीषु सुप्त इत्युक्तेः कथमात्मनीत्यत आह ॥ **सुप्तः प्राप्त इति** ॥ **अत इति** ॥ श्रुतिद्वयान्यथानुपपत्तिबलादिति उक्तरूपमाहात्म्यवत्त्वे हेतुः । **तत्र** परमात्मनि ।

## अभिनवचन्द्रिका

**सुप्तप्राप्यत्वमहिम्न इति** ॥ नाडीस्थस्येति शेषः । परमात्मनि, नाडीषु वेति । ननु परमात्मनि स्वापस्य वादिप्रतिवादिसंमतत्वात् नैवं सन्देहो युक्तः । किं तर्हि, किं नाडीस्थे परमात्मनि, उत केवल इति सन्देहो दर्शनीयः । तत्रैव विवादात् । अत एव वक्ष्यमाणं सन्देहबीजमपि नोपपद्यत इति चेत् सत्यम्, नाऽयं पूर्वपक्षिसिद्धान्तिमताऽवलम्बी तद्विप्रतिपत्तिजः संशयः । किं नाम श्रुतिविप्रतिपत्तिजः संशयः । अत एव विप्रतिपत्तिः सन्देहबीजमित्यनुक्त्वा श्रुतिविगानमेवोक्तम् । नायमस्ति नियमः पूर्वपक्षसिद्धान्तकोट्यवलम्बी संशय एव सिद्धान्तनिरस्य इति, शुक्तिकायां नागवङ्गत्वकोटिकस्यापि संशयस्य शुक्तित्वनिर्णयेन निरासदर्शनात् । एवं च अस्यापि संशयस्य 'नाडीस्थे परमात्मनि स्वाप' इति सिद्धान्तनिरस्यत्वात् तत्प्रदर्शनं नानुपपन्नम् ॥ **परमात्मन्येवेति** ॥ नाड्यादिस्थानमपहाय स्वाधारतयैव स्थिते परमात्मनि इत्यर्थः । को दोषो नाडीसंपर्के येन तत्परित्याग इत्यत आह– **परमात्मनोऽन्यत्रेति** ॥ सर्वदा परमात्माऽवस्थितस्यापि जीवस्य जाग्रत्स्वप्नयोरक्ष्यादि सम्बन्धेन दुःखदर्शनात् नाडीसम्बन्धसुप्तस्य दुःखप्रसङ्ग इति भावः । न च–

(अभिनवचन्द्रिका)

**मुक्तवदिति ।।** सुप्तस्य दुःखं नास्ति मुक्तवदित्यर्थः । तदा सुख मात्राऽनुभवादिति ।। यदि स्वापे दुःखं स्यात्, सम्भृतसामग्रीकत्वात् सुखवदनुभूयेत, न चाऽनुभूयते, तस्मान्नास्त्येवैतदिति भावः । एतेन दुःखाननुभवस्यैव वक्तव्यत्वेन सुखानुभवकथनमयुक्तमिति परास्तम् । तटस्थशङ्कां निषेधति– **न च तत्रेति ।।** तटस्थशङ्कां निषेधति– **न च वाच्यं दुःखाभाव इति ।।** तटस्थ एव शङ्कते– **दुःखाभावोऽनुमीयत इति ।। न चैवमिति ।।** जीवस्य नाडीसम्बन्धाङ्गीकारे दुःखप्राप्तिरिति नेत्यर्थः । **परमात्मनीति ।।** परमात्मसम्बन्धात् दुःखप्राप्तिपरिहरासम्भवादिति भावः । सिद्धान्त्यङ्गीकृता उभयत्र सुप्तिः दुःखाभावाङ्गीकारेण निरुद्धा । देहसम्बन्धे जाग्रदादाविव दुःखस्याऽवर्जनीयत्वादित्याशङ्कते **न चैकस्येति ।।** दुःखाभावाङ्गीकारेण निरुद्धेत्यर्थः । न हि सम्भवति दुःखकारणनाडीसम्बन्धो विद्यते । न विद्यते च दुःखमितीति भावः **।। उभयोपपत्तेरिति ।।** नाऽस्माभिर्नाडीसम्बन्धो जीवस्याऽङ्गीक्रियन्ते, अपि तु नाडीसम्बन्धः परमात्मन एव, जीवस्य तु परमात्मनैव सम्बन्ध इति । एवं च गृहस्थितमञ्चोपरि सुप्तो यथा गृहे सुप्तः, तथा नाडीस्थपरमात्मनि सुप्तो नाडीसुप्तोऽपि भवतीति नाडीषु स्वापो, दुःखाऽभावश्चेत्युभयमप्युपपन्नम् । दुःखकारणस्य नाडीसम्बन्धस्याभावादिति भावः । एतेन एकस्यैव व्यासज्योभयत्र स्वापसम्भवे-नाऽनुपपत्तेरेवाऽभावात् नाडीस्थपरमात्मनि स्वापाङ्गीकारेण समाधानं व्यर्थमिति परास्तम् ।

ननु नोभयविधप्रमाणाऽन्यथाऽनुपपत्त्या नाडीस्थे परमात्मनि स्वापः कल्प्यः । एवमपि 'आसु तदा नाडीषु सुप्तो भवती'त्यस्य यथाश्रुतार्थे प्रामाण्यानुपपादनादित्यत आह– **एवं चाभ्युपगमेनेति ।।** उपपन्नेन एवमभ्युपगमेन प्रमाणभूतश्रुतिव्यवस्थोपपत्तौ सत्यामपि नाडीस्वापश्रुते-र्मुख्यार्थाऽनुपपादकत्वात् नाडीस्थे परमात्मनि स्वापानङ्गीकारे 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः, तमेवं विद्वानमृत इह भवति' इति प्रमाणद्वयाऽन्यथाऽनुपपत्त्या कल्प्यमानं कर्मजन्यज्ञानस्य मोक्षसाधनत्वमपि न स्यात्, अविशेषादिति भावः ।

पूर्वपक्षस्तु केवले परमात्मन्येव स्वापो न नाड्यवस्थानविशिष्टे, नाडीसम्बन्धे दुःखप्रसङ्गात् । जाग्रदाद्यवस्थासु चक्षुरादिस्थितभगवद्गतस्यापि जीवस्य देहसम्बम्धेन दुःखदर्शनात् । न चेष्टापत्तिः सुप्तिकाले सुखैकाऽनुभवस्य उत्तरकालीनानुस्मृतिसिद्धत्वात् ।

सिद्धान्तस्तु नाडीस्थित एव परमात्मनि सुप्तिः । अन्यथा 'आसु तदा नाडीषु सुप्तो भवति' सता सोम्य तदा संपन्नो भवति'ति श्रुत्योरन्यतराऽप्रामाण्यप्रसङ्गात् । न च दुःखप्राप्तिः परमात्मन

(अभिनवचन्द्रिका)

एव नाडीसम्बन्धाङ्गीकारेण जीवस्य तदनङ्गीकारात् । अतः परमात्मनो नाडीस्थस्य सुप्तप्राप्यत्वमाहात्म्यवत्त्वात् युक्ता तत्र भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

प्रतियोगिज्ञानाधीनत्वादभावज्ञानस्य प्रतियोगिभूतजाग्रत्स्वप्ननिरूपणानन्तरं तदभावरूपसुप्ति-र्निरूप्यत इत्यनन्तरसङ्गतिः । भावबोधे तु जाग्रत्स्वप्नश्रमपरिहाराय हि सुषुप्तिरित्यनन्तरसङ्गति-रित्युक्तम् ॥ **विवादाभावादिति** ॥ अज्ञानास्वातन्त्र्यस्य प्रागेवोक्तत्वेन सुप्तेः तदधीनत्वशङ्कानु-दयादिति भावः । सुप्तिः किं परमात्मनि नाडीषु वेति चिन्ता । तदर्थं परमात्मनोऽन्यत्र सुप्त्यङ्गीकारे दुःखप्राप्तिरस्ति **न वेति** ॥ तदर्थं नाडीपरमात्मनोर्विशेषणविशेष्यभावो नास्त्युतास्तीति । यदा एतत्सुप्तये एष सुप्तःसमस्तः उपरतकरणः सम्प्रसन्नः स्वानुभवेन प्रसादं प्राप्तः स्वप्नं न विजानाति । तदा नाडीषु सुप्तो भवतीति संशयबीजं श्रुत्यर्थः । अत्र सुषुप्तेस्तदभाव इति जाग्रत्स्वप्न-वैलक्ष्यण्योक्त्या निर्दुःखस्य सूचितत्वात् । अन्यत्र सुप्त्यङ्गीकारे तन्न स्यात्प्रत्युत दुःखित्वं स्यादिति लब्धं दुःखेत्युक्तपूर्वपक्षन्यायं विशदयति । **परमात्मन इति** ॥ **उत्तरकालीनस्मृतेरिति** ॥ साक्ष्यनुभवेनापि स्वरूपसंस्कारसम्पादनेन साक्षिणैव स्मरणसम्भवादिति भावः ॥ **किमपराद्धं सुखेनेति** ॥ सुखानुभवेनेत्यर्थः । यद्वा सर्वकरणोपरतिदशायां साक्षिरूपदुःखानुभवानभ्युपगमे किमपराद्धं सुखेन तस्यापि स्वरूपभूतस्य भगवत्सन्निधिविशेषेण मुक्ताविव व्यक्त्युपपत्तेरिति भावः । ननु तमोयोग्यानां स्वरूपसुखाभावात् कथमेतदिति चेन्न, तेषां परमात्मसम्बन्धातिशयेन स्वरूप एव भिन्नाभिन्नसुखस्य मोक्षयोग्येषु स्वरूप एव नीचतावच्च तमोयोग्येषु वृत्तिसुखेन स्वरूपे एव उच्चतावच्च जन्युपपत्तेः । केचित्तु अन्येषां दुःखाभाव एव सुप्तौ न सुखम् । टीकावाक्यं तु सज्जीवमात्रविषयमित्याहुः । नित्यसंसारिणां मिश्रत्वात्सुप्तौ सुखमात्रस्य व्यक्तिरिति ज्ञेयम् ॥ **न च स्मर्यत इति** ॥ येन तदनुभवसिद्ध्या किमपराद्धमिति प्रतिबन्ध्यनवकाश इति भावः । कथं दुःखाभावोऽनुमीयते, देवदत्तसुप्त्यवस्था न देवदत्तसमवेतदुःखोपेता तत्कारणशून्यत्वादिति वा सुप्तो देवदत्तो न दुःखसमवायी तत्कारणरहितत्वादिति वेति विकल्पं मनसि निधायाद्ये दोषमाह ॥ **पक्षभूतेति** ॥ तदनुदयादवस्थापक्षकानुमानानुदयाच्च । अवस्थास्मरणे च सुप्तौ तदनुभवस्याङ्गी-कार्यत्वेन किमपराद्धं सुखेनेति दोषप्रसङ्गादिति भावः । न चावस्थाप्यनुमीयत इति वाच्यम् ।

(वाक्यार्थमुक्तावली)

लिङ्गाभावादनवस्थानाच्चेति भावः । द्वितीयं दूषयति ॥ **आत्मेति** ॥ **प्रतिज्ञाविशेषणतयेति** ॥ अवस्थायाः प्रतिज्ञाविशेषणत्वेनेत्यर्थः । आत्ममात्रपक्षीकारे बाधात् सौषुप्तिकदुःखाभावासिद्ध्यार्थान्तराच्चेति भावः ।

सूत्रेऽस्येत्यनुवर्तते । तदभाव इति प्रस्तुतजाग्रत्स्वप्नाभावः । बाह्यान्तरिन्द्रियवृत्तीनामुपरतिर्हि सुषुप्तिरिति तदभावो भवति । यद्वा सुखैकायतनत्वेन तद्वैलक्षण्यात्तदन्योन्याभावरूप इत्यर्थः । सुप्तिरित्येव वक्तव्ये एवमुक्तिस्त्वेतादृशसुप्तौ दुःखाभावादन्यत्र सुप्तौ दुःखप्रसङ्गादिति पूर्वपक्षन्यायं सूचयितुमिति प्रागेवोक्तम् । नाडीस्थ इत्यनुक्त्वा नाडीषु आत्मनीति विभज्योक्तिरुभयश्रुत्यनुसारेणोभयस्वीकारस्पष्टीकरणाय । नाडीष्विति बहुवचनं श्रुत्यनुसारात् । श्रुतौ च नाडीष्विति निर्धारणसप्तम्या तन्मध्यगतसुषुम्नायामिति द्योतयितुमिति भावेन प्रतिज्ञांशं व्याचष्टे ॥ **सुप्तिर्जीवस्येत्यादिना** ॥ तच्छ्रुतेरित्यस्य नाडीस्थपरमात्मस्थत्वे तच्छ्रुतेरुभयविधश्रुत्यर्थं मत्वा तत्सूचितं समानक्लृप्तिरिति न्यायं एवं नाडीस्थपरमात्मनि सुप्तिरित्यनङ्गीकारे मानयोः श्रुत्योरक्लृप्तिरव्यवस्थितिरिति भावेन विवृणोति ॥ **उभयश्रुतेरन्यथानुपपत्तेरिति** ॥ सूत्रे हेत्यनेन प्रसिद्धं खलु सर्वत्र श्रुतिद्वयविरोधे व्यवस्थया तत्परिहरणम् । अन्यथा सर्वत्राप्यव्यवस्थेति सूचितं तदेव न्यायं प्रकारान्तरेण विवृणोति ॥ **एवं चेति** ॥ अत्र तत्त्वप्रदीपे । तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यत इति पर्यङ्कोपासनायामिति स्मृतिग्रहणात् तत्सूचनाय वा हेति पदमिति भाति । आसु नाडीषु सुप्त इत्यस्यार्थमाह ॥ **सुप्तः प्राप्त इति** ॥

## तत्त्वसुबोधिनी

ननु सुप्तिस्वरूपमात्रविचारपरस्यास्य माहात्म्याप्रतिपादकत्वात् कथमन्तर्भाव इत्यत आह ॥ **सुप्तप्राप्यत्वेति** ॥ सुप्तिस्वरूपविचारपरत्वेन सुप्तेः भगवदधीनत्वलक्षणमाहात्म्याप्रतिपादकत्वेऽपि सुप्तप्राप्यत्वलक्षणमाहात्म्यप्रतिपादकत्वादन्तर्भावो युक्त इति भावः ॥ **अवशिष्टा सुप्तिरिति** ॥ जाग्रदवस्थादौ श्रान्तस्य श्रमापनोदार्थं सुप्तिरिति सात्र विचार्यत इत्यनन्तरसङ्गतिरिति भावः । ननु स्वप्नजाग्रद्वत् सुप्तेः भगवदधीनत्वं कुतो न विचार्यत इत्यत आह ॥ **भगवदधीनत्वेति** ॥ अज्ञानकालयोरचेतनत्वेनास्वातन्त्र्यस्योक्तत्वात् तदतिरिक्तकारणस्याप्रतीतेरभ्यधिकशङ्काभावात् पूर्वसूत्रे वासोऽपीति सौत्रापिपदेनानुक्तस्यापि समुच्चितत्वाभिप्रायेण भाष्ये स स्वप्न इति श्रुतिशेषोदाहरणाच्च

(तत्त्वसुबोधिनी)

पूर्वन्यायेनैव सुप्तेरपि भगवदधीनत्वसिद्धौ तत्र विवादाभाव इति भावः । तत्र हेतुमाह ॥ **परमात्मन इति** ॥ अत्र दृष्टान्तः **जाग्रत्स्वप्नयोरिति** ॥ अस्तु स्मृतिः, तथापि सुखानुभवः कुत इत्यत आह ॥ **न चेति** ॥ अननुभूतस्य स्मरणासम्भवादिति भावः । इष्टापत्तिमाशङ्क्याह ॥ **न च मुक्तवदिति** ॥ मुक्तवदिति व्यतिरेकदृष्टान्तः । किमपराद्धं सुखेनेति । सज्जीवानां किञ्चिदभिव्यक्त-स्वरूपसुखस्यान्येषां परमात्मसम्बन्धलक्षणनिमित्तोत्पन्नसुखस्य चानुभवसम्भवादिति भावः । ननु कथं दुःखाभावोऽनुमीयते । किं देवदत्तसुप्त्यवस्था न देवदत्तदुःखोपेता तत्कारणशून्यत्वादिति वा, सुप्त्यवस्थाविशिष्टो देवदत्तः न दुःखसमवायवान् तत्कारणरहितत्वादिति वा इति विकल्पं मनसि निधायाद्ये दोषमाह ॥ **पक्षभूतावस्थेति** ॥ दुःखाभावानुमानवादिना सुप्तिकालेऽवस्थानुभव-स्यानङ्गीकारादित्यर्थः । अन्यथा दुःखाभावानुभवस्यापि सम्भवेन तत्स्मरणापलापायोगादिति भावः । द्वितीयं दूषयति ॥ **आत्मेति** ॥ न च देवदत्तमात्रपक्षीकारेणावस्थास्मरणाभावो न दोषायेति वाच्यम् । तथात्वे जाग्रदाद्यवस्थाविशिष्टस्य देवदत्तस्य दुःखसमवेतत्वेन तदभावसाधने बाधप्रसङ्गात् । सौषुप्तिकदुःखाभावसिद्ध्यार्थान्तरत्वाच्चेति । तदभावो नाडीषु आत्मनीति भागं योजयति । **सुप्तजीवस्येति** ॥ नाडीस्थेति भाष्यं व्याख्यातुमाह ॥ **न चैकस्येति** ॥ अर्थाप्रतीतेः सुप्त इत्येतद्व्याचष्टे ॥ **सुप्तः प्राप्त इति** ॥ तदुपपत्तेः श्रुतिद्वयस्योपपत्तेः ।

## वाक्यार्थविवरणम्

**यत्रैतदिति** ॥ यत्र यदा एतत्सुप्तः एषः सुप्तः समस्तः । उपसंहृतेन्द्रियवृत्तिः । सुखेन प्रसन्नमनाः सन् स्वापं दुःखं न विजानातीत्यर्थोऽष्टमाध्यायच्छान्दोग्यभाष्ये स्पष्टः ॥ **तदनुभवा-भ्युपगम इति** ॥ दुःखाभावस्मृतिबलेन सुषुप्तौ दुःखाभावानुभवाभ्युपगम इत्यर्थः ॥ **न स्मर्यत इति** ॥ येन तदन्यथानुपपत्त्या सुप्तौ तदनुभवः सिद्ध्येत् तत्प्रतिबद्ध्य च सुखानुभवः सिद्ध्येदिति भावः ॥ **अवस्थेति** ॥ सुखमस्वाप्समिति स्मृतिबलेनैवावस्थास्मृतिमङ्गीकृत्य सुप्तौ तदनुभवो वाच्यः । तन्न सम्भवति । सुखमस्वाप्समिति दुःखाभावोऽनुमीयत इत्येवं वदता दुःखाभावानुमानवादिना अवस्थास्मरणस्य वक्तुमशक्यत्वेन दुःखाभावानुमानस्यैवानुदयादित्यर्थः ॥ **अवश्यंभावित्वादिति** ॥ तच्चावस्थास्मरणमुक्तरीत्या दुःखाभावानुवादिमतेन सम्भवतीति भावः । अतो दुःखाभावानु-मानासम्भवात् तत्स्मरणमेवेदमित्यङ्गीकृत्य सुप्तौ तदनुभवेऽङ्गीकार्ये सुखानुभवेन किमपराद्धम् । अतस्तत्र प्रमाणाभावोऽसिद्ध इति ध्येयम् ॥ **अन्यथा** ॥ नाडीस्थिते परमात्मनि सुप्त्यनङ्गीकारे ॥ **सर्वत्रापि** ॥ आकाशोत्पत्त्यनुत्पत्त्यवस्थादावपि ॥ **इत्यतिप्रसङ्गः** ॥ इत्येवंरूपोऽतिप्रसङ्ग इत्यर्थः ।

## वाक्यार्थमञ्जरी

ननु स्वप्नजाग्रद्वत् सुप्तेः भगवदधीनत्वं कुतो न विचार्यत इत्यंत आह ॥ **भगवदधीनत्व इति** ॥ **सतेति** ॥ हे सौम्य तदा सुप्तो जीवः सता भगवता संपन्नः प्राप्तस्तेनान्तःप्रवेशितो भवतीत्यर्थः ॥ **यत्रेति** ॥ यत्र यदा एतत्सुप्तः एष सुप्तः समस्त उपरतेंद्रियवृत्तिः संप्रसन्नःसम्यक् प्रसीदति सुखमनुभवतीति संप्रसन्नो जीवः स्वप्नं न विजानाति तदा आसु नाडीषु सुप्तो भवतीत्यर्थः । इष्टापत्तिमाशंक्य परिहरति ॥ **न च मुक्तवदिति** ॥ व्यतिरेकदृष्टान्तोऽयम् ॥ **किमपराद्धं सुखेनेति** ॥ सञ्जीवानां किञ्चिदभिव्यक्तस्य स्वरूपसुखस्यान्येषां परमात्मसम्बन्धलक्षण-निमित्तोत्पन्नसुखस्य चानुभवसम्भवादिति भावः । यथोक्तं षट्प्रश्नभाष्यटीकायाम् । यस्मात्परमेश्वर-तेजसाभिभूतो भवत्यतस्तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदस्मिन् शरीरे भवतीति । यथा सुप्तौ सर्वेन्द्रियाणामुपरतत्वोक्तिनिमित्तं सुखं केन वा जीवोऽनुभवतीत्यभिप्रायेण पृष्टे परमेश्वर-सन्निधानेनोद्भूतं सुखमात्मस्वरूपज्ञानेनानुभवतीतिपरिहारोऽभिप्रेत इति । अत्रोद्भूत इत्यनेनयोग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मनिमित्तजन्यं सुखमुच्यत इति संप्रदायविद इति भावबोधे स्फुटम् ॥ **न स्मर्यत इति** ॥ ततो न तदनुभवाभ्युपगम इति भावः । किमत्र दुःखाभावानुमानम् । देवदत्तीयसुप्त्यवस्था देवदत्तसमवेतदुःखोपेता न भवति तत्कारणशून्यत्वादिति वा । सुप्त्यवस्था-विशिष्टो देवदत्तः न दुःखसमवायी तत्कारणरहितत्वादिति वेति विकल्पं मनसि निधायाद्ये दोषमाह ॥ **पक्षभूतेति** ॥ दुःखाभावानुमानवादिना सुप्तिकाले सुप्त्यवस्थायामनुभवानङ्गीकारा-न्नोत्तरकालं तत्स्मरणं तदनुभवाङ्गीकारे च दुःखाभावस्याप्यनुभवसम्भवेन तत्स्मरणापलापा-योगादिति भावः ॥ **द्वितीयं दूषयति** ॥ **आत्मेति** ॥ न च देवदत्तमात्रपक्षीकार इति वाच्यं तथात्वे जाग्रदवस्थाविशिष्टस्य देवदत्तस्य सुखसमवेतत्वेन तदभावसाधने बाधप्रसङ्गात् सौषुप्तिकदुःखाभाव-सिध्यार्थान्तरत्वाच्चेति भावः ॥ **ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ॐ** ॥ जीवस्य तदभावः तयोः जाग्रत्स्वप्नयोरभावः सुप्तिः नाडीष्वात्मनि नाडीस्थपरमात्मनि भवति । कुतः ? तच्छ्रुतेः तस्य नाडीस्थत्वस्य आत्मस्थत्वस्य चासु तदेति सता सोम्येति च श्रुत्युक्तत्वादित्यर्थः । श्रुतिद्वयानु-सारेण कदाचिन्नाडीषु क्वचिदात्मनीत्यव्यवस्थैवाऽस्तु किमुक्तव्यवस्थेत्यत आह ॥ **एवं चेति** ॥ सर्वत्र आकाशानादित्वसादित्वादौ ।

॥ इति तदभावाधिकरणम् ॥ ४ ॥

## ५. प्रबोधाधिकरणम्

**॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ८ ॥**

यतस्तस्मिन्सुप्तिः ।

'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः'

इति (हि) कौण्डिन्यश्रुतिः ।

### तत्त्वप्रदीपिका

यतस्तस्मिन्परमात्मनि सुप्तिस्तदभिध्यानादेव च, अतस्तस्मादेव प्रबोधस्तदिच्छयैव च ।

'अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा' इति मानसंहितायाम् ॥

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्य सुप्तप्रबोधकत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । भगवतः सुप्तप्रबोधकत्वमहिमाभावे न तस्मिन्निरतिशया भक्तिरुत्पद्येताऽतोऽसौ वर्णनीयः । प्रकृतसुप्तिप्रबोधो विषयः । भगवदधीनो न वेति सन्देहः । सर्वस्य तदधीनत्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजम् । नेश्वरैकाधीनः प्रबोध इति पूर्वः पक्षः । प्रबोधकारणानां भेरीताडनादीनामपि दर्शनात् । न च तेषामकारणत्वे हेतुरस्ति येन जानीमस्तत्प्रतीतिर्भ्रान्तिरिति । अतः परमात्मनः सुप्तप्रबोधकत्वा-भावान्न महैश्वर्यमिति ।

सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **अत इति** ॥ सुप्तप्रबोधोऽप्यस्मात्परमात्मन एव भवति । जीवस्य तस्मिन्नेव सुप्तत्वस्य प्रागुक्तत्वात् । न हीश्वरेण स्वान्तर्निवेशितस्तत्प्रेरणामन्तरेणोद्बोद्धुं शक्नोतीति भावः । दृश्यते भेरीताडनादीनामपि प्रबोधहेतुत्वं तदनन्तरं प्रबोधदर्शनात् । अतः कथं भगवदेकाधीन इत्यत आह ॥ **एष इति** ॥ सावधारणश्रुतिविरोधान्निमित्तमात्रविषयं प्रत्यक्षमिति भावः । अतः सुप्तप्रबोधकत्वेनातिमाहात्म्यवतो हरेर्भक्तिर्युक्तेति सिद्धम् ।

## भावबोधः

**सुप्तप्रबोधकत्वेति ॥** सुप्तिविचारानन्तरं तत्प्रबोधो विचार्यत इत्यनन्तरसङ्गतिरिति भावः । **भगवदधीन इति ॥** अत्र सुप्तप्रबोधो भगवदेकाधीनो न भवत्युत भवतीति चिन्ता । तदर्थं भेरीताडनादीनां पृथक्कारणत्वमस्ति न वेति । तदर्थं प्रबोधस्य भेरीताडनाद्यन्वय व्यतिरेकानुविधायित्वप्रदर्शनं पृथक्त्वे प्रमारूपमुत भ्रम इति । प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित्तदेवेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **नेश्वरैकाधीनो बोध इति ॥** एतेन क्वचित्तदेवेति साध्यप्रतिपादकांशो व्याख्यातः । पृथगपि कारणदृष्टेरिति हेतुवाक्यं योजयति– **प्रबोधकारणानामिति ॥**

ननु 'देहयोगाद्वासोऽपि' इत्यत्र कालस्याचेतनत्वेन जागरावस्थायाः कालाधीनत्वग्राहिप्रत्यक्षस्यापि निमित्तमात्रविषयस्योक्तत्वात् तद्वदत्रापि भेरीताडनादीनामचेतनत्वेन सुप्तिप्रबोधस्य तदधीनत्वग्राहिप्रत्यक्षस्यापि निमित्तमात्रविषयत्वसम्भवात् कथं पूर्वपक्षोत्थानमिति चेत् न । तत्र जागरावस्थायाः कालमात्राधीनत्वेन पूर्वपक्षोऽत्र तु सुप्तिप्रबोधस्येश्वराधीनत्वमङ्गीकृत्यैव क्वचिद्भेरीताडनादीनामपि स्वातन्त्र्येण कारणत्वमिति पूर्वपक्ष इति भेदात् । अत एवोक्तं न्यायविवरणे तत्र कालापेक्षयैवेति ॥ **अत्र तु क्वचित्तदेवेति ॥**

ननु भेरीताडनादीनामचेतनत्वेनास्वातन्त्र्यात् कथं क्वचिदपि सुप्तप्रबोधस्य तन्मात्राधीनत्वेन पूर्वपक्ष इति चेत्; न । तेषामपि कारणत्वस्य प्रत्यक्षत एवोपलब्धेः । न चेयं भ्रान्तिः जागरावस्थायाः कालाधीनत्वग्राहकप्रत्यक्षस्य भ्रमत्वे स एव जागरिते स्थापयतीति विशेषश्रुतिरूपबाधकवदत्र तदभावात् । तदिदमाह– **न च तेषामकारणत्वे हेतुरस्ति ॥ येन जानीमः सा प्रतीतिर्भ्रान्तिरिति ॥** ननु जीवस्य तस्मिन्नेव सुप्तत्वेऽपि सुप्तप्रबोधस्येश्वराधीनत्वं कुत इत्यत आह– **सावधारणश्रुतिविरोधादिति ॥** अनेन 'न ऋते त्वत्क्रियते किञ्चनार' इति श्रुतेस्तत्रापि ईशकृतत्वे सम्यग्ज्ञानादिति न्यायविवरणमप्युक्ततात्पर्यकम् । तत्रापि 'त्वदृते' इत्यवधारणार्थस्योक्तेरिति ।

## भावदीपः

**सुप्तप्रबोधकत्वेति ॥** निर्बाधाक्षसिद्धान्याधीनत्वशङ्कायाः प्रागुक्तसुप्तप्राप्यत्वहेतुनैव निरासेनेति योज्यम् । तेन प्रबोधस्य जागरणैकदेशतया तस्येवास्यापीशाधीनत्वं सिद्धमिति निरस्तम् । एतेन

(भावदीपः)

प्रागुक्तमुपजीव्यास्य प्रवर्तनात्सङ्गतिर्ध्येया । प्रकृतेति सुप्तिविशेषणम् । यद्वा सुप्त्युक्त्या तत्प्रबोधो बुद्धिस्थ इति प्रबोधविशेषणम् ॥ **भगवदिति** ॥ भगवदेकाधीनो न वेत्यर्थः । प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित्तदेवेति न्यायविवरणे क्वचिदित्युक्त्याऽन्यत्रेश्वरोऽपि कारणमिति सूचितम् । तदनुरोधेन श्रौतावधारणव्यावर्त्यं व्यंजयन् साध्यमाह ॥ **नेश्वरैकेति** ॥ किंतु क्वचिदीश्वराधीनः क्वचित्कारणान्तराधीन इत्यर्थः । पृथगपीत्यादिहेत्वर्थमाह ॥ **प्रबोधेति** ॥ देहयोगादित्यत्र कालाधीनत्वप्रत्यक्षवन्निमित्तत्वमात्रपरं प्रत्यक्षं किं नेत्यतो वैषम्यमाह ॥ **न चेति** ॥ तत्र स एव जागरित इति श्रुतिविरोध एव हेतुरिति भावः ॥ **अत इति** ॥ निर्बाधान्याधीनत्वग्राहि-प्रत्यक्ष-बलादित्यर्थः ॥ **परमात्मन इति** ॥ परमात्मन एवेत्यर्थः । यद्वा क्वचित्तदेवेत्यन्यत्रोक्त्या यत्र भेरीताडनादिरेव हेतुः नेश्वर इत्यभिमानः तदभिप्रायेण यथान्यासमेवास्तु । अतः सन्देहोऽपि यथान्यास एव उक्तः । नेश्वरैकेति पूर्वपक्षकोट्युक्तिस्तु सार्वत्रिकबोधाभिप्राया । सूत्रार्थमाह ॥ **सुप्तेति** ॥ यतस्तस्मिन् सुप्तिरिति भाष्यदिशाऽतःशब्दार्थमाह ॥ **जीवस्येति** ॥ **तस्मिन्नेव** नाडीस्थपरमात्मन्येवेत्यर्थः । तस्य हेतुत्वं व्यनक्ति ॥ **न हीति** ॥ 'अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्र-स्थिते हरौ । प्रविशंति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा' इति स्मृत्यनुरोधात्स्वान्तर्निवेशित इत्युक्तम् । निवेशश्च प्राणद्वारा ज्ञेयः । 'देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु । जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम्' इति स्मृतेः । श्रौतावधारणव्यावर्त्यप्रदर्शनायोक्तं **भगवदेकाधीन इति ॥ अत इति** ॥ परमात्मन एव स्वापकत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**नेश्वरैकाधीन इति** ॥ न सर्वोऽपि प्रबोध ईश्वराऽधीनः । किं नाम अकस्माज्जात एवेश्वराधीनः । अन्यस्तु भेरीताडनादिकारणान्तरजन्य इत्यर्थः ॥ **प्रबोधकत्वाभावादिति** ॥ सर्वसुप्तप्रबोधकत्वा-भावादित्यर्थः ॥ **निमित्तमात्राविपयमिति** ॥ या तु भेरीताडनादीनां स्वतन्त्रकारणत्वावगाहिनी प्रतीतिरुत्पद्यते सा भ्रमः । सावधारणश्रुतिविरुद्धत्वात् । या तु निमित्तत्वमात्राऽवगाहिनी सा प्रमेति भावः । एतेन प्रतीतेर्व्याख्यानाऽनर्हत्वात् निमित्तमात्रविषयतया व्याख्यानमयुक्तमिति परास्तम् ।

पूर्वपक्षस्तु न सर्वोऽपि सुप्तप्रबोधः ईश्वराधीनः । क्वचित् भेरीताडनादीनां कारणत्व-दर्शनात् । अतः सर्वप्रबोधकत्वाभावात् न महैश्वर्यमिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु ईश्वराधीन एव सर्वसुप्तप्रबोधः । तत्रैव जीवानां सुप्तत्वेन तदाज्ञया विना प्रबोधायोगात् । भेरीताडनादीनां स्वतन्त्रकारणताग्राहिप्रतीतेः 'एष एव सुप्तं प्रबोधयतीति श्रुतिविरुद्धत्वेनाऽप्रमाणत्वात् । अतः तस्यैव सर्वप्रबोधहेतुत्वात् महामहिम्नि युक्ता निरतिशया भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृतसुप्तीति** ॥ सुप्तिविचारानन्तरं तत्प्रबोधविचार इत्यनन्तरसङ्गतिरिति भावः । सुप्तिप्रबोधो भगवदधीनो न भवत्युत भवतीति चिन्ता । तदर्थं प्रबोधस्य भेरीताडनाद्यन्वयव्यतिरेकानुविधायित्वदर्शनं तेषां नियममात्रत्वेन नोपपद्यत उतोपपद्यत इति । **नेश्वरैकाधीन इति** । न सर्वोऽपि प्रबोध ईश्वराधीनः, किन्नामाकस्माज्जात एवेश्वराधीनः । अन्यस्तु भेरीताडनादिकारणान्तरजन्य इत्यर्थः । एतेन सुप्तेरीश्वराधीनत्वे प्रातिस्विकवचनसद्भावेऽपि न विरोधः । तस्य भाक्तत्वसम्भवादित्युक्तं भवति । यद्वोभयोरपि साम्येन प्रबोधकत्वान्नेश्वरैकाधीनत्वमित्यर्थः । कुत इत्यत एष एव सुप्तं प्रबोधयतीति श्रुतावपधारणेन निरस्यं पृथग्भव इत्युक्तन्यायं प्रबोधस्येश्वरमन्तरेण पृथगपि कारणादृष्टेरित्यर्थतया दर्शयति ॥ **प्रबोधेति** ॥ ननु भेरीताडनादीनां कारणत्वदर्शनं स्वातन्त्र्येण कारणत्वविषयं चेत् भ्रान्तम् । कारणत्वमात्रविषयं चेत् निमित्तमात्रविषयतया सावकाशं कालादेरिव भेरीताडनादेरचेतनत्वेन स्वातन्त्र्येण प्रबोधाकारणत्वस्य द्वितीयतृतीयाधिकरणन्यायेन सिद्धत्वात् इत्यत आह । जाग्रदादेः स्वातन्त्र्येण कालाद्यधीनत्वे बाधकस्य स एव जागरिते स्थापयतीत्यादिविशेषप्रमाणस्य सत्त्ववत् भेरीताडनादीनां स्वातन्त्र्येण प्रबोधकारणत्वे बाधकं विशेषप्रमाणं नास्ति ॥ **येन जानीमः तत्प्रतीतिर्भ्रान्तिरिति** ॥ अथवा निमित्तमात्रविषयेति । 'न ऋते त्वत्क्रियते' इत्यादिवाक्यं तु सामान्यवाक्यं भेरीताडनादेः कारणत्वग्राह्यन्वयव्यतिरेकिदर्शनबाध्यमिति न गतार्थतेति भावः । अत एव सर्वस्य तदधीनत्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजमित्युक्तं ज्ञेयम् । सूत्रे अस्येत्यस्ति । अत इति आत्मनि तदभाव इत्युक्तस्य भगवति सुप्तत्वस्य हेतुतया प्रदर्शकः । अस्मादित्यात्मनीति प्रकृतात्मपरामर्श इति भावेन यतस्तस्मिन् सुप्तिरिति भाष्येऽतःशब्दापेक्षितहेतुप्रदर्शकतया व्याचष्टे ॥ **सुप्तप्रबोध इति** ॥ ननु जीवस्य तस्मिन्नेव सुप्तत्वेऽपि सुप्तिप्रबोधस्येश्वराधीनत्वं कुत इत्यत आह ॥ **न हीश्वरेणेति** ॥ एतेन सुप्तिप्रबोधस्य कचिदीशाधीनत्वं

(वाक्यार्थमुक्तावली)

क्वचिदन्याधीनत्वमिति निरस्तम् । सर्वेषामपि सुप्तावीशेनान्तर्निविष्टत्वेन न्यायसाम्यात् । तच्छ्रुतेररिति श्रुतेः प्रकृतत्वात् तत्परामर्शकतयाप्यतःशब्दं व्याकुर्वन्भाष्यमवतारयति ॥ **दृश्यत इति** ॥ **सावधारणश्रुतिविरोधादिति** ॥ एतेन समानेति न्यायोऽपि प्रदर्शितो भवति । **निमित्तमात्रमिति** ॥ एतानेवापेक्ष्यैव फलं ददानीति स्वतन्त्रेणापीशेन सङ्कल्पितत्वादीशङ्कप्तिनिमित्तमात्रविषयमित्यर्थः । ननु प्रबोधे सति शब्दश्रवणं तस्मिन् सति प्रबोध इत्यन्योन्याश्रयत्वमिति चेन्न । भेर्यादिशब्दे-नान्तर्यामिस्तुतिरूपेण प्रसन्नस्येश्वरस्य प्रबोधकत्वेन तावन्मात्रेण शब्दस्य निमित्तमात्रत्वोपपत्तेः । स्पष्टं चैतदन्यत्रेति ।

## तत्त्वसुबोधिनी

**सुप्तप्रबोधकत्वेति** ॥ सुप्तिविचारानन्तरं तत्प्रबोधो विचार्यत इत्यनन्तरसङ्गतिरिति भावः । **प्रबोधेति** ॥ ननु देहयोगादित्यत्र कालस्याचेतनत्वेनास्वातन्त्र्याज्जागरावस्थायाः कालानधीनत्ववत् भेरीताडनादीनामप्यचेतनत्वेन सुप्तिप्रबोधस्य तदनधीनत्वस्य पूर्वाधिकरणन्यायेन सिद्धत्वात्कथं पूर्वपक्ष इति चेन्न तत्र जागरावस्थायाः कालमात्राधीनत्वे पूर्वपक्षः । अत्र तु सुप्तिप्रबोधस्येश्वरा-धीनत्वमङ्गीकृत्यैव क्वचित् भेरीताडनादीनामपि स्वातन्त्र्येण कारणत्वमिति पूर्वपक्ष इति भेदात् । न च तथापि भेरीताडनादीनामचेतनत्वेनास्वातन्त्र्यात्कथं पूर्वपक्षोत्थानमिति वाच्यम् । तेषामपि कारणत्वस्य प्रत्यक्षत एवोपलब्धेः । न चेयं भ्रान्तिः । जागरावस्थायाः कालाधीनत्वग्राहक-प्रत्यक्षस्य भ्रमत्वे स एव जागरिते स्थापयतीति विशेषश्रुतिरूपबाधकवदत्र बाधकाभावादिति भावः । ननु जीवस्य तस्मिन्नेव सुप्तत्वेऽपि सुप्तिप्रबोधस्येश्वराधीनत्वं कुत इत्यत आह ॥ **न हीति** ॥ **सावधारणेति** ॥ एष एवेति सावधारणश्रुतिविरोधादित्यर्थः ।

## वाक्यार्थविवरणम्

**प्रत्यक्षमिति** ॥ भेरीताडनादीनां प्रबोधहेतुत्वावगाहिप्रत्यक्षमित्यर्थः ।

## वाक्यार्थमञ्जरी

सुप्तजीवस्य प्रबोधोऽस्मात्परमात्मन एव भवति । कुतः ? अतः जीवस्य परमात्मन्येव सुप्तत्वा-दित्यर्थः । ननु जीवस्य तस्मिन्नेव सुप्तत्वेऽपि सुप्तप्रबोधस्येश्वराधीनत्वं कुत इत्यत आह ॥ **न हीति** ॥

॥ इति प्रबोधाधिकरणम् ॥ ५ ॥

## ६. कर्मानुस्मृत्यधिकरणम्

**॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥**

न च केषाञ्चित्स्वप्नादिकर्ता न तु सर्वेषामिति ।

'एष ह्येव साधु कर्म कारयतीति (कौ.उ.३-८) कर्मण्यवधारणात् ।

'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु ।
परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन' इत्यनुसारिस्मृतेश्च ॥

'एष स्वप्नान्प्रदर्शयत्येष प्रबोधयत्येष एव परम आनन्द' इति च श्रुतिः ।

'आत्मानमेव लोकमुपासीत' (बृ.उ.३-४-१५) इति च विधिः ॥

### तत्त्वप्रदीपिका

न च मन्तव्यमुक्तप्रमाणानुग्रहाय केषाञ्चित्स्वप्नादिकर्ता भवतु न सर्वेषां, सर्वेषां बन्धमोक्षप्रदत्वाभावाचेति । 'एष ह्येव साधुकर्म कारयति एष उ एवासाधुकर्म कारयति' इति सर्वस्मिन्कर्मणि तस्यैव हेतुत्वावधारणात् । यतः स्वप्नादेर्जनिः । स्वप्नादेर्जनकः प्रदर्शकश्चैक एव । उक्तानुसारिस्मृतेश्च । 'आत्मानमेव लोकमुपासीत' इति सर्वाश्रयात्मोपास्तिविधेश्च । यस्य प्रसादादेव सर्वानिष्टहानिः सर्वकामावाप्तिश्च विपर्यये च विपर्ययः । तत्र ह्युपास्तिविधिस्सुयुक्तः । हेतौ वा चशब्दः । तस्मात्स एव परमात्मा सर्वकर्ता नान्यः । न च किञ्चित्स्वभावत एव । स्वभावस्यापि तदधीनत्वादित्यभिप्रायः ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं सर्वावस्थानां तदधीनत्वमहिम्नो निरूपणादस्ति शास्त्रादिसङ्गतिः । सर्वावस्थानां भगवदनधीनत्वे न तस्मिन्निरतिशया भक्तिर्भवेदतस्तन्निरूपणीयम् । प्रकृतावस्था एवात्र विषयः । किं सर्वजीवानां सार्वकालीना भगवदधीना अथ केषाञ्चित्किञ्चित्कालीना इति सन्देहः । अवस्था भगवदधीना इत्युक्तवाक्यस्योभयार्थसम्भवः सन्देहबीजम् । न सर्वेषां सार्वकालीना अवस्था भगवदधीनाः किं नाम केषाञ्चित्किञ्चित्कालीना इति पूर्वः पक्षः ।

(तत्त्वप्रकाशिका)

**राजादीनां खण्डेशत्वदर्शनात् । न च लोकविलक्षणमीश्वरस्य सर्वप्रेरकत्वमभ्युपगन्तुं शक्यते । अतिप्रसङ्गात् । न चात्र प्रमाणमस्ति येनादृष्टमपि कल्पयामः । अतः सर्वावस्थाप्रेरकत्वाभावेन न सर्वैश्वर्यं हरेरिति ।**

**सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ स एवेति ॥ स परमात्मैव सर्वावस्थाप्रेरको न तु केषाञ्चित्कादाचित्कावस्थाप्रेरकः । 'एष ह्येव' इति सर्वकर्मणां भगवदधीनत्वस्य श्रुतत्वात् । स्वप्नादिप्राप्तेश्च तदन्तर्भावात् 'प्रदर्शकः' इति स्मृतेश्च । 'एष स्वप्नान्' इति श्रुतेश्च । अवधारणस्य सर्वत्रान्वयेन विवक्षितसिद्धेः । 'आत्मानमेव' इति परमात्मन एवोपास्यत्वविधानाच्च । अन्यस्याऽपि प्रेरकस्य सद्भावेऽवधारणानुपपत्तेरिति भावः । चशब्दः पक्षान्तरनिषेधार्थः । स्फुटमभिमतार्थाभिधायकत्वमनुसारित्वम् । अतः सर्वावस्थाप्रेरके महामहिम्नि ईश्वरे भक्तिर्युक्तेति सिद्धम् ।**

## गुर्वर्थदीपिका

सर्वावस्थानामित्यत्र सार्वदैशिकसार्वकालिकसर्वावस्थानामित्यर्थः । अन्यथाऽवस्थात्रयस्य भगवदधीनत्वेन प्रागेव वर्णितत्वेन पौनरुक्त्यं स्यात् । एष स्वप्नानिति एष प्रबोधयतीत्युत्तमत्वघटकहेतावववधारणाभावे अथ तस्मात्कारणादेष एव परम इति साध्येऽप्यवधारणं न स्यात् । कालान्तरे देशान्तरे सुप्त्यादिप्रवर्तकानामन्येषामपि परमत्वसम्भवेन एष एव परम इति परमान्तरव्यवच्छेदो न स्यात् । अत एवकारस्य स्थानद्वयेऽप्याकर्ष इति भावेनोक्तं **अवधारणस्येति** ॥

## भावबोधः

**सर्वावस्थानामिति** ॥ प्रत्येकमवस्थानां भगवदधीनत्वोक्तावेवैतद्विचाराङ्गसंशयोत्थानादनन्तरसङ्गतिरिति भावः ॥ **सर्वजीवानामिति** ॥ अत्रावस्थाः किं केषाञ्चित् किञ्चित्कालीना एव भगवदधीना उत सर्वजीवानां सार्वकालीना इति चिन्ता । तदर्थमीश्वरः किं लौकिकराजादिवदुत नेति । राजादीनां पृथग्दर्शनादीशान्तरकल्पनेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **न सर्वेषामिति** ॥ केषाञ्चित् काश्चिदेवेत्यनेनेशान्तरकल्पनेति न्यायविवरणमुक्तार्थं भवति । राजादीनामिति हेतुं व्याख्याति– **राजादीनामिति** ॥ **न चात्र प्रमाणमिति** ॥ 'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च' इत्यादितत्तदधिकरणोदाहृतवाक्यानां केषाञ्चित् कदाचित् स एवेत्यर्थोपपत्त्या सावकाशत्वाद्विवक्षितार्थे न विशेषप्रमाणत्वमिति भावः । ननु 'एष ह्येव' इति । श्रुतिरवस्था-

(भावबोधः)

प्रेरकत्वे भगवतः कथं प्रमाणमित्यत आह– **स्वप्नादिप्राप्तेश्चेति** ॥ एष स्वप्नानिति श्रुतेश्चेति । उपलक्षणमेतत् ।

'देशकालविशेषेऽपि स्वप्नादीनां स एव हि ।
तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत् ॥'

इति न्यायविवरणोक्ता श्रुतिरपि ग्राह्या ।

ननु ईशान्तरसत्त्वेऽपि 'स एष स्वप्नान्दर्शयति' इति श्रुतेः सावकाशत्वात् कथं विवक्षितार्थ-साधकत्वमित्यत आह– **अवधारणस्येति** ॥ 'एष एव परमानन्द' इति श्रुतस्या वधारणस्यैव 'स्वप्नान् दर्शयति' 'एष प्रबोधयति' इत्यत्राप्यन्वयेन विवक्षितार्थस्य भगवत एव सर्वेषां सर्वावस्था-प्रेरकत्वस्य सिद्धिरित्यर्थः । स्वप्नानिति बहुवचनेन सर्वपुरुषसम्बन्धिसार्वकालिकावस्थालाभादेव 'एव' इत्येवकारेणेशान्तरव्यवच्छेदसिद्धेरिति भावः ।

ननु परमात्मन एवोपास्यत्वविधानेऽप्यवस्थानां भगवदधीनत्वं कुत इत्यत आह– **अन्य-स्यापीति** ॥ अन्यस्यावस्थाप्रेरकत्वे तस्याप्युत्तमत्वेनोपास्यत्वप्राप्त्यात्मानमेवेत्यवधारणं नोपपद्यत इति भावः ।

ननु सौत्रः 'च'शब्दः किमर्थं समुच्चयार्थत्वस्यावधारणविरुद्धत्वादित्यत आह– **चशब्द इति** ॥ ईशान्तरकल्पनारूपपक्षान्तरेत्यर्थः । सौत्रमनुस्मृतीति पदम् 'अनुस्मृतेश्च' इत्यादिवत् प्रत्यभिज्ञापरमिति प्रतीतिनिरासार्थमनुसारिस्मृतेश्चेति व्याख्यातम् । तत्र स्मृतेरनुसारित्वं नाम किमित्यत आह– **स्फुटमिति** ॥

## भावदीपः

**सर्वावस्थानामिति** ॥ सर्वेषां जनानां याः स्वप्नादिसकलावस्थाः तासामित्यर्थः । सामान्य-चिन्तानन्तरं विशेषचिन्तावसरः । मोहस्य प्रधानावस्थात्वाभावद्योतनाय ततः पूर्वं चास्य निवेश इति भावः ॥ **किञ्चित्कालीना इति** ॥ भगवदधीना इति योज्यम् ॥ **इत्युक्तवाक्यस्येति** ॥ स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव चेति । स एव जागरिते स्थापयतीति । एष एव सुप्तं बोधयतीत्यादिवाक्यस्येत्यर्थः । स एवेत्याद्यवधारणसत्वेऽपि सर्वेषामित्यादिसर्वशब्दाभावाद्भवत्येवैवं

(भावदीपः)

संशय इति भावः । न चेत्यादिभाष्योक्तं स एव चेति सौत्रचशब्दव्यावर्त्यपूर्वपक्षं व्यनक्ति ॥ **न सर्वेषामिति** ॥ राजादीनां पृथग्दर्शनादित्यन्यत्रोक्तहेतुमाह ॥ **राजेति** ॥ **अतिप्रसङ्गादिति** ॥ कालाज्ञानादिनिमित्तापेक्षां विनापि कुर्यादित्यर्थः । अक्षरनयादौ लोकदृष्टित्यागेनाणुत्व महत्त्वाद्यभ्युपगमवादवदस्त्विहापीत्यतः सूत्रशेषव्यावर्त्यमाह ॥ **न चेति** ॥ प्रमाणं चात्र सर्वप्रेरकत्वे नास्ति अणुत्वादौ त्वस्तीति भावः ॥ **अत इति** ॥ लोकदृष्ट्यनुसारात्प्रमाणाभावाच्चेत्यर्थः ॥ **सर्वावस्थाप्रेरकत्वाभावेनेति** ॥ एतेनाग्रेतनेन अनेन सर्वगतत्वमायामयशब्दादिभ्य इत्यनेन पौनरुक्त्यं निरस्तम् । तत्र सार्वत्रिकसृष्ट्यादिकर्तृत्वोक्तावपीह सर्वावस्थाप्रेरकत्वं नेति शङ्कायां तत्समर्थनात् । उक्तश्चायमर्थभेदः सङ्क्षेपभाष्ये अत्र सर्वावस्थाप्रेरकश्चेति । तत्र तु 'सर्वदेशेषु कालेषु स एकः परमेश्वरः' इति ।

सूत्रार्थमाह ॥ **स परमात्मैवेति** ॥ आत्मनीति प्रकृतात्मपरामर्श इति भावः । एवकारव्यावर्त्योक्तिपरं न चेति भाष्यं व्याचष्टे ॥ **न त्विति** ॥ सूत्रभाष्यशेषयोरर्थमाह ॥ **एष हीति** ॥ **सर्वत्रेति** ॥ भाष्यादावित्यर्थः । क्वचित् स्वतःसिद्धेन क्वचित्कृतेनेति योज्यम् । न चेत्यादि भाष्यमुत्सूत्रमिति वाऽवधारणार्थपरमिति वा भ्रमनिरासायाह ॥ **चशब्द इति** ॥ स एवेत्युक्त्याऽर्थात् प्राप्तस्यापि श्रौतत्वसिध्यर्थं चशब्दादिति भावः । तत्वप्रदीपे तु हेतौ वा चशब्दः । तस्मात्स एव सर्वकर्ता नान्यः न च किंचित्स्वभाव एव । स्वभावस्यापि तदधीनत्वादित्यभिप्राय इत्यर्थान्तरं चोक्तम् ॥ **अत इति** ॥ कर्मानुस्मृत्यादिबलादित्यर्थः ।

## अभिनवचन्द्रिका

**अवस्था भगवदधीना इत्युक्तवाक्यस्येति** ॥ अवस्थानां भगवदधीनत्वमित्यस्मिन्नर्थे उक्तानां 'एष एव सुप्तं प्रबोधयतीत्यादिवाक्यानाम् उभयथाऽर्थसम्भव इत्यर्थः ॥ **राजादीनामिति** ॥ अत्र 'ईश्वरः खण्डेशो भवितुमर्हति, अधिपतित्वात् राजादिवत्' इति प्रयोगो द्रष्टव्यः ॥ **अभ्युपगन्तुं शक्यत इति** ॥ 'एष एव सुप्तं बोधयति' इत्याद्यर्थतयेत्यर्थः ॥ **न चात्र प्रमाणमिति** ॥ समाख्यारूपमिति शेषः ॥ **अदृष्टमपीति** ॥ दृष्ट्यननुगुणमपि सर्वेशत्वं श्रुत्यर्थत्वेन कल्पयाम इत्यर्थः । एतेन प्रमाणसद्भावे तद्बलेनैव सिद्धत्वेन कल्पनाभावात् प्रमाणसद्भाव एव अदृष्टकल्पना कार्या नान्यथेति वचनमयुक्तमिति परास्तम् । ननु 'एष स्वप्नान् दर्शयति' इतिश्रुतौ स्वप्नादि-

(अभिनवचन्द्रिका)

दर्शकत्वमनवधारणेनोक्त्वा 'एष एव परम आनन्द' इति सावधारणं परमानन्दत्वाभिधानात् तदेवेश्वरैकनिष्ठम् । स्वप्नादिदर्शकत्वं तु कालान्तरेऽन्यनिष्ठमिति खण्डेशत्वमेवेश्वरस्येत्यत आह– **अवधारणस्य सर्वत्रेति ॥** ननु सौत्रश्चशब्दः किमर्थः । समुच्चयार्थत्वस्याऽवधारणविरुद्धत्वादित्यत आह– **चशब्द इति ॥** पूर्वपक्षनिरासार्थ इत्यर्थः । अत एव भाष्ये 'न च केषाञ्चित्स्वप्नादिकर्ता, न तु सर्वेषामिति' इति पूर्वपक्षनिषेधः कृतः ।

पूर्वपक्षस्तु न ईश्वरः सर्वेषां सर्वकालीन सर्वाऽवस्थाप्रवर्तकः अधिपतित्वात् राजवत् । न च 'एष एव सुप्तं प्रबोधयति' इत्यादिश्रुतिविरोधः । यत्किञ्चिन्नियामकपरत्वेनाऽपि योजयितुं शक्यत्वात् । न च विस्पष्टसमाख्याश्रुत्यभावे युक्तिविरुद्धं सर्वनियामकत्वं श्रुत्यर्थतया प्रतिपत्तुं शक्यतेः । अतः सर्वाऽवस्थाप्रेरकत्वाऽभावेन न सर्वैश्वर्यं हरेरिति ।

सिद्धान्तस्तु ईश्वर एव सर्वकालीनसुप्त्यादिनियामकः सर्वकर्मनियामकत्वात्, सुप्त्यादीनां च तदन्तर्भावात् । न च तत्र प्रमाणाऽभावः 'एष ह्येव साधुकर्म कारयति' इति सावधारणश्रुतेः । 'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन' इति स्मृतेः, 'एष स्वप्नान् दर्शयति एष प्रबोधयति, एष एव परम आनन्द' इति श्रुतेः । 'आत्मानमेव लोकमुपासीत' इति विधेश्च । न ह्यन्यस्य स्वप्नादिप्रवर्तकत्वे परमात्मन एवोपास्यत्वं सम्भवति । अतः सर्वावस्थाप्रेरके महामहिम्नि ईश्वरे भक्तिर्युक्तेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सर्वावस्थानामिति ॥** प्रत्येकमवस्थानां भगवदधीनत्वोक्तावेवैतद्विचाराङ्गसंशयोत्थानादनन्तरसङ्गतिरिति भावः ॥ **सर्वजीवानामिति ॥** अत्रावस्थायाः किं केषाञ्चित्किञ्चित्कालीना भगवदधीना उत सर्वजीवानां सर्वकालीना इति चिन्ता । तदर्थं किमीश्वरो लौकिकराजादिसदृश उत तद्विलक्षण इति । अवस्था भगवदधीनेत्युक्तवाक्यस्येति । अवस्था भगवदधीनेत्यत्र पठितश्रुतीनामित्यर्थः । न केषाञ्चिदित्युत्तरभाष्यानुसारेण पूर्वपक्षयन् पृथग्भव इत्युक्तन्यायं व्यनक्ति **॥ न सर्वेषामित्यादिना ॥ खण्डेशत्वेति ॥** कालविशेषे केषाञ्चिदेवेशत्वदर्शनादित्यर्थः । अनेनेशः खण्डेशो भवितुमर्हति अधिपतित्वात् । राजादिवदिति प्रयोगो दर्शितः । तस्याप्रयोजकत्वपरिहराय विपक्षे बाधकमाह **॥ न चेति ॥** नन्वीशस्य युगपदणुत्वं महत्त्वं च लोकविलक्षणमप्यङ्गीक्रियते

(वाक्यार्थमुक्तावली)

तदिदमपि किन्न स्यादित्यत आह ॥ **न चात्रेति** ॥ सूत्रे सर्वावस्थाप्रवर्तक इति शेषमभिप्रेत्य व्याचष्टे ॥ **स परमात्मैवेति** ॥ केषाञ्चित्स्वप्नादिकर्ता न तु सर्वेषामिति नेत्येतद्व्याचष्टे ॥ **न तु केषाञ्चिदिति** ॥ कर्मेति धर्माधर्मरूपं व्यापारमात्रं वा । तेन तस्येशैकायनत्वश्रुतिर्लक्ष्यते । 'एष ह्येव साधु कर्म कारयति, एष ह्येवासाधु कर्म कारयति' इति सर्वकर्मणामीशायत्तत्वश्रुतेरित्यर्थमभिप्रेत्याह ॥ **एष ह्येवेति** ॥ ननु 'एष ह्येव' इति श्रुतिरवस्थाप्रेरकत्वे भगवतः कथं प्रमाणमित्यत आह ॥ **स्वप्नादिप्राप्तेश्चेति** ॥ नन्वीशान्तरसत्त्वेऽप्येषः स्वप्नानिति श्रुतेः सावकाशत्वात्कथं विवक्षितार्थ-साधकत्वमित्यत आह ॥ **अवधारणस्येति** ॥ 'एष एव परमानन्द' इति श्रुतस्यावधारणस्य एष एव स्वप्नान् प्रदर्शयति एष एव प्रबोधयतीत्यत्रान्वये स्वप्नानिति बहुवचनेन सर्वपुरुषसम्बन्धि-सार्वकालिकावस्थालाभात् एष एवेत्येवकारेणेशान्तरव्यवच्छेदसिद्धेश्चेति भावः ॥ **अवधारणा-नुपपत्तिरिति** ॥ प्रेरकान्तरस्याप्युपास्यत्वादात्मानमेवेत्यवधारणानुपपत्तिरिति भावः । एतेन सन्मानेत्युक्तसिद्धान्तन्यायः प्रकारचतुष्टयेन सूत्राक्षरारूढो दर्शितः । ननु स एवेत्यवधारणेन नान्य इतीशान्तरव्यवच्छेदलाभेऽपि न तु केषाञ्चित्स्वप्नादिकर्ता न तु सर्वेषामिति भाष्योक्तस्य पक्षान्तर-निषेधस्योत्सूत्रत्वमित्यत आह ॥ **चशब्द इति** ॥ समुच्चयाधिक्यन्यूनाद्यर्थानां प्रकृतानुपयोगादिति भावः । भावबोधे तु चशब्द ईशान्तरकल्पनारूपपक्षान्तरव्यवच्छेदार्थ इत्यर्थ उक्तः । न चैवकारेण तत्सिद्धिरिति वाच्यम् । एवेत्यर्थाल्लब्धस्यापि वाचनिकत्वाय चशब्दसार्थक्यादिति तेषामाशयः । केचित्तु प्रेरकं विनापि अवस्था भवत्विति पक्षान्तरव्यवच्छेदार्थ इत्याहुः । ननु स्मृतेरित्येतवता पूर्तेरनुग्रहणं व्यर्थमित्यत आह ॥ **स्फुटमिति** ॥ स्मृतौ सर्वेषां सार्वदेशिकानां परमपुरुषो विष्णुरेक एव स्वप्नादेः प्रेरकस्ततोऽन्यो नास्ति कश्चनेति स्पष्टं विवक्षितार्थोक्तेरिति भावः ।

## तत्त्वसुबोधिनी

**सर्वावस्थानामिति** ॥ प्रत्येकावस्थानां भगवदधीनत्वोक्तावेवैतद्विचाराङ्गसंशयोत्थानादनन्तर-सङ्गतिरिति भावः । अवस्था भगवदधीना इत्युक्तवाक्यस्येति । न चैवमाकारस्यैव कस्यापि वाक्यस्याभावात् कथमेवमुक्तमिति वाच्यम् । एतदर्थप्रतिपादकवाक्यजातस्य इत्यर्थस्य विवक्षित-त्वादिति भावः । कुत एतदित्यत आह ॥ **राजादीनामिति** ॥ लोके राजादीनां खण्डेशत्वस्य दृष्टत्वादीश्वरस्यापि राजसदृशत्वात् खण्डशत्वमेव वक्तव्यम् । एवं च प्रसिद्धराजवदेव न

(तत्त्वसुबोधिनी)
सर्वावस्थानां तदधीनत्वमित्यर्थः । नन्वीश्वरस्य लोकविलक्षणत्वात् तत्प्रेरणस्यापि लोकविलक्षणत्वात् युज्यत सर्वावस्थानां तदधीनत्वमित्यत आह ॥ **न चेति** ॥ एवं हि अस्मदादीनामपि तादृशप्रेरकत्वादीनां वक्तुं शक्यत्वादित्यतिप्रसङ्ग इत्यर्थः । ननु सर्वावस्थानां भगवदधीनत्वे स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव चेत्यादिप्रमाणस्य विद्यमानत्वात् लोके दृष्टमपि विलक्षणमीश्वरस्य प्रेरकत्वमङ्गीकर्तव्यमित्यत आह ॥ **न चात्रेति** ॥ तथा च केषाञ्चित् कदाचित् स एवेत्यर्थोपपत्त्या सावकाशत्वात् विवक्षितार्थे न तस्य विशेषप्रमाणत्वमिति भावः । ननु 'एष ह्येव' इति श्रुतिः प्रेरकावस्थात्वे भगवतः कथं प्रमाणमित्यत आह ॥ **स्वप्नादिप्राप्तेश्चेति** ॥ एष स्वप्नानिति श्रुतेश्चेति ॥ **उपलक्षणमेतत्** ॥ 'देशकालविशेषेऽपि स्वपदीनां स एव हि । तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत्' इति श्रुतिरपि ग्राह्या ।

ननु ईशान्तरसत्त्वेऽपि एष स्वप्नान् दर्शयतीति श्रुतेः सावकाशत्वात् कथं विवक्षितार्थसाधकत्वमित्यत आह ॥ **अवधारणस्येति** ॥ 'एष एव परमानन्द' इति श्रुतस्यावधारणस्य 'एष स्वप्नान् दर्शयति' इत्यत्राप्यन्वयेन विवक्षितार्थस्य भगवत एव सर्वेषां सर्वावस्थाप्रेरकत्वसिद्धिरित्यर्थः । स्वप्नानिति बहुवचनेन सर्वपुरुषसम्बन्धिसार्वकालिकावस्थानात् एष एवेत्येवकारेणेशान्तरव्यवच्छेदसिद्धेरिति भावः । ननु परमात्मन एवोपास्यत्वविधानेऽपि अवस्थानां भगवदधीनत्वं कुत इत्यत आह ॥ **अन्यस्यापीति** ॥ अन्यावस्थाप्रेरकत्वे तस्योत्तमत्वेनोपास्यत्वप्राप्त्या आत्मानमेवेत्यवधारणं नोपपद्यत इति भावः । ननु सौत्रश्चशब्दः किमर्थः समुच्चयार्थत्वस्यावधारणविरुद्धत्वादित्यत आह ॥ **चशब्द इति** ॥ ईशान्तरकल्पनारूपपक्षान्तरेत्यर्थः । ननु सौत्रमनुस्मृतिपदमनुस्मृतेश्चेत्यादिवत् प्रत्यभिज्ञानमिति प्रतीतिनिरासार्थमनुसारिस्मृतेश्चेति व्याख्यातम् । तत्र स्मृतेरनुसारित्वं नाम किमित्यत आह ॥ **स्फुटमिति** ॥

## वाक्यार्थविवरणम्

**अतिप्रसङ्गादिति** ॥ अन्यथा लोकविलक्षणं शशविषाणमप्यङ्गीकार्यं स्यादित्यर्थः ॥ **स्वप्नादीति** ॥ स्वप्नावस्थाप्राप्तेरपि सर्वकर्मान्तर्गतत्वेन एष ह्येवेति श्रुतिर्भगवतः सर्वावस्थाप्रेरकत्वे प्रमाणं भवतीति द्रष्टव्यम् । सद्भाव इत्यनन्तरं तस्याप्युपास्यत्वप्राप्त्येति शेषः ॥ **अवधारणेति** ॥ आत्मानमेवेत्यवधारणेत्यर्थः ॥ **चशब्द इति** ॥ स एव सर्वावस्थाप्रेरक इत्युक्त्वा स्वयमेव सूत्रकारोऽन्ययोगव्यवच्छेदं चशब्देन दर्शयतीत्यर्थः । एवकारार्थविवरणं स्वयमेव कृतमिति ध्येयम् ।

## वाक्यार्थमञ्जरी

**खण्डेशत्वेति** ॥ किञ्चिद्देशकालीनेशत्वेत्यर्थः ॥ **अतिप्रसङ्गादिति** ॥ लोकविलक्षणानिष्टधर्मस्याङ्गीकारप्रसङ्गादित्यर्थः । लोकविलक्षणयुगपदणुत्वमहत्वादिवत्किं न स्यादित्यत आह ॥ **न चात्रेति** ॥ अणोरणीयान्महतो महीयान' इत्यादिश्रुतिः प्रमाणमिति भावः ॥ **ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ** ॥ सर्वावस्थाप्रवर्तकः स एव परमात्मैव नान्यः । कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः । एष ह्येवैनं साधुकर्म कारयतीति सर्वकर्मणामीशाधीनत्वोक्तेः । प्रदर्शकस्त्वित्यनुकूलस्मृतेः एष स्वप्नान्दर्शयतीति शब्दात् । आत्मानमेवेत्युपासनाविधेश्चेत्यर्थः । नन्वीशान्तरसत्वेऽप्येषः स्वप्नान्दर्शयतीति श्रुतेः सावकाशत्वात्कथं विवक्षितार्थसाधकत्वमित्यत आह ॥ **अवधारणस्य चेति** ॥ एष एव परमानन्द इति श्रुतस्यावधारणस्य एष स्वप्नान्दर्शयत्येष प्रबोधयतीत्यत्राप्यन्वयेन विवक्षितार्थस्य भगवत एव सर्वावस्थाप्रेरकत्वस्य सिद्धेरित्यर्थः । ननु परमात्मन एवोपास्यत्वविधानेऽप्यवस्थानां भगवदधीनत्वं कुत इत्यत आह ॥ **अन्यस्यापीति** ॥ अन्यस्याप्यवस्थाप्रेरकत्वे तस्याप्युत्तमत्वेनोपास्यत्वप्राप्त्या आत्मानमेवेत्यवधारणं नोपपद्यत इति भावः । ननु सौत्रश्चशब्दः किमर्थः समुच्चयार्थस्यावधारणविरुद्धत्वादित्यत आह ॥ **चशब्द इति** ॥ ईशान्तरकल्पनारूपपक्षान्तरेत्यर्थः । किमिदं स्मृतेरनुसारित्वमित्यत आह ॥ **स्फुटमिति** ॥

॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

## ७. मुग्धप्राप्त्यधिकरणम्

**॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥**

मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ।

'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।
समीपस्थस्तथा स्वप्नं स्वपित्यस्मिल्लयं व्रजन् ॥
यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।
अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेरः' इति वाराहे ॥

सोऽपि तत एवेति सिद्धम् ।

'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते ।
स ईशः परमो ज्ञेयः परमानन्दलक्षण' इति (हि) कौर्मे ॥

### तत्त्वप्रदीपिका

'मुग्धं' मोह इति व्याचख्यौ । भावे क्तप्रत्ययदर्शनात् । सोऽपि तत एवेत्युक्तहेतुभ्य एव सिद्धम् ।

### तत्त्वप्रकाशिका

सर्वावस्थानां तद्बोधानां चेश्वराधीनत्वे सिद्धे अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्यावान्तरावस्था-संस्थितजीवप्राप्यत्वनिरूपणादस्ति शास्त्रादिसङ्गतिः । अन्यथा निरतिशयैश्वर्याभावेन न तत्र भक्तिरुत्पद्यत इति निरूपणीयम् । अवस्थाविचारप्रसक्तो मोहोऽत्र विषयः । किं जीवस्य ईश्वरे तदन्यत्र वा भवतीति सन्देहः । द्विविधावस्थादर्शनं च सन्देहबीजम् । न मोहो भगवदितरत्र जीवस्येति पूर्वः पक्षः । जाग्रत्स्वप्नयोः पृथगवस्थात्वात् । अन्यथा तत्सङ्कीर्णतापातात् । न चैवं सुप्तिसङ्करप्रसङ्गो दोषः । समानधर्मतया तत्संकरस्य गुणत्वात् । अतः परमात्मन्येव मोहो जीवस्येति ।

सिद्धान्तयत्सूत्रमुपन्यस्य प्रतिज्ञांशं तावद्व्याचष्टे ॥ **मुग्ध इति** ॥ हेत्वंशं व्याख्यातुं समस्तसूत्रार्थे स्मृतिमुदाहरति ॥ **हृदयस्थादिति** ॥ मोहे तावत्परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ता न तावत्त्रयः कल्पा मोहे सम्भवन्ति । जाग्रदाद्यवस्थाधर्मत्वात् । एवं च प्रसक्तप्रतिषेधेऽन्यस्या-

(तत्त्वप्रकाशिका)

**प्रसङ्गात् परिशिष्टोऽर्धप्रवेश एव मोहे जीवस्य ज्ञायत इति भावः । मोहस्यावस्थात्रयातिरेकित्वे भवेदेतत् । तदेव कुत इत्यत आह ।। दुःखेति ।। न तावत्सुप्त्यन्तर्भावो मोहस्य दुःखानुसन्धानात् । नापि जाग्रत्स्वप्नान्तर्भावः । दुःखात्मकालाद्यतिरिक्तविषयादर्शनादिति भावः । नातिदूरसामीप्यं चिरं नास्तीत्यप्रसङ्गः । मोहेऽर्धप्राप्तिसमर्थनाय परिशेषे प्रकारान्तरप्रदर्शनं चैतत् । न मोहे समग्रप्राप्तिः । दुःखानुसन्धानात् । नाप्यप्राप्तिरेव । अन्यार्थादर्शनात् । अतः परिशेषादर्धप्राप्तिरिति । दूरस्थः अक्षिस्थः समीपस्थः कण्ठदेशस्थः । 'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः' इत्यादेः सर्वत्र सामीप्यमेवेत्यत उक्तम् ।। हृदयस्थादिति ।। त्रयः तिस्रः । दूरस्थत्वादित्रयः प्रकाराः यत एवमवस्थात्रये विनियुक्ता अतो मोहोऽवस्थेति वा । मोहेऽवस्थानमेव चिन्त्यते तस्येश्वराधीनता कुतो न चिन्त्यते । मोहकारणानां पृथगपि दर्शनादित्यत आह ।। सोऽपीति ।। कर्मानुस्मृत्यादिनैव मोहस्यापि भगवदधीनत्वं सिद्धमतो न चिन्त्यत इत्यर्थः । बाह्यकारणदर्शनं निमित्तविषयमन्यथा विशेषस्मृतिविरोधादिति भावेन तामुदाहरति ।। मूर्छेति ।। अत एव सार्धकोऽयं विचारः । अनिश्चितस्वरूपस्येश्वराधीनताया दुर्ज्ञानत्वात् । अतो मोहावस्थाया अपि भगवदधीनत्वान्मुग्ध-प्राप्यत्वाच्च महामाहात्म्ये तत्र भक्तिरुपपन्नेति सिद्धम् ।**

## गुर्वर्थदीपिका

तस्यावान्तरावस्थासंस्थितजीवप्राप्यत्वेत्यत्र प्राप्यत्वमर्धप्राप्यत्वम् । अतो न पूर्वपक्षसिद्धान्त-योरैक्यम् । अतः परमात्मन्येव मोहो जीवस्येति वदतः पूर्वपक्षिणः परमात्मप्रवेशेऽपि दुःखस्य पृष्ठलग्नत्वान्न तस्य महामाहात्म्यमिति दुराशा । तर्हि सिद्धान्तिनामपि लयेऽयोग्यजीवानां भगव-दुदरप्रवेशेऽपि दुःखानुषङ्गात्कथं महामाहात्म्यमिति चेत् स्वोदरप्रविष्टभक्तजीवानामेव दुःखानपहारे महिम्नो न्यूनता न तु द्वेषिणामपि । द्वेषिषु दुःखदानस्यैव प्रभोर्महामाहात्म्यहेतुत्वात् । मोहावस्थायां च त्रिविधजीवानामपि प्रवेशादंशतो माहात्म्यहानिं शङ्कमानो भगवानर्धजरतीयस्य चायोगा-त्तामवस्थामेवार्धप्राप्तिरूपां कुरुते । अत एव सुप्तौ स्वोदरप्रविष्टानामयोग्यजीवानामपि न स्वरूपभूतं दुःखं व्यञ्जयति । सुप्तेरपुरुषार्थत्वप्रसङ्गात् । अर्धजरतीयस्य चायोगात् । लये दुःखं भुञ्जानास्तु न सुप्ताः । येन सुप्तौ द्वैविध्यं स्यात् । किन्तु मुक्तवत्तेऽपि प्रतिबन्धाख्यसंसारान्मुक्ता एव । लयेऽपि संसारिणः कल्यादयः सुप्तिगतत्वान्न स्वरूपभूतमपि दुःखं भुञ्जते ।

(गुर्वर्थदीपिका)

इयांस्तु विशेषः । योगिजीवानां सुप्तिर्बाह्यदुःखाभावात्स्वरूपभूतसुखलेशाच्च तेषामिष्टा । अयोग्यजीवानां तु स्वरूपभूतसुखाभावात्केवलं बाह्यदुःखाभावेनैवेष्टा । एतावन्तं कालं सुखं सुप्तोऽस्मीत्यौत्तरकालिकपरामर्शाद्भ्रमस्वभावस्तेषां साक्षी तमेव सुखत्वेनानुभवति च । अतश्च-तस्रोऽपीमाः सांसारिकावस्थाः सर्वेषामेकप्रकार एव नात्र द्वैविध्यमिति सिद्धान्तिभिरभिप्रेतत्वात् । हृदयस्थपरमात्मनस्सकाशाज्जाग्रदवस्थायां दक्षचक्षुषि स्थितिरतिदूरमित्युच्यते । स्वप्नदर्शनाय दक्षनेत्रात्परावृत्त्याऽऽगमने सति कण्ठदेशे या स्थितिः तत्सामीप्यमित्युच्यते । सुप्त्यर्थं कण्ठदेशादपि परावृत्य परमात्मन उदरे या स्थितिस्सा अतिदूरमपि न । सामीप्यमपि न । किन्तु 'सता सौम्य तदा सम्पन्नो भवति' इति श्रुतेः सम्पत्तिरित्युच्यते । एवमतिदूरत्वादिप्रकारत्रय-वैचित्र्यादवस्थात्रयवदागमनसमये कण्ठनेत्रयोर्मध्येऽतिदूरं नेति व्युत्पत्त्या नातिदूरमित्यप्येक-प्रकारोऽस्ति । एवं कण्ठात् हृदयं प्रत्यागमे सति मध्ये कण्ठदेशाख्यसामीप्यं नेति न सामीप्याख्यः कश्चित्प्रकारोऽस्ति । उभयं जाग्रदवस्थावदपि न । स्वप्नवदपि न । सुप्तिवदपि न । अतस्तयोरपि काञ्चित्काञ्चित्संज्ञां दत्वाऽवस्थाद्वयमपि कुतो न कल्प्यत इत्यत उक्तं **नातिदूरेति ॥** अतिदूरं च सामीप्यं चातिदूरसामीप्ये द्वन्द्वस्य चैकवद्भावे अतिदूरसामीप्ये एवातिदूरसामीप्यमित्युच्यते । अतिदूरसामीप्यं नेति नञा सह समासे नातिदूरं न सामीप्यमिति पराशङ्कितावस्थाद्वयमपि नातिदूरसामीप्यमित्येवोच्यते । तच्चातिदूरे स्थितिवत्सामीप्ये स्थितिवत् हृदि स्थितिवच्च चिरं बहुकालं नास्तीति कृत्वा प्रसङ्गः पृथगवस्थाद्वयत्वप्रसङ्ग एव नेत्यर्थः । अन्यार्थादर्शनादित्यस्य भगवदन्तरप्राप्तजाग्रत्स्वप्नद्रष्टृजीववदात्मकालदुःखेभ्योऽन्येषामर्थानामदर्शनात् । भगवदुदर-प्रविष्टेभ्योऽन्यस्य चेतनस्य स्वाप्ननानापदार्थानां वा जाग्रत्पदार्थानां वा दर्शननियमादित्यर्थः । सर्वत्र सामीप्यमित्यत्र सर्वत्र जाग्रत्स्वप्नस्थानेऽपि सामीप्यात्तत्तदवस्थाप्रेरकभगवन्मूर्तिसामीप्यादित्यर्थः । मूर्तिविशेषापेक्षया तदुक्तिरित्याह ॥ **हृदयस्थादिति** ॥ अतो मोहोऽवस्थेत्यत्र अवस्था, चिरकालीनत्वादवस्थारूपो मोह इति विशेषणविशेष्यभावः । अन्यथा ज्ञेय इति पुल्लिङ्गानु-पपत्तिरिति ज्ञेयम् ।

## भावबोधः

अस्याधिकरणस्यानन्तरसङ्गतिं वदन् शास्त्रादिसङ्गतिमाह– **सर्वावस्थानामिति** ॥ प्रधानावस्थाविचारानन्तरमेवावान्तरावस्थाविचारावसर इति भावः । न चैवं 'स एव च' इत्यतः

(भावबोधः)
पूर्वमेवानेन भवितव्यमिति वाच्यम्; स्वप्नादिवन्न मोहोऽसङ्कीर्णावस्थेति ज्ञापनाय सूत्रकृता व्यवधानकरणादिति तात्पर्यम् ॥ **मोहोऽत्रेति** ॥ अत्र मोहः किं भगवदर्धप्राप्तिरूपो न भवत्युत भवतीति चिन्ता । तदर्थमितरावस्थानतिरिक्त उत तदतिरिक्त इति । तदर्थं तद्व्यावर्तकधर्मार्पितो न भवत्युत भवतीति । मोहे ब्रह्मप्राप्तिरेव पृथगवस्थावदिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **न मोह इति** ॥ अनेन मोहे ब्रह्मप्राप्तिरित्येवेत्ययमंशो व्याख्यातः । पृथगवस्थात्वादिति हेतुवाक्यं योजयति– **जाग्रत्स्वप्नयोरिति** ॥ सकाशादिति शेषः । हेतोरप्रयोजकतां परिहरति– **अन्यथेति** ॥ मोहो भगवदितरत्रेत्यङ्गीकार इत्यर्थः ।

नन्वस्तु मोहो भगवदितरत्र तथापि तस्य जाग्रत्स्वप्नसङ्कीर्णता कुत इत्यतश्चोक्तम् । **जाग्रत्स्वप्नयोरिति** ॥ पृथक् परमात्मन इति शेषः । तथा च जाग्रत्स्वप्नयोरेव परमात्माऽप्रवेश-रूपावस्थात्वान्मोहस्यापि अप्रवेशरूपत्वाङ्गीकारे एतत्सङ्कीर्णता स्यादित्यर्थः । अत एव जाग्रत्स्वप्नाभ्यामिति वक्तव्येऽर्थद्वयानुगुण्याय जाग्रत्स्वप्नयोरित्युक्तम् ।

नन्वत्र ब्रह्मप्राप्तिरेवेतिवत् ब्रह्माप्राप्तिरेवेत्यपि पूर्वपक्षः कुतो न कृतः । तस्यापि पक्षस्यार्ध-प्राप्तिरूपसिद्धान्तविरोधित्वादिति चेत्, न; प्राप्तिरेवेति पूर्वपक्षे मोहस्य सुप्तिसाङ्कर्यापादने सुप्तेरेकत्वेन तत्साङ्कर्यस्येष्टत्ववदप्रवेश एवेति पूर्वपक्षे मोहस्य जाग्रत्स्वप्नसाङ्कर्यापादने जाग्रत्स्वप्नयोः परस्परं पृथगवस्थात्वादेकस्योभयसाङ्कर्यस्य पूर्वपक्षिण इष्टत्वासम्भवात् । न चान्यतरसाङ्कर्य-मेवापाद्यम्, उभयोरप्यप्रवेशावस्थात्वाविशेषेण विनिगमकाभावादिति । **व्याख्यातुमिति** ॥ स्मृत्यै-वेत्यर्थः ॥ **एवं चेति** ॥ अनेन परिशेषमानादर्धप्राप्तित्वावगमादिति न्यायविवरणमपि व्याख्यातम् ।

नन्वेतावन्तं कालमहं मूर्च्छितो दुःख्यभवमिति देशकालात्मावस्थादुःखानामनुभवात् कथं दुःखमात्रप्रतिस्मृतेरित्युक्तमित्यतो दुःखपदमनुभूयमानसर्वोपलक्षणम् । मात्रपदं तु तद्व्यति-रिक्तव्यवच्छेदपरमित्यभिप्रेत्याह– **दुःखात्मकालेति** ॥

ननु कण्ठहृदयमध्यप्रदेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणकण्ठ मध्यप्रदेशावस्थान-स्यापि पृथगवस्थात्वं प्रसज्येताविशेषादित्यत आह– **नातिदूरसामीप्यमिति** ॥ दक्षिणकण्ठमध्य-प्रदेशस्य हृदयस्थाद्दक्षिणाक्षिवदतिदूरत्वं कण्ठवदतिसामीप्यं वा नास्तीति मार्गतया तत्प्रवेशगत-जीवस्य यन्नातिदूरसामीप्यं तज्जीवस्य मोहवच्चिरकालं नास्तीति हेतोस्तस्य पृथगवस्थात्वस्याप्रसङ्ग

(भावबोधः)

इति भावः ॥ **अतः परिशेषादिति** ॥ अनेन परिशेषादर्धप्राप्तित्वावगमादिति न्यायविवरणं प्रकारान्तरेण व्याख्यातम् । नन्ववस्थाशब्दस्य स्त्रीलिङ्गत्वात् त्रयोऽवस्था इति कथमित्यत आह– **त्रयस्तिस्र इति** ॥ नात्र त्रयोऽवस्था इति सामानाधिकरण्यं येन लिङ्गव्यत्यासदोष इति पक्षान्तरमाह– **दूरस्थत्वादिति** ॥ मोहस्येश्वराधीनत्वशङ्काभावान्न चिन्त्यत इत्यत आह– **मोहकारणादीनामिति** ॥ अभिघातव्याध्यादीनामित्यर्थः । आदिपदेन तदुद्बोधकारणौषधादीनां ग्रहणम् । अत एव भाष्ये सोऽपीत्यपिशब्दस्य मूर्च्छाप्रबोधनं चेति स्मृत्यनुसारेण तदुद्बोधसमुच्च-यार्थत्वं चेति भावः ।

## भावदीपः

अत्र मोहस्येशाधीनत्वचिन्तामकृत्वा तत्स्वरूपोक्तिरेव कुतः कृतेति शङ्कां निरसितुमाह ॥ **सर्वेति** ॥ कर्मानुस्मृत्यादिहेतुभिः प्रागुक्तदिशेति भावः । मोहस्याप्यवस्थात्वेन तदधीनत्वसिद्धेरपि तत एवेति भाष्य एव व्यक्तत्वादिति भावः । एतेन मोहावस्थानियन्तृत्वमहिम्नो मुग्धप्राप्यत्व रूपमहिमान्तरोक्तिरत्रेति वा प्रधानावस्थाचिन्तानन्तरं अवान्तरावस्थाचिन्तावसर प्राप्तेति वा सार्वत्रिकावस्थाचिन्तानन्तरं क्वचित्कावस्थाचिन्तावसरप्राप्तेति वा पूर्वसङ्गतिः सूचिता ॥ **जीव-प्राप्यत्वेति** ॥ तादृशजीवेनाऽर्धप्राप्यत्वनिरूपणादित्यर्थः । तेन सिद्धान्त इव पूर्वपक्षेऽपि जीवप्राप्यत्वस्यानुमतत्वात्फलाभावाद् व्यर्थेयं चिन्तेति प्रत्युक्तम् । पूर्वपक्षे मोहस्य सुप्तितः पार्थक्याभावेनावान्तरावस्थात्वाभावेन तदवस्थावस्थितजीवप्राप्यत्वमहिम्नोऽभावात्सिद्धान्ते च भावा-त्फलभेदः । अत एवावान्तरावस्था संस्थितेत्युक्तिः । अन्यथा मुग्धजीवेति वा सुप्त्येकदेशवज्जीव-प्राप्यत्वेति वा ब्रूयादिति बोध्यम् । मोहस्योक्तावस्थात्रयानन्यत्वं सिद्धवत्कृत्य सुप्त्यन्तर्भावोऽथ स्वप्नजाग्रदन्तर्भाव इति भावेनाह ॥ **किमिति** ॥ मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादित्यन्यत्रोक्तं पूर्वपक्षं हेतुसाध्ययोर्व्याहतिनिरासायावधारणव्यावर्त्यं दर्शयन् शेषोक्त्या हेतुं च विवृण्वन् व्यनक्ति ॥ **न मोह इति** ॥ पृथक्पदस्वारस्यसूचिते शङ्कोत्तरे आह ॥ **न चैवमिति** ॥ **समानेति** ॥ सर्वेन्द्रियोपरत्यादिरूपसमानधर्मतयेत्यर्थः । तयोस्तत्पृथग्धर्मत्वान्न तत्साङ्कर्यमनुगुणमिति भावः । उक्तार्थं न्यायविवरणोक्तसाध्योपपादकमिति दर्शयन्नुपसंहरति ॥ **अत इति** ॥ जाग्रत्स्वप्नयोः पृथगवस्थात्वेन तत्साङ्कर्यस्यायोगात्सुप्तिसाङ्कर्यस्यानुगुणत्वादित्यर्थः ।

(भावबोधः)

पूर्वमेवानेन भवितव्यमिति वाच्यम्; स्वप्नादिवन्न मोहोऽसङ्कीर्णावस्थेति ज्ञापनाय सूत्रकृता व्यवधानकरणादिति तात्पर्यम् ॥ **मोहोऽत्रेति** ॥ अत्र मोहः किं भगवदर्धप्राप्तिरूपो न भवत्युत भवतीति चिन्ता । तदर्थमितरावस्थानतिरिक्त उत तदतिरिक्त इति । तदर्थं तद्व्यावर्तकधर्मार्पितो न भवत्युत भवतीति । मोहे ब्रह्मप्राप्तिरेव पृथगवस्थावदिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **न मोह इति** ॥ अनेन मोहे ब्रह्मप्राप्तिरित्येवेत्ययमंशो व्याख्यातः । पृथगवस्थात्वादिति हेतुवाक्यं योजयति– **जाग्रत्स्वप्नयोरिति** ॥ सकाशादिति शेषः । हेतोरप्रयोजकतां परिहरति– **अन्यथेति** ॥ मोहो भगवदितरत्रेत्यङ्गीकार इत्यर्थः ।

नन्वस्तु मोहो भगवदितरत्र तथापि तस्य जाग्रत्स्वप्नसङ्कीर्णता कुत इत्यतश्चोक्तम् । **जाग्रत्स्वप्नयोरिति** ॥ पृथक् परमात्मन इति शेषः । तथा च जाग्रत्स्वप्नयोरेव परमात्माऽप्रवेश-रूपावस्थात्वान्मोहस्यापि अप्रवेशरूपत्वाङ्गीकारे एतत्सङ्कीर्णता स्यादित्यर्थः । अत एव जाग्रत्स्वप्नाभ्यामिति वक्तव्येऽर्थद्वयानुगुण्याय जाग्रत्स्वप्नयोरित्युक्तम् ।

नन्वत्र ब्रह्मप्राप्तिरेवेतिवत् ब्रह्माप्राप्तिरेवेत्यपि पूर्वपक्षः कुतो न कृतः । तस्यापि पक्षस्यार्ध-प्राप्तिरूपसिद्धान्तविरोधित्वादिति चेत्, न; प्राप्तिरेवेति पूर्वपक्षे मोहस्य सुप्तिसाङ्कर्यापादने सुप्तेरेकत्वेन तत्साङ्कर्यस्येष्टत्ववदप्रवेश एवेति पूर्वपक्षे मोहस्य जाग्रत्स्वप्नसाङ्कर्यापादने जाग्रत्स्वप्नयोः परस्परं पृथगवस्थात्वादेकस्योभयसाङ्कर्यस्य पूर्वपक्षिण इष्टत्वासम्भवात् । न चान्यतरसाङ्कर्य-मेवापाद्यम्, उभयोरप्यप्रवेशावस्थात्वाविशेषेण विनिगमकाभावादिति । **व्याख्यातुमिति** ॥ स्मृत्यै-वेत्यर्थः ॥ **एवं चेति** ॥ अनेन परिशेषमानादर्धप्राप्तित्वावगमादिति न्यायविवरणमपि व्याख्यातम् ।

नन्वेतावन्तं कालमहं मूर्च्छितो दुःख्यभवमिति देशकालात्मावस्थादुःखानामनुभवात् कथं दुःखमात्रप्रतिस्मृतेरित्युक्तमित्यतो दुःखपदमनुभूयमानसर्वोपलक्षणम् । मात्रपदं तु तद्व्यति-रिक्तव्यवच्छेदपरमित्यभिप्रेत्याह– **दुःखात्मकालेति** ॥

ननु कण्ठहृदयमध्यप्रदेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणकण्ठ मध्यप्रदेशावस्थान-स्यापि पृथगवस्थात्वं प्रसज्येताविशेषादित्यत आह– **नातिदूरसामीप्यमिति** ॥ दक्षिणकण्ठमध्य-प्रदेशस्य हृदयस्थादक्षिणाक्षिवदतिदूरत्वं कण्ठवदतिसामीप्यं वा नास्तीति मार्गतया तत्प्रवेशगत-जीवस्य यन्नातिदूरसामीप्यं तज्जीवस्य मोहवच्चिरकालं नास्तीति हेतोस्तस्य पृथगवस्थात्वस्याप्रसङ्ग

(भावबोधः)

इति भावः ॥ **अतः परिशेषादिति** ॥ अनेन परिशेषादर्धप्राप्तित्वावगमादिति न्यायविवरणं प्रकारान्तरेण व्याख्यातम् । नन्ववस्थाशब्दस्य स्त्रीलिङ्गत्वात् त्रयोऽवस्था इति कथमित्यत आह– **त्रयस्तिस्र इति** ॥ नात्र त्रयोऽवस्था इति सामानाधिकरण्यं येन लिङ्गव्यत्यासदोष इति पक्षान्तरमाह– **दूरस्थत्वादिति** ॥ मोहस्येश्वराधीनत्वशङ्काभावान्न चिन्त्यत इत्यत आह– **मोहकारणादीनामिति** ॥ अभिघातव्याध्यादीनामित्यर्थः । आदिपदेन तदुद्बोधकारणौषधादीनां ग्रहणम् । अत एव भाष्ये सोऽपीत्यपिशब्दस्य मूर्च्छाप्रबोधनं चेति स्मृत्यनुसारेण तदुद्बोधसमुच्च-यार्थत्वं चेति भावः ।

## भावदीपः

अत्र मोहस्येशाधीनत्वचिन्तामकृत्वा तत्स्वरूपोक्तिरेव कुतः कृतेति शङ्कां निरसितुमाह ॥ **सर्वेति** ॥ कर्मानुस्मृत्यादिहेतुभिः प्रागुक्तदिशेति भावः । मोहस्याप्यवस्थात्वेन तदधीनत्वसिद्धेरपि तत एवेति भाष्य एव व्यक्तत्वादिति भावः । एतेन मोहावस्थानियन्तृत्वमहिम्नो मुग्धप्राप्यत्व रूपमहिमान्तरोक्तिरत्रेति वा प्रधानावस्थाचिन्तानन्तरं अवान्तरावस्थाचिन्तावसर प्राप्तेति वा सार्वत्रिकावस्थाचिन्तानन्तरं क्वचित्कावस्थाचिन्तावसरप्राप्तेति वा पूर्वसङ्गतिः सूचिता ॥ **जीव-प्राप्यत्वेति** ॥ तादृशजीवेनाऽर्धप्राप्यत्वनिरूपणादित्यर्थः । तेन सिद्धान्त इव पूर्वपक्षेऽपि जीवप्राप्यत्वस्यानुमतत्वात्फलाभावाद् व्यर्थेयं चिन्तेति प्रत्युक्तम् । पूर्वपक्षे मोहस्य सुप्तितः पार्थक्याभावेनावान्तरावस्थात्वाभावेन तदवस्थावस्थितजीवप्राप्यत्वमहिम्नोऽभावात्सिद्धान्ते च भावा-त्फलभेदः । अत एवावान्तरावस्था संस्थितेत्युक्तिः । अन्यथा मुग्धजीवेति वा सुप्त्येकदेशवज्जीव-प्राप्यत्वेति वा ब्रूयादिति बोध्यम् । मोहस्योक्तावस्थात्रयानन्यत्वं सिद्धवत्कृत्य सुप्त्यन्तर्भावोऽथ स्वप्नजाग्रदन्तर्भाव इति भावेनाह ॥ **किमिति** ॥ मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादित्यन्यत्रोक्तं पूर्वपक्षं हेतुसाध्ययोर्व्याहतिनिरासायावधारणव्यावर्त्यं दर्शयन् शेषोक्त्या हेतुं च विवृण्वन् व्यनक्ति ॥ **न मोह इति** ॥ पृथक्त्वादस्वारस्यसूचिते शङ्कोत्तरे आह ॥ **न चैवमिति** ॥ **समानेति** ॥ सर्वेन्द्रियोपरत्यादिरूपसमानधर्मतयेत्यर्थः । तयोस्तत्पृथग्धर्मत्वान्न तत्साङ्कर्यमनुगुणमिति भावः । उक्तार्थं न्यायविवरणोक्तसाध्योपपादकमिति दर्शयन्नुपसंहरति ॥ **अत इति** ॥ जाग्रत्स्वप्नयोः पृथगवस्थात्वेन तत्साङ्कर्यस्यायोगात्सुप्तिसाङ्कर्यस्यानुगुणत्वादित्यर्थः ।

(भावदीपः)

**प्रतिज्ञांशं तावद्व्यचष्ट इति** ॥ अस्येति आत्मनीति च पदद्वयमनुवर्त्येति योज्यम् ॥ **समस्तेति** ॥ हेतुप्रतिज्ञारूपसमस्तसूत्रार्थ इत्यर्थः । मोहस्योक्तावस्थात्रयान्यत्वं सिद्धवत्कृत्य तदसम्भावनां निरसिष्यन् परिशेषमानादर्धप्राप्तित्वावगमादित्यन्यत्रोक्त्यनुरोधेन स्मृतिं व्याचष्टे ॥ **मोह इति** ॥ यत एवमित्यन्तस्यार्थः ॥ **न तावदिति** ॥ मोहस्त्वित्यादेरर्थः ॥ **एवं चेति** ॥ त्रयाणां मोहत्वायोगे इत्यर्थः ॥ **अन्यस्येति** ॥ नातिदूरसामीप्यमिति वक्ष्यमाणदिशेति भावः । दुःखेति शेषोपयोगमाह ॥ **मोहस्येति** ॥ मात्रपदसार्थक्यमाह ॥ **नापीति** ॥ दुःखपदमुपलक्षणं मत्वाऽऽह ॥ **दुःखात्मकालादीति** ॥ सुप्त्यवस्थातमश्चादिपदार्थः । कालात्माज्ञानसुप्त्यवस्थानां तदा साक्षिवेद्यत्वादिति भावः । नन्वन्यस्याप्रसङ्गादित्ययुक्तम् । विदूरसामीप्यरूपाक्षिकण्ठदेशयोरिवाक्षिकण्ठयोर्मध्यदेशरूपस्य किंचिद्दूरत्वस्य तथा हृदयकण्ठयोर्मध्यदेशरूपस्य किञ्चित्सामीप्यस्य च प्रसङ्गसम्भवेन परमात्मविदूरत्वकिञ्चिद्दूरत्वसामीप्यनातिसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ता इति वक्तव्यम् । तथा च कथं परिशेषतोऽर्धप्रवेशो मोह इत्युक्तिरित्यत आह ॥ **नातिदूरेति** ॥ दूरं च समीपं च दूरसमीपे अत्यन्तं दूरसमीपे अतिदूरसमीपे तयोर्भावः अतिदूरसामीप्यं तन्न भवतीति नातिदूरसमीप्यं किञ्चिद्दूरत्वं किंचित्सामीप्यं च यज्जीवस्य कण्ठाक्षिमध्यदेशस्थत्वादिरूपं तच्चिरकालं नास्ति । दक्षिणाक्षितो हृदयदेशं प्रत्यागमने मार्गमात्रमिति तयोः प्रसक्तिर्नास्तीत्यर्थः । कण्ठाक्षिमध्यदेश एव नातिदूरसमीप्यशब्देनोच्यत इत्यप्याहुः । दुःखमात्रेतिपदं प्रकृतोपयोगितयाऽपि व्याचष्टे ॥ **मोह इति** ॥ मात्रपदार्थव्यक्तीकरणं नाप्यप्राप्तिरेवेत्यादि ॥ **अन्येति** ॥ प्रागुक्तदुःखाद्यन्येत्यर्थः ॥ **अत इति** ॥ समग्रप्राप्त्यप्राप्त्योरयोगादित्यर्थः । स्मार्तपदानामर्थमाह ॥ **दूरस्थोऽक्षिस्थ इत्यादि** ॥

ननु हृदये प्रतिष्ठितानि भवन्तीति षष्ठगतबृहदारण्यकवाक्येन तथा 'हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः । जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः । हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः । मूलेश' इति नामास्मिन्सर्वजीवाः प्रतिष्ठिता इति स्मृत्या तथा अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हीति सूत्रेण हृदि ह्येष आत्मा' इति षट्प्रश्नश्रुत्या च जीवस्य सर्वदा हृद्देश एवाऽवस्थित्यवगमात्कथमक्ष्यादिस्थत्वमुच्यत इति चेन्नैवम् । 'हृदये संस्थितो जीवो विशेषेण हरिः स्वयम् । चक्षुरादिषु रूपाणि जाग्रत्काले तयोस्सदा । बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः । हृदयस्थेन रूपेण तदा जीवो न किञ्चन । जानाति' इति षष्ठबृहद्भाष्योक्तस्मृत्या 'असम्यक्सम्यगिति च ह्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुता' इत्याद्यवस्थितिसूत्रभाष्योक्तस्मृत्या

(भावदीपः)

चोत्तमानामंशेनाऽक्ष्यादिष्ववस्थाने विरोधाभावात् अन्येषां त्वक्ष्यादिष्वभिमानातिशयेनाऽक्षिस्थ इत्याद्युक्त्युपपत्तेः । उक्तं चैतरेयभाष्ये द्वितीयेऽध्याये । न हि जीवस्याऽक्षिणि पृथक् शिरोबाह्वादिकं विद्यते हृदिस्थमेव हि तस्य रूपं जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत् । अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि गुणाद्वा लोकवदिति सूत्रादिति ॥ **समीप्यमेवेति** ॥ अक्ष्यादिस्थविश्वतैजसनामकभगवन्मूर्तिसामीप्यमेव । माण्डूके तथा श्रवणादित्यर्थः । त्रय इति पुल्लिङ्गानुपपत्तेराह ॥ **त्रयः तिस्र इति** ॥ **अत इति** ॥ कर्मानुस्मृत्यादिहेतोरप्राप्तेरयोगाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**अन्यथेति** ॥ ननु जाग्रदवस्थासंस्थितजीवप्राप्यत्वाभावेऽपि यथा न निरतिशयैश्वर्यभङ्गः, तथा मोहावस्थायां स्थितजीवप्राप्यत्वाभावेऽपि अभङ्गसम्भवेन तत्र भक्तिसम्भवात् व्यर्थमिदमधिकरणमिति चेत्, न वैषम्यात् । युक्तं जाग्रदाद्यवस्थासंस्थितजीवप्राप्यत्वाभावेऽपि परमैश्वर्यम् । तत्र प्रमाणाऽभावेन तदभावस्य प्रमाणसिद्धपरमैश्वर्यापलापहेतुत्वाभावात् । मुग्धजीवप्राप्यत्वाभावस्तु तदपलापहेतुः । अर्धप्राप्तिरूपमोहस्य 'अर्ध प्राप्तिरिति ज्ञेय' इति प्रमाणसिद्धत्वात् । न हि प्रमाणत्वाविशेषेऽपि एतत्प्रमाणोक्तं नास्ति, प्रमाणान्तरोक्तमस्तीति सम्भवतीति । एवम् एवंजातीयके सर्वत्र द्रष्टव्यम् ॥ **जाग्रत्स्वप्नयोरिति** ॥ जाग्रत्स्वप्नातिरिक्तावस्थात्वादित्यर्थः ॥ **अन्यथेति** ॥ भगवदितरत्र मोह इत्यङ्गीकारे जाग्रत्स्वप्नैकदेशत्वं स्यादित्यर्थः ॥ **न चैवमिति** ॥ भगवत्येव मोह इत्यङ्गीकारे मोहस्य सुप्त्येकदेशत्वं स्यादिति न वाच्यमित्यर्थः ॥ **समानधर्मतयेति** ॥ आत्मातिरिक्तविषयादर्शनेन समानधर्मतयेत्यर्थः ॥ **दुःखात्मेति** ॥ जाग्रत्स्वप्नयोर्दुःखाऽऽत्मकालाऽतिरिक्तविषयत्व स्वाभाव्यादिति भावः ।

ननु 'अवस्थाविचारप्रसक्तो मोहोऽत्र विषय' इति प्राचीनाधिकरणेन सङ्गतिरुक्ता । सा न युक्ता प्रतिदिनभावित्वेन चिरभाविजाग्रदाद्यवस्थानिरूपणकाले कादाचित्कमोहस्य प्रसङ्गाऽयोगादित्याशङ्कां सिंहावलोकनन्यायेन परिहरति **नातिदूरसामीप्यमिति** ॥ देहारम्भक कर्मनाशोत्तरभावित्वात् मरणमतिदूरशब्देनोच्यते । तत्समीपभावित्वात् अतिदूरसामीप्यमिति मोह उच्यते, स चिरमहरहर्नास्तीति अप्रसङ्गो न मन्तव्यः । उपेक्षानर्हस्य स्मृतेरेव प्रसञ्जकत्वादिति भावः । एतेन 'नलोपो नञ' इति नलोपे नुडागमे च सति अनतिदूरसामीप्यमिति भाव्यमिति

(अभिनवचन्द्रिका)

परास्तम् । अप्रसङ्गपदेन नञोऽन्वितत्वेन समासाभावात् ॥ **प्रकारान्तरप्रदर्शनमिति** ॥ पूर्वं तु दूरस्थत्व, समीपस्थत्व, प्रवेशाऽर्धप्रवेशान् प्रसज्य पक्षत्रयं निराकृत्याऽर्धप्रवेशोऽवशेषितः । इदानीं तु प्राप्त्यप्राप्त्यर्धप्राप्तीः प्रसज्य प्राप्त्यप्राप्ती निराकृत्य, अर्धप्राप्तिरवशेषितेति भेदः ॥ **अर्धप्राप्तिरिति** ॥ ननु इदमयुक्तम् । भगवत्प्राप्तेः सुखहेतुत्वेन दुःखाभावप्रसङ्गात् । अन्यथा मुग्धादपि सुप्तस्य दुःखातिशयः स्यात् । समग्रप्राप्तिसद्भावात् इति चेत् । स्यादयं दोषः यदि मुग्धस्य प्राज्ञप्राप्तिप्रयुक्तं दुःखमिति ब्रूमः । न चैवं किंनाम मुग्धस्य मरणनाडीसम्बन्धप्रयुक्तमेव दुःखं ब्रूमः । त्रय इति पुल्लिंगस्य अवस्थेत्यनेनाऽन्वयायोगात् त्रय इत्यनूद्य लिङ्गव्यत्ययः कार्य इति भावेनाह– **त्रयस्तिस्त्र इति** ॥ अवस्थेत्येकवचनान्तं नित्यस्त्रीलिङ्गं मोह इति नित्यपुल्लिङ्गे नाऽन्वेति । त्रिशब्दस्तु प्रकारवाची एवमित्यनेनान्वेतीत्याशयवान् 'यत एवं त्रयोऽवस्था' इति भाष्यं प्रकारान्तरेण व्याचष्टे **दूरस्थत्वादिति** ॥ एवमित्यनूद्य 'अवस्थात्रये विनियुक्ता' इति व्याख्यानम् ।

पूर्वपक्षस्तु न मोहो जीवस्य भगवदितरत्र किं तु परमात्मन्येव । जाग्रत्स्वप्नावस्थाविलक्षणत्वात् । अन्यथा तत्संकीर्णतापातात् । न च परमात्मनि मोहाङ्गीकारे सुप्त्यैकदेशत्वप्रसङ्गः । बाह्यार्थाऽविषयत्वेन तदेकदेशत्वस्येष्टत्वात् । अतः परमात्मन्येव मोहो जीवस्येति ।

सिद्धान्तस्तु भगवति अर्धप्रवेश एव जीवस्य मोहे न समग्रप्रवेशः, परिशेषात् तथा हि मोहे तावत् परमात्मविदूरत्व, सामीप्य, प्रवेशाऽर्धप्रवेशाः प्रसक्ताः । न तावत्त्रयः कल्पाः सम्भवन्ति । तेषां जाग्रदाद्यवस्थाधर्मत्वात् । एवं च प्रसक्तप्रतिषेधेऽन्यस्याऽप्रसङ्गात् परिशिष्टोऽर्धप्रवेशो मोहो जीवस्य मोहस्याऽवस्थात्रयातिरेकित्वे भवेदेतत्, तदेव कुत इति चेत्, अत्र वक्तव्यम् । किं मोहस्य सुप्तावन्तर्भाव उच्यते । उत जाग्रत्स्वप्नयोः । न तावदाद्यः वैलक्षण्यात् । तथा हि मुग्धः कदाचिदपि नोच्छ्वसिति । स वेपथुश्चास्य देहो भवति । भयानकं चाऽस्य वदनं भवति । विस्फारिते चाऽस्य नेत्रे भवतः । सुप्तस्तु प्रसन्नवदनः, तुल्यकालं पुन रुच्छ्वसिति । निमीलिते अस्य नेत्रे भवतः । न चाऽस्य देहो वेपते, पाणिपेषमात्रेण च सुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः । मुसलाभि घातादिनिमित्तत्वात् मोहस्य । सुच्छायादि-निमत्तित्वात्स्वापस्य । न च वदन्ति मुग्धं सुप्तमिति । नापि जाग्रत्स्वप्नयोरन्तर्भावः । दुःखाऽऽत्म-कालातिरिक्तविषयाऽदर्शनात् । अतो मोहोऽवस्थान्तरमेव, ततश्च मुग्धप्राप्यत्वेन महामाहात्म्य-वत्त्वाद्भगवति भक्तिर्युक्तेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अवान्तरावस्थासंस्थितेति ॥** अर्धप्राप्तिरूपमोहाख्यावान्तरावस्थेत्यर्थः । प्रधानविचारानन्तरमवान्तरविचार इत्यनन्तरसङ्गतिरिति भावः । नन्वेवं सति स एवेत्यतः पूर्वमनेनाधिकरणेन भवितव्यमिति चेत् अत्रोक्तं सुधायाम् । सूत्रकृता च स्वप्नादिवन्न मोहः स्वतन्त्रावस्थेति ज्ञापनाय व्यवधानं कृतमिति ॥ **अन्यथेति ॥** अवान्तरावस्थासंस्थितजीवप्राप्यत्वाभाव इत्यर्थः । ननु यथा जाग्रदवस्थासंस्थितजीवप्राप्यत्वाभावेऽपि नैश्वर्यहानिः तद्वत्प्रकृतेऽप्युपपत्तेः व्यर्थमिदमधिकरणमिति चेन्न ॥ **वैषम्यात् ॥** धर्मिग्राहकप्रमाणेन मोहस्यार्धप्राप्तिरूपतया सिद्धत्वेन तदभावेन तत्प्रवर्तकत्वस्यैवाभावेनैश्वर्यहानिप्रसङ्गादेतदधिकरणसार्थक्योपपत्तेः । जाग्रदवस्थायां भगवत्प्राप्तौ **प्रमाणाभावादिति ॥ किं जीवस्येश्वर इति ॥** किं जीवस्येश्वर एव तदन्यत्रापि वेत्यर्थः । मोहः किं समग्रप्राप्तिरूप उतार्धप्राप्तिरूप इति चिन्ता । तदर्थमितरावस्थानतिरिक्त उत तदतिरिक्त इति । अर्धसम्पत्तिरित्यनेन मोहस्य स्वप्नसुप्तिसमुदायत्वरूपावान्तरावस्थात्वद्योतनात्तन्निवर्त्यतया सूचितं पृथग्भव इत्युक्तन्यायं विशदयन्पूर्वपक्षयति ॥ **न मोह इत्यादिना ॥** जाग्रत्स्वप्नयोस्सकाशादिति शेषः । हेतोरप्रयोजकतां परिहरति ॥ **अन्यथेति ॥** मोहो भगवदितरत्रेत्यङ्गीकारे जाग्रदवस्थया स्वप्नावस्थया च साङ्कर्यापातादित्यर्थः ॥ **समानधर्मतयेति ॥** स्वप्नजागरितविषयानुभवाभावेन सुषुप्तिसमानधर्मतयेत्यर्थः । दुःखानुसन्धानादैक्येनेति चोक्तम् ।

सूत्रे मुग्ध इति भावे क्तः । आत्मनीति अस्येति पदद्वयमनुवर्तत इति भावेन भाष्ये मोहावस्थायां परमेश्वरे जीवस्येत्युक्तम् ॥ **व्याख्यातुमिति ॥** स्मृत्यैवेत्यर्थः । समानेत्युक्तन्यायप्रदर्शकं परिशेषादिति हेत्वंशं व्याख्याति ॥ **मोहो तावदित्यादिना ॥** दुःखानुसन्धानादिति मोहावस्थातःप्रागेव विषयानुभवेन जातस्य दुःखस्य तदानीमभावादित्यर्थः । न तु तदानीं विषयानुभवेन जातस्य दुःखस्यानुभवः तदाभिमानाभावेन दुःखजन्माभावात् । तदुक्तं सुप्तिप्रलयादावभावादिति गीताभाष्ये । कालादीत्यादिपदेन दशावस्थयोर्ग्रहणम् ।

ननु मोहे परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ता इति पक्षचतुष्टयमात्रस्य प्रसक्त्युक्तिरयुक्ता । जाग्रदवस्थायां हृदयस्थं परमात्मानमपेक्ष्य दक्षिणाक्ष्याख्यविदूरस्थानस्थितस्य जीवस्य स्वप्नप्राप्तये कण्ठदेशाख्यसमीपप्राप्त्यागमनसमये दक्षिणाक्षिकण्ठमध्यस्थत्वरूपनातिदूरत्वाख्य-

(वाक्यार्थमुक्तावली)

प्रकारान्तरस्य प्रसक्तत्वात् । तथा समीपात्कण्ठदेशात् सुप्तौ प्रवेशाय हृदयं प्रत्यागमनसमये कण्ठहृदयमध्यदेशस्थत्वरूपातिसामीप्याख्यप्रकारान्तरस्य च प्रसक्तत्वादित्यत आह ।। **नातिदूरसामीप्यमिति** ।। अतिदूरं च सामीप्यं चातिदूरसामीप्यम् । द्वन्द्वैकवद्भावः । तदुभयविलक्षणमुक्तं प्रकारद्वयं नातिदूरसामीप्यम् । तदुभयं चिरं नास्ति । मार्गमात्रत्वादतश्चिरकालीनमोहे चिरकालीनं प्रकारचतुष्टयमेव प्रसक्तं न तु पक्षद्वयस्याल्पकालीनस्य प्रसक्तिरिति भावः । यद्वातीत्येतद्दूरसामीप्याभ्यां सम्बध्यते । न अति दूरं नातिदूरं नातिदूरं च तत् सामीप्यं च तदुभयं चिरं नास्तीत्यप्रसङ्ग इति योज्यम् । यद्वा ननु कण्ठहृदयमध्यदेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणाक्षिकण्ठमध्यदेशावस्थानस्यापि पृथगवस्थात्वं प्रसज्येताविशेषादित्यत आह ।। **नातिदूरसामीप्यमिति** ।। दक्षिणाक्षिकण्ठमध्यप्रदेशस्य हृदयस्थानात् दक्षिणाक्षिवदतिदूरत्वं कण्ठवदतिसामीप्यं वा नास्तीति मार्गतया तत्तद्देशगतजीवस्य यन्नातिदूरसामीप्यं तत् जीवस्य चिरकालीनं नास्तीति हेतोस्तस्य पृथगवस्थात्वस्य प्रसङ्ग इति भावबोधोक्तार्थो ज्ञेयः ।

मोहस्यावस्थात्रयातिरिक्तत्वोपपादकया दुःखमात्रप्रतिस्मृतेरित्यंशं प्रकारान्तरेण व्याचष्टे ।। **मोहोऽर्धप्राप्तीति** ।। मोहे परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशानां प्रसक्तिमुक्त्वा पक्षत्रयव्यवच्छेदेन परिशेषस्यैकेन प्रकारेणोपपादितत्वात्प्रकारान्तरेत्युक्तम् ।। **अन्यार्थादर्शनादिति** ।। जाग्रत्स्वप्नार्थादर्शनादित्यर्थः । नन्ववस्थाशब्दस्य स्त्रीलिङ्गत्वात् त्रयोऽवस्था इति कथमुक्तमित्यत आह ।। **त्रयस्तिस्र इति** ।। अवस्थेत्येकवचनान्तत्वमभिप्रेत्य पक्षान्तरमाह ।। **दूरस्थादीति** ।। अतो मोहावस्थेति । दुःखमात्रस्मृतेर्मोहोऽपि तु विशिष्यावस्था पृथगवस्थेत्यर्थः । यद्वा अतो मोहोऽवस्था मोहलक्षणावस्था दुःखमात्रप्रतिस्मृतेः परिशेषादर्धप्राप्तिरित्यवतारद्वयानुसारेणार्थः । मोहस्येश्वरान्याधीनत्वप्रापकाभावान्न चिन्त्यत इत्यत आह ।। **मोहकारणादीनामिति** ।। आध्यातव्याध्यादीनामित्यर्थः । कारणादीनामित्यादिपदेन तदुद्बोधकारणौषधादीनां ग्रहणम् । अत एव भाष्ये सोऽपीत्यपिशब्दस्य मूर्च्छा प्रबोधनं चेति स्मृत्यनुसारेण तदुद्बोधसमुच्चयार्थत्वं चेति भावः ।

## तत्त्वसुबोधिनी

अस्याधिकरणस्यानन्तरसङ्गतिं वदन् शास्त्रादिसङ्गतिमाह ।। **सर्वावस्थानामिति** ।। प्रधानावस्थाविचारानन्तरमेवावान्तरावस्थाविचारावसर इति भावः । न चैवं स एवेत्यतः पूर्वमेवानेन

(तत्त्वसुबोधिनी)

भवितव्यमिति वाच्यम् । स्वप्नादिवन्न मोहोऽसङ्कीर्णावस्थेति ज्ञापनार्थं सूत्रकृता व्यवधानकरणादिति तात्पर्यम् । कुतो नेत्यतस्तत्र हेतुमाह ॥ **जाग्रत्स्वप्नयोरिति** ॥ सावकाशादिति शेषः । जाग्रत्स्वप्नयोः सावकाशात् मोहस्य पृथगवस्थानत्वात् तयोश्च विष्णोरन्यत्रैव सत्वात् मोहस्य तदन्यत्र सत्त्वं न युक्तमिति भावः । अप्रयोजकत्वं पृथगवस्थानत्वस्य परिहरति ॥ **अन्यथेति** ॥ मोहो भगवदितरत्रेत्यङ्गीकारे इत्यर्थः । नन्वस्तु मोहो भगवदितरत्र तथापि तस्य जाग्रत्स्वप्न-सङ्कीर्णता कुत इत्यतश्चोक्तम् ॥ **जाग्रत्स्वप्नयोरिति** ॥ पृथक् परमात्मन इति शेषः । तथा च जाग्रत्स्वप्नयोरेव परमात्मप्रवेशरूपावस्थात्वात् मोहस्याप्यप्रवेशरूपत्वाङ्गीकारे तत्सङ्कीर्णता स्यादित्यर्थः । ननु स्वप्नजाग्रदवस्थाभ्यां साङ्कर्यपरिहारेऽपि सुप्त्या साङ्कर्यं स्यादेव । तस्यापि मोहवत् भगवदितरत्राभावादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ **समानधर्मवत्तयेति** ॥ भगवति प्रविष्टत्वं बाह्यान्तर्द्वयजन्यज्ञानाभावरूपसमानधर्मवत्तयेत्यर्थः । **व्याख्यातुमिति** । स्मृत्यैवेत्यर्थः । कुतो न सम्भवतीत्यत आह ॥ **जाग्रदादीति** ॥ अत्र धर्माणामन्यत्रासम्भवादिति भावः ॥ **नापि जाग्रत्स्वप्नान्तर्भाव इति** ॥ दुःखमात्रस्य तत्रानुभवादिति भावः । अन्यथा सुखानुभवोऽपि स्यादिति भावः । नन्वेतावन्तं कालमत्राहं मूर्च्छितोऽभवमिति देशकालावस्थादुःखानामनुभवात् कथं दुःखमात्रप्रतिस्मृतेरित्युक्तमित्यतो दुःखपदमनुभूयमानसर्वोपलक्षणं मात्रपदं तु तद्व्यवच्छेदपर-मित्यभिप्रेत्याह ॥ **दुःखात्मकालेति** ॥

ननु कण्ठहृदयमध्यप्रदेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणाक्षिकण्ठमध्यप्रदेशावस्थान-स्यापि पृथगवस्थात्वं प्रसज्येत । अविशेषादित्यत आह ॥ **नातिदूरसामीप्यमिति** ॥ दक्षिणाक्षि-कण्ठमध्यप्रदेशस्य हृदयस्य दक्षिणाक्षिवदतिदूरत्वं कण्ठवदतिसामीप्यं वा नास्तीति मार्गतया तत्प्रदेशगतजीवस्य यत्रातिदूरसामीप्यं तज्जीवस्य मोहवच्चिरकालं नास्तीति हेतोः तस्य पृथगवस्था-त्वस्याप्रसङ्ग इति भावः ॥ **दुःखेति** ॥ अन्यथा सुखानुसन्धानमपि स्यादिति भावः ॥ **अन्यार्था-दर्शनादिति** ॥ सर्वथाप्राप्तौ जाग्रत्स्वप्नयोरिव घटादिरूपान्यार्थदर्शनं स्यात् । न च तदस्तीत्यर्थः । अप्रतीतार्थत्वात् स्मृतिं व्याचष्टे ॥ **दूरस्थ इत्यादिना** ॥ जाग्रदेष्यति जाग्रदवस्थां प्राप्नोति । नन्ववस्थाशब्दस्य स्त्रीलिङ्गत्वात् त्रयोऽवस्थेति कथमुक्तमित्यत आह ॥ **त्रयस्त्रिस्र इति** ॥ नात्र त्रयोऽवस्था इति सामानाधिकरण्यं येन लिङ्गव्यत्यासदोषः स्यादित्याशयेन पक्षान्तरमाह ॥ **दूरस्थत्वादिति** ॥ मोहस्येश्वराधीनत्वशङ्काकारणाभावात् न चिन्त्यत इत्यत आह ॥

(तत्त्वसुबोधिनी)

**मोहकारणादीनामिति** ॥ आध्यातव्याध्यादीनामित्यर्थः । आदिपदेन तदुद्बोधकारणौषधीनां ग्रहणम् । तर्हि बाह्यकारणदर्शनस्य का गतिरित्यत आह ॥ **बाह्येति** ॥ अत एवेत्यस्यार्थमाह ॥ **अनिश्चितेति** ॥

## वाक्यार्थविवरणम्

जाग्रत्स्वप्नयोः सकाशादिति शेषः ॥ **समानेति** ॥ सुप्तिमोहयोरात्मकालातिरिक्तबाह्यपदार्थ-ज्ञानाभाववत्त्वेन समानधर्मत्वादित्यर्थः ॥ **धर्मत्वादिति** ॥ परमात्मविदूरत्वादीनां त्रयाणामित्यर्थः । भाष्ये जाग्रत् जाग्रदवस्थामेष्यति प्राप्नोतीत्यर्थः ॥ **एतदिति** ॥ दुःखमात्रप्रतिस्मृतेरिरिति भाष्यमित्यर्थः ॥ **तमेव प्रकारं विवृणोति** ॥ न मोह इत्यादिना ॥ **इत्यादेः सर्वत्रेति** ॥ अनया श्रुत्या जीवस्यावस्थात्रयेऽपि भगवत्सम्बन्धप्रतिपादनात् जीवस्यावस्थात्रयेऽपि भगवत्सामीप्य-मेवेत्यर्थः ॥ **हृदयस्थादितीति** ॥ हृदयस्थभगवदपेक्षया सामीप्येनेत्यर्थः ॥ **अवस्था इति** ॥ अवस्था इति बहुवचनतया पदं विच्छिद्य त्रय इत्येतत् तद्विशेषणं तिस्र इति व्याख्यातम् । इदानीं मोहावस्थेत्येकवचनान्तमेवेत्यभिप्रेत्य त्रय इत्यनन्तरं पदानामध्याहारं चाभिप्रेत्य व्याचष्टे ॥ **दूरस्थत्वादिति** ॥ अतो मोहावस्थेति वेति । अतो मोहावस्था परिशेषतोऽर्धप्राप्तिरिति ज्ञेय इति भाष्येण सम्बन्धः ।

ननु एतावन्तं कालमहं दुःख्यासमिति परामर्शबलेन दुःखात्मकालानां त्रयाणां तदनुभवाङ्गी-काराद्दुःखमात्रप्रतिस्मृतेरिरिति मात्रशब्दः कथमिति चेत् सत्यम् । आत्मकालातिरिक्तवस्तुप्रति-स्मृतेरेव मात्रपदेनात्र व्यवच्छेद इति द्रष्टव्यम् ॥ **कर्मानुस्मृत्यादिनैवेति** ॥ उक्तरीत्या एष ह्येव एवेति सर्वकर्मणां भगवदधीनत्वस्य श्रुतत्वान्मोहप्राप्तेरेतदन्तर्भावादिति मोहस्य भगवदधीनत्वं सिद्धम् । अनुस्मृतिश्च प्रदर्शकस्त्विति पूर्वोक्ता न सम्भवति । तत्र मूर्च्छाया अनुपात्तत्वात् । अतो मूर्च्छा प्रबोधनमिति वक्ष्यमाणैवानुस्मृतिरत्र द्रष्टव्या ॥ **अत एवेति** ॥ यतोऽत्र स्मृतौ मूर्च्छाया भगवदधीनत्वं प्रतिपाद्यतेऽत एवेत्यर्थः ॥ **अयं विचारः** ॥ मोहे जीवस्य किं भगवत्यवस्थानमितरत्र वेत्यवस्थानविचारः । कुत इत्यत आह ॥ **अनिश्चितस्वरूपस्येति** ॥ मोहस्येत्यर्थः । अवस्थान-विशेषत्वेन मोहस्वरूपस्य निर्णये हि तादृशस्य मोहस्येश्वराधीनत्वं सुज्ञानमिति मोहेऽवस्थानमेव चिन्त्यते न भगवदधीनत्वमिति युक्त्यन्तरमनेनोक्तं भवतीति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

अवान्तरावस्था मूर्च्छा ॥ **द्विविधेति** ॥ द्विरूपेणेशतदन्यत्र भाविसुषुप्तिजाग्रदवस्थादर्शनमित्यर्थः ॥ **जाग्रत्स्वप्नयोरिति** ॥ मोहस्य जाग्रत्स्वप्नयोःसकाशात्पृथगवस्थात्वादिति भावः । नन्वथापि मोहो भगवदन्यत्र किं न स्यादित्यत आह ॥ **अन्यथेति** ॥ जाग्रत्स्वप्नयोः परमात्मनः सकाशात्पृथगन्यत्र भागव्यवस्थानान्मोहस्यापि तथात्वाङ्गीकारे तदुभयसांकर्यं स्यादित्यर्थः । एतदर्थमुक्तं **जाग्रत्स्वप्नयोःपृथगवस्थात्वादिति** ॥ परमात्मन इति शेषः । न चेष्टापत्तिः तयोः परस्परं पृथगवस्थात्वेनैकस्य मोहस्यैव सांकर्यायोगादिति भावः । एतदर्थमप्युक्तं जाग्रत्स्वप्नयोः पृथगवस्थात्वादिति । परस्परमिति शेषः ॥ **न चैवमिति** ॥ मोहस्य भगवत्प्रवेशावस्थानत्वाङ्गीकारे सुप्तेरपि तथात्वेन तत्सांकर्यप्रसङ्ग इत्यर्थः ॥ **समानधर्मतयेति** ॥ परमात्मप्रवेशार्थत्वेन मनआदि सर्वेन्द्रियोपरमत्वेन च समानधर्मत्वेन चेत्यर्थः ॥ **गुणत्वादिति** ॥ सुप्तेरप्यनेकत्वेन तत्साङ्कर्ये प्रागुक्तदोषाभावादिति भावः ॥ **ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ** ॥ भावेऽक्तः । मुग्धे मोहे अर्धसंपत्तिः जीवस्य परमात्मन्यर्धप्रवेशः । कुतः ? परिशेषात् । हृदयस्थापेक्षया दूरत्वसामीप्यप्रवेशार्धप्रवेशानां मध्ये आद्यत्रिकस्यासम्भवेनार्धप्रवेशस्य परिशिष्टत्वादित्यर्थः । व्याख्यातुं स्मृत्यैव धर्मत्वात् तेषामेतत्परिशेषेणार्धप्रवेशज्ञानम् ॥ **दुःखात्मकालेति** ॥ एतावन्तं कालमहं दुःख्यभवमित्युत्तरकालीनपरामर्शादिति भावः ।

ननु हृदयकण्ठमध्ये प्रवेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणाक्षिकण्ठमध्यप्रवेशावस्थानस्यापि पृथगवस्थात्वं प्रसज्येत । अविशेषादित्यत आह ॥ **नातिदूरसामीप्यमिति** ॥ दक्षिणाक्षिकण्ठमध्यप्रदेशस्य हृदयस्थानाद्दक्षिणाक्षिवदतिदूरत्वं कण्ठवदतिसामीप्यं वा नास्तीति मार्गतया तत्प्रदेशगतजीवस्य यन्नातिदूरं सामीप्यं तज्जीवस्य मोहवच्चिरकालं नास्तीति हेतोस्तस्य पृथगवस्थानस्याप्रसङ्ग इति भावः । एतद्दुःखमात्रेत्यादि तदेवाह ॥ **न मोह इति** ॥ **अन्यार्थेति** ॥ आत्मकालदुःखातिरिक्तेत्यर्थः ॥ **दक्षिणाक्षीति** ॥ विश्वस्य दक्षिणनयनाग्रवृत्तित्वेन तैजसस्य कण्ठाधोभागस्थमनोवृत्तित्वेन तदुभयसामीप्यं दक्षिणाक्षिस्थस्याप्यस्तीति कथमक्षिस्थो दूरस्थ इत्यर्थः । अवस्थाशब्दस्य स्त्रीलिङ्गत्वात्कथं त्रय इति पुल्लिङ्गप्रयोग इत्यत आह ॥ **त्रयस्तिस्र इति** ॥ कारणान्तरादर्शने न विवादाभावान्न तच्चिन्त्यत इत्यत आह ॥ **मोहकारणानामिति** ॥ ताडनादीनामित्यर्थः ॥ **कर्मानुस्मृतीति** ॥ एष ह्येव साधु कर्म कारयतीति सर्वकर्मणां

(वाक्यार्थमञ्जरी)

भगवदधीनत्वोक्त्या मोहस्यापि कर्मत्वेन भगवधीनत्वं सिद्धं अनुस्मृतिश्च वक्ष्यमाणा आदिशब्देन शब्दविधिग्रहणम् ॥ **अत एवेति** ॥ स्मृतौ भगवतो मूर्च्छातत्प्रबोधप्रवर्तकतया ज्ञेयत्वोक्तेरेवेत्यर्थः । सार्थक्यमेवेत्यत आह ॥ **अनिश्चितेति** ॥ नन्ववस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हीति सूत्रेण 'हृदि ह्येष आत्मा' इति श्रुत्या च जीवस्य हृदये एव सर्वदाऽवस्थानाभ्युपगमात्कथमक्ष्यादिस्थत्वमुच्यत इति चेन्मैवम् उत्तमानामंशेनाक्ष्यादिस्थत्वे विरोधाभावादन्येषामक्ष्यादिष्वभिमानातिशयेनाक्षिस्थ इत्युक्त्युपपत्तेः । उक्तं चैतरेयभाष्ये । न हि जीवस्याक्षिणी पृथक्शिरोबाह्वादिकं विद्यते हृदिस्थमेव हि तस्य रूपं जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवदिति । उक्तं च बृहद्भाष्ये । 'हृदये संस्थितो जीवो विशेषेण हरिस्तथा । चक्षुरादिषु रूपाणि जाग्रत्काले तयोः सदा । बहूनि संस्थितान्ये यदैकीभावमाप्नुयुः । हृदयस्थेन रूपेण तदा जीवो न किञ्चन । जानाति' इति विदुः प्राज्ञा इति । उक्तं चावस्थितिसूत्रे भाष्य एव । 'असम्यक्सम्यगिति च ह्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुता' इति सप्तमतात्पर्ये ।

॥ इति मुग्धप्राप्त्यधिकरणम् ॥ ७ ॥

## ८. स्थानतोऽप्यभेदाधिकरणम्

स्थानापेक्षया, परमात्मनो(ऽपि) भेदादनुग्राह्यानुग्राहकभाव इत्यत आह–

**॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ११ ॥**

स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ।

'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत' (ऐ.आ. ३-२-३) इति श्रुतिः ।

'एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।
ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयत' इति (हि) मात्स्ये ॥

'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' इति च भागवते ॥

### तत्त्वप्रदीपिका

स्वप्नादिस्थानानां भेदात्तदपेक्षया परस्यापि तत्र तत्र स्थितस्य रूपभेद सम्भवादनुग्राह्यानुग्राहकभावस्तद्रूपेष्वपि स्यात् । अतो न पर्याप्तमहिमत्वमित्यत आह ॥ **ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ** ॥ स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् । न हि स्थानभेदस्तस्योभयत्वस्य कारणं लिङ्गं वा भवति । स्थानभेदेऽपि तद्गतवस्त्वेकत्वोपपत्तेः । स्वप्नाद्यवस्थाभेदेऽपि तद्गतो भोक्तुरेकत्ववत् । प्रतिदृशमनेकधा स्थितमर्कं यथैकं समधिगच्छति विद्वान्, तथा हरिमपि तत्र तत्र स्थितमेकं समधिगतोऽस्मि । विष्णौ भेदोऽस्तीति व्यामोहो भेदमोहः ।

'जाग्रदादिकरो देवः परमात्मैक एव तु ।
इति वीक्षेत सततं मुच्यते संसृतेरत' इति प्रकाशिकायाम् ॥

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्य सर्वत्र निर्दोषाशेषसद्गुणत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । स्वगततारतम्ये न तत्र निरतिशया भक्तिर्जायत इति तत्प्रतिषेद्धव्यम् । सर्वावस्थाप्रेरकत्वेन प्रकृतः परमात्मा विषयः । प्रतिशरीरं जाग्रदादिस्थानेषु स्थितः किमन्योन्यं भिन्न उताभिन्न इति सन्देहः । घटादीनां भिन्नत्वदर्शनमाकाशादीनामभिन्नत्वदर्शनं च सन्देहबीजम् । पूर्वपक्षयति ॥ **स्थानेति** ॥

(तत्त्वप्रकाशिका)
सर्वशरीरेषु जाग्रदादिस्थानेषु च स्थितो विश्वादिरूपो हरिरन्योन्यं भिन्न एव । भिन्नस्थानत्वात् घटादिवत् । न चाकाशादिदवदुपपत्तिरिति वाच्यम् । किमीश्वरोऽवयवी पाणिपादाद्यवयवैरनेकस्थान उत समग्ररूपेण वा । नाद्यः । विश्वादीनां सप्ताङ्ग एकोनविंशतिमुख इत्यादिना प्रत्येकं रूपश्रवणात् । द्वितीयेऽसङ्गतो दृष्टान्तः । अतोऽस्त्येव विश्वादीनां भेदः । तथा च भिन्नानां गुणादितारतम्यादनुग्राह्यानुग्राहकभावदर्शनाच्च तत्प्रसङ्गः । एवं च निरतिशयैश्वर्याभावान्न तत्र भक्तिर्युक्तेति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ न तत्र तत्राऽऽस्थितो हरिर्मिथो भिन्नः । न च भिन्नस्थानतानुमानविरोधः । सर्वेषु भूतेष्विति श्रुतिविरोधेन बाधितविषयत्वादिति भावः । सर्वेषु भूतेषु चक्षुरादिस्थानेषु एतमेकमेव पूर्णगुणमाचक्षत इत्यर्थः । एकैकदेशतोऽनेकस्थानगतत्वं परस्याविरुद्धं श्रुतिविरुद्धं चेति भावेनोभयत्वमित्यनुक्त्वा उभयलिङ्गमित्युक्तम् । तद्व्याख्यानं भिन्नं रूपमिति । 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च' इति वचनात् । समग्ररूपेणानेकस्थानगतत्वं कथमुपपद्यते हरेरन्यत्राऽदृष्टत्वादित्यत आह ॥ **एकेति** ॥ सूर्यदृष्टान्तं स्पष्टयन्नुक्तार्थे स्मृत्यन्तरं चाह ॥ **प्रतिदृशमिति** ॥ प्रतिदृशं प्रेरकत्वेनैश्वर्यवशान्नैकधा स्थितमर्कं यथैकमेव समधिगच्छन्ति । तथा भूतानां प्रतिहृदयं सामग्र्येणैश्वर्यबलादनेकधा स्थितमीश्वरमेकं समधिगतोऽस्मीत्यर्थः । मां प्रति मां प्रतीति बहुधा स्थितमिति वा ।

## गुर्वर्थदीपिका

उभयत्वमित्यनुक्त्वोभयलिङ्गत्वमित्युक्तमित्यत्रोभयत्वं भिन्नत्वं नास्तीत्युक्ते नानास्थानेषु रूपबाहुल्यमङ्गीकृत्य तद्भेदमात्रं निषेद्धुं पाणिपादाद्यवयवाख्यांशैर्व्याप्तस्यानेकस्थानस्थस्य तैरंशैर्भेदो नास्तीत्येतावताऽपि सूत्रं चरितार्थं स्यात् । तन्मा भूदिति सूत्रकृता उभयलिङ्गत्वमुक्तम् । एवं च स्थानभेदेऽपि भगवतः भिन्नशरीरं नास्तीत्युक्तं स्यात् । तथा च 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत' इति न्यायेन नानास्थानेषु विशेष्यभूतं समग्रमङ्गीकृत्य तद्भेदमात्रं निषिद्धं स्यात् । अत उभयलिङ्गमित्युक्तमिति भावः ।

## भावबोधः

सर्वावस्थाप्रवर्तकत्वेन **प्रकृत इति** ॥ तथा चातीताधिकरणेषु सर्वावस्थाप्रवर्तकत्वोक्तावस्थानां भिन्नत्वात्परमात्मनोऽपि भेद इति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । यद्वा, युगपद्भिन्नस्थानत्वेन

(भाववोधः)

परमात्मनोऽपि भेदे भिन्नानां च तारतम्यमनुग्राह्यानुग्राहकभावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति कथं 'स एव च' इत्युक्तमिति सुधोक्तरीत्या 'स एव च' इत्युक्ताक्षेपादनन्तरसङ्गतिः । न चैवं तदानन्तर्यमेव स्यादिति वाच्यम्; सार्वदेशिकसार्वकालिकसर्वावस्थाप्रवर्तकत्वप्रदर्शनपरस्य 'स एव च' इत्यस्यावस्थाविशेषप्रतिपादनपरात् 'मुग्धेऽर्धसंपत्तिः' इत्यतोऽनन्तरं कर्तव्यत्वेऽपि व्यत्यासे निमित्तस्योक्तत्वात् ॥ **प्रतिशरीरमिति** ॥ अत्र विश्वादिरूपी परमात्मा प्रतिशरीरं जाग्रदादिस्थानेषु स्थितः किमन्योन्यं भिन्न उताभिन्न इति चिन्ता । तदर्थं भिन्नस्थानत्वानुमानं किं विश्वादीनां भेदसाधकमुत नेति । तदर्थं तदनुमानम् 'एतमेव ब्रह्मेत्याचक्षते' इति श्रुतिबाधितं न भवत्युत भवतीति । तदर्थमनुमानं किं 'कार्यकारणबद्धौ' इति श्रुत्युपोद्बलितं न वेति । तदर्थमियं श्रुतिः 'अयं वै हरय' इत्याद्यभेदप्रतिपादकश्रुतिबाधिता न भवत्युत भवतीति । तदर्थम् 'अयं वै हरय' इत्याद्यभेदप्रतिपादिका श्रुतिर्विश्वादिव्यतिरिक्तमत्स्यादिकतिपयरूपाभेदप्रतिपादकत्वेन सावकाशोत सर्वरूपाभेदविषयत्वेन निरवकाशेति । तदर्थं 'कार्यकारणबद्धौ' इति भेदप्रतिपादिका श्रुतिर्निर्विषयोत सविषया वेति । तथा च भेदप्रतिपादकश्रुतेर्विषयान्तराभावे तत्प्रामाण्यायोगात्तत्सिद्ध्यर्थम् 'अयं वै हरय' इति श्रुतेः कतिपयरूपविषयत्वेन सावकाशतया बाधकत्वाभावेन तदबाधितभेदश्रुत्युपोद्बलितत्वेन प्रबलस्य भिन्नस्थानत्वानुमानस्य 'एतमेव' इति श्रुत्या बाधासम्भवात्, अबाधितेन तेन विश्वादीनां भेदसिद्धिरिति पूर्वपक्षे, भेदश्रुतेः सर्वरूपविषयत्वेन निरवकाशत्वे तद्बाधितभेदश्रुतेरनुमानोपोद्बलकत्वासम्भवेन केवलानुमानस्य 'एतमेव' इति श्रुतिबाधितत्वान्न तेन विश्वादीनां भेदसिद्धिरिति सिद्धान्ते च फलफलिभावः ॥ **सर्वशरीरेष्विति** ॥ भिन्नस्थानत्वादिति हेतोः स्वरूपासिद्धिशङ्कापरिहारार्थमुक्तम् ॥ **सर्वशरीरेषु जाग्रदादिस्थानेषु चेति** ॥ भेदमात्रसाधने सिद्धसाधनत्वप्रसङ्गात् **अन्योन्यमिति** ॥ न चैकस्यैव घटस्य कालभेदेन भिन्नस्थानत्वसम्भवेनाप्रयोजको हेतुरिति वाच्यम्, युगपद्भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् । अनेन स्थानभेदाद्विष्णोरपि भेद इति न्यायविवरणमपि व्याख्यातम् ।

ननु भिन्नस्थानत्वं कथमन्योन्यं भेदसाधकम् । स्वाभेदेऽपि व्याप्तत्वेन भिन्नस्थानत्वोपपत्तेरित्यन्यथासिद्धिशङ्कामाशङ्क्य परिहरति– **न चाकाशादिवदिति** ॥ **श्रवणादिति** । तथा च तद्विरोधः स्यादित्यर्थः ॥ **असङ्गत इति** ॥ आकाशस्य समग्ररूपेणानेकस्थानत्वाभावादिति भावः । एतेन भिन्नस्थानत्वहेतोराकाशे व्यभिचार इत्यपि परिहृतम् । समग्ररूपेणेत्यस्य

(भावबोधः)

**हेतुविशेषणत्वादिति** ॥ नन्वस्तु परमात्मनो भेदः । तथा च को दोष इत्यत उक्तं भाष्ये **भेदादनुग्राह्यानुग्राहकभाव इति** ॥ तदभिप्रायमाह– **तथा चेति** ॥ तत्प्रसङ्गश्चेति 'च' शब्द-सम्बन्धः । अत एव सुधायां तत्प्रसङ्गोऽपीत्युक्तम् । भिन्नानामनुग्राह्यानुग्राहकभावहीनोच्चादिभाव-निबन्धनत्वाद्गुणतारतम्येत्युक्तम् । तथा च भेदाद्गुणतारतम्यं ततश्चानुग्राह्यानुग्राहकभावः स्यादित्यर्थः ।

ननु भिन्नानामपि केषाञ्चिद्गुणतारतम्यानुपलम्भाद्व्यभिचार इति चेत्, न; चेतनानां परस्पर-भेदस्योत्सर्गतो गुणादितारतम्यव्याप्तत्वात् साम्यग्राहकप्रमाणरूपापवादनिबन्धनस्यादोषत्वात् । तदुक्तम्–

'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।
व्यभिचार्यपवादेन मानमेव भविष्यति ॥' इति ।

श्रुतावेतमित्येकवचनश्रवणादाह– **एकमिति** ॥ ब्रह्मशब्दार्थमाह– **पूर्णगुणमिति** ॥ ननु सूत्रे 'परस्योभयत्वम्' इत्यल्पाक्षरेणैव भेदाभावोक्तिसम्भवे 'उभयलिङ्गम्' इति किमर्थमुक्तमित्यत आह– **एकैकदेश इति** ॥ **परस्य** परमात्मनः । असिद्धं प्रमाणाभावात् । न केवलमप्रामाणिकम् । किं तु सप्ताङ्ग एकोनविंशतिमुख इत्यादिप्रमाणविरुद्धं चेत्यर्थः । तथा च परस्योभयत्वं नेत्येवोक्तौ पाणिपादाद्यवयवरूपैकदेशतोऽप्यनेकस्थानत्वेन भेदाभावो विज्ञायेत । उभयलिङ्गेनेत्युक्तौ तु भिन्नस्थानेषु विद्यमानानां समग्ररूपाणां भेदमात्रनिषेधो विज्ञायेत । विशिष्टनिषेधस्य विशेषण-निषेधपर्यवसानादिति भावः ।

## भावदीपः

भेदमात्रनिरासपरत्वभ्रान्तिनिरासाय 'सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुण' इत्यनु-भाष्यदिशाऽर्थमाह ॥ **सर्वत्रेति** ॥ स्थानेषु रूपेष्विति वाऽर्थः ॥ **समर्थनादिति** ॥ स्थान-भेदकृतभेदादिशङ्कानिरासेनेति भावः । तेन 'अतोऽनन्तगुण' इति सर्वदोषोज्झितस्तस्मात्' इत्यणुभाष्योक्तदिशा निर्दोषाशेषगुणत्वस्य पूर्वाध्यायद्वयेनैव सिद्धेः नेदमारभ्यमिति प्रत्युक्तम् । एतेन हृदयस्थादिति पूर्वत्र जीवस्य स्थानभेदेन जाग्रदाद्यवस्थोक्तौ 'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः । आकाशे च **हृदि** प्राज्ञस्त्रिधा देहे व्यवस्थितः' । विश्वो हि स्थूलभुङ्नित्यं तैजसः

(भावदीपः)

प्रविविक्तभुक् । आनन्दभुक्तथा प्राज्ञ इत्यादिश्रुत्या स्थानभेदेनैव विश्वादिरूपस्येश्वरस्य जाग्रदाद्यवस्थाप्रवर्तकत्वोक्तेस्तद्रूपाणामप्यन्योन्यं भेदादि स्यादिति शङ्कनात्पूर्वसङ्गतिरपि ध्येया । सुधायां तु युगपद्भिन्नस्थानत्वेन परमात्मनोऽपि भेदे भिन्नानां च तारतम्यमनुग्राह्यानुग्राहक-भावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति कथं स एव चेत्युक्तमित्युक्तिस्तु एतच्चिन्ताफलोक्तिपरा । स्थानभेदाद्विष्णोरपि भेद इत्यन्यत्रोक्त्यनुरोधेन स्थानेति भाष्यं स्थानभेदापेक्षयेत्यर्थमुपेत्य व्याचष्टे ॥ **सर्वशरीरेष्वित्यादिना** ॥

ननु सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे निचाय्यत्वादेवं व्योमवच्चेति गुणसूत्रे व्योमदृष्टान्तेनैकस्य परमात्मनोऽनेकस्थानेषु स्थितिरुपपादिता । यथोक्तमनुव्याख्याने । 'महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित् । यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् । स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद् ध्रुवम् । एकत्राप्यनवस्थस्य कुत एवाखिलस्थता' इत्यादि । तथा च कथमेवमाशङ्का । हेतोरप्रयोजकत्वादित्यतो व्योमवैषम्योक्त्या प्रागुक्ताक्षेपेण सौत्रलिङ्गपदव्यावर्त्यविवरणेन पूर्वपक्ष-मुज्जीवयति ॥ **न चेत्यादिना** ॥ **विश्वेति** ॥ 'सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पाद' इत्यादिना माण्डूके दक्षिणाक्ष्यादिषु जाग्रदादिप्रवर्तकत्वेनोक्तविश्वादीनां प्रत्येकं पाणिपादादि-समग्ररूपश्रवणात् । तथा श्रुतौ 'अक्षिस्थस्य तस्य भूरिति शिरः, भुव इति बाहू, स्वरिति पादौ' इत्युक्तेरित्यर्थः । चत्वारो बाहवः, द्वौ पादौ, हस्तिमुखत्वादेको मुखकर, इति सप्ताङ्गः । 'वैश्वानरो जागरितस्थानगो गजवक्त्रकः । निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः । अष्टादशमुखान्यस्य पुमाकाराणि सर्वशः । मध्यमं तु गजाकारं चतुर्बाहुधरः (बाहुःपरः) पुमान् । पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरित' इति तद्भाष्योक्तेः । यद्यप्यत्र 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरो मुखम्' । 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्' । इत्यादिना पाणिपादादेरपि व्याप्तत्वोक्तेस्तद्विरोधो वक्तुं शक्यस्तथाप्यस्याल्पश्रुतेरित्यत्रोक्तन्यायेन समाधानस्य स्पष्टत्वाद्वा 'अणोरणुतरै रूपैः पाणिपादादिसंयुतैः । सर्वत्र संस्थितत्वात्स सर्वतः पाणिपादवान्' । इत्यादिना गीतातात्पर्ये त्रयोदशे व्याख्यातत्वेन सप्ताङ्गेतिश्रुतिविरोधोक्त्यैव तुल्यार्थतया तद्विरोधस्याप्युक्तप्रायत्वाद्वा मुखतोऽनुक्तिः ॥ **दृष्टान्त इति** ॥ आकाशादिवदुपपत्ति-रित्युक्तदृष्टान्त इत्यर्थः । तस्यैकदेशेनैव नानास्थानेषु स्थितेरिति भावः । एतेन विष्णोरपीत्य-न्यत्रोक्तवाक्ये व्योमवदनेकस्थानेषु स्थितत्वेनोक्तस्यापि स्थानभेदाद्भेद एवेत्यपि शब्दार्थो दर्शितः ।

(भावदीपः)

नन्वेषापि शङ्काऽल्पश्रुतेरिति चेत्तदुक्तमिति दहरनयगुणसूत्रे एव परिहृतेति चेन्न । तत्राऽऽकाशवदंशतोऽनेकत्र वृत्तिरयुक्ता । अंशस्यापि व्याप्तत्वादित्याशङ्कैव श्रुतिबलान्निरस्ता । यथोक्तं तत्र भाष्ये । 'एष म आत्माऽन्तर्हृदये ज्यायान' इति श्रुत्युक्तत्वाच्चेति । अत्र तु समग्रावयवरूपैरनेकत्राऽवस्थानं तेषां भेदं विना न युक्तमिति शङ्का निरस्यत इति भेद इति भावः । एतेनांऽशो नानाव्यपदेशादित्यधिकरणेन पौनरुक्त्यं तत्रैव भगवद्रूपाणां प्रकाशादिवन्नैवं परः स्मरन्ति चेत्यादिना भेदाभावस्योक्तेर्जीवानामीश्वरांशत्वे मत्स्यादिसाम्यमाशंक्य जीवानां मत्स्यादिरूपाणां च भगवद्भिन्नाभिन्नांशत्वेन साम्यनिरासस्य तत्र भाष्यादौ स्पष्टत्वादिति निरस्तम् । जीवेन तेषां भिन्नांशत्वोक्तावेव तात्पर्याद्वा मत्स्यादीनां तथात्वेऽप्यक्ष्यादिस्थानभेदेन स्थितानां विश्वादीनां भेदादेवावश्यकत्वमित्यादिविशेषशङ्कानिरासाद्वाऽपौनरुक्त्यादिति । यत्तु शास्त्रयोनित्वात् श्रुतेस्तु शब्दमूलत्वादित्यादौ सूत्रे 'नैषा तर्केण मतिरापनेया' इत्यादिश्रुतौ चेश्वरस्य तर्कागोचरत्वोक्तेः कथं स्थानभेदादीश्वरभेदानुमानप्राप्तिरिति । तन्न सर्वकर्तृत्वेन गुणपूर्णत्वाद्यनुमानवत् श्रुतिसमर्पितेश्वररूपेषु स्थानभेदेन भेदानुमानोपपत्तेः । स्वतन्त्रानुमाना-योग्यत्वस्यैव प्रागभिधानात् । अन्यथा मीमांसानारम्भापत्तेः । पूर्वोक्तस्यैवात्र प्रपञ्चनाद्वा । भाष्यशेषं योजयति ॥ **तथा चेति** ॥ स्थानापेक्षया भेदादित्यस्य निर्बाधे सतीत्यर्थः । भाष्ये भेदादिति हेतुरुपलक्षणमिति भावेन मध्ये हेत्वन्तरमाह ॥ **भिन्नानामिति** ॥ समगुणत्वेऽनुग्राह्यत्वादि-भावायोगात्तदुपपादकत्वेन गुणशक्तिक्रियादितारतम्येत्युक्तम् । तदुभयोपपादकत्वेन भिन्नानामिति । तत्प्रसङ्गः गुणादितारतम्यादिप्रसङ्ग इत्यर्थः ॥ **एवं चेति** ॥ गुणादितारतम्यादौ सतीत्यर्थः । ननु यद्रूपं सर्वानुग्राहकं पूर्णगुणं च तत्र भक्तिः स्यादेव तावताऽपि बन्धनिवृत्तिसम्भवादिति चेन्मैवम् । तद्रूपमिदमिति निर्णयायोगात् पूर्वं जाग्रदाद्यवस्थाप्रेरकत्वोक्तेर्भक्त्यर्थत्वेन तस्य विश्वतैजसादिनाना-रूपगतत्वेनैकत्रैव भगवत्यभावेन तदुक्तेर्भक्त्यर्थत्वानापत्तेः । अधिकारिभेदेन विश्वादिरूपाणां तत्तदधिकारियोग्यबिम्बतया सर्वरूपेषु भक्तेरावश्यकत्वादिति भावः ।

परमात्मना रूपाणामभेदस्यैव प्रतीत्या रूपाणामन्योन्याभेदाप्रतीतेर्भाष्यसूत्रे तात्पर्यतो व्याचष्टे ॥ **न तत्र तत्रेति** ॥ श्रुतिबलात्स्थानानां भेदस्तस्याभेद एवेति व्यवस्थोपपत्तेरित्यन्यत्रोक्त्यनुरोधेन शेषस्य तात्पर्यमाह ॥ **न चेत्यादिना** ॥ **बाधितेति** ॥ प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृत-मिति तत्वनिर्णयोक्तस्मृतेरदृष्टे विषये आगमस्य प्राबल्यादुपजीव्यत्वाच्चेति भावः । प्रकृतोपयोगितया

(भावदीपः)

श्रुत्यर्थमाह ॥ **सर्वेष्विति** ॥ भूतपदमुपलक्षणं मत्वाऽऽह ॥ **चक्षुरादिस्थानेष्विति** ॥ स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति पूर्वत्रैतरेये भूतहृदयगुहाप्रविष्टस्य तस्य त्रय आवसथास्त्रयः स्वप्ना इति चक्षुरादिस्थानानामप्युक्तेः । अत एवोत्तरत्र चक्षुर्मय इत्याद्यप्युच्यत इति भावः । एतमित्येकवचनार्थ एकमिति । ब्रह्मेत्याचक्षत इतीतिशब्दः प्रकारवाचीति भावेनाह ॥ **पूर्णगुणमाचक्षत इति** ॥ एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकमित्यैतरेयभाष्योक्तेरिति भावः । लिङ्गपादे शब्दविशेषादित्यत्र तु ब्रह्मशब्दवाच्यमाचक्षत इत्यर्थोऽभिमतः । भिन्नं रूपमित्यस्य व्याख्येयप्रदर्शनपूर्वमुपयोगमाह ॥ **एकैकेति** ॥ **परस्याविरुद्धमिति** ॥ सर्वगतस्यापि परमात्मनो व्योमवदेकदेशतोऽनेकस्थानत्वस्य निचाय्यत्वादेवं व्योमवच्चेत्यत्रैव व्युत्पादितत्वेनाविरुद्धमित्यर्थः । तथा च तत्र विरोधाभावात् न स्थानतोऽपि परस्योभयत्वमिति न वक्तव्यं स्यादिति भावः । तर्हि न स्थानतोऽपि परस्योभयलिङ्गमित्यपि न वक्तव्यमित्यतो व्यावर्त्यविशेषशङ्कां पूर्वपक्ष्युक्तां स्मारयति ॥ **श्रुतिविरुद्धं चेति** ॥ सप्ताङ्ग इत्यादिश्रुतिविरुद्धं चेत्यर्थः । वस्तुतस्तु परस्येत्यस्य पूर्वपक्षिण इत्येवार्थः । तावता को दोष इत्यत आह ॥ **श्रुतीति** ॥ **इत्युक्तमिति** ॥ सूत्र इत्यर्थः ॥ **तद्व्यख्यानमिति** ॥ तथा च सविशेषणे हीति न्यायेन सर्वत्र समग्ररूपेषु सत्सु तेषां भिन्नत्वमात्रं निषिद्धं भवतीति भावः । लिङ्गपदस्य स्वरूपार्थत्वे सप्तमस्कन्धतात्पर्ये द्वितीयाध्यायोक्तं वचनमाह ॥ **लिङ्गमिति** ॥ ज्ञापकमेवेत्यन्तोक्त्या न हि स्थानभेदस्तस्योभयत्वस्य लिङ्गं कारणं वा भवतीति तत्त्वप्रदीपोक्तयोजनान्तरमपि बोध्यमिति सूचयति । तेनोभयरूपमित्येव सूत्रेण किं न कृतमिति निरस्तम् । ऐश्वर्यादित्यस्य व्यावर्त्यं **कथमुपपद्यत इति** ॥ सूर्यवदित्यस्य व्यावर्त्यं **अन्यत्रा-दृष्टत्वादिति** ॥ शेषपूर्त्या दृष्टांतांशं व्याचष्टे ॥ **प्रतिदृशमिति** ॥ तमिममहमजं शरीरभाजां हृदि हृदि विष्ठितमात्मकल्पितानामिति पूर्वार्धगतपदानामर्थमाह ॥ **तथेत्यादिना** ॥ विशब्दार्थः सामग्र्येणेति ॥ **ऐश्वर्यबलादिति** ॥ आत्मनि चैवं विचित्राश्च हीत्युक्तदिशाऽघटितघटका चिन्त्य-शक्तिबलादित्यर्थः । वेरर्थान्तरमनेकधेति । विशेषेण विविधतया च स्थितं विष्ठितमित्युक्तं भवति ॥ **अजमित्यस्येश्वरमिति** ॥

## अभिनवचन्द्रिका

**सर्वत्राशेषगुणवत्वसमर्थनादिति** ॥ यद्यपि अत्राधिकरणे न सर्वत्राशेषगुणत्त्वं समर्थ्यते किंतु भेदो निराक्रियते । तथापि भेदकनिराकरणस्य सर्वत्र गुणपूर्णतासिध्यर्थत्वात् अधिकरणफलाभि-

(अभिनवचन्द्रिका)

प्रायेण गुणपूर्णतासमर्थनादित्युक्तम् ॥ **स्वगततारतम्य इति** ॥ ईश्वरात्मकानां विश्वादीनां परस्परभेदे तत एव च तारतम्ये ईश्वरस्यानन्तरूपेण गुणपूर्णत्वरूपमहामहिमत्वाभावात् पूर्णत्वप्रयुक्तभक्ति-सम्भवेऽपि न निरतिशया भक्तिः स्यादित्यर्थः ॥ **घटादीनामिति** ॥ घटादीनां भिन्नस्थानस्थितानां भेददर्शनम् । आकाशादीनां स्थानभेदेऽपि अभेददर्शनं सन्देहबीजमित्यर्थः । साध्यं विनापि हेतोः सिद्धिमाशङ्क्य निषेधति **न चेति** ॥ इतः परं टीकायां श्रूयमाणं 'किमीश्वरोऽवयवी पाणिपादा-द्यवयवैरनेकस्थान, उत समग्ररूपेण । नाद्यः विश्वादीनां 'सप्ताङ्ग एकोनविंशतिमुख' इत्यादिना प्रत्येकं रूपश्रवणात् द्वितीये इत्यन्तं वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । भावानभिज्ञेन हेतोरन्यथासिद्धिशङ्कायां कृतायां, स्वाऽभिप्रेतहेतोराविष्करणीयत्वेन तं प्रति विकल्पकरणायोगात् । कुतो न वाच्यमित्यत आह– **असङ्गत इति** ॥ यत इति शेषः । सामस्त्येन भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् असङ्गतो दृष्टान्त इति भावः । उपसंहरति **अत इति** ॥

ननु श्रुतेर्विश्वादीनां मूलरूपाभेदप्रतिपादकत्वेऽपि विश्वादीनां परस्परमभेद प्रतिपादकत्वाभावात् कथमेतच्छ्रुत्युदाहरणमित्यतः श्रुत्यर्थमाह– **सर्वेषु भूतेष्विति** ॥ सर्वेषु भूतेषु सर्वेषां चक्षुरादिषु एतं विश्वादिरूपिणं एकमेवाऽऽचक्षते तथा चक्षुःस्थितं विश्वं कण्ठादिस्थिततैजसादिना **एकम्** अभिन्नं पूर्णगुणं चाऽऽचक्षत इति श्रुत्यर्थ इति भावः । इतः परं टीकायां श्रूयमाणं 'एकैकदेशतोऽनेक-स्थानत्वं परस्याऽसिद्धं श्रुतिविरुद्धं चेति भावेनोभयत्व मनुक्त्वा' इत्यन्तं प्रक्षिप्तम् । 'उक्तमिति च प्रक्षिप्तम् । तच्छब्दश्च प्रक्षिप्तः । अस्येत्युच्छिन्नम् । ततश्च एवं टीकावाक्यपाठः 'उभयलिङ्गमित्यस्य व्याख्यानं भिन्नरूपम्' इति । अवश्यं चैतदेवं विज्ञेयम् । सामस्त्येनाऽनेकस्थानस्थित्यभिप्रायकेण 'स्थानत' इति पदेन भावानभिज्ञस्यै कैकदेशतोऽनेकस्थानस्थितत्वभ्रमसम्भवेऽपि तस्योभयत्वमिति-पदोच्चारणप्रयुक्तत्वाऽभावात्, तदनुत्पादायोभयत्वमित्यनुक्त्वेत्युक्त्ययोगात् । न हि यदुच्चारणप्रयुक्तो भ्रमो भवति तत्परित्यागमनुक्त्वा, यदुच्चारणप्रयुक्तो भ्रमो न भवति तत्परित्यागकथनं युक्तिमत् । भाष्ये **एकरूप इति** ॥ **सर्वत्र** अक्ष्यादिस्थानेषु सामस्त्येन विद्यमानो विश्वादिरूपो विष्णुः **एकरूपः** एक एव अभिन्न एव नाऽत्र संशयः कार्यः, कथमेकस्य नानास्थानेषु सामस्त्येनाऽ-वस्थानमन्यत्राऽदृष्टत्वेनासम्भावितत्वादित्यत उक्तम् **ऐश्वर्यादिति** ॥ **एकं च** एकमपि तद्रूपम् ऐश्वर्यात् बहुधा=नानास्थानेषु सामस्त्येन वर्तते, **सूर्यवदीयते** सूर्यदृष्टान्तकेनाऽनुमानेन ज्ञायत इत्यर्थः । भाष्ये **विधूतभेदमोह इति** ॥ ईश्वरावतारेषु इदं च **विधूतभेदमोहः** । निरस्तभेदभ्रम

(अभिनवचन्द्रिका)

इत्यर्थः । टीकायां 'समधिगतोऽस्मि' इत्यर्थ इत्यतः परं 'मां प्रति मां प्रतीतिबहुधास्थितमिति वा' इति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । अस्य व्याख्यानस्य नास्त्येवेश्वरस्याऽनेकं रूपं किंतु सूर्यमण्डलवत्प्रतीतिमात्रमिति विरुद्धार्थप्रतिपादकत्वात्, जाग्रदवस्थाया अविद्याकार्यत्वाभावात् ...... ........ ।

तत्प्रवर्तकस्य विश्वस्य कार्यबद्धत्वकथनमयुक्तमित्यत आह– **कार्यभ्रमेति** ॥ अत्र जाग्रच्छब्देन जाग्रदवस्थागतज्ञानमुच्यते । ज्ञानमात्रस्याऽविद्याकार्यत्वाभावेऽपि तद्विशेषस्याविद्याकार्यत्वात्तद्बद्ध उच्यत इति भावः । तैजसस्य कार्यबद्धत्वमुपपादयति **तत्कारणेति** ॥ सः जाग्रत्कालीनो भ्रमः कारणं यस्य भ्रमस्येति विग्रहः । तथा च जाग्रत्कालीन भ्रमकार्यस्वाप्नभ्रमबद्धस्तैजसः कार्यबद्ध (इति) उच्यत इति भावः । उभावपि अविद्यारूपकारणेन बन्धकत्वात् 'कारणबद्धौ' उच्यते इति ग्राह्यम् । एतेन विश्वतैजसयोर्द्विविधबन्धवत्त्वं प्रतिज्ञाय एकैकबन्धकथनमयुक्तमिति परास्तम् ॥ **तत्कारणाज्ञानेति** ॥ द्विविधभ्रमकारणाज्ञानरूपसुप्तिबद्ध इत्यर्थः । शङ्कते **नैतच्छ्रुतिबाध इति** ॥ एतच्छ्रुत्या 'एष त आत्माऽन्तर्यान्यमृत' इत्यादि श्रुत्या 'कार्यकारणबद्धौ तौ' इति भेदश्रुतेर्विषयापहारो नेत्यर्थः ॥ **तासामिति** ॥ अभेदश्रुतीनां कतिपयविषयत्वेन भिन्नविषयत्वसम्भवादिति भावः । 'अयमात्मा' इत्यन्तिमश्रुतेर्विषयसङ्कोचोऽपि न कार्य इति भावेनाह– **अन्तिमश्रुतौ चेति** ॥ **विश्वाद्यनन्तरूपाणामिति** ॥ विश्वाद्यनन्त रूपाणामभेदेन विशिष्य पठितत्वादित्यर्थः ।

ननु अनन्तरूपत्वमेव 'अनन्तमात्र' इत्यनेन पठ्यते न तु परस्पराऽभेदवैशिष्ट्येन । तत्कथमुच्यते विश्वादीनामभेदेनैव पठितत्वादितीत्याशङ्कां परिहरन् 'चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति' इति भाष्यं शेषपूरणेन समीकरोति **चशब्दात्समुचितमिति शेष इति** ॥ अनेनाऽनन्तरूपत्वन्तु अनन्तमात्रं चेति चशब्दादभेदेन समुचितं कृत्वा पठन्ति' इति भाष्यं व्याख्यातं भवति । एतेन श्रुतौ अमात्रोऽनन्तमात्रश्च'ति पदाभ्यां विश्वादीनां मूलरूपेणाऽभेदप्राप्तावपि विश्वादीनां परस्परमभेदाप्रतीतेः 'अभेदेनैवाऽनन्तरूपत्वं पठन्ति' इत्ययुक्तमिति परास्तम् । 'अभेदेनैव चशब्दात्' इति भाष्यस्य योजनान्तरमभिप्रेत्याह– **अभेदेन सहैवेति** ॥ अनेन 'एके शाखिनः चशब्दात् चशब्दसहितात् अनन्तमात्रशब्दात् अभेदेनैव सह अत्यन्ताभेदेनैव सह ईश्वरस्यानन्तरूपत्वं पठन्तीति भाष्ययोजनोक्ता भवति । पूर्वयोजनायां चशब्दादित्यतः परं समुचितमिति

(अभिनवचन्द्रिका)

शेषोऽभिमतः, इह तु नेति विशेषः ॥ **का गतिरिति** ॥ भेदकबद्धत्वादिव्यपदेशस्य का गतिरित्यर्थः । भेदकधर्मा भेदनिर्वाह्या भवन्ति । न चेदीश्वररूपेषु भेदः । तर्हि केन भेदेन ते निर्वाह्या इति भावः । अत्र टीकायाम् 'अभेदेऽपि भेदव्यपदेशोऽचिन्त्यैश्वर्यात्' इत्युक्तम् । अनन्योऽप्यन्यशब्दन' इति वाक्यं प्रक्षिप्तमिति ध्येयम् । अवश्यं चैतदेवं विज्ञेयम्, 'अभेदेऽपि भेदव्यपदेश' इति भाष्ये भेदव्यपदेशे स्थानभेदमात्रस्य हेतुत्वेनोक्तावपि ऐश्वर्यस्य तद्धेतुत्वेनाऽनुक्तेः । ऐश्वर्ययोगादित्यत्र चशब्दाऽभावात् । अत एव टीकाकृता 'अक्ष्यादिस्थितो बद्धोऽन्यत्राबद्ध उच्यत इति भावः' इत्येव व्याख्यातम् । अन्यथा 'ऐश्वर्ययोगाच्च बद्धोऽबद्ध इत्युच्यत' इत्यवक्ष्यत् । अत एव च अभिन्नस्य स्थानभेदः कुत इत्यत आहेति 'ऐश्वर्या'दित्येतत् स्थानभेदोपपादकतयाऽवतारितम् । 'अनन्योऽप्यन्यशब्देन' इति प्रमाणस्य ऐश्वर्ययोगादनन्योऽप्यन्यशब्दवाच्यो भवतीत्यर्थकत्त्वेन ऐश्वर्ययोगाद्भेदक धर्मव्यपदेश इत्यर्थकत्वाभावाच्च । भावबोधे तु गङ्गाजलानुप्रविष्टयामुनोदकवत्तदपि वाक्यं सेव्यमेवेति भावेन व्याख्यातम् ।

पूर्वपक्षस्तु सर्वशरीरस्थितो विश्वादिरूपो हरिः परस्परं भिन्न एव । भिन्नस्थानत्वात् घटादिवत् । न च अभेदेऽपि आकाशवद्भिन्नस्थानत्वोपपत्तिरिति वाच्यम् । कार्त्स्न्येन भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् । अतोऽस्त्येव विश्वादीनां भेदः । ततश्च अनुग्राह्याऽनुग्राहकभावस्याऽवर्जनीयत्वात् निरतिशयैश्वर्याभावेन न तत्र भक्तिर्युक्तेति ।

सिद्धान्तस्तु विश्वादिरूपी हरिः भिन्नस्थानोऽप्यभिन्न एव प्रतिपत्तव्यः । भेदसाधकभिन्नस्थानत्वाऽनुमानस्य 'सर्वेषु भूतेष्वेतमेव'ति श्रुतिबाधितत्वात् । ननु न विश्वादीनामभेदो युक्तः 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यत' इति भेदकधर्मव्यपदेशादिति चेत्, न 'एष तु आत्माऽन्तर्याम्यमृतः, अयमेव सः, अयं वै हरयः अयमात्मा ब्रह्म' इति प्रत्येकमभेदवचनात् । अपि च 'अमात्रोऽनन्त मात्रश्च द्वैतस्योपशमः शिवः । ॐकारो विदितो येन स मुनिर्नेतरो जनः' इति विश्वाद्यनन्तरूपाणां परस्परं मूलरूपेण च अभेदमेके शाखिनः पठन्ति । अतो हरेः स्वगतभेदशून्यस्य सर्वगुणपूर्णत्वात् युक्ता तत्र भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सर्वत्र निर्दोषाशेषेति** ॥ सर्वरूपेष्वपि स्थानभेदकृतभेदाभावेन तारतम्याभावात् सर्वत्र निर्दोषाशेषसद्गुणत्वसमर्थनादित्यर्थः ॥ **स्वगततारतम्य इति** ॥ ईश्वरावतारत्वेनोक्तानां विश्वादीनां स्थानभेदकृतभेदेन स्वगततारतम्ये अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरो नामेत्युक्तदिशा भक्तिप्रयोजकगुणोन्नत्वाभावेन निरतिशया भक्तिर्न जायत इत्यर्थः । सर्वावस्था-प्रवर्तकत्वेन **प्रकृत इति** ॥ स्थानभेदनिरूपणानन्तरं स्थानिनि भेदशङ्कावसर इति । मोहान्तस्थान-निरूपणानन्तरमस्याधिकरणस्य प्रवृत्तिरित्यनन्तरसङ्गतिरिति भावः ॥ **प्रतिशरीरमिति** ॥ विश्वादिरूपी परमात्मा स्थानभेदाद्भिन्न उताभिन्न इति चिन्ता । तदर्थं भेदसाधकं स्थानभेदानुमानं एतमेव ब्रह्मेत्याचक्षत इति श्रुतिबाधितं न भवत्युत बाधितं भवतीति । तदर्थमनुमानं श्रुत्युपोद्बलितं न वेति । तदर्थं तदुपोद्बलिका कार्यकारणबद्धौ ताविति श्रुतिरयं वै हरयो अमात्रोऽनन्त-मात्रश्चेत्याद्यभेदप्रतिपादकश्रुत्या बाधिता न भवत्युत बाधितेति ॥ **घटादीनामिति** ॥ भिन्नस्थान-स्थितानामिति पूरणीयम् ॥ **आकाशादीनामिति** ॥ आदिपदेन तदतिरिक्तविभुपदार्थग्रहणम् । अत्रापि भिन्नस्थानगतानामिति पूरणीयम् । स्थानभेद इत्युक्तन्यायप्रदर्शकं भाष्यमवतार्य व्याचष्टे ॥ **पूर्वपक्ष इतीति** ॥ स्थानापेक्षयेत्यस्य स्थानभेदापेक्षयेत्यर्थमभिप्रेत्याह ॥ **भिन्नस्थानस्थितत्वादिति** ॥ हेतोरसिद्धिपरिहारार्थमुक्तं **सर्वशरीरेषु जाग्रदादिस्थानेषु चेति** ॥ भेदमात्रसाधने सिद्धसाधनप्रसङ्गात् **अन्योन्यमिति** । न चैकस्य घटस्य कालभेदेन भिन्नस्थानत्वसम्भवादप्रयोजकत्वमिति वाच्यम् । युगपद्भिन्नस्थानस्थितत्वस्य हेतुत्वेन विवक्षितत्वात् । साध्यं विना हेतोःसिद्धिमाशङ्क्य निषेधति ॥ **न चेति** ॥ यथाकाशादिविभुपदार्थस्य घटमठादिभिन्नभिन्नस्थानगतत्वेऽपि न भेदः तथा ईश्वरस्यापि भेदं विनैव भिन्नस्थानत्वोपपत्तिरित्यर्थः । यद्यप्याकाशे व्यभिचार इति शक्यते वक्तुं तथाप्य-न्यथासिद्धेः पक्षे व्यभिचारचोदनारूपत्वात् अन्यत्र तदनुक्तिः ।

आकाशदृष्टान्तेन भिन्नस्थानगतत्वस्यान्यथासिद्धिं वदन्प्रष्टव्यः । हस्तवितस्त्याद्यंशैर्भिन्नस्थान-गतत्वस्यांशिन आकाशस्येव हस्तपादाद्यवयवैः दक्षिणाक्ष्यादिभिन्नस्थानगतस्येश्वरस्य भेदं विनापि भिन्नभिन्नस्थानगतत्वोपपत्तिरित्युच्यत उत समग्ररूपेण भिन्नस्थानगतस्येत्याशयेन विकल्पयति ॥ **किमीश्वर इति** ॥ किमीश्वरोऽवयवी पाणिपादाद्यवयवैरनेकस्थानगत इति हस्तवितस्त्याद्यवय-वैरनेकस्थानगतस्याकाशाद्यवयविन इव भेदं विना भिन्नस्थानगतत्वोपपत्तिरित्युच्यते उत

(वाक्यार्थमुक्तावली)

समग्ररूपेणैव भिन्नस्थानगत इत्यन्थोपपत्तिरित्युच्यते वेत्यर्थः ॥ **श्रवणादिति** ॥ तथा च पाणिपादाद्यवयवैर्भिन्नस्थानगतत्वस्य प्रमाणविरुद्धस्यास्माभिर्हेतूकर्तुमशक्यत्वान्नाकाशदृष्टान्तेनान्यथासिद्धिचोदनेत्यर्थः ॥ **द्वितीय इति** ॥ प्रमाणविरोधाभावेनास्मद्विवक्षितत्वेऽप्यन्यथासिद्ध्युद्भावनाय त्वदुपात्तो दृष्टान्तोऽसङ्गतः । ईश्वरस्यैवांशिन आकाशस्य सामग्र्येण भिन्नस्थानगतत्वाभावादिति भावः । ननु भावानभिज्ञानहेतोरन्यथासिद्धावाशङ्कितायां स्वाभिप्रेतहेतोरेवाविष्करणीयत्वेन विकल्पायोग इति चेत् अस्मदभिप्रायमजानता केनाभिप्रायेणास्मत्प्रयुक्तहेतोरन्यथासिद्धिराशङ्कितेति विकल्पकरणोपपत्तेः । नन्वस्तु परमात्मनो भेदः को दोषस्तत इत्यत अपिशब्दादनुग्राह्यानुग्राहक इति भाष्यतात्पर्यमाह ॥ **तथा चेति** ॥ **तत्प्रसङ्ग इति** ॥ तयोः गुणादितारतम्यानुग्राह्यानुग्राहकभावयोः प्रसङ्ग इत्यर्थः । अनुग्राह्यानुग्राहकभावोऽपीति तारतम्यसमुच्चायकापिशब्दस्य सम्बन्धः । तथा च भेदाद्गुणतारतम्यं ततश्चानुग्राह्यानुग्राहकभावः स्यादिति भाष्यार्थो ज्ञेयः । ननु भिन्नानामपि केषाञ्चिद्गुणादितारतम्यालाभाद्व्यभिचार इति चेत् चेतनानां परस्परं भेदस्योत्सर्गतो गुणादितारतम्यव्याप्तत्वात् । साम्यग्राहकप्रमाणरूपापवादनिबन्धनव्यभिचारस्यादोषत्वात् । तदुक्तम् । 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यति' इति ।

सूत्रे स्थानेति तद्भेदो लक्ष्यते । आद्यादिभ्य उपसङ्ख्यानात्सप्तम्यर्थे तसिः । उभशब्दपर्यायोऽत्रोभयशब्दः । उभयशब्दश्च सङ्ख्याभेदयोर्वाचकः । उभादुदात्त इति सूत्रे द्व्यर्थस्य वृत्त्यादावुक्तत्वात् । एवं चोभयहेतुकेत्यत्र सङ्ख्यापरत्वेऽपि भिन्नपरत्वं न विरुध्यते । भेदश्चात्रान्योन्याभावलक्षणो गुणतारतम्यलक्षणोऽनुग्राह्यानुग्राहकभावलक्षणश्च विवक्षितः । 'न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुः' । इत्यनुव्याख्याने कश्चिदित्युक्तत्वात् । अपिशब्दश्च परस्य पूर्णस्य समग्ररूपस्यापि स्थानभेदाद्भेदः । अतो नाकाशादिवदुपपत्तिरिति पूर्वपक्ष्यभिप्रायेण सम्बध्यते । अत एव पूर्वपक्षभाष्ये परमात्मनोऽपीत्युक्तम् । हेतोरप्रयोजनकत्वद्योतनाय स्थानतोऽपीति यथाश्रुतं च सम्बध्यते । ततश्च स्थानभेदे सत्यपि परस्योभयलिङ्गं भिन्नं रूपं नास्ति । कुतः? हि यस्मात् कारणात्सर्वत्र सर्वभूतेषु चक्षुरादिस्थानेषु च परस्योभयलिङ्गं नेत्येतत् हि सर्वभूतेषु एतमेव ब्रह्मेत्याचक्षत इत्यादौ प्रसिद्धं तस्मादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **न च तत्रेति** ॥ श्रुतावेतमेवेत्येकवचनश्रवणादाह ॥ **एकमिति** ॥ ब्रह्मशब्दार्थमाह ॥ **गुणपूर्णमिति** ॥

(वाक्यार्थमुक्तावली)

ननु सूत्रे परस्योभयत्वमित्यल्पाक्षरेणैव भेदाभावोक्तिसम्भवे लिङ्गमिति किमर्थमधिकोक्तिरित्यत आह ॥ **एकैकदेशत इति** ॥ **परस्य** परमात्मनः । असिद्धं प्रमाणाभावात् । सप्ताङ्ग एकोनविंशति इत्यादिश्रुतिविरुद्धं चेत्यर्थः । तथा च परस्योभयत्वमित्येवोक्तौ पाणिपादाद्यवयवैकदेशतोऽप्यनेकस्थानत्वेन भेदाभावोऽपि ज्ञायेत । उभयलिङ्गमित्युक्तौ तु भिन्नस्थानेषु विद्यमानानां समग्ररूपाणां भेदमात्रनिषेधोऽपि ज्ञायते । विशिष्टनिषेधस्य विशेषणनिषेधपर्यवसानादिति भावः । तर्ह्युभयं रूपमिति स्पष्टं वक्तव्यं, किं नानार्थकलिङ्गपदप्रयोगेणेति चेत् हेतोरप्रयोजकत्वज्ञापनार्थमर्थान्तरज्ञापनार्थत्वात् । तदुक्तमानन्दमालायाम् । न हि स्थानभेदस्तद्भेदस्य ज्ञापकः कारको वा स्यादिति । तत्त्वप्रदीपे च न हि स्थानभेदस्तस्योभयत्वस्य लिङ्गं कारणं भवतीति स्थानभेदेऽपि तद्गतवस्तुष्वेकत्वोपपत्तेः स्वप्नाद्यवस्थाभेदेऽपि तद्गतो भोक्तुरेकत्वोपपत्तिरिति ।

अर्भकौकस्त्वादित्यत्र व्योमवत्सर्वगतस्याप्यंशेनैकत्र स्थितिः । अल्पश्रुतेरित्यत्रैकैकस्थितांशस्यापि पूर्णत्वम् । अत्र तु पाणिपादादिसमग्रावयवैरेकैकस्थितस्य भगवदंशस्य विश्वादेर्भेदाभावः प्रतिपाद्यत इति भेदः ॥ **अन्यत्रादृष्टमिति** ॥ ब्रह्माण्डस्य अनेकरोमकूपाश्रयत्वं दृष्टमिति चेत् अनेकरोमकूपानां स्वशक्त्यैवाश्रयत्वेनाण्डशक्त्या तदभावात् । रोमकूपानामनेकत्वसङ्ख्याश्रयत्वेऽपि भेदाभावादिह समग्ररूपेण भिन्नस्थानगतत्वस्यान्यत्रादर्शनोक्तेः । अत एव कृष्णशिरसि मुक्तकिरीटस्य भगवद्रूपेष्वभेदात् तदिच्छया चैव नारायणस्य शीर्ष्ण्यप्यासीदिति नारायणशिरस्यप्यवस्थानोक्तिरिति ज्ञेयः ॥ **इत्यत आहेति** ॥ सर्वत्र हीत्यनेन सूचितं सर्वत्रापि न संशय इति तत्पदगर्भं स्मृतिवाक्यं पठतीत्यर्थः । अयं स्मृत्यर्थः । सर्वत्राक्ष्यादिस्थलेषु विद्यमानः परः पूर्णो विश्वादिरूपी विष्णुरेकरूप एवाभिन्नरूप एव । **एकं च** एकमपि तद्रूपमचिन्त्यैश्वर्यात् **बहुधा** नानास्थानेषु सामस्त्येनैव सूर्यवदीयत इति । **विधूतभेदमोहः** भगवदवतारेषु निरस्तभेदभ्रमः ॥ **मां प्रतीति** ॥ **प्रतिदृशं** दृशं दृशं प्रति मां प्रति प्रत्ययं वर्तत इति नैकधा बहूनामाभिमुख्येन स्थितं अर्कमिव त्वामप्येकं समधिगतोऽस्मीति वार्थ इत्यर्थः । नन्विदं व्याख्यानं समग्ररूपेणैकस्यानेकस्थानगतत्वमदृष्टमिति शङ्कापरिहारकत्वादसङ्गतमिति चेन्न बहूनामाभिमुख्येऽप्येकत्ववद्बहुस्थानगतत्वेऽपि तदुपपत्तेरिति सामान्यमात्रे दृष्टान्तमात्रस्य सङ्गतत्वात् । पूर्वव्याख्याने आदित्यस्य ईश्वरत्ववद्व्यपूर्त्यभावेन सामग्र्यरूपेणानेकस्थानत्वाभावात् करचरणादिसामग्रीमात्रे दृष्टान्तत्वस्य विवक्षितत्वात् द्वितीयं व्याख्यानमिति हृदयम् ।

## तत्त्वसुबोधिनी

**सर्वावस्थाप्रेरकत्वेन प्रकृतेति** ॥ तथा चातीताधिकरणेषु सर्वावस्थाप्रेरकत्वोक्तावस्थानां भिन्नत्वात् परमात्मनोऽपि भेद इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । भिन्नस्थानत्वादिति हेतोः स्वरूपासिद्धिशङ्कापरिहारार्थं सर्वशरीरेषु जाग्रदादिस्थानेषु चेति । भेदमात्रसाधने सिद्धसाधनत्वप्रसङ्गात् **अन्योन्यमिति** ॥ न चैकस्यैव घटस्य कालभेदेन भिन्नत्वसम्भवादप्रयोजको हेतुरिति वाच्यम् । युगपद्भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् । ननु भिन्नस्थानत्वं किमन्योन्यं भेदसाधकं स्वरूपेणोतैकदेशावधानेन भिन्नस्थानत्वोपपत्तेरित्याशङ्क्य निषेधति ॥ **न चेति** ॥ **रूपश्रवणादिति** ॥ तथा च तद्विरोधः स्यादित्यर्थः ॥ **असङ्गत इति** ॥ आकाशस्थसमग्ररूपेणा-नेकस्थानत्वाभावादिति भावः । न चाकाशे व्यभिचारः समग्ररूपेणेत्यस्याविवक्षितत्वात् । नन्वस्तु परमात्मनो भेदः ततः को दोष इत्यतो भेदानुग्राह्यानुग्राहकभाव इत्यस्याभिप्रायमाह ॥ **तथा चेति** ॥ तत्प्रसङ्गश्चेति चशब्दसम्बन्धः । भिन्नानामनुग्राह्यानुग्राहकभावस्य हीनोच्चादिभाव-निबन्धनत्वाद्गुणतारतम्येत्युक्तम् । तथा च भेदाद्गुणतारतम्यं ततश्चानुग्राह्यानुग्राहकभावः स्यादित्यर्थः । भिन्नानामपि केषाञ्चित् गुणतारतम्यानुपलम्भाद्व्यभिचार इति न वाच्यम् । परस्परभेदस्योत्सर्गतो गुणादितारतम्यव्याप्तत्वात् । साम्यग्राहकप्रमाणरूपापवादनिबन्धन-व्यभिचारस्यादोषत्वादिति ॥ **सर्वेष्विति** ॥ अस्यां श्रुतौ एकस्यानेकस्थानत्वोक्तेरिति भावः ॥ **श्रुतिं व्याचष्टे** ॥ **सर्वेष्विति** ॥ एतमित्येकवचनश्रवणादाह । **एकमिति** ॥ ब्रह्मशब्दार्थः **पूर्णगुणमिति** ॥ ननु परस्योभयत्वमित्यल्पाक्षरेणैव भेदाभावोक्तिसम्भवे उभयलिङ्गमिति किमर्थमुक्तमित्यत आह ॥ **एकैकदेशत इति** ॥ परस्य परमात्मनोऽसिद्धं प्रमाणाभावात् । न केवलमप्रामाणिकं किन्तु सप्ताङ्ग एकोनविंशतिमुख इति प्रमाणविरुद्धं चेत्यर्थः । परस्योभयत्वं नेत्येवोक्तौ पाणिपादाद्यवयवरूपैकैकदेशतो ह्यनेकस्थानत्वेन भेदाभावो विज्ञायेत । उभयलिङ्गं नेत्युक्तौ तु भिन्नस्थानेषु विद्यमानानां समग्ररूपाणां भेदमात्रनिषेधो विज्ञायते । ननु भेदमात्रनिषेधज्ञानं कथमिति वाच्यम् । भेदविशिष्टरूपनिषेधे विशिष्टनिषेधस्य विशेषणनिषेधपर्यव-सानादिति भावः । लिङ्गशब्दस्य स्वरूपपरत्वं कुत इत्यत आह ॥ **लिङ्गमिति** ॥ प्रतिदृश-मित्यस्यार्थान्तरमाह ॥ **मां प्रतीति** ॥

## वाक्यार्थविवरणम्

**सर्वत्र** ॥ सर्वरूपेण ॥ **प्रतिशरीरमिति** ॥ प्रतिशरीरस्थितयोरन्योन्यं भिन्न उताभिन्नः । तथा एकस्मिन्नेव शरीरे जाग्रदादिस्थानेषु स्थितो भिन्न उताभिन्न इति संशयविवेको द्रष्टव्यः ॥ **घटादीनामित्यादि** ॥ अनेकस्थानस्थितानां घटादीनां भिन्नत्वदर्शनं तथाऽऽकाशादीनां सर्वं व्याप्य स्थितानामभिन्नत्वदर्शनं चेत्यर्थः ॥ **भिन्नस्थानस्थितत्वादिति** ॥ अनेकस्थानत्वादित्यर्थः । एकस्यैव घटस्य क्रमेणानेकस्थानत्वेऽपि भेदाभावेन व्यभिचारपरिहाराय युगपदनेकस्थानत्वादिति हेतुर्द्रष्टव्यः । अस्य हेतोराकाशे व्यभिचारमाशङ्कते ॥ **न चेति** ॥ आकाशस्य स्वांशैरेवानेकस्थानत्वेऽपि न परमात्मवत् समग्ररूपेणानेकस्थानत्वमस्ति । हेतावपि समग्ररूपेणेति विशेषणमभिप्रेतम् । अतो न व्यभिचार इत्याशयेन परिहारमाह ॥ **किमीश्वर इत्यादिना** ॥ **श्रवणादिति** ॥ तथा च समग्ररूपेणैवानेकस्थानत्वं श्रूयते, नावयवैरिति भावः ॥ **द्वितीय इति** ॥ समग्ररूपेणानेकस्थान इति पक्षे व्यभिचारदानायाऽऽकाशवदिति दृष्टान्तोऽसङ्गतः । तस्यांशैरेवानेकस्थानस्थितत्वेन समग्ररूपेण तदभावादिति भावः ॥ **अन्यत्र** ॥ आकाशादौ ॥ **सूर्यदृष्टान्तम्** ॥ सूर्यवदिति प्रमाणोक्तं सूर्यदृष्टान्तमित्यर्थः । 'तमिममहमजं शरीरभाजां हृदि हृदि विष्ठितमात्मकल्पितानाम्' इति पूर्वार्धतात्पर्यमाह ॥ **तथेति** ॥ हृदि हृदीति वीप्साया तात्पर्यं प्रतिहृदयमिति । विष्ठितमित्यत्र वीत्यस्य तात्पर्यं सामग्र्येणैश्वर्यबलादनेकधेति । प्रतिदृशमित्यस्य प्रतिदृशं प्रेरकत्वेन स्थितमित्येकमर्थमुक्त्वा अर्थान्तरमाह ॥ **मां प्रतीत्यादिना** ॥ मदाभिमुख्येनेत्यर्थः । अयं सूर्यो मा प्रति मां प्रतीत्याभिमुख्येन वर्तते । प्रतिदृशं विषयत्वेनानेकधा बहुधा स्थितः अर्कः यथेत्यर्थः । पृथिवीत्यारभ्यान्तर्यामीत्यन्तेन एष त आत्मेति श्रुतिर्व्याख्याता । यश्चायमित्यारभ्यायमेव स इत्यादिनेत्यन्तेन 'अयमेव स' इति श्रुतिर्व्याख्याता । अयं मूलरूप्येवेत्यारभ्य इत्यर्थः इत्यन्तेन 'योऽयमात्मा' इत्यादि अनन्तानि चेत्यन्तं व्याख्यातम् ।

## वाक्यार्थमञ्जरी

**सर्वत्र सर्वरूपेषु** ॥ स्वगतेति ॥ **स्वरूपस्थेत्यर्थः** । तथात्वेऽनुग्राह्यानुग्राहकभावप्राप्तेरित्यर्थः । घटादीनामनेकस्थानस्थितानां भिन्नस्थानत्वात् ॥ **असङ्गत इति** ॥ आकाशस्य समग्ररूपेणानेकस्थानस्थत्वाभावादिति भावः । ततः किमित्यत आह ॥ **तथा चेति** ॥ तत्प्रसङ्गश्चेति

(वाक्यार्थमञ्जरी)

चशब्दसम्बन्धः । तथा च भेदाद्गुणतारतम्यम् । ततश्चानुग्राह्यानुग्राहकभावः स्यादित्यर्थः । भेदस्य तारतम्यव्याप्तिरौत्सर्गिकीति न व्यभिचारः शङ्क्यः । **ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ** ।। स्थानतोऽपि स्थानभेदतोऽपि । परस्य हरेः । **उभयलिङ्गम्** । भिन्नरूपं नास्ति । कुतः ? हि यस्मात्सर्वत्र सर्वस्थानस्थितरूपेषु निर्भेदत्वादिना श्रूयत इत्यर्थः । एतमित्येकवचनश्रवणादाह ।। **एकमिति** ।। ब्रह्मशब्दार्थः **पूर्णगुणमिति** ।। ननु सूत्रे परस्योभयत्वं नेत्येतावन्मात्रेण पूर्तौ लिङ्गग्रहणं किमर्थमित्यत आह ।। **एकैकदेशत इति** ।। पादाद्यवयवैरित्यर्थः । **परस्य** परमात्मनः । असिद्धं प्रमाणाभावात् । श्रुतिः सप्ताङ्ग इत्यादिका । तथा च परस्योभयत्वं नेत्येवोक्तौ पाणिपादाद्यवयवरूपैकदेशतोऽप्यनेकावस्थानत्वेन भेदाभावोऽपि ज्ञायते । उभयलिङ्गं नेत्युक्तौ तु भिन्नस्थाने विद्यमानानां रूपाणां भेदमात्रानिषेधोऽपि ज्ञायेत । विशिष्टनिषेधस्य विशेष्यनिषेध-पर्यवसानादिति भावः । प्रतिदृशं प्रतिनेत्रं नैकधा अनेकरूपेण । समधिगच्छन्ति सम्यग्जानन्ति । 'तमिममहमजं शरीरभाजां हृदि विष्टितमात्मकल्पितानाम्' इति पूर्वार्धतात्पर्यमाह ।। **तथेति** ।। प्रतिदृशमित्यस्यार्थान्तरमाह ।। **मां प्रतीति** ।। मदभिमुखेनादित्यो वर्तत इत्यादीत्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ।। १२ ।।**

**'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः' (मां. उ. २-१-६.)**

**इति भेदवचनान्नेति चेन्न ।**

'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. ६-७-३) ।
**'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्' (बृ.उ. ४-५-१)**
**'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च ।**
**तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्'**

**(बृ.उ.४-५-१९) इति प्रत्येकमभेदवचनात् ।**

## तत्त्वप्रदीपिका

कारणं प्रकृतिः, कार्यं देहेन्द्रियमन आदि, ताभ्यां बद्धो विश्वो जाग्रत्प्रवर्तकः, तैजसश्च स्वप्रप्रवर्तकः । कारणमात्रबद्धः प्राज्ञः सुषुप्तिनियामकः । तौ द्वावपि बन्धौ तुरीये मोचके न स्त इति बद्धाबद्धत्वादिभेदवचनान्न रूपभेदस्यानुग्राह्यानुग्राहकत्वस्य च निषेधः परमात्मनो युक्त इति चेन्न । 'यः पृथिव्यां तिष्ठन्' 'यः सर्वेषु भूतेषु तिष्ठन्' इत्यादि प्रतिस्थानमुक्त्वा तत्र प्रत्येकम् 'एष त आत्माऽन्तर्याम्यमृत' 'एष त आत्माऽन्तर्याम्यमृत' इत्येवमभेदवचनात् ॥ 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः' 'य एष एतस्मिन्वायौ तेजोमयोऽमृतमय,' इत्यादिना च स्थाने स्थाने स्थितिमुक्त्वोक्त्वा तत्र तत्र प्रत्येकम् 'अयमेव स योऽयमात्मा' इति तस्यैवाभेदवचनात् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ नेति ॥ न विश्वादीनामभेदो वाच्यः । विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञस्यैकबन्धवत्त्वेन तुरीयस्याबन्धवत्त्वेन भेदव्यपदेशात् । तथा चानुग्राह्यादिभाव इति भावः । कार्यभ्रमरूपजाग्रद्बद्धो विश्वः । तत्कारणभ्रमरूपस्वप्रबद्धस्तैजसः । तत्कारणाज्ञानरूपसुप्तिबद्धः प्राज्ञः । कार्यकारणाकारेण द्वावपि बन्धौ तुरीये न स्त इत्यर्थः । परिहारांशं व्याचष्टे ॥ नेति ॥ नैतच्छ्रुतिबलेनेश्वररूपाणां भेदो वक्तव्यः । 'पृथिव्यन्तर्याम्येव तवान्तर्यामी' इत्यादिना 'यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्ममयमेव सः' इत्यादिना च अयं मूलरूप्येव । बहवो हरय इति च भगवद्रूपाणां प्रत्येकं परस्परं मूलरूपेण चाभेदवचनादित्यर्थः । अपूर्वमनपरमाद्यन्तशून्यम् । नान्तर्बहिरन्यद्यस्य तदनन्तरमबाह्यम् । ब्रह्मेत्यनुवादः । सर्वानुभूः सर्वज्ञः । प्रत्येकमित्यादरं सूचयति । तेन चैतच्छ्रुतीनां बलवत्त्वम् ।

## गुर्वर्थदीपिका

इत्यर्थ इत्यत्र परस्याभिलषित इति शेषः । अस्माकं तु स्वप्नावस्थाकार्यरूपा जाग्रदवस्था, तया देहगेहाद्यभिमानं दत्वा बन्धयति विधिनिषेधाभ्यामिति कार्यबद्धः । बन्धवान् खलु बद्ध इत्युच्यते । बन्धवत्त्वं च गोमानित्यत्रेव तत्स्वामित्वेनापि घटते । अतो जीवाधिकरणकस्य कार्यबन्धस्य स्वामित्वाद्भगवानपि बद्ध इत्युच्यते । एवं जाग्रदवस्थाकारणरूपस्वप्नावस्थायां सुखदुःखादिरूपे यो जीवाधिकरणको बन्धः तत्स्वामित्वात्कारणबद्ध इत्युच्यते 'प्राज्ञः

(गुर्वर्थदीपिका)

कारणबद्ध' इत्यत्र । स्वप्नकारणभूतसुप्त्यवस्थायां सर्वेन्द्रियाणामुपरमाख्यो जीवाधिकरणको यो बन्धः तत्स्वामित्वात्प्राज्ञोऽपि कारणबद्ध इत्युच्यते । सर्गादौ लयकाले जीवानां सुप्तत्वात्सुप्तिः प्राथमिकी अवस्था । सुप्त्यन्वयव्यतिरेकानुविधायिनी स्वप्नावस्था तत्कार्यभूता स्वप्नानन्तरं जायमानावस्था जाग्रदवस्था तत्कार्यभूतेति श्रुतेरभिप्रायः । इमौ द्वावपि बन्धौ केवलं मोक्षदातरि तुरीये न सिद्ध्यतः । तत्स्वामिकतयाऽपि न विद्येते इत्यर्थः । एते विश्वादयस्त्रयोऽवताराः जीवस्य संसारबन्धहेतवः । तुरीयस्तु केवलं बन्धान्मोचक इति । एवं च भगवद्रूपाणामेव बद्धाबद्धत्वलाभा-त्परकीयभेदशङ्का अबोधविजृम्भितैव । सूत्रकारस्त्वस्यार्थस्य 'तदधीनत्वादर्थवत्' इत्यत्रैव समर्थितत्वात्प्रकारान्तरेणोत्तरं दातुं पुनः सूत्रमरचयदिति ज्ञेयम् । प्रत्येकमित्यादरमित्यत्र विविधश्रुतिभिः प्रत्येकं पृथक्पृथगभेदकथनात् श्रुतीनां मिथो भगवद्रूपाभेदे परमादरमित्यर्थः ।

## भावबोधः

ननु विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञतुरीयाभ्यां भेदेऽपि तयोः परस्परं भेदकधर्माभावेन भेदो न स्यादित्यतोऽविद्यारूपकारणबद्धत्वस्योभयत्राविशिष्टत्वेऽपि कार्यबद्धत्वे वैलक्षण्यसद्भावेन तयोर्भेद इत्यभिप्रेत्य तद्वैलक्षण्यं दर्शयन् 'कार्यकारणबद्धौ' इति श्रुत्यर्थमाह– **कार्यभ्रमरूपेत्यादिना ॥** अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूपजाग्रद्बद्ध इत्यर्थः । 'देहादीशवशे स्थितं भ्रमति' 'स्ववशत्वेन' 'सैषा संसृतिरुच्यते' इति प्रमाणाद्भ्रमस्यैव बन्धकत्वेन भ्रमरूपेत्युक्तम् ॥ **तत्कारणेति** ॥ स जाग्रत्कालीनो भ्रमः कारणं यस्य भ्रमस्येति विग्रहः । तथा च जाग्रत्कालीन-भ्रमकार्यस्वप्नबद्धस्तैजस इत्यर्थः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वमसिद्धमिति वाच्यम्; 'अदृष्टे चाश्रुते भावे न भाव उपजायते' इति संस्कारद्वारा तत्कारणत्वस्य प्रमितत्वात् । अत एवान्यथाग्रहणः स्वप्न इत्युत्तरवाक्यं माण्डूक्यभाष्ये विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायत इति व्याख्यातम् । कार्यभ्रमबद्धत्वे तत्कारणाविद्याबद्धत्वमर्थात् सिद्धमेवेति नोक्तम् । एवं चाविद्या-तत्कार्यभ्रमरूपजाग्रद्बद्धो विश्वोऽविद्यातत्कार्यजाग्रत्कालीनभ्रमरूपोभयकार्यभ्रम-लक्षणस्वप्नबद्ध-स्तैजस इति तयोरपि अभेदाभावः । यद्वा, सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति स्वप्नादुत्थाने तैजसा-दिति माण्डूक्योपनिषद्भाष्ये स्वप्नावस्थाया जाग्रदवस्थां प्रति कारणत्वस्योक्तत्वात् । तस्य कारणं तत्कारणमिति तु विग्रहः । तथा चाविद्यातत्कार्यस्वप्नबद्धस्तैजसः । अविद्यातत्कार्यस्वप्नरूपो-

(भावबोध:)

भयकारणकजाग्रदवस्थावद्धो विश्व इति तयोर्भेद इति भावः । तत्कारणेति । तयोः जाग्रत्स्वप्र-भ्रमयोः कारणं यदज्ञानं तन्मात्ररूपसुप्तिबद्धस्तैजस इत्यर्थः ॥ **अयमेव स इत्यादिना चेति** ॥ अनेन 'अयमेव सः' 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिबलात् स्थानानां भेदस्तस्याभेद एवेति व्यवस्थोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यकं भवति ॥ **ब्रह्मेत्यनुवाद इति** ॥ एवं च यद्ब्रह्माय-मात्मा सर्वानुभूरिति उद्देश्यविधेयभावः । 'इदं' शब्दस्य विधेयलिङ्गत्वं चेत्युक्तं भवति ।

## भावदीपः

नेत्यस्य न परस्योभयलिङ्गमित्यनुवृत्तेनान्वयमुपेत्यार्थमाह ॥ **नेति** ॥ **द्विविधेति** ॥ आविद्यकाविद्यारूपकार्यकारणबन्धहेतुतया तद्वत्त्वेनेत्यर्थः । तदधीनत्वादर्थवदिति न्यायादिति भावः ॥ **एकेति** ॥ अज्ञानरूपैकबन्धवत्त्वेनेत्यर्थः ॥ **कार्येति** ॥ अज्ञानकार्यभूतो यो देहादौ ममताभिमानादिभ्रम इति वा अविद्यारूपप्रकृतिकार्यदेहेन्द्रियादिविषयकोक्तरूपभ्रम इति वाऽर्थः । तद्रूपजागरणेन जीवं बन्धयतीति कार्यभ्रमरूपजाग्रद्बद्ध इत्यर्थः । तदधीनत्वन्यायात् सबन्धयति स दुःखयतीत्यादिश्रुतेः । 'कार्यकारणबन्धस्य तदधीनत्वतो विभुः । विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ' इत्यादिमाण्डूकभाष्योक्तेः । व्यक्तमेतदग्रे बद्धो बन्धादीत्यत्र । उपलक्षणमेतत् कारणभूताऽज्ञानबद्धश्चेत्यपि बोध्यम् । प्राग्द्विविधबन्धवत्त्वेनोक्तेः ॥ **तत्कारणेति** ॥ भ्रम-कारणाज्ञानेन भ्रमरूपस्वप्नेन च बद्धः । तत्राऽपि स्वातन्त्र्याभिमानादज्ञानस्वाप्ररूपोभयनियन्तेत्यर्थः ॥ **तत्कारणेति** ॥ बाह्यान्तरप्रपञ्चगोचरस्वातन्त्र्याभिमानरूपभ्रमकारणेत्यर्थः । बाह्याभ्यन्तर-विश्वस्य नाऽभाव उपलब्धेः संध्ये सृष्टिरित्यादिन्यायेन सत्यत्वेऽपि कर्तृत्वादेश्च कर्ता शास्त्रार्थवत्त्वादित्यादिना सत्यत्वेऽपि स्वातन्त्र्यस्याऽसत्यत्वाद् भ्रमत्वं बोध्यम् । उक्तं च पूर्वं भाष्ये प्रमादात्मकत्वाद्बन्धस्येति । विवृतं चैतज्जिज्ञासाधिकरणसुधायाम् । 'मिथ्यात्वं यदि दुःखादे-स्तद्वाक्यस्याऽग्रतो भवेत्' इत्येतद्व्याख्यावसरे । एवं खल्वध्यात्मविदां दर्शनम् । क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वादिलक्षणं कर्तृत्वभोक्तृत्वं च परमेश्वरायत्तं आत्मनि स्वतो विद्यत एव । क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्यमाणत्वात् । तस्यापरायत्तत्वावभासोऽ-विद्यानिमित्तको भ्रम इत्यादि । भाष्यं व्याचष्टे ॥ **नैतदित्यादिना** ॥ एष इत्येतच्छब्दार्थः ॥ **पृथिव्यन्तर्याम्येवेति** ॥ यः पृथिवीमन्तरो यमयति' इति पूर्ववाक्यादिति भावः । ते तवेति

(गुर्वर्थदीपिका)

कारणबद्ध' इत्यत्र । स्वप्नकारणभूतसुप्त्यवस्थायां सर्वेन्द्रियाणामुपरमाख्यो जीवाधिकरणको यो बन्धः तत्स्वामित्वात्प्राज्ञोऽपि कारणबद्ध इत्युच्यते । सर्गादौ लयकाले जीवानां सुप्तत्वात्सुप्तिः प्राथमिकी अवस्था । सुप्त्यन्वयव्यतिरेकानुविधायिनी स्वप्नावस्था तत्कार्यभूता स्वप्नानन्तरं जायमानावस्था जाग्रदवस्था तत्कार्यभूतेति श्रुतेरभिप्रायः । इमौ द्वावपि बन्धौ केवलं मोक्षदातरि तुरीये न सिद्ध्यतः । तत्स्वामिकतयाऽपि न विद्येते इत्यर्थः । एते विश्वादयस्त्रयोऽवताराः जीवस्य संसारबन्धहेतवः । तुरीयस्तु केवलं बन्धान्मोचक इति । एवं च भगवद्रूपाणामेव बद्धाबद्धत्वलाभात्परकीयभेदशङ्का अबोधविजृम्भितैव । सूत्रकारस्त्वस्यार्थस्य 'तदधीनत्वादर्थवत्' इत्यत्रैव समर्थितत्वात्प्रकारान्तरेणोत्तरं दातुं पुनः सूत्रमरचयदिति ज्ञेयम् । प्रत्येकमित्यादरमित्यत्र विविधश्रुतिभिः प्रत्येकं पृथक्पृथगभेदकथनात् श्रुतीनां मिथो भगवद्रूपाभेदे परमादरमित्यर्थः ।

## भावबोधः

ननु विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञतुरीयाभ्यां भेदेऽपि तयोः परस्परं भेदकधर्माभावेन भेदो न स्यादित्यतोऽविद्यारूपकारणबद्धत्वस्योभयत्राविशिष्टत्वेऽपि कार्यबद्धत्वे वैलक्षण्यसद्भावेन तयोर्भेद इत्यभिप्रेत्य तद्वैलक्षण्यं दर्शयन् 'कार्यकारणबद्धौ' इति श्रुत्यर्थमाह– **कार्यभ्रमरूपेत्यादिना ॥** अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूपजाग्रद्बद्ध इत्यर्थः । 'देहादीशवशे स्थितं भ्रमति' 'स्ववशत्वेन' 'सैषा संसृतिरुच्यते' इति प्रमाणाद्भ्रमस्यैव बन्धकत्वेन भ्रमरूपेत्युक्तम् ॥ **तत्कारणेति** ॥ स जाग्रत्कालीनो भ्रमः कारणं यस्य भ्रमस्येति विग्रहः । तथा च जाग्रत्कालीनभ्रमकार्यस्वप्नबद्धस्तैजस इत्यर्थः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वमसिद्धमिति वाच्यम्; 'अदृष्टे चाश्रुते भावे न भाव उपजायते' इति संस्कारद्वारा तत्कारणत्वस्य प्रमितत्वात् । अत एवान्यथाग्रहणः स्वप्न इत्युत्तरवाक्यं माण्डूक्यभाष्ये विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायत इति व्याख्यातम् । कार्यभ्रमबद्धत्वे तत्कारणाविद्याबद्धत्वमर्थात् सिद्धमेवेति नोक्तम् । एवं चाविद्यातत्कार्यभ्रमरूपजाग्रद्बद्धो विश्वोऽविद्यातत्कार्यजाग्रत्कालीनभ्रमरूपोभयकार्यभ्रम-लक्षणस्वप्नबद्धस्तैजस इति तयोरपि अभेदाभावः । यद्वा, सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति स्वप्नादुत्थाने तैजसादिति माण्डूक्योपनिषद्भाष्ये स्वप्नावस्थाया जाग्रदवस्थां प्रति कारणत्वस्योक्तत्वात् । तस्य कारणं तत्कारणमिति तु विग्रहः । तथा चाविद्यातत्कार्यस्वप्नबद्धस्तैजसः । अविद्यातत्कार्यस्वप्नरूपो-

(भावबोधः)

भयकारणकजाग्रदवस्थावद्धो विश्व इति तयोर्भेद इति भावः । तत्कारणेति । तयोः जाग्रत्स्वप्र-भ्रमयोः कारणं यदज्ञानं तन्मात्ररूपसुप्तिबद्धस्तैजस इत्यर्थः ॥ **अयमेव स इत्यादिना चेति** ॥ अनेन 'अयमेव सः' 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिबलात् स्थानानां भेदस्तस्याभेद एवेति व्यवस्थोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यकं भवति ॥ **ब्रह्मेत्यनुवाद इति** ॥ एवं च यद्ब्रह्माय-मात्मा सर्वानुभूरिति उद्देश्यविधेयभावः । 'इदं' शब्दस्य विधेयलिङ्गत्वं चेत्युक्तं भवति ।

## भावदीपः

नेत्यस्य न परस्योभयलिङ्गमित्यनुवृत्तेनान्वयमुपेत्यार्थमाह ॥ **नेति** ॥ **द्विविधेति** ॥ आविद्यकाविद्यारूपकार्यकारणबन्धहेतुतया तद्वत्त्वेनेत्यर्थः । तदधीनत्वादर्थवदिति न्यायादिति भावः ॥ **एकेति** ॥ अज्ञानरूपैकबन्धवत्त्वेनेत्यर्थः ॥ **कार्येति** ॥ अज्ञानकार्यभूतो यो देहादौ ममताभिमानादिभ्रम इति वा अविद्यारूपप्रकृतिकार्यदेहेन्द्रियादिविषयकोक्तरूपभ्रम इति वाऽर्थः । तद्रूपजागरणेन जीवं बन्धयतीति कार्यभ्रमरूपजाग्रद्बद्ध इत्यर्थः । तदधीनत्वन्यायात् सबन्धयति स दुःखयतीत्यादिश्रुतेः । 'कार्यकारणबन्धस्य तदधीनत्वतो विभुः । विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ' इत्यादिमाण्डूकभाष्योक्तेः । व्यक्तमेतदग्रे बद्धो बन्धादीत्यत्र । उपलक्षणमेतत् कारणभूताऽज्ञानबद्धश्चेत्यपि बोध्यम् । प्राग्द्विविधबन्धवत्त्वेनोक्तेः ॥ **तत्कारणेति** ॥ भ्रम-कारणाज्ञानेन भ्रमरूपस्वप्नेन च बद्धः । तत्राऽपि स्वातन्त्र्याभिमानादज्ञानस्वाप्नरूपोभयनियन्तेत्यर्थः ॥ **तत्कारणेति** ॥ बाह्यान्तरप्रपञ्चगोचरस्वातन्त्र्याभिमानरूपभ्रमकारणेत्यर्थः । बाह्याभ्यन्तर-विश्वस्य नाऽभाव उपलब्धेः संध्ये सृष्टिरित्यादिन्यायेन सत्यत्वेऽपि कर्तृत्वादेश्च कर्ता शास्त्रार्थवत्त्वादित्यादिना सत्यत्वेऽपि स्वातन्त्र्यस्याऽसत्यत्वाद् भ्रमत्वं बोध्यम् । उक्तं च पूर्वं भाष्ये प्रमादात्मकत्वाद्बन्धस्येति । विवृतं चैतज्जिज्ञासाधिकरणसुधायाम् । 'मिथ्यात्वं यदि दुःखादे-स्तद्वाक्यस्याऽग्रतो भवेत्' इत्येतद्व्याख्यावसरे । एवं खल्वध्यात्मविदां दर्शनम् । क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वादिलक्षणं कर्तृत्वभोक्तृत्वं च परमेश्वरायत्तं आत्मनि स्वतो विद्यत एव । क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्यमाणत्वात् । तस्यापरायत्तत्वावभासोऽ-विद्यानिमित्तको भ्रम इत्यादि । भाष्यं व्याचष्टे ॥ **नैतदित्यादिना** ॥ एष इत्येतच्छब्दार्थः ॥ **पृथिव्यन्तर्याम्येवेति** ॥ यः पृथिवीमन्तरो यमयति' इति पूर्ववाक्यादिति भावः । ते तवेति

(भावदीपः)
याज्ञवल्क्येन गोतमं प्रत्युच्यते । तदेव ब्रह्मेत्युक्त्यैव ब्रह्मत्वप्राप्तेः पुनरयमात्मा ब्रह्मेति ब्रह्मविधिरयुक्त इत्यत आह ॥ **ब्रह्मेत्यनुवाद इति** ॥

## वाक्यार्थमुक्तावली

अत्र परस्योभयलिङ्गमित्यनुवर्तते ॥ **इतिशब्दश्चावर्तते** ॥ परस्योभयलिङ्गं नेति न भेदव्यपदेशादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **न विश्वादीनामिति** ॥ **द्विविधबन्धवत्त्वेनेति** ॥ उभयोरपि कार्यकारणबन्धवत्त्वेनेत्यर्थः । ननु विश्वतैजसयोर्द्विविधबन्धवत्त्वे कारणमात्रबद्धात् प्राज्ञात् तुरीयाच्च भेदेऽपि तयोर्व्यावर्तकधर्माभावेन भेदो न स्यादित्यतोऽविद्यारूपकारणबद्धत्वस्योभयत्रा-विशिष्टत्वेऽपि कार्यबद्धत्वे वैलक्षण्यसद्भावेन तयोर्भेद इत्यभिप्रेत्य तद्वैलक्षण्यं दर्शयन् कार्यकारण-बद्धौ ताविति श्रुत्यर्थमाह ॥ **कार्यभ्रमरूपेत्यादिना** ॥ अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूप-जाग्रद्बद्ध इत्यर्थः । 'देहादीशवशास्थितम् । भ्रमतीशवशत्वेन तेनैषा सृतिरुच्यते' । इति प्रमाण-वशात् ब्रह्मण एव बन्धकत्वेन तद्रूपेणेत्युक्तम् ॥ **तत्कारणेति** ॥ जाग्रत्कालीनो भ्रमः कारणं यस्य भ्रमस्येति विग्रहः । तथा च जाग्रत्कालीनभ्रमकार्यभ्रमरूपस्वप्नबद्धस्तैजस इत्यर्थः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वमसिद्धमिति वाच्यम् । संस्कारद्वारा तस्य जाग्रद्भ्रमस्य तत्कारणत्वस्य प्रमितत्वात् । अन्यथा गृह्णतः स्वप्नं इत्युत्तरवाक्यमाण्डूकभाष्ये विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायत इति संस्कारद्वारा कारणत्वमादाय व्याख्यातम् । कार्यभ्रमबद्धत्वतत्कारणाविद्याबद्धत्व-मर्थात्सिद्धमेवेति नोक्तम् । एवं चाविद्याकार्यभ्रमरूपजाग्रद्बद्धो विश्वः । अविद्यातत्कार्यजाग्रद्भ्रमस्य च कार्यभूतस्वप्नभ्रमबद्धस्तैजस इति तयोर्भेद इति भावः । यद्वा सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति विश्वः । स्वप्नादुत्थाने तैजसादिति माण्डूकभाष्ये स्वप्नावस्थायाः जाग्रदवस्थां प्रति कारण-त्वस्योक्तत्वात्तस्य कारणं तत्कारणमिति विग्रहः । तथा चाविद्यातत्कार्यस्वप्नबद्धस्तैजसः, अविद्यातत्कार्यस्वप्नरूपोभयकारणजाग्रदवस्थाबद्धो विश्व इति तयोर्भेद इति भावः ॥ **तत्कारणेति** ॥ तयोर्जाग्रत्स्वप्नभ्रमयोः कारणं यदज्ञानं तन्मात्ररूपसुप्तिबद्धः प्राज्ञ इत्यर्थः ।

न प्रत्येकमतद्वचनादित्यत्र नेति निषेध्यमाह ॥ **नैतच्छ्रुतिबलेनेति** ॥ तेन भेदवचनात् परस्योभयलिङ्गं नेति व्याख्यातं भवति । भाष्ये इति प्रत्येकमतद्वचनादित्येतत् 'एष आत्मान्तर्याम्य-मृतः' इति प्रत्येकमतद्वचनात् । अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वमिति

(वाक्यार्थमुक्तावली)

प्रत्येकमतद्वचनात् । अयं वै हरय इति प्रत्येकमतद्वचनादिति वाक्यत्रयमन्वेति । तथा च 'यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन् यस्सर्वेषु भूतेषु तिष्ठन्' इत्यादिप्रतिस्थानमुक्त्वा तत्र तत्र प्रत्येकम 'एष त आत्मान्तर्याम्यमृत एष त आत्मान्तर्याम्यमृत इति प्रत्येकमन्योन्यमभेदवचनात् य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः य एष एतस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषः य एष एतस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुष इति स्थाने स्थितिमुक्त्वा तत्र तत्र प्रत्येकमयमेव स योऽयमात्मेति परस्परं तस्यैवाभेदवचनात् । 'अयं वै हरयो' योऽयं वै दश' इति मूलरूपेणाभेदवचनाच्चेत्यर्थमभिप्रेत्य व्याचष्टे । पृथिव्यन्तर्याम्येव तवान्तर्यामीत्यादिनेत्यादिना ॥ **अपूर्वमनपरमिति** ॥ अस्य पूर्ववृत्तिप्रागभावेन पश्चाद्भाविध्वंसेन च रहितमित्यभिप्रेत्य व्याचष्टे ॥ **अपूर्वमनपरमिति** ॥ **नान्तर्बहिरिति** ॥ नियामकमाधारं चेति शेषः । ततोऽप्यण्वभावात् अन्तरन्यन्नास्ति व्यापकाभावाद्बहिरन्यन्नास्तीत्यर्थः । ननु अयं वै हरय इति श्रुतौ तदेव ब्रह्म पूर्णमित्युक्तत्वात् अयमात्मा ब्रह्मेति पुनरुक्तमित्यत आह ॥ **ब्रह्मेत्यनुवाद इति** ॥ योऽयमात्मा ब्रह्म स सर्वानुभूरिति विधानार्थमनुवाद इत्यर्थः । ननु सूत्रे तद्वचनात् प्रकृतभेदविरुद्धा-भेदवचनादित्येतावता पूर्तेर्व्यर्थं प्रत्येकग्रहणमित्यत आह ॥ **प्रत्येकमितीति** ॥ प्रत्येकमित्यनेन प्रतिशाखमेकैकशाखायामपि 'यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन्' इत्यादिप्रतिस्थानं चाभ्यास-रूपेणाभेदवचनादित्यभेदश्रुतेस्तात्पर्यं सूचयतीत्यर्थः ।

## तत्त्वसुबोधिनी

ननु विश्वतैजसोः द्विविधत्वेन प्राज्ञतुरीयाभ्यां भेदेऽपि तयोः परस्परं व्यावर्तकधर्माभावेन भेदो न स्यादित्यतोऽविद्यारूपकारणबद्धत्वस्योभयत्रापि शिष्टत्वेऽपि कार्यबद्धत्ववैलक्षण्यसद्भावेन तयोर्भेद इत्यभिप्रेत्य तद्वैलक्षण्यं दर्शयन् कार्यकारणबद्धाविति श्रुत्यर्थमाह ॥ **कार्यभ्रमरूपेत्यादिना** ॥ अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूपजाग्रद्बद्ध इत्यर्थः ॥ **तत्कारणभ्रमरूपेति** ॥ तज्जाग्रत्कालीनो भ्रमः कारणं यस्येति विग्रहः । तथा च जाग्रत्कालीनभ्रमकार्यस्वप्नबद्धः तैजस इत्यर्थः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वं असिद्धमिति वाच्यम् । अदृष्टे चाश्रुते भावे नाभाव उपजायत इति संस्कारद्वारा तत्कारणत्वस्य प्रमितत्वात् । एवं चाविद्याकार्यभ्रमरूपजाग्रद्बद्धो विश्वः अविद्या-तत्कार्यजाग्रत्कालीनभ्रमरूपोभयकार्यभ्रमलक्षणस्वप्नबद्धस्तैजस इति तयोरपि भेद इति भावः ।

(तत्त्वसुबोधिनी)

स्वप्नावस्थाया जाग्रदवस्थां प्रति कारणत्वस्यान्यत्रोक्तत्वात्तदनुसारेण तस्य कारणं तत्कारणमिति विग्रहः । तथा चाविद्यातत्कार्यस्वप्नबद्धस्तैजसः । अविद्यातत्कार्यरूपोभयकारणकजाग्रदवस्थाबद्धो विश्व इति तयोर्भेद इति भावः ॥ **तत्कारणेति** ॥ तयोः जाग्रत्स्वप्नभ्रमयोः कारणं यदज्ञानं तन्मात्रसुप्तिबद्धः प्राज्ञ इत्यर्थः ॥ **अपूर्वमनपरमिति** ॥ न विद्यते पूर्वपूर्वकालः उत्पत्तिकालः यस्य तत्तथोक्तम् । न विद्यते परः विनाशकालो यस्य तत्तथोक्तमिति विग्रहमाश्रित्याह । **अपूर्वमित्यादीति** ॥ ननु पुनः ब्रह्मशब्दप्रयोगः किमर्थ इत्यत्राह ॥ **ब्रह्मेत्यनुवादेति** ॥ एवं च यद्ब्रह्मायमात्मा सर्वानुभूरित्युद्देश्यविधेयभावः । श्रुतौ प्रत्यक्शब्दोदाहरणमयुक्तं प्रयोजनादर्शनादित्यत आह ॥ **प्रत्येकमिति** ॥ तेनापि किमित्यत आह ॥ **तेनेति** ॥ आदरसूचनेनेत्यर्थः ।

## वाक्यार्थविवरणम्

पूर्वापरशब्दौ आद्यन्तवचनौ इत्याशयेन 'अपूर्वमनपरं' इत्येतद् व्याचष्टे ॥ **अपूर्वमिति** ॥ **नान्तरिति** ॥ यस्यान्तरन्यन्नास्ति तदनन्तरम् । सर्वस्याप्यन्तः स्वयमेवास्तीत्यर्थः । यस्य वहिरन्यन्नास्ति तदबाह्यम् । सर्वस्माद्बहिः स्वयमेवास्तीत्यर्थः । अत्र योऽयमात्मेत्यनूद्येदममृतमित्यादिकं विधेयमिति न लिङ्गदोषः । तथा तदेतदिति श्रुतौ तदेतदिति पूर्वप्रकृतमनूद्य ब्रह्मेत्यादिकं विधेयम् । अयमात्मा ब्रह्म' इत्यनयोर्भिन्नलिङ्गत्वेन विशेषणविशेष्यभावायोग इत्यत आह ॥ **ब्रह्मेत्यनुवाद इति** ॥ अयमात्मा ब्रह्म इत्यनुवादः । एवं च यद्ब्रह्म अयमात्मा सर्वानुभूरिति उद्देश्यविधेयभावो द्रष्टव्यः । तेन 'अयं' इति इदंशब्दस्य विधेयात्मशब्दलिङ्गत्वं युक्तमिति ध्येयम् ॥ **वलवत्त्वम्** ॥ बहुत्वप्रयुक्तमिति शेषः ।

## वाक्यार्थमञ्जरी

कार्यकारणेत्यादिश्रुतौ जाग्रद्बद्धो विश्वः स्वप्नबद्धस्तैजसः अज्ञानबद्धः प्राज्ञ इति विरुद्धधर्मत्वेन भेदवचनान्नाभेदः परस्येति चेन्न । प्रत्येकं परस्परं मूलरूपेण चातद्वचनात् एष त आत्मेत्यादिनाऽभेदवचनादित्यर्थः ॥ **कार्यभ्रमरूपेति** ॥ अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूपजाग्रद्बद्ध इत्यर्थः ॥ **तत्कारणेति** ॥ स जाग्रत्कालीनभ्रमः कारणं यस्य भ्रमस्येति विग्रहः ॥ तथा च जाग्रत्कालीनभ्रमकार्यस्वप्नवद्धस्तैजस इत्यर्थः । कार्यभ्रमबद्धत्वे तत्कारणाविद्याबद्धत्वमर्थात्सिद्धमेवेति नोक्तम् ॥ **तत्कारणेति** ॥ तयोर्जाग्रत्स्वप्नभ्रमयोः कारणं यदज्ञानं तन्मात्रसुप्तिबद्धः

(वाक्यार्थमञ्जरी)

प्राज्ञ इत्यर्थः । यःपृथिव्यां तिष्ठन्' इत्यादिनोक्त एष इति परामृश्यत इत्याशयेनाह ॥ **यःपृथिव्यन्तर्यामीति** ॥ **यश्चेति** ॥ योऽयं पूर्णषड्गुणो भगवानस्यां पृथिव्यां तिष्ठति यश्चायमध्यात्मं प्रतिशरीरे तिष्ठति सोऽयमेव मूलरूप्येवेत्यर्थः । हरयः हरिनामकानि ॥ **नान्तर्बहिरिति** ॥ यस्यान्तर्बहिश्च नास्तीत्यर्थः स्वस्यैव सर्वान्तर्बहिस्थितत्वादिति भावः । पौनरुक्त्यवारणायाह ॥ **ब्रह्मेत्यनुवाद इति** ॥ एवं च यद् ब्रह्म परमात्मा सर्वानुभूरिति योजनेति भावः ॥ **आदरमिति** ॥ अर्थान्तरे सावकाशत्ववारणायाभेद इत्येवानुक्त्वा परस्परं मूलरूपेण चेत्यर्थकप्रत्येकशब्दग्रहणेन श्रुतीनां निरवकाशत्वरूपादरं सूचयतीत्यर्थः । यद्वा प्रत्येकमित्यस्य वचनादित्यनेनापि सम्बन्धः । तथा च प्रत्येकमेकैकस्यां श्रुतावभेदवचनादित्युक्तावभेदश्रुतीनां बहुत्वरूपमादरं सूचयतीत्यर्थः ॥ **बलवत्त्वमिति** ॥ सूचयतीत्यनुवर्तते ।

## सूत्रभाष्यम्

**॥ ॐ अपि चैवमेके ॐ ॥ १३ ॥**

एवमभेदेनैव । चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति ।

'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जन' (मां.उ.४-७) इति ।

अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते ।

ब्रह्मतर्के च–

'बद्धो बन्धादिसाक्षित्वाद्भिन्नो भिन्नेषु संस्थितेः ।
निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वर' इति ॥

## तत्त्वप्रदीपिका

अन्येऽप्येके शाखिनः पठन्त्यभेदेनैव । अमात्र इति परिमाणरहितः । अनन्तमात्रोऽनन्तरूपः द्वैतस्योपशमो भेदरहितः ।

'ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः ।
सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित्' इति नैर्गुण्ये ॥

(तत्त्वप्रदीपिका)

'अभेदमपि तद्ब्रह्म बहुरूपं विशेषतः ।
करोति न करोतीति व्यवहार्यं स्वशक्तितः' इति प्रत्यये ॥

**बन्धबन्धकबद्धसाक्षित्वात् बद्धः । साक्षित्वं स्वातन्त्र्येण ।**

'कार्यकारणबन्धस्य तदधीनत्वतो विभुः ।
विश्वादिरूपो भगवान्बद्ध इत्युच्यते श्रुतौ ।
कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मन' इति प्रत्याहारे ॥

'स बद्धः स दुःखी स बन्धयति स दुःखयतीति, स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति, सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इति च कौषारवश्रुतिः ॥

'नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः संवेदयेत्किञ्चिज्जीवकालतमो विना ॥
सुप्त्यवस्थां सुखं वाऽपि नान्यत्किञ्चित्प्रदर्शयेत् ।
सर्वं तु दर्शयेन्मुक्तौ तुरीयः पुरुषोत्तम' इति प्रत्यये ॥

## तत्त्वप्रकाशिका

नैतच्छ्रुतिबाधो भेदश्रुतेः । 'तासां कतिपयरूपविषयत्वस्यापि सम्भवात् । अन्तिमश्रुतौ च स्फुटमभेदाप्रतीतेः । अतो भेदश्रुतिबलाद्विश्वादीनां भेद एवेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अपीति** ॥ विश्वाद्यनन्तरूपाणामभेदेन पठितत्वान्न भेदश्रुतिमालम्ब्य तद्भेदो ग्राह्य इत्यर्थः । च शब्दात्समुचितमिति शेषः । अमात्रो भिन्नांशशून्यः पुनरनन्तांशः । द्वैतस्योपशमो मिथ्याज्ञानोपशमकर्ता । ओमित्याक्रियमाण ॐकारः । अभेदेन सहैवेश्वररूपाणां बहुत्वस्य पठित त्वाच्च न भेदश्रुतिरभेदविरोधिनीति वा । तर्हि का गतिर्भेदव्यपदेशस्येत्यत आह ॥ **अभेदेऽपीति** ॥ अक्ष्यादिस्थितो बद्धोऽन्यत्राबद्ध उच्यत इति भावः । अभिन्नेऽपि भेदव्यपदेशोऽचिन्त्यैश्वर्यादित्युक्तम् । अनन्योऽप्यन्यशब्देनेति । अभिन्नस्य स्थानभेदोऽपि कुत इत्यत आह ॥ **ऐश्वर्येति** ॥ निर्दोषस्य हरेर्बन्धः कथमित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिसंमतिमाह ॥ **ब्रह्मतर्के चेति** ॥ निर्दोषोऽपि बद्धोऽद्वयरूपोऽपि भिन्नः कथ्यत इत्यर्थः । अतो हरेः स्वगतभेदशून्यस्य सर्वत्र पूर्णगुणत्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ।

## गुर्वर्थदीपिका

स्फुटमभेदाप्रतीतेरित्यस्य सामानाधिकरण्येनाभेदप्रतीतावपि भेदो नास्तीत्याकारेणाभेदाप्रतीते-रित्यर्थः । चशब्दात्समुच्चितमिति शेष इत्यत्र चशब्दादनन्तरूपमित्यस्यान्वयायोगाच्चशब्दादुपरि समुच्चितमिति शब्दमध्याहृत्यान्वयः कार्य इत्यर्थः । द्वैतस्योपशम इत्येवोक्ते स्वावयवस्वगुणभेद-वर्जनेनापि श्रुतेः पर्यवसितिस्स्यात् । चशब्देनानन्तमात्रपदोक्तानन्तरूपसमुच्चये रूपभेदवर्जनेऽपि श्रुतेस्तात्पर्यमिति सिद्ध्यति ।

## भावबोधः

**अन्तिमश्रुताविति** ॥ अयमेव स इत्यस्यामित्यर्थः । एवमभेदेनैवेति भाष्यमित्थंभावे तृतीयेत्यभिप्रेत्याभेदेन पठितत्वादिति व्याख्यायेदानीं सहयोगे तृतीयेत्यभिप्रेत्य तदेव भाष्यं प्रकारान्तरेण व्याचष्टे– **अभेदेन सहैवेति** ॥ कार्यकारणबद्धावित्यस्येत्यर्थः ।

नन्वभेदेऽपि भेदव्यपदेशस्थानभेदादित्यत्र 'भिन्नो भिन्नेषु संस्थितेः' इति प्रमाणमुच्यते । ऐश्वर्ययोगाच्च भेदव्यपदेश इत्यत्र कुतो नोच्यत इत्यतः–

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः ॥'

इत्यानन्दमयाधिकरण एवोक्तत्वान्नोच्यत इत्यत आह– **अभिन्नेऽपीति** ॥ एवमैश्वर्ययोगाद्भेद-व्यपदेश इति यथाश्रुतं व्याख्यायैश्वर्ययोगात् स्थानभेद इत्यपि हेतुहेतुमद्भावमभिप्रेत्य व्याख्यातुमाह– **अभिन्नस्येति** ॥ अत्राद्ये सूत्रे ईश्वररूपाणामभेदोक्तिः । द्वितीये बाधकोद्धारः । तृतीये **विशेषप्रमाणदर्शनमिति** ॥

## भावदीपः

**शङ्कते** ॥ **नैतच्छ्रुतीति** ॥ सौत्रचशब्दार्थमाह ॥ **विश्वाद्यनन्तरूपाणामिति** ॥ एव-मित्यस्यार्थो **भेदेनेति** ॥ **भाष्याथ.....** हेतुत्वेनोपादाय शङ्कां निराह ॥ **पठितत्वादिति** ॥ अनन्तांशोऽनन्तरूपः ॥ **मिथ्येति** ॥ 'अन्यथाप्रत्ययो द्वैतं शमयेत्तं यतो हरिः' इति ओमित्याक्रियमाणत्वादोङ्कार इति च, माण्डूकभाष्योक्तेरिति भावः । पूर्वमभेदेनेति प्रकारे तृतीयां

(भावदीपः)

मत्त्वा रूपाणां पठनकर्मत्वमुक्तम् । इदानीं सहयोगे तृतीयामुपेत्य रूपानंत्यं पठनकर्मेत्याह ॥ **अभेदेनेति** ॥ बद्धो जाग्रदादिप्रवर्तकः । अबद्धो बन्धाऽप्रवर्तक इत्यर्थः । सर्वरूपाणामविशेषेण सर्वगुणवत्वेऽपि विशेषबलाच्छक्तिव्यक्तिभावाद्व्यवस्था । 'अभेदमपि तद्ब्रह्म बहुरूपं विशेषतः । करोति न करोतीति व्यवहार्यं स्वशक्तितः' इति माण्डूकभाष्योक्तेरिति भावः ॥ **अनन्योऽपीति** ॥ अनन्योऽप्यन्यशब्देन तथैको बहुरूपवानित्यानन्दमयाधिकरणे उक्तमित्यर्थः । ऐश्वर्ययोगाच्चेत्येतत्प्रकारान्तरेण व्याचष्टे ॥ **अभिन्नस्येति** ॥ एकैकत्र कात्स्न्र्येन विद्यमानस्येत्यपि योज्यम् ॥ **ऐश्वर्येतीति** ॥ यथा हि न्यायमते घटत्वादिसामान्यस्याभिन्नस्यैकैकत्र कात्स्न्र्येनास्थितस्याऽनेकघटादिरूपस्थानभेदस्तथेश्वरस्याऽपि एकैकत्राक्ष्यादौ कात्स्न्र्येनाऽवस्थितस्य कण्ठहृदयादिस्थानभेदो युक्तः । आत्मनि चैवं विचित्राश्च हीत्यादावीश्वरे अघटितघटकशक्तिमत्त्वस्य साधितत्वादिति भावः ॥ **निर्दोषोऽपि बद्ध इति** ॥ उपपादितमेतन्न्यायेनाऽनुमानिकनये । स्मृतौ साक्षित्वं नाम स्वातन्त्र्येण द्रष्टृत्वम् ॥ **अत इति** ॥ सर्वेषु भूतेष्वित्याद्यभेदश्रुतिसद्भावाद्भेदव्यपदेशस्य स्थानभेदेनोपपन्नत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

नन्वाद्यद्वितीयश्रुत्योरन्तर्यामिरूपाणामभेदोक्तावप्ययं वै हरय इत्यन्तिम श्रुतावनन्तरूपाणामभेदोक्तेर्विवक्षितसिद्धिरित्यत आह ॥ **अन्तिमश्रुतौ चेति** ॥ अयं मूलरूप्येव दश हरयः अयं मूलरूप्येव सहस्राणि हरयः इत्यादिना मूलरूपिणो बहुसङ्ख्याकरूपोक्तावप्येष त आत्मान्तर्यामी अयमेव स इतिवत्स्फुटमभेदाप्रतीतिरित्यर्थः । न केवलं काण्वमाध्यन्दिनशाखिनोऽन्तर्यामिरूपाणामभेदं पठन्ति किन्तु एकेऽपि माण्डूकशाखिनोऽपि एवमभेदेन । इत्थंभूतलक्षणे तृतीया । परस्याभिन्नत्वप्रकारवैशिष्ट्येनैव । चशब्दादनन्तरूपत्वं च पठन्तीति सूत्रभाष्ययोरर्थं हृदि कृत्वाह ॥ **विश्वादीति** ॥ **मिथ्याज्ञानेति** ॥ द्वितीयेन प्रकारेण इतं द्वीतम् । इण् गतौ भावे निष्ठा । तद्वति तत्प्रकारं परित्यज्य अतद्वति तत्प्रकारकं ज्ञानमिति यावत् । द्वीतमेव द्वैतमिति मिथ्याज्ञानं लभ्यत इति भावः । एवमभेदेनैवेति भाष्यमित्थंभावतृतीयेति भावेन व्याख्याय सहयोगे तृतीयेति प्रकारान्तरेण व्याचष्टे ॥ **अभेदेन सहेति** ॥ **भेदव्यपदेशस्येति** ॥ विश्वतैजसौ कार्यकारणबद्धौ प्राज्ञः कारणबद्धः तुर्य अबद्ध इति विरुद्धधर्ममुखेन भेदव्यपदेशस्येत्यर्थः । ननु नात्र

(वाक्यार्थमुक्तावली)

कश्चित्स्थानभेदः प्रतीयते येन स्थानभेदव्यपदेशस्य स्थानिनि लक्षणेत्यत आह ॥ **अक्ष्यादिस्थ इति** ॥ जाग्रदादिभ्रमकारणतया बन्धकाक्ष्यादिस्थितो बद्धः अन्यत्राबद्ध इति विरुद्धधर्ममुखेन भेदव्यपदेशोऽपि लाक्षणिक इति भावः । ननु भेदव्यपदेशस्य कथमचिन्त्यशक्त्या घटनीयत्वम् । न हि भेदव्यपदेशस्यैश्वर्यमर्थः । किञ्चात्र प्रमाणेषु वक्ष्यमाणब्रह्मतर्कवचनं तु स्थानभेदाद्भेदव्यपदेश इत्यत्रैव प्रमाणं न त्वत्रेत्यत आह ॥ **अभिन्नेऽपीति** ॥ उक्तमुपपादितम् । 'अनन्योऽप्यन्यशब्देन यथैको बहुरूपवान् । प्रोच्यते भगवान्विष्णुः ऐश्वर्यात् पुरुषोत्तम' इत्यानन्दमयाधिकरणे भेद-व्यपदेशस्य तत्प्रतिनिधिविशेषेणार्थवत्वं अभिन्ने विशेषावतारस्याचिन्त्यशक्त्या घटनीयत्वमित्यभिन्ने भेदव्यपदेशोऽचिन्त्यैश्वर्यादित्युपपादितमिति भावः ।

एवमैश्वर्ययोगाच्चेति भाष्यं भेदव्यपदेशे हेत्वन्तरपरतया व्याख्याय स्थानभेदे हेतुतयापि व्याचष्टे । **अभिन्नस्येति** ॥ अभिन्नस्य घटादेर्युगपदनेकस्थानगतत्वादर्शनादित्यर्थः । एवं चैश्वर्ययोगाच्चेति चशब्दस्य स्थानभेदश्चेत्यध्याहृतेनान्वय इति भावः । यद्वा ऐश्वर्ययोगाच्चेति भाष्यं नाभिन्ने भेदव्यपदेशोपपादकं हेत्वन्तरम् । आनन्दमयाधिकरणे एवोक्तत्वेन पुनरुक्तिप्रसङ्गात् । किन्त्व-भिन्नस्य स्थानभेदोपपादकमित्यवतारयति ॥ **अभिन्नेऽपीत्यादिना** ॥ अत एव टीकायां स्थान-भेदोऽपि कुत इत्यतो वाऽऽहेति वाशब्दाभाव इति ज्ञेयम् । नन्वभिन्नस्य स्थानभेदोपपादनं सूर्यदृष्टान्तेनैश्वर्यहेतुना ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयत इति कृतमेवेति पुनरुक्तमेवेति चेन्न । तत्र दृष्टान्तमात्रे तात्पर्यमत्र त्वैश्वर्यहेतूपपादनमिति भेदात् । अत एव तत्र समग्ररूपेणानेकस्थानत्वं कथमुपपद्यते हरेरन्यत्रादृष्टमित्यवतारितम् । अत्र त्वभिन्नस्य स्थानभेदोऽपि कुत इत्यत आहेती-त्यलम् । एतेन व्यवस्थेत्युक्तसिद्धान्तन्यायः स्थानभेदात् भेदव्यपदेशो वस्तुतस्तस्याभेद एवेति विरोधपरिहारकतया भाष्यारूढो दर्शितो भवति । अत्राद्ये परशङ्कितभिन्नस्थानानुमानस्य श्रुतिबाध्यत्वोक्तिः । द्वितीये श्रुतिबाधपरिहारः । तृतीये विशेषप्रमाणोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**अन्तिमश्रुताविति** ॥ अयमात्मा इत्येतस्यां श्रुतावित्यर्थः । अमात्र इत्यनेनांशराहित्य-स्यानन्तमात्र इत्यनेन सांशत्वस्य प्रतीतेर्विरोध इत्यतो व्याचष्टे ॥ **अमात्र इत्यादिना** ॥ द्वैतस्योपशम इत्यनेन भेदनाशक इति प्रतीतिनिरासायाह ॥ **द्वैतस्येति** ॥ एवं भेदेनैवेति भाष्यं

(तत्त्वसुबोधिनी)

इत्थंभावे तृतीयेत्यभिप्रेत्याभेदेन पठितत्वादिति व्याख्ययेदानीं सहयोगे तृतीयेत्यभिप्रेत्य तदेव भाष्यं प्रकारान्तरेण व्याचष्टे ॥ **अभेदेन सहैवेति** ॥ भेदव्यपदेश इत्यत्र कुतो नोच्यत इत्यत अनन्योऽप्यन्यशब्देनेत्यानन्दमयाधिकरण एवोदाहृतत्वान्नोच्यत इत्याह ॥ **अभिन्नेऽपीति** ॥ एवं ऐश्वर्ययोगाद्भेदव्यपदेश इति यथाश्रुतं व्याख्यायैश्वर्ययोगात् स्थानभेद इत्यपि हेतुप्रमाणप्रदर्शनम् ।

## वाक्यार्थविवरणम्

**पठितत्वादिति** ॥ अमात्रोऽनन्तमात्रश्चेत्यनेनेत्यर्थः ॥ **बद्ध उच्यते** ॥ कार्यकारणबद्धौ तावित्यादिनेत्यर्थः ॥ **अन्यत्राबद्ध उच्यत इति** ॥ **अन्यत्र** ॥ मस्तकसीमानं विहाय द्वादशाङ्गुल-परिमितस्थाने स्थित इत्यर्थः । विश्वादिभ्योऽन्यस्तुरीयः । 'द्वौ तु तुर्ये न सिद्ध्यत इत्यनेन 'अबद्ध' उच्यत इत्यर्थः ।

## वाक्यार्थमञ्जरी

**भेदश्रुतेः** कार्यकारणबद्धावित्यस्याः ॥ **अन्तिमश्रुताविति** ॥ अयमात्मेत्यस्यामित्यर्थः ॥ ॐ **अपि चैवमेके** ॐ ॥ एकेऽपि शाखिनः परमात्मन एवमभेदेनानन्तरूपत्वेन चामात्रोऽनन्तमात्र इत्यादिना पठन्तीत्यर्थः ॥ **आक्रियमाणत्वादिति** ॥ आहूयमानत्वादित्यर्थः । ॐकारस्य भगवन्नामत्वादिति भावः । पूर्वमभेदेनैवेति भाष्यम् इत्थंभावे तृतीया' इत्यभिप्रेत्याभेदेन पठितत्वादिति व्याख्यातम् । इदानीं सहयोगे तृतीया' इत्यभिप्रेत्य तदेव भाष्यं प्रकारान्तरेण व्याचष्टे ॥ **अभेदेन सहैवेति** ॥ **भेदव्यपदेशस्येति** ॥ कार्यकारणबद्धावित्यस्येत्यर्थः ॥ **अन्यत्रेति** ॥ मस्तकादूर्ध्वं द्वादशांगुलपरिमितस्थानस्थतुरीयो बद्ध उच्यत इत्यर्थः । नन्वभेदेऽपि भेदव्यपदेशः स्थानभेदादित्यत्र भिन्नो भिन्नेषु संस्थितेरिति प्रमाणमुच्यते । ऐश्वर्ययोगाच्च भेद इत्यत्र तत्कुतो नोच्यत इत्यत आह ॥ **अभेदेऽपीति** ॥ अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तम इत्यानन्दमयाधिकरण एवोक्तत्वादत्र नोच्यत इत्यर्थः । एवमैश्वर्य-योगाद्भेदव्यपदेश इति यथाश्रुतं व्याख्यायैश्वर्ययोगात्स्थानभेद इत्यपि हेतुहेतुमद्भावमभिप्रेत्य व्याख्यातुमाह ॥ **अभिन्नस्येति** ॥

॥ इति स्थानतोऽप्यभेदाधिकरणम् ॥ ८ ॥

## ९. अरूपाधिकरणम्

रूपवत्त्वादनित्यत्वमित्यतो वक्ति—

**॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ १४ ॥**

प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म । हिशब्दाद् 'अस्थूलमनणु' (बृ.उ. ५-८-८) इत्यादिश्रुतेश्च ।

'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः ।
अरूपवानतः प्रोक्तः क तदव्यक्ततः पर' इति मात्स्ये ॥

### तत्त्वप्रदीपिका

एवं बद्धत्वश्रुतेस्तत्स्वातन्त्र्येणैव प्रकाममर्थवत्त्वोपन्यासेन महिमासम्भवाशङ्का परिहृता । अथ च हेत्वन्तरेण तदसम्भव आशङ्क्यते । रूपादिमत्त्वाच्च विपर्ययो दर्शनादित्यत्र रूपादिमतोऽनित्यत्वव्याप्तिर्दर्शिता । ब्रह्मणश्च रूपवत्त्वमुक्तं 'रूपोपन्यासाच्च' 'पुरुषविधमपि' इत्यादिना । तस्माद् ब्रह्मणोऽपि रूपवत्त्वादनित्यत्वं प्रसक्तम् । अनित्यस्य च को हि महिमा वर्ण्येतेत्यत आह **॥ अरूपवदेव हि तत्प्रधानत्वात् ॥** भौतिकानि हि रूपाण्यनित्यत्वव्याप्तानि । भूतकारणत्वेन भूतेभ्यः परस्याः प्रकृतेरपि नियामकत्वेन तदुत्तमस्य ब्रह्मणः क तादृशरूपवत्त्वम् । अतो नानित्यताशङ्का ।

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्याप्राकृतरूपसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथाऽनित्यत्वादिप्राप्त्या न तत्र भक्तिरुत्पद्यत इति तत्समर्थनीयमेव । यदर्थं महिमा निरूपितः सा भक्तिरेवात्र विषयः । विष्णौ युक्ता न वेति सन्देहः । साधनतयोक्तेषु युक्तायुक्तदर्शनं सन्देहबीजम् । पूर्वपक्षयति **॥ रूपवत्त्वादिति ॥** न युक्तैव भगवद्भक्तिः । तथा हि । किमसौ रूपवान्न वा । नाद्यः । रूपवत्त्वादनित्यत्वप्रसङ्गात् । यज्ञदत्तादिवत् । अनित्यशरीरे च न भक्तिरुत्पद्यते । 'अरूपमव्ययं' 'तदरूपमनामयम्' इत्यादि श्रुत्यप्रामाण्यं च स्यात् । न द्वितीयः । 'रुक्मवर्णं कर्तारं आदित्यवर्णम्' इत्यादिश्रुतेर्वैयर्थ्यापातात् । सौन्दर्यसौलक्षण्याद्यभावापाताच्च । सौन्दर्यादिशून्ये च भक्त्ययोगात् । तदेवमुभयथापि भक्तेरनुपपन्नत्वाद् व्यर्थोऽयं पाद इति भावः ।

(तत्त्वप्रकाशिका)

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। **अत इति** ।। कर्तव्यैव परमात्मनि भक्तिः । ब्रह्मणो रूपवत्त्वाभावेनानित्यत्वाभावादरूपत्वश्रुत्यवैयर्थ्याच्च । अरूपत्वं कुतः । रूपं हि भवत्प्राकृतं भौतिकं वा भवेत् । न च तद् ब्रह्मणि सम्भवति । तस्य प्रकृत्यादिप्रवर्तकत्वात् । न हि स्वाधीनं स्वात्मानं बध्नातीति भावः । प्रधानत्वादित्यस्योत्तमत्वादिति व्याख्यानम् । उत्तमत्वप्रकारप्रदर्शनं प्रवर्तकत्वेनेति । ननु ब्रह्मणः प्रकृत्यादिसामर्थ्येन बन्धाभावेऽपि स्वेच्छादिनिमित्तेन रूपं किं न स्यादित्यत आह ।। **हिशब्दादिति** ।। सूचिताया इति शेषः । सूत्रार्थे स्मृतिं चाह ।। **भौतिकानीति** ।। परः प्रवर्तकत्वेनोत्तमः । अव्यक्ततः परे तत् आव्यक्तिकं च रूपं केत्यर्थः । कैमुत्यं वा ।

## गुर्वर्थदीपिका

साधनतयोक्तेष्वित्यत्र नानावादिभिः साधनतयोक्तेष्वित्यर्थः । कैमुत्यं वेति वदता भूतेभ्यः परे महदहङ्कारादावपि भौतिकरूपं नास्ति भूतमूलाव्यक्ततः परे तद्भौतिकं क्व नास्तीति किमु वक्तव्यमित्यर्थस्सूचितः ।

## भावबोधः

**अप्राकृतरूपसमर्थनादिति** ।। अत्र– 'रूपमस्य शिरः पाणिपादाद्यात्मकमिष्यते ।।' इत्यनुव्याख्यानानुसारेण रूपशब्देन शरीरमुच्यते । अत एवोक्तं सुधायां रूपशब्देन शुक्लादिगुणप्रतीतिः स्यादतः शिरःपाणीति विवरणं कृतमिति । अत्र यद्यपि 'अत एव चोपमा' इत्यस्य पूर्वाधिकरणानन्तर्यं युक्तम् । 'यस्मादेवमिति' 'ईशरूपेष्विवोदित' इति भाष्यानुव्याख्यानानुसारेण 'न स्थान तोऽपि' इत्येतदधिकरणप्रतिपाद्यमीश्वररूपाभेदं दृष्टान्तत्वेनोपजीव्य चेतनत्वांशत्वाभ्यां जीवानामीश्वरेणाभेद इति पूर्वपक्षोत्थानात् । तथाप्यत्र 'अत एव' इत्युत्तराधिकरणप्रतिपाद्ये जीवेश्वराभेदाभावे उपोद्घातलक्षणया सङ्गत्येश्वरस्याप्राकृतशरीरत्वरूपो हेतुः प्रतिपाद्यत इत्यस्य मध्ये निवेशोऽप्यव्यवधायकत्वमिति ज्ञातव्यम् । तदुक्तं सुधायाम्– 'अत एव च' इति सूत्रं 'न स्थानतोऽपि' इत्येतदधिकरणेन सङ्गतमिति ज्ञापनाय क्रमभेदः । तत्सिद्धमर्थमुपजीव्य पूर्वपक्षोत्थानात् । तथा च भाष्यं **यस्मादेवमित्यादि** । अत्रापीशरूपेष्विवेत्यादि । अथ तदनन्तरमेव किं न कृतम् । अरूपत्वाधिकरणार्थस्य 'अत एवे च' इति सूत्रार्थं प्रति हेतुत्वेनोपोद्घातलक्षणया सङ्गत्या वर्णितस्याव्यवधायकत्वादिति ।

(भावबोधः)

**विष्णौ युक्ता न वेति ॥** अत्र भक्तिर्विष्णौ न युक्तोत युक्तेति चिन्ता । तदर्थं रूपवत्त्वारूपवत्त्वे विष्णौ न सम्भवत उत सम्भवत इति । तदर्थं तदुभयप्रतिपादकश्रुत्यप्रामाण्यं विष्णोरनित्यत्वसौन्दर्याद्यभावश्च प्राप्नोत्युत न प्राप्नोतीति । तदर्थं विष्णोर्विलक्षणं रूपं नास्ति उत अस्तीति । तदर्थम् 'ऐकात्म्यप्रत्ययसारम्' इत्यादिश्रुतिस्तत्र प्रमाणं न भवत्युत भवतीति । तदर्थं सा श्रुतिः स्पष्टमीश्वरशरीरस्य ज्ञानानन्दाद्यात्मकत्वप्रतिपादकश्रुतिसंवादिनी न भवत्युत भवतीति । तथा च विशेषश्रुतिस्मृतिसंवादाभावे 'ऐकात्म्यप्रत्ययसारम्' इत्यादिश्रुतेर्विष्णोरेव ज्ञानाद्यात्मकत्व-प्रतिपादकत्वेन चारितार्थ्यान्न तच्छरीरस्य तदात्मकत्वप्रतिपादकत्वमिति प्रमाणाभावेन विलक्षण-रूपासिद्धौ रूपवत्त्वप्रतिपादकश्रुत्यप्रामाण्यं सौन्दर्याद्यभावश्च तत्परिहाराय प्रसिद्धरूपवत्त्वाङ्गी-कारेऽनित्यत्वमरूपवत्त्वश्रुत्यप्रामाण्यं चेति रूपवत्त्वारूपवत्त्वयोरसम्भवान्न तत्र भक्तिर्युक्तेति पूर्वपक्षे, 'आनन्दरूपम्' 'शुद्धस्फटिकसंकाशम्' इति विशेषश्रुतिस्मृतिसंवादात् 'ऐकात्म्यप्रत्यय-सारम्' इत्यादिश्रुतिरूपप्रमाणसद्भावेन विलक्षणरूपसिद्धौ रूपित्वारूपित्वप्रतिपादकश्रुत्यप्रामाण्यस्य सौन्दर्याद्यभावस्य चाप्राप्त्या रूपवत्त्वारूपवत्त्वयोः सम्भवेन युक्ता तत्र भक्तिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः ।

अत्र भाष्ये अरूपवत्त्वादनित्यत्वमिति प्रथमसूत्रनिवर्तनीय एव पूर्वपक्ष उक्तः । रूपवत्त्वा-रूपवत्त्ववचनयोर्विरोधादप्रामाण्यमिति न्यायविवरणे प्रथमद्वितीयसूत्रनिरसनीयपूर्वपक्ष उक्तः । अतस्तदुभयानुसारेण पूर्वपक्षमुपपादयति– **तथा हीत्यादिना ॥** भाष्याभिप्रायमाह– **रूपवत्त्वा-दिति ॥** अनेन भाष्ये स्यादित्यध्याहार इत्युक्तं भवति । अत्रानित्यत्वं नाम देहहान्यादिरूपमेव । अत एव यज्ञदत्तवदित्युक्तम् । रूपवत्त्ववचनविरोधादरूपवत्त्ववचनस्याप्रामाण्यमिति बुद्ध्या विविक्तस्य न्यायविवरणांशस्यार्थमाह– **अरूपमव्ययमित्यादिना ॥** अरूपवत्त्ववचनविरोधात् रूपवत्त्ववचनस्याप्रामाण्यमिति पूर्ववद्विभक्तस्य न्यायविवरणस्याभिप्रायमाह– **रुक्मवर्णमिति ॥** अत्र वैयर्थ्यं नामाप्रामाण्यम् । न्यायविवरणेऽप्रामाण्यमित्युक्तेऽपि 'प्रकाशवच्चावैयर्थ्यम्' इति सूत्रानुसारेणैवमुक्तम् । चतुर्थसूत्रनिरसनीयं हेतुमाह– **सौन्दर्येति ॥** भूतेभ्यो भिन्नस्य जीवस्य भौतिकशरीरसत्त्वात् । सूत्रसमानार्थत्वापत्त्या प्रकृतानुपयोगाच्च परशब्दस्य भिन्नार्थकत्वासम्भवेना-पेक्षितांशपूरणेन यथावद्व्याचष्टे– **पर इति ॥ तदाव्यक्तिकं रूपमिति ।** अव्यक्ततः परे तत्त्वे इत्यन्वयक्रमेणाव्यक्तस्य प्रकृतत्वेन तदात्मकस्य रूपस्यापि प्रकृतत्वात्तच्छब्देन तत्परामर्श इति

(भावबोधः)

भावः ॥ **कैमुत्यं वेति** ॥ अस्मिन् पक्षे तच्छब्देन पूर्वप्राप्तभौतिकरूपपरामर्शः । तथा च यदा भूतेभ्यः परत्वेनैव भौतिकरूपराहित्यं किमु वक्तव्यं तदा भूतकारणाव्यक्ततः परे तद्भौतिकं रूपं नास्तीति कैमुत्यमित्यर्थः ।

## भावदीपः

**अप्राकृतरूपेति** ॥ अप्राकृतविग्रहेत्यर्थः । समर्थनात् रूपित्वारूपित्वश्रुत्योर्व्यवस्थाकल्पनेति भावः । एतेन पूर्वत्रोभयलिङ्गपदेन समग्ररूपेणैवेश्वरस्याऽनेकत्रावस्थानमुक्तं तद्युक्तम् । रूपित्वेऽनित्यत्वप्राप्तेरिति शङ्कनात्सङ्गतिः सूचिता । एतेनैव प्रथमाध्याय एव 'रूपोपन्यासाच्च' पुरुषविधमपि चैनमधीयते, 'अन्यभावव्यावृत्तेश्च' इत्यादिना भगवतो विग्रहस्य सिद्धत्वात्पौनरुक्त्यमिति निरस्तम् । विशेषशङ्कानिरासेनाऽत्र समर्थनात् । यदपि विकरणत्वान्नेति चेत्तदुक्तमिति सूत्रे युक्तिपाद एवाऽप्राकृतविग्रहत्वं हरेः सिद्धम् । यथोक्तम् । तत्र भाष्ये न तस्य कार्यं करणं च विद्यते इति । तथा सर्वोपेता च' इति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्केति च । तथा तत्र टीकायामप्युक्तं न तस्य कार्यमिति पाणिपादादिरहितत्वस्य प्राकृतविषयत्वेनोपपादितत्वादिति । विशेषयुक्तिस्तु प्राकृतशरीराभावेऽपि चिदानन्दाद्यात्मकविग्रहत्वादिरिति चेति तदप्येतेनैव समाहितं बोध्यम् । अरूपित्वश्रुतेः सदृष्टान्तं गत्युपपादनपूर्वकं प्रमाणविशेषकथनेन च तस्यैवात्र समर्थनादिति ॥ **अन्यथेति** ॥ प्राकृतशरीरवत्त्वाद्यभ्युपगम इत्यर्थः ॥ **भक्तिरेवेति** ॥ सूत्रे अरूपित्वाद्युक्तेर्भक्त्यर्थत्वद्योतनाय सैवात्र विषयतयोक्तेति ज्ञेयम् ॥ **साधनतयोक्तेष्विति** ॥ ज्योतिष्टोमचैत्यवन्दनादिषु परलोकसाधनतया वेदे मतान्तरे चोक्तेष्वित्यर्थः । रूपवत्त्वारूपवत्त्व वचनयोर्विरोधादप्रामाण्यमित्यन्यत्रोक्तं पक्षभेदेन योजयितुं विकल्पमुखेन भाष्यं व्याचष्टे ॥ **किमसाविति** ॥ **अनित्यत्वेति** ॥ देहनाशाख्येत्यर्थः ।

यत्तु नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इति सूत्रे द्वितीये नित्यदेहत्वमीश्वरस्य सिद्धम् । यथोक्तं तत्र पूर्वपक्षटीकायाम् । स्वतन्त्रस्यापि लीलया विग्रहग्रहणपरित्यागोपपत्तेरिति । सिद्धान्तटीकायामपि 'नित्यो नित्यानाम्' इति देहनित्यत्वस्याप्युक्तत्वादिति । तथा च तत्रैवाऽनित्यत्वशङ्काया अपि निरासात्पौनरुक्त्यमिति । तन्न । देहवत्त्वे यज्ञदत्तादिवदनित्यत्वनियमेन नित्यदेहत्वस्याऽयोगादिति तदाक्षेपेणेह शङ्कोत्थानात् । शरीरत्वस्याऽनित्यत्वव्याप्तत्वात् ।

(भावदीपः)

देहस्याऽप्रकृतत्वसाधनपर्यन्तमनित्यत्वचोद्यस्याऽनिवृत्तेरिति प्रागनिरस्तामन्यत्रोक्तां विशेषाऽऽशङ्कां चाह ॥ **अरूपमव्ययमिति** ॥ भाष्ये अनित्यत्वपदेनारूपश्रुत्यप्रामाण्यं चेत्युपलक्ष्यत इति भावः । अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदिति काठके शब्दरसादिसाहचर्येणाऽरूपशब्दस्य शुक्लादिवर्णराहित्यार्थपरतयेक्षतिनये व्याख्यानेऽपि रूपपदस्य विग्रहार्थत्वमुपेत्याऽत्राऽव्ययत्वोपपादकतया तद्राहित्यार्थपरतयोदाहरणमविरुद्धम् । अत एवाऽव्ययमित्युक्तिः । यद्वा लोके शरीरवर्णेनैव श्यामो लोहितः पीत इत्यादिव्यपदेशादिहाऽप्यरूपमिति वर्णसामान्याभावोक्त्या शरीराभाव उपलब्ध इति भावेनाऽरूपमिति श्रुत्युक्तिः । अत एव रूपाभावादेव रूपादिमत्त्वाच्च विपर्ययोऽदर्शनादित्युक्तदोषो नेति वक्तुमव्ययमित्यंशोक्तिः । अन्यथा अनित्यत्वं स्यादेवेति भावः । एवं तदरूपमनामयमित्यपि पूर्ववदुपपादकोपपाद्याशयं व्याख्येयम् । तेन रूपवत्त्वयुक्तेः श्रुत्युपोद्बलितत्वं च सूचितं ध्येयम् ॥ **रुक्मवर्णमिति** ॥ न चैतद्वर्णमात्राभिप्रायम् । तथैव रूपोपन्यासादित्यत्रोक्तेः न तु शरीराभिप्रायमिति युक्तम् । कर्तृत्वोपपादकत्वादत एव कर्तारमित्यन्तोक्तिः । अन्यथा सम्बन्धानुपपत्तेश्चेत्यत्राऽशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेनेति भाष्योक्तदिशा कर्तारमित्युक्तकर्तृत्वाभावापत्तेरिति भावः । वर्णपरत्वेऽप्युक्तदिशा देहपरत्वावश्यंभावाच्च ॥ **तदिति** ॥ तस्मात्पक्षद्वयेऽपि बाधकाभावादित्यर्थः ।

फलं वदन् तत्राऽरूपवदिति सूत्रभाष्यांशौ परंपराहेतुत्वेन योजयति ॥ **कर्तव्यैवेति** ॥ प्रकृत्यादीत्यादि व्याचष्टे ॥ **अरूपत्वमिति** ॥ **रूपं किमिति** ॥ प्राकृतं भौतिकं वेत्यर्थः ॥ **अत आहेति** ॥ अस्थूलमनण्वित्यादिश्रुतिश्च अन्यभावव्यावृत्तेश्चेत्यत्र प्राकृतस्थौल्यादिराहित्यपरत्वेन व्याख्याततत्वात् । प्राकृतस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः । अस्थूलादिरिति प्रोक्त इति बृहद्भाष्योक्तेश्च । तया तादृशरूपाभावोऽवगम्यत इति भावः । यद्यपि तत्र विरुद्धैर्लक्षणैर्युतम् । ब्रह्मैवेत्यनुभाष्यदिशा अप्राकृतस्थौल्यादिपरत्वमप्युक्तम् । तथाऽप्यत्र तस्य प्रपञ्चनमित्यदोषः । स्मृतौ भौतिकानि हि रूपाणीत्यत्राऽऽव्यक्तिकानि चेत्युपलक्ष्यत इति मत्वाऽर्थमाह ॥ **तदाऽऽव्यक्तिकमिति** ॥ उपलक्षणं विनैवार्थमाह ॥ **कैमुत्यं वेति** ॥ अव्यक्तमप्यतीत्य वर्तमाने हरावव्यक्तकार्यभूतकार्यं नेति किमु वाच्यमित्यर्थः ।

## अभिनवचन्द्रिका

**भक्त्यर्थमिति** ।। 'तस्य' इत्यतः परं प्राकृतरूपनिरासपूर्वकमिति शेषः ।। **अन्यथेति** ।। प्राकृतरूपनिरासपूर्वकमप्राकृतरूपसमर्थनाभाव इत्यर्थः ।। **भक्तिरेवात्र विषय इति** ।। ननु परमात्मा विषयः । प्राकृतरूपवान् न वेति सन्देहः । प्राकृतरूपवानेवेति पूर्वपक्ष इति वक्तव्यम् । सिद्धान्ते परमात्मनः प्राकृतरूपाभावस्यैव समर्थनात् न तु भक्तिरेवात्रेत्यादि । भक्तेरधिकरणफलत्वेनाधि-करणार्थत्वाभावात् इति चेत्, सत्यम् । भक्तिर्नाधिकरणप्रतिपाद्या, तथापि नास्याऽधिकरण-स्यात्राऽन्तर्भावो युक्तः । किन्नाम युक्तिपाद एव । तथा हि उक्तं तावत् 'रूपोपन्यासात्' इति भगवतो रूपं, 'पुरुषविधमपि चैनमधीयते' इति च तदयुक्तम् । अनित्यत्वप्रसङ्गादिति युक्तिविरोधे प्राप्ते प्राकृतरूपनिरासेन युक्तिविरोधस्य निराक्रियमाणत्वादित्याशङ्कानिरासाय, यथा अस्याधि-करणस्य युक्तिविरोधनिरासफलत्वम्, तथा भक्तिकर्तव्यताफलकत्वमप्यस्तीति अत्रान्तर्भावो नायुक्त इति द्योतनाय 'भक्तिर्विषय' इत्याद्युक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । भाष्ये 'रूपवत्त्वादनित्यत्वम्' इति पूर्वपक्षप्रदर्शनमुपलक्षणत्वाभिप्रायेणेति भावेन पूर्वपक्षफलं प्रतिज्ञापूर्वकमाह– **न युक्तैवेत्यादिना** ।। **नाद्य इति** ।। न सिद्धान्तिना रूपवत्त्वपक्षोऽभ्युपगन्तुं शक्य इत्यर्थः ।। **रूपवत्त्वादिति** ।। रूपवत्त्वस्यानित्यत्वापादकत्वादिति भावः । एतेन 'रूपवत्त्वादिति व्यर्थमिति परास्तम् । अनित्यत्वमित्युपलक्षणमिति भावेनाह– **अरूपमिति** ।। अत्रापि अरूपित्वश्रुत्यप्रामाण्येऽ-विशेषाच्छ्रुत्यन्तरेऽप्यनाश्वासप्रसङ्गेन गुणासिद्ध्या भक्तिर्नोपपद्यत इति भक्त्ययोगो बोध्यः । एतेन प्रकाशवच्च' इत्यादिसूत्रेणाऽप्राकृतरूपाङ्गी कारेणाऽनित्यत्वदोषस्य परिहृतत्वात् अरूपत्वप्रतिपादकं सूत्रं व्यर्थमिति परास्तम् । अरूपत्वश्रुत्यप्रामाण्यपरिहाराय अरूपत्वस्यापि वक्तव्यत्वात् ।। **न द्वितीय इति** ।। द्वितीयोऽपि नाभ्युपगन्तुं शक्य इत्यर्थः । एतेन 'नाद्य' इत्याद्यपक्षं दूषयता द्वितीयपक्षस्याङ्गीकृतत्वात् पुनस्तस्यापि दूषणे व्याघात इति परास्तम् ।। **श्रुतिवैयर्थ्यापातादिति** ।। अनेन 'प्रकाशवच्चेत्यादिसूत्राणां सौन्दर्याद्युपपादनवत् श्रुत्यप्रामाण्यनिरासोऽपि प्रयोजनमिति सूचितम् । सिद्धान्तफलं प्रतिजानीते **कर्तव्यैवेति** ।। **अरूपत्वेति** ।। अरूपत्वश्रुतिवैयर्थ्य-प्रयुक्तश्रुतिमात्राना श्वसाभावाच्च भक्तिरुपपन्नेति भावः । **कैमुत्यं चेति** ।। अस्मिन्व्याख्याने तत् भौतिकं रूपम् अव्यक्ततः परे क्वेति योजना द्रष्टव्या ।। **न चैवं रूपशब्दस्येति** ।। रूपशब्दस्य प्राकृतादावेव व्युत्पन्नत्वात् व्युत्पत्त्यनुसारेण शब्दस्य बोधकत्वात् रुग्मवर्णादि श्रुतेः प्राकृतादि-

(अभिनवचन्द्रिका)

रूपबोधकत्वात् अनित्यत्वप्रसङ्गभिया अरूपत्वश्रुत्यवष्टम्भेन प्राकृतरूपनिषेधे तच्छ्रुत्यप्रामाण्यमेव स्यादिति न वाच्यमित्यर्थः । कुतो न वाच्यमित्यत आह– **अप्रसिद्धप्रकाशेऽपीति ॥** न रूपादिशब्दानां प्राकृतादिरूपेषु शक्तिग्रह कल्प्यः । किन्तु प्राकृतत्वादिपरित्यागेन रूप एव । अन्यथा प्रकाशादिशब्दानामपि तथात्वापत्त्या अप्रसिद्धप्रकाशे भगवति 'आत्मैवाऽस्य ज्योतिर्भवति' इत्यादि व्यवहारविलोपप्रसङ्ग इति भावः । एतेन रूपशब्दस्य प्राकृतादावेव व्युत्पन्नत्वशङ्काया निरासाय अप्राकृतरूपेऽपि रूपशब्दस्य व्युत्पत्तेः व्युत्पादनीयत्वेन तद्विहाय अप्रसिद्धप्रकाशे परमात्मनि प्रकाशशब्दप्रवृत्तिप्रदर्शनमयुक्तमसङ्गतत्वादिति निरस्तम् । रूपादिशब्दानां रूपमात्रे व्युपत्त्यनङ्गीकारेऽनिष्टप्रदर्शनार्थत्वात् ॥ **कथं ब्रह्मण इति** ॥ येनाऽङ्गीकृतेन ब्रह्मणोऽनित्य त्वाभावः 'रुग्म(क्म)वर्णम्' इति श्रुतेश्चाऽप्रामाण्याभावः । तद्विलक्षणं रूपं ब्रह्मणः कथं, न कथमपि । विलक्षणरूपस्य काप्यनुक्तत्वेन सर्वरूपाणां प्रकृत्याद्यात्मकत्वनियमादिति भावः । ननु 'विज्ञानाऽऽनन्द मात्रत्वम्' इति भाष्ये कथं पूर्वाऽप्रकृतविज्ञानानान्दपरतया सौत्रतच्छब्दो व्याख्यात इत्यत आह– **तद्गुणसारत्वादिति ॥ न त्वानन्दादेर्ब्रह्म रूपत्वमिति ॥** विस्पष्टमिति शेषः । एतेन एतत्सूत्रविषयवाक्यस्य पूर्वसूत्र एवोदाहर्तुं शक्यत्वात् एतत्सूत्रं व्यर्थमिति परास्तम् । सामान्येनोक्त्वा, विशेषाकारेणोक्तेः विशिष्यानुग्रहार्थत्वात् ।

पूर्वपक्षस्तु नाङ्गीकर्तव्या निरतिशया भगवति भक्तिः । तथा हि किं भगवतो रूपमङ्गीक्रियते उताऽरूपित्वम् । न तावदाद्यः कल्पोऽङ्गीकर्तुमुचितः । अनित्यत्वप्रसङ्गात् । 'तदरूपमनामयम्' इत्यादिश्रुत्यप्रामाण्यप्रसङ्गाच्च । ततश्च भक्तिविलोपः । न ह्यनित्यशरीरे निरतिशया भक्तिरुपपद्यते । नापि अरूपित्वश्रुत्यप्रामाण्ये भक्तिरुपपद्यते । अरूपत्वश्रुत्यप्रामाण्येऽ विशेषात् श्रुतिमात्राऽप्रामाण्यापत्त्या भक्तिप्रयोजकगुणासिद्धेः । नापि द्वितीयः 'रुग्मवर्णम्' इत्यादिश्रुत्यप्रामाण्याऽऽपातात् । सौन्दर्याद्यभावापाताच्च । ततश्च न भक्तिः । तदेवमुभयथापि भक्तेरनुपपन्नत्वाव्यर्थोऽयं पाद इति ।

सिद्धान्तस्तु उपपन्नैव भगवद्भक्तिः । तस्यारूपित्वेन अनित्यत्वाभावात् । अरूपित्वश्रुत्यप्रामाण्यलक्षणदोषराहित्यात् । न च अरूपित्वमसिद्धम् । प्रकृत्युत्तमत्वेन प्राकृतरूपवैधुर्यसिद्धेः । न च 'रुग्मवर्णम्' इत्यादिश्रुतिवैयर्थ्यम् । **सौन्दर्याभावश्च** अप्राकृतरूपाङ्गीकारात् । न च तत्र प्रमाणाभावः । 'ऐकात्म्यप्रत्ययसारम् आनन्दमात्रम्' इति श्रुतिसिद्धत्वात् । न च

(अभिनवचन्द्रिका)

विस्पष्टप्रमाणाभावः 'आनन्दरूपममृतम्' इति श्रुतेः, 'शुद्धस्फटिकसंकाशम्' इति स्मृतेश्च सत्त्वात् । तदेवं भक्तेरुपपन्नत्वात्सार्थकोऽयंपाद इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अप्राकृतरूपसमर्थनादिति ॥** अत्र रूपपदेन वर्णविशेषस्य भगवद्विग्रहस्य च ग्रहणम् । तदुक्तं तत्त्वप्रदीपे । रूपत्वाच्च विपर्ययो दर्शनादिति । रूपादिमतोऽनित्यत्वव्याप्तिरभिहिता । परब्रह्मणश्च रूपवत्वमुक्तं रूपोपन्यासाच्च पुरुषविधमपीत्यादिना । तस्माद्ब्रह्मणोऽपि रूपवत्वादनित्यत्वमनित्यस्य को महिमाविशेष इत्यत आहेति । प्रकाशवच्चावैय्यर्थ्यमिति सूत्रभाष्ये तत्प्रतीतेश्च । ननु रूपमस्य शिरःपाणिपादाद्यात्मकमित्यत्र सुधायां रूपशब्देन शुक्लादिगुणप्रतीतिः स्यादतः शिरःपाणीति विवरणं कृतमित्युक्तत्वात् कथमत्र रूपपदेन गुणग्रहणमिति चेन्न । शुक्लादिगुणप्रतीतिस्स्यादित्यस्य शुक्लादिगुणमात्रप्रतीतिः स्यादित्यर्थत्वेनाविरोधात् । ननु रूपोपन्यासाच्च पुरुषविधमपीति रूप-विग्रहयोः अन्यभावव्यावृत्तेश्च विकरणत्वाच्च नेति चेत्तदुक्तमिति तयोरप्राकृतत्वस्यैव समर्थितत्वात् गतार्थमिदमिति चेन्मोक्तं विस्मार्षीः । पादादौ टीकायामेव क्वचित्तदेव विविच्योच्यते क्वचित्समर्थ्यते इत्युक्तत्वात् । अन्यभावव्यावृत्तेरित्यत्रान्यवस्तुस्वभावस्थौल्यादिव्यावृत्तिमात्राभिधानेऽपि तस्या-प्राकृतरूपवत्वस्य स्पष्टमुक्तत्वादसमर्थितत्वाच्चेह तदुभयकरणात् । ननु स्थानतोऽपीतीशरूपाणामभेदे साधिते तद्दृष्टान्तेन चेतनत्वादिहेतुना जीवस्येशाभेदः किन्न स्यादिति पूर्वपक्षोत्थानात् । अत एव चोपमेत्यधिकरणस्यैव तदानन्तर्यं युक्तं, कथमस्याधिकरणस्य न स्थानाधिकरणानन्तर्यमिति चेन्न । उत्तराधिकरणसाध्ये ईश्वरस्य जीवभेदेऽप्राकृतरूपवत्वरूपविरुद्धधर्मस्य हेतुत्वादुपोद्घातसङ्गत्या-स्याधिकरणस्य पूर्वनिवेशोपपत्तेः । उक्तं चैतत्सुधायां । अरूपत्वाधिकरणार्थस्यात एवेति सूत्रार्थहेतुत्वेनोपोद्घातलक्षणसङ्गत्या वर्णितस्याप्यस्याव्यवधायकत्वादिति ।

**युक्ता न वेति ॥** अत्र भक्तिर्विष्णावयुक्तोत युक्तेति चिन्ता । तदर्थं रूपवत्वारूपवत्वे न सम्भवत उत सम्भवत इति । रूपवत्वादनित्यत्वमिति भाष्ये प्रथमसूत्रनिरसनीयपूर्वपक्षोक्तावपि तदुपलक्षणं मत्वा द्वितीयादिसूत्रनिरसनीयपूर्वपक्षं विरुद्धमित्युक्तन्यायप्रदर्शनपूर्वकमाह **॥ तथा हीत्यादिना ॥ वैय्यर्थ्यापातादिति ॥** अप्रामाण्यापातादित्यर्थः । सूत्रे तदिति तन्त्रम् । व्यस्तं समस्तं च पदम् । तत् प्रस्तुतं ब्रह्म अरूपवदेव प्राकृतादिरूपरहितमेव । कुतः तत्प्रधानत्वात् ।

(वाक्यार्थमुक्तावली)

**तस्य** ब्रह्मणः **तेभ्यः** प्रकृत्यादिभ्यः प्रधानत्वादिति सूत्रार्थमभिप्रेत्याह ॥ **कर्तव्यैवेति** ॥ ननु तत्प्रधानत्वादिति तच्छब्देन कथं प्रकृत्यादिपरामर्शः । अप्रस्तुतत्वादित्यतः अरूपवदिति रूपस्य प्रकृतत्वात्तस्य प्राकृतभौतिकान्यतरत्वनैय्यत्यात् प्रकृत्यादिकमपि प्रकृतमेवेति भावेनाह ॥ **रूपं हि भवदिति** ॥ स्वेच्छादिनिमित्तत्वेनेति । स्वेच्छया लीलया चेत्यर्थः ॥ **सूचिताया इति** ॥ तत्र सामान्येन रूपमात्रनिषेधादिति भावः । एतेन परस्योभयलिङ्गमिति सूत्रे परमात्मन इत्यादि-भाष्यानुसारेण पुंल्लिङ्गेन प्रकृतत्वादरूपवदिति क्लीबोक्तिरयुक्तेति निरस्तम् । हिशब्दसूचितश्रुत्यनु-सारेण तदुपपत्तेः । अरूपमिति वाच्येऽरूपवदिति मतुप् रूपवत्वनिषेधेन रूपभेदनिषेधार्थं सूत्रार्थे स्मृतित्वात्प्रधानत्वादित्यनेन समर्थनाय व्याचष्टे ॥ **परःप्रवर्तकत्वेनोत्तम इति** ॥ **तदाव्यक्तिक-मिति** ॥ अव्यक्ततः परे तत्त्वे इत्यन्वयं क्रमेणाव्यक्तस्य प्रकृतत्वेन तदात्मकरूपस्यापि प्रकृतत्वा-त्तच्छब्देन तत्परामर्श इति भावः ॥ **कैमुत्यं वेति** ॥ यदा भूतेभ्यः परत्वेनैव भौतिकरूपराहित्यं किमु वक्तव्यं तदा भूतकारणाव्यक्तप्रकृतेः **परे** तत्प्रर्तकत्वेन तदुत्तमे । अत एव तत्कृतबन्धशून्ये तद्भौतिकं रूपं नास्तीति कैमुत्यं वेत्यर्थः ।

## तत्त्वसुबोधिनी

**अप्राकृतरूपसमर्थनादिति** ॥ अरूपशब्देन शरीरमुच्यते । एवं च पूर्वाधिकरणे विश्वादि-रूपाणां येन मत्स्यरूपेण अभेद उक्तः अत्र तद्रूपे प्राकृताप्राकृतत्वविचारादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ अप्राकृतरूपसमर्थनाभावे । कुतो नेत्यतः हरेः रूपवत्वं अरूपवत्वं वाङ्गीक्रियते । नोभयमपीत्याह ॥ **तथा हीत्यादिना** ॥ अस्त्वनित्यत्वं ततः किमित्यत आह ॥ **अनित्यशरीर इति** ॥ अन्यथास्मदादावपि सा स्यादिति भावः । किञ्चारूपत्वश्रुतिव्याकोपश्च स्यादित्याह ॥ **अरूपमिति** ॥ न केवलं श्रुतिवैय्यर्थ्यम् । किन्तु लोके सुन्दरे एव भक्तेर्दृष्टत्वेन भगवतोऽरूपवत्त्वे न सौन्दर्याभावात्तत्र भक्त्युदयः स्यादित्याह ॥ **सौन्दर्येति** ॥ अस्तु प्रकृत्यादिप्रवर्तकत्वं तथापि प्राकृतरूपं किं न स्यादित्यत आह ॥ **न हीति** ॥ प्राकृतरूपवत्वे हि तद्बन्धः स्यादिति भावः । भाष्ये उत्तमत्वादित्येतत् किमर्थमुक्तमित्यत आह ॥ **प्रधानत्वादिति** ॥ प्रकृत्यादिप्रवर्तकत्वेनेत्येतत् किमर्थमुक्तमित्यत आह ॥ **उत्तमत्वे इति** ॥ भूतेभ्यो भिन्नस्यापि भौतिकशरीरसत्त्वात् सूत्र-समानार्थत्वाभावापत्त्या प्रकृतानुपयोगाच्च परशब्दस्य भिन्नार्थत्वसम्भवेनापेक्षितांशपूरणेन यथाव-

(तत्त्वसुबोधिनी)

द्व्याचष्टे ॥ **पर इति** ॥ **तदाव्यक्तिकं रूपमिति** ॥ अव्यक्ततः परे न क्व इत्यन्वयक्रमेणाव्यक्तस्य प्रकृतत्वेन तदात्मकस्य रूपस्यापि प्रकृतत्वात् तच्छब्देन परामर्श इति भावः ॥ **कैमुत्यं वेति** ॥ अस्मिन् पक्षे तच्छब्देन पूर्वप्राप्तभौतिकत्वरूपपरामर्शः । तथा च पराभूतेभ्यः परत्वेनैव भौतिक-रूपराहित्यं किमु वक्तव्यम् । तदा भूतकारणाव्यक्ततः परे तद्भौतिकं रूपं नास्तीति कैमुत्यमित्यर्थः ।

## वाक्यार्थविवरणम्

**साधनतयोक्तेष्विति** ॥ तमेवमित्यादौ ज्ञानस्य 'अपाम सोमम्' इत्यादौ कर्मणो मोक्ष-साधनत्वमुच्यते । तत्र ज्ञानस्यैव तद्युक्तं न कर्मण इति दर्शनेनात्रापि मोक्षसाधनतयोक्तभक्तौ युक्तायुक्तत्वसंशय इत्यर्थः ॥ **अनित्यशरीरे** ॥ अनित्यशरीरवति । दूषणान्तरं चाह ॥ **सौन्दर्येति** ॥ सौन्दर्यादिर्विग्रहवत्येव भावेन तदभावे तदभावादित्यर्थः ॥ **स्वाधीनमिति** कर्ता । **स्वात्मनमिति** कर्म ॥ **स्वेच्छेति** ॥ तथा च तत्परित्यागेनानित्यत्वं प्राप्तमेवेति भावः ॥ **हिशब्दादितीति** ॥ अस्थूलमित्यादिना भगवतः स्थूलाण्वादिविग्रहसामान्यनिषेधात् स्वेच्छागृहीतरूपसत्त्वे तदयोगात् । न हि यत्किञ्चिद्विशेषसत्त्वे सामान्याभावो युक्त इति भावः । प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्व-रूपार्थलाभाय व्याचष्टे ॥ **पर इति** ॥ **कैमुत्यं चेति** ॥ तथा च भूतपराव्यक्ततः परे तत् भौतिकं रूपं केत्यर्थः ।

## वाक्यार्थमञ्जरी

**रूपेति** ॥ शरीरेत्यर्थः ॥ **एवमग्रेऽपि** ॥ रूपमस्य शिरःपाणिपादाद्यात्मकमिष्यते इत्यनु-व्याख्यानोक्तेः । रूपपदेन शुक्लादिगुणप्रतीतिः स्यात् अतः शिरःपाणीति विवरणं कृतमिति सुधोक्तेश्च । अरूपमव्ययं तदरूपमनामय इति भिन्नं वाक्यम् । एवं रुक्मवर्णं कर्तारमादित्य-वर्णमित्यपि ॥ **वैयर्थ्यमिति** ॥ अप्रामाण्येत्यर्थः ॥ **ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ** ॥ तदिति तन्त्रं व्यस्तं समस्तं च । तथा तद्ब्रह्म अरूपवत् प्राकृतादिदेहवन्नैव । कुतः ? तत्प्रधानत्वात् तस्य ब्रह्मणः तेभ्यः प्रकृत्यादिभ्य उत्तमत्वादित्यर्थः ॥ **कैमुत्यं वेति** ॥ अस्मिन्पक्षे तच्छब्देन पूर्वप्राप्तभौतिकरूपपरामर्शः । तथा च यदा भूतेभ्यः परत्वेनैव भौतिकरूपराहित्यं तदा भूतकरणाव्यक्ततः परे तद्भौतिकं रूपं नास्तीति किं वक्तव्यमिति कैमुत्यमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ १५ ॥**

'यदा पश्यः पश्यते रुक्मवर्णम्' (मुं. उ. ३-१-३)। 'श्यामाच्छबलं प्रपद्ये' (छां.उ. ८-१३-१)।

'सुवर्णज्योति' (तै. उ. ३-१०) रित्यादिश्रुतीनां च न वैयर्थ्यम्। विलक्षणरूपवत्वात्। यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः।

## तत्त्वप्रदीपिका

श्यामरूपाच्छवलरूपं प्रपद्ये। 'श्यामो हृदि स्थितो विष्णुः शबलो विश्वरूपवान्' इति मानसे। रूपवत्त्वश्रुतीनां च न वैयर्थ्यम्। प्राकृतविलक्षणरूपवत्त्वात् ब्रह्मणः। यथा चक्षुर्मनआदिप्रकाशे ज्ञानान्तराङ्गभूते विद्यमानेऽपि सूर्यादिप्रकाशाभावे वैलक्षण्यादेवाप्रकाशादिव्यवहारः, तथा विलक्षण-रूपवत्त्वादरूपवत्त्वश्रुतीनां रूपवत्त्वश्रुतीनां च न वैयर्थ्यम्। अतश्चशब्दः। 'अस्थूलमनणु' इत्यादावप्यन्यवस्तुस्वभावव्यावृत्तिर्ह्युदिता न तु नीरूपता। अन्यथाऽम्बरान्तधृतिप्रशास्त्ययोगात्।

'प्रसिद्धस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः।
अस्थूलादिरिति प्रोक्तो नैव स्थौल्याद्यभावत' इति महामीमांसायाम्॥

## तत्त्वप्रकाशिका

ब्रह्मणो रूपाभावे रूपित्वश्रुतिवैयर्थ्यं सौन्दर्याद्यभावश्चेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ प्रकाशवच्चेति ॥** नारूपित्वेऽपि ब्रह्मणो रुक्मवर्णादिश्रुतिवैयर्थ्यं सौन्दर्याद्यभावश्च। रूपवत्त्वाद् ब्रह्मणः। न च तर्हि तस्याऽनित्यत्वमरूपश्रुतिवैयर्थ्यं चेति वाच्यम्। तद्रूपस्याऽनित्यत्व व्याप्त-प्राकृतभौतिकरूपविलक्षणत्वेनानित्यत्वाद्यप्रसङ्गादिति भावः। ननु विलक्षणरूपत्वे कथमरूपित्व-श्रुत्यवैयर्थ्यमित्यत आह **॥ यथेति ॥** यथा गृहान्तर्नयनादिप्रकाशे विद्यमानेऽपि नास्ति प्रकाश इति व्यवहारो भवति। चक्षुरादिप्रकाशस्य लौकिकप्रकाशवैलक्षण्यात्। तथा रूपित्वेऽपि ब्रह्मणो विलक्षणरूपित्वादरूपित्वश्रुत्यवैयर्थ्यमिति भावः। न चैवं रूपशब्दस्य प्राकृतादावेव व्युत्पन्नत्वेन रूपित्वश्रुतिवैयर्थ्यम्। अप्रसिद्धप्रकाशेऽपि परमात्मन्यात्मैवास्य ज्योतिरिति प्रकाशशब्दप्रवृत्तेः।

## गुर्वर्थदीपिका

गृहान्तरित्यतः परमन्धकारदशायामित्युपस्कर्तव्यम् ।

## भावबोधः

**तद्रूपस्येति** ॥ अनेनाप्राकृतरूपवत्त्वमिति व्यवस्थोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति । 'प्रकाशवच्चावैयर्थ्यम्' इति सूत्रस्यार्थान्तरपरम्–

'यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि ।
आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा ॥'

इत्यनुव्याख्यानं मनसि निधाय 'प्रकाशवच्चावैयर्थ्यम्' इति सूत्रस्यार्थान्तरं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकमाह– **न चैवं रूपशब्दस्येत्यादिना** ॥ तथा लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्तिर्युक्तेति भावः ।

## भावदीपः

**इत्याशङ्कामिति** ॥ यद्यपि सूत्रे प्रकाशवदवैयर्थ्यमित्यरूपित्वश्रुतिगतिरेव प्रतीयते । अथाऽपि चशब्देन रूपित्वश्रुतीनां चाऽवैयर्थ्यमित्यस्याभिमतत्वादेवमुक्तम् । एवं च तदर्थं रूपित्वे चारूपित्वश्रुतिवैयर्थ्यमनित्यत्वं चेत्याशङ्कामिति शेषो ध्येयः । वैयर्थ्यमित्येतदुपलक्षणं मत्वा भाष्यमापादकपूर्त्या व्याचष्टे ॥ **नारूपित्वेऽपीति** ॥ आदिपदेन श्यामाद्धृदि स्थिताच्छबलं विश्वरूपवन्तं प्रपद्ये इत्यर्थकभाष्योक्तश्रुत्यादिग्रहः । 'श्यामो हृदि स्थितो विष्णुः शबलो विश्वरूपवान् । जीववर्णो जीवगतो लोहितश्चक्षुषि स्थित' इत्यष्टमछान्दोग्यभाष्योक्तेः । विलक्षणरूपत्वादित्युक्तविलक्षणपदस्याऽप्राकृतरूपवत्त्वमित्यन्यत्रोक्तिं भौतिकानीति स्मृत्युक्तिं चानुरुध्याऽर्थं वदन् कृत्यं व्यनक्ति ॥ **न च तर्हीति** ॥ चशब्देन केवलमरूपित्वश्रुतीनामवैयर्थ्यमिति समुच्चीयत इति सूचितत्वाद्विलक्षणपदोक्त्या कथमवैयर्थ्यमित्यतो यथेत्यादिभाष्यं शङ्कापूर्वं व्यनक्ति ॥ **नन्वित्यादिना** ॥ इत्यादिश्रुतीनां च न वैयर्थ्यमिति भाष्यमरूपित्वे बाधकनिरासपरतया व्याख्याय विलक्षणरूपत्वेऽपि निरर्थकत्वरूपबाधकनिरासपरतयाऽपि व्याचष्टे ॥ **न चैवमिति** ॥ कथमित्यतः प्रकाशवदिति सूत्रांशः प्रवृत्तः । तस्य यथेति भाष्योक्तार्थ इव यथा हि तैजसस्यैव

(भावदीपः)

प्रकाशस्योज्झितावपि । आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा' इत्यनुभाष्योक्तार्थान्तरमप्यनुसन्धेयमिति भावेनाऽऽह ॥ **अप्रसिद्धेति** ॥ आत्मैवास्य ज्योतिरिति बृहदारण्यकवाक्ये अस्य सुप्तजीवस्याऽऽत्मा परमात्मा ज्योतिर्ज्ञानसाधनमित्यर्थस्य ज्योतिर्दर्शनादित्यत्र प्रथमाध्याय एव निर्णीतत्वादिति भावः । अत्र किञ्चिल्लौकिकरूपसदृशत्वादिति युक्तिस्तु परमतः सेतून्मानेत्यत्रोत्तराधिकरणे 'विद्वद्व्युत्पत्तितोऽपि च । तैस्तैःपदैश्च भण्यन्ते युज्यते चोपदेशतः' । अन्यानन्दादिसादृश्यादानुकूल्यादिना परमित्यनुभाष्योक्तदिशा अत्र टीकायां बुध्यर्थः पादवदिति गुणसूत्रे वक्ष्यमाणदिशा च सुज्ञानेति तामनुक्त्वा दृष्टान्तव्यक्त्यैवोपपादनं कृतम् ।

## वाक्यार्थमुक्तावली

सूत्रेऽरूपवदिति वर्तते । चशब्दोऽप्यर्थे । तत् अरूपवदपीति सम्बन्धः । रुग्मवर्णादिश्रुतीनामिति शेषः । सौन्दर्याद्यभावसमुच्चये चशब्दः । हेत्वर्थे च ॥ **प्रकाशवदिति** ॥ रूपवदित्यर्थः । सुवर्णज्योतिरित्यादौ प्रकाशशब्दपर्यायस्य ज्योतिःपदस्य रूपपरभाष्ये च इत्यादिश्रुतीनां च न वैय्यर्थ्यम् । इतरत्र इत्यादिरूपप्रतिपादकश्रुतीनां न वैय्यर्थ्यम् । सौन्दर्याद्यभावश्चेति चशब्दसम्बन्ध इति भावेन विलक्षणेत्यंशं विहाय योजयति । नारूपित्वेऽपीत्यादिना । तथा च तदरूपवदपि तस्य ब्रह्मणो रूपित्वेऽपि न रुग्मवर्णादिश्रुतीनां वैय्यर्थ्यम् । सौन्दर्याद्यभावश्च यतस्तत्प्रकाशवद्रूपवदिति सूत्रार्थः । सौत्रचशब्दस्य तदरूपमनामयमित्यरूपश्रुतीनां च न वैय्यर्थ्यमित्यध्याहृतेनान्वयः । अनित्यत्वप्रसङ्गश्च नेति समुच्चयपरत्वम् । सूत्रे रूपवदिति प्रसिद्धपदे प्रयोक्तव्ये प्रकाशवदित्यप्रसिद्धपदप्रयोगेण रूपस्य वैलक्षण्यं ध्वन्यते । तथा च तदरूपमित्यादिश्रुतीनां च वैय्यर्थ्यं नानित्यत्वप्रसङ्गश्च रूपस्य विलक्षणत्वादिति सूत्रस्य वृत्त्यन्तरमभिप्रेत्य इत्यादिश्रुतीनां च न वैय्यर्थ्यं विलक्षणरूपत्वादिति भाष्यं प्रवृत्तम् । तत्र इत्यादिश्रुतीनां चेत्यादिपदेन तदरूपमित्याद्यरूपत्वश्रुतीनां च न वैय्यर्थ्यमनित्यत्वप्रसङ्गो वा रूपस्य विलक्षणत्वादित्यर्थं मत्वा व्यवस्थेत्युक्तन्यायं व्यञ्जयन् व्याचष्टे । **न च तर्हीत्यादिना** । एवं प्रकाशवदिति विलक्षणरूपोपेतमिति मतुबन्ततया व्याख्याय वत्यन्ततयापि व्याकुर्वद्भाष्यमवतार्य व्याचष्टे ॥ **नन्वित्यादिना** ॥ यद्वा विलक्षणरूपत्वादिति न साक्षात्सूत्रारूढं, किन्तु प्रकाशवदिति दृष्टान्तबलाल्लब्धहेतुकथनपरमिति ज्ञेयम् । नयनादीत्यादिपदेन मनआदीन्द्रियान्तरं गृह्यते । तद्रश्मीनामपि

गृहाद्यन्तर्व्याप्तत्वात् । तथा चार्थद्वयसङ्ग्रहणं सूत्रार्थपरं तत्त्वप्रदीपवाक्यम् । यथा चक्षुर्मन-आदिप्रकाशे विद्यमानेऽपि सूर्यादिप्रकाशाभावेन वैलक्षण्यादप्रकाशव्यवहारः तथा विलक्षण-रूपत्वादरूपत्वश्रुतीनां रूपवत्वश्रुतीनां च न वैय्यर्थ्यमतश्चशब्द इति । 'यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि । आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा' इत्यनुव्याख्यानं मनसि निधाय प्रकाशवच्चेति सूत्रस्यार्थान्तरं व्यावर्त्यकथनपूर्वमाह ॥ **न चैवं रूपशब्दस्येत्यादिना** ॥

## तत्त्वसुबोधिनी

अनित्यत्वेन व्याप्तं यद्भौतिकं प्राकृतरूपं तद्विलक्षणत्वेनेत्यर्थः । कुत इत्यत आह ॥ **चक्षुरादीति** ॥ प्रकाशवच्चावैय्यर्थ्यमिति सूत्रस्यार्थान्तरं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकमाह ॥ **न चैवमिति** ॥ **अप्रसिद्धोऽपीति** ॥ तथा च लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्तिर्युक्तेति भावः ।

## वाक्यार्थविवरणम्

**अनित्यत्वव्याप्तेति** ॥ 'भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मत' इत्याद्युक्तेरिति भावः ॥ **इत्यत आहेति** ॥ इत्याशङ्कापरिहारायात्र दृष्टान्तमाहेत्यर्थः ॥ **लौकिकप्रकाशः** आलोकाख्यः ॥ **एवम्** ॥ प्राकृतभौतिकविग्रहानङ्गीकारे ॥ **वैय्यर्थ्यमिति** ॥ विषयाभावादप्रामाण्यमित्यर्थः । **अप्रसिद्धप्रकाशे** अप्रसिद्धप्रकाशरूपे ॥ **प्रकाशशब्देति** ॥ प्रकाशशब्दपर्यायज्योतिश्शब्देत्यर्थः ।

## वाक्यार्थमञ्जरी

ब्रह्मणो रूपित्वाद्रुक्मवर्णमित्यादिश्रुतीनामवैय्यर्थ्यम् अप्रामाण्यं नास्ति । तर्ह्यरूपित्व-श्रुतिविरोध इत्यत उक्तम् ॥ **प्रकाशवदिति** ॥ यथांधकारे चक्षुरादिप्रकाशसत्वेऽपि तस्य सौरादि-प्रकाशविलक्षणत्वान्नास्ति प्रकाश इति व्यवहारस्तथा भगवद्रूपस्य प्राकृतादिरूपविलक्षणत्वाद-रूपित्वोक्तिरित्यर्थः । शङ्कान्तरवारकत्वेनापि सूत्रं योजयति ॥ **न चैवमिति** ॥ भगवद्रूपस्या-प्राकृतत्वेत्यर्थः ॥ **वैयर्थ्यमिति** ॥ रूपशब्दस्याप्राकृतरूपे व्युत्पत्त्यभावेन तच्छ्रोतुरर्थाप्रतीतिरिति भावः ॥ **प्रकाशशब्दप्रवृत्तेरिति** ॥ तद्वदेव लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्तिर्युक्ता सुवर्णघटे घटशब्दस्येव किञ्चित्सादृश्यमात्रेण व्युत्पत्त्युपपत्तेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ आह च तन्मात्रम् ॐ ॥ १६ ॥**

वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वम् 'ऐकात्म्यप्रत्ययसारम्' (मां.उ.२७) इति ।

'आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इति चतुर्वेदशिखायाम् ॥

## तत्त्वप्रदीपिका

आह च तन्मात्रम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' विज्ञानमानन्दं ब्रह्म' 'कं ब्रह्म खं ब्रह्म' 'विज्ञानमय' 'आनन्दमयः' 'आनन्दमयोऽभ्यासात्' 'सुखविशिष्टाभिधानादेव च' 'स्वात्मना चोत्तरयोः' इत्यादिना सुप्रस्तुतत्वाज्ज्ञानानन्दयोस्तन्मात्रमिति सूत्रितम् । ब्रह्ममात्रमिति सूत्रिते च ज्ञानानन्दमात्रमिति भवति । ब्रह्मणो ज्ञानानन्दात्मकत्वप्रसिद्धेः । 'ऐकात्म्यप्रत्ययसारम्' इति माण्डूकश्रुतिः ।

'एकः प्रधान उद्दिष्टः आत्मा पूर्णत्वतः श्रुतः ।
तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितम् ।
प्रत्ययो ज्ञानरूपत्वात्सार आनन्दरूपत' इति च ॥

## तत्त्वप्रकाशिका

कथं ब्रह्मणो विलक्षणरूपत्वं येनाऽनित्यत्वादिदोषाभावः । सर्वरूपाणां प्रकृत्याद्यात्मकत्वनियमादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आह चेति** ॥ न वैलक्षण्यानिरुक्तिर्ब्रह्मरूपस्य । ज्ञानानन्दाद्यात्मकत्ववैलक्षण्यस्यैकात्मेत्यादिश्रुतिसिद्धत्वादिति भावः । प्रधानात्मभाव एव स्वरूपं यस्य तदैकात्म्यम् । प्रत्ययसारं ज्ञानरूपम् । तद्गुणसारत्वादिति प्रकृतौ ज्ञानानन्दौ तद्ग्रहणेन गृह्येते ।

## गुर्वर्थदीपिका

आनन्दमात्रमिति श्रुतौ मात्रपदेन ब्रह्मण्यनानन्दव्यवच्छेदात्तत्रैव रुग्मवर्णश्रुत्युक्तं रूपमप्यानन्दात्मकमेवेति सिद्ध्यति । प्रत्ययसारमित्यत्रापि वक्ष्यमाणश्रुतिसमाख्यया ब्रह्मणि ज्ञातृत्वं

(गुर्वर्थदीपिका)

सिद्धम्। तन्निष्ठं रूपमपि ज्ञानात्मकमेवेति सिध्यतीति भावेनाऽऽह भाष्यकारः रूपस्य विज्ञानानन्दमात्रत्वमिति ।

## भावबोधः

ऐकात्म्यमेकात्मभावः । चेतनैक्यमिति यावत् । प्रत्ययो ज्ञानं च सारः स्वरूपमस्येत्यन्यथा-प्रतिपत्तिनिरासार्थम् .'ऐकात्म्यप्रत्ययसारम्' इत्येतद्व्याचष्टे– **प्रधानात्मेति** । अनेनैकात्म्यं प्रत्ययश्चेत्युभयं सारं स्वरूपं यस्येति विग्रहो दर्शितः । ननु विज्ञानानन्दमात्रत्वमिति भाष्ये कथं पूर्वाप्रकृतविज्ञानानन्दपरतया सौत्रस्तच्छब्दो व्याख्यात इत्यत आह– तद्गुणसारत्वादितीति ।

## भावदीपः

सूत्रभाष्ययोरुपात्तचशब्दस्य शङ्कानिवर्तकत्वमर्थ इत्युपेत्याह ॥ **न वैलक्षण्येति** ॥ तत्र हेतुत्वेन सूत्रभाष्ये व्याचष्टे ॥ **ज्ञानेति** ॥ श्रुतेरैक्योक्तिपरत्वभ्रान्तिनिरासाय एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः । तदेवाऽस्य स्वरूपं यदैकात्म्यं तेन कीर्तितम् । प्रत्ययो ज्ञानरूपत्वात्सार आनन्दरूपत इति माण्डूकभाष्यदिशाऽर्थमाह ॥ **प्रधानेति** ॥ सार आनन्दरूपत इत्युक्तवपि इहानन्दमात्रमिति श्रुत्युक्त्यवैयर्थ्याय ज्ञानरूपमित्येवोक्तम् । अप्रकृतत्वभ्रमं निराह ॥ **तद्गुणेति** ॥ वियत्पादे पृथगुपदेशादित्यधिकरणगुणसूत्रे गुणपदेन प्रकृतावित्यर्थः ।

## वाक्यार्थमुक्तावली

**कथमिति** ॥ केन प्रकारेण केन वा प्रमाणेनेत्यर्थः । सूत्रे प्रकृतं रूपं कर्मतयान्वेति । चशब्दस्तु रूपं तन्मात्रं ज्ञानानन्दमात्रमाह चाहैव वैलक्षण्यानुक्तेरित्यवधारणार्थः । वैलक्षण्यं चोच्यत इत्यत्रापि वैलक्षण्यमुच्यत एवेत्यवधारणार्थः । यद्वा न केवलं विलक्षणरूपवत्वात् श्रुत्यवैय्यर्थ्यम् । हेतुभूतं तन्मात्रत्वरूपं वैलक्षण्यं चाहेति समुच्चये वेति भावः । ऐकात्म्येत्यत्र एकश्चासावात्मा चैकात्मा, भावप्रधानश्चात्मशब्दः । ततश्चैकात्मभाव एव स्वरूपं यस्य तदैकात्म्य-मिति पर्यवस्यतीत्याह ॥ **प्रधानेति** ॥ तदुक्तम् । 'एकः प्रधान उद्दिष्टः आत्मा पूर्णत्वतः श्रुतः । तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तित'मिति ।

## तत्त्वसुबोधिनी

**ऐकात्म्यं** एकात्मभावः । चैतन्यैक्यमिति भावः । प्रत्ययो ज्ञानं सारः स्वरूपमस्येत्यन्यथा-प्रतीतिनिरासार्थमैकात्म्यप्रत्ययसारमित्येतद्व्याचष्टे । प्रधानात्मेति । अनेन ऐकात्म्यं प्रत्ययश्चेत्युभयं सारः स्वरूपमस्येति विग्रहः । ननु विज्ञानानन्दमात्रत्वमिति भाष्ये कथं पूर्वाप्रकृतविज्ञानानन्द-परतया सौत्रस्तच्छब्दो व्याख्यात इत्यत आह ॥ **तद्गुणसारत्वादिति** ॥

## वाक्यार्थविवरणम्

**ज्ञानानन्दाद्यात्मकत्वेति** ॥ अनेन भाष्ये रूपस्य विज्ञानानन्दमात्रतदाख्यं वैलक्षण्यम् ऐकात्म्यप्रत्ययसारमिति श्रुत्योच्यत इत्यन्वयो द्रष्टव्यः ॥ **प्रधानात्मभावः** ॥ सर्वोत्तमस्वामिभावः । ब्रह्मण एवेत्यन्वयः ।

## वाक्यार्थमञ्जरी

कात्र कथंतेत्यत आह ॥ **सर्वरूपाणामिति** ॥ **ॐ आह च तन्मात्रम् ॐ** ॥ भगवद्रूपं तन्मात्रं ज्ञानानन्दादिमात्रं चाह ऐकात्म्येत्यादिश्रुतिरिति भावः । अत्र विग्रहः एकः आत्मा यस्य तत् एकात्मं तस्य भावः ऐकात्म्यं चासौ प्रत्ययश्चासौ सारश्च ऐकात्म्यप्रत्ययसारः । **आत्मभावः** स्वामित्वम् । **तद्ग्रहणेन** सौत्रतच्छब्देन ।

## सूत्रभाष्यम्

**॥ ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ १७ ॥**

दर्शयति चानन्दरूपत्वं

'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' (मुं.उ.२-२-८) इति ।

'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।
चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः' इति च मात्स्ये ॥

## तत्त्वप्रदीपिका

ब्रह्मणो ज्ञानानन्दमात्रत्वमत्रोक्तं न तु तद्रूपस्येति चेन्न। रूपरूपिणोरभेदात्। अपि च दर्शयति चाथो अपि स्मर्यते। दर्शयति च ज्ञानानन्दस्य स्वरूपत्वम् 'आनन्दरूपम्' इत्यादि। अथो च दर्शयति–

'सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।<br>
सज्ज्ञानानन्ददेहस्तु सज्ज्ञानानन्दपादवान्' इति ॥

अथो च दर्शयति–

'ब्रह्मणस्तद्गुणानां च भेददर्श्यधरं तमः ।<br>
भेदाभेदप्रदर्शी च तम एवोत्तरं विशेत् ॥<br>
विजानीयात्ततो ब्रह्म सदा सर्वगुणात्मकम् ।<br>
गुणानां च विशेषोऽस्ति न विभेदः कथञ्चन ॥<br>
ते च सर्वे गुणाः पूर्णास्तच्छरीरः परः स्मृतः ।<br>
आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः ॥<br>
अदेहं भूतदेहं वा विदुस्ते चाधरं तमः ।<br>
तथा प्रकृतिदेहज्ञा कर्मदेहविदोऽपि वा ॥<br>
तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।<br>
चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम् ॥<br>
आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम् ।<br>
प्रत्येकं च गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।<br>
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्' इति पैङ्गिश्रुतिः ॥

## तत्त्वप्रकाशिका

नन्वेतत्श्रुत्योर्ज्ञानानन्दाद्यात्मकत्वमेव ब्रह्मणः श्रूयते न त्वानन्दादेर्ब्रह्मरूपत्वम्। अतो रूपित्वश्रुतेर्वैयर्थ्यं सौन्दर्याद्यभावश्चापरिहृत इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **दर्शयति चेति** ॥ न ज्ञानानन्दयोर्ब्रह्मरूपत्वाश्रवणं येन श्रुतिवैयर्थ्यादिदोषः। यतस्तद्विज्ञानेनेति श्रुतिरानन्दस्य ब्रह्मरूपत्वं च दर्शयति। अथ ज्ञानस्यापि ब्रह्मरूपत्वं शुद्धस्फटिकसंकाशमिति स्मर्यत इति भावः। अतो ज्ञानानन्दादिसुन्दरतरविग्रहे हरौ भक्तिर्युक्तेति युक्तं तन्महिमवर्णनमिति सिद्धम्।

## गुर्वर्थदीपिका

आनन्दरूपमिति श्रुतौ ज्ञानरूपादिति स्मृतौ च रूपपदेन स्वरूपमेवोच्यते । न तु शुक्लादिरूपमिति चेन्न, आनन्दात्मकं रूपं शुक्लकृष्णादिरूपं यस्येति विग्रहस्य परिपश्यन्तीत्युक्तचाक्षुषज्ञानत्वोपयोगित्वादानन्दात्मकं शुक्लादिरूपमेवोच्यते । 'तदेव हि द्रव्यं चाक्षुषं यन्महत्वे सत्युद्भूतरूपव'दिति वचनात् । न त्वानन्दात्मकं स्वरूपम् । तस्य मनोमात्रग्राह्यत्वघटकत्वेनोक्तक्रियायामनुपयोगात् । स्मृतौ च ज्ञानरूपादृते अन्यन्न चिन्तयीतेत्युक्तत्वात् । शुद्धस्फटिकसङ्काशमिति ध्येयतयोक्तं रूपमपि ज्ञानात्मकमेवेति गम्यत इति भावेनैतत् श्रुतिस्मृत्युदाहरणं भाष्यकारस्य । 'ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् । आनन्दमूर्तिमुपगुह्य जहुस्तदाधिम्' इत्यादि भागवते नीलरूपकृष्णतनोरेव स्पष्टं ज्ञानानन्दाद्यात्मकत्वकथनाच्च कथं न रूपस्यैव ज्ञानानन्दाद्यात्मकत्वम् ।

## भावबोधः

'दर्शयति च' 'स्मर्यते' इत्येतावता पूर्तौ 'अथो अपि' इति किमर्थमुक्तमित्यत आह– **अथ ज्ञानस्यापीति** ॥ तथा च 'अथो' इत्यस्य ज्ञानरूपार्थान्तरपरत्वमित्युक्तं भवति । सूत्रक्रमस्तु– अत्राधिकरणे प्रथमसूत्रेण ब्रह्मणो रूपराहित्यमुपपाद्य 'प्रकाशवच्चावैयर्थ्यम्' इति द्वितीयसूत्रेण रूपवत्वविषयाणां श्रुतीनां वैयर्थ्यमाशङ्क्य विलक्षणरूपवत्त्वाङ्गीकारेण परिहृतम् । विलक्षणरूपवत्त्वं च 'आह च तन्मात्रं' 'दर्शयति चाथोऽपि स्मर्यते' इति सूत्रद्वयेन समर्थितमिति सुधायामेवोक्तः । तृतीये विष्णुतच्छरीरयोरभेदाभिप्रायेण विष्णोर्ज्ञानानन्दमात्रत्वेऽभिहितायाः श्रुतेर्विष्णुस्वरूपमात्रविषयत्वेनान्यथासिद्धौ शङ्कितायाम्, चतुर्थे रूपस्यापि ज्ञानानन्दाद्यात्मकत्वे श्रुतिस्मृतिरूपविशेषप्रमाणोक्तिरिति तयोरपि क्रमो ज्ञातव्यः ।

## भावदीपः

**इत्याशङ्कामिति** ॥ यद्यपि रूपरूपिणोरभेदाद् ब्रह्मणो ज्ञानाद्यात्मकत्वोक्त्या रूपस्याऽपि तत्प्राप्तमेव । तथाऽपि अभेदे विवदमानस्योत्पन्नामित्याशङ्कां परिहरदिति व्याख्येयम् । अविवादिनं प्रति तु स्पष्टार्थं सूत्रम् । अत एव पूर्वसमुच्चायकचशब्दः । अथो इत्यादि सौत्रांशविवरणपरतया शुद्धेत्यादिभाष्यं व्याचष्टे ॥ **अथेति** ॥ सौत्रपदप्रतिपदमेतत् । तस्य व्याख्या **ज्ञानस्यापीति** ।

(भावदीपः)

ब्रह्मरूपत्वमिति शेषोक्तिः ॥ **अत इति** ॥ हरेः प्राकृतादिरूपराहित्यस्य श्रुतियुक्तिसिद्धत्वा द्विलक्षणरूपवत्त्वस्य श्रुत्यादिसिद्धत्वात् रूपित्वारूपित्वश्रुत्योर्भिन्नविषयत्वादिना वैयर्थ्याभावाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

**न त्वानन्दादेरिति** ॥ आनन्दादेर्ब्रह्मदेहत्वं न श्रूयते इत्यर्थः । सूत्रे तन्मात्रमित्यस्ति । श्रुतिर्ब्रह्मणस्तन्मात्रं आनन्दादिमात्ररूपं दर्शयति च । अथो इत्यर्थान्तरमुच्यते । अथोऽपि अन्यस्य ज्ञानस्याब्रह्मरूपत्वं स्मर्यत इति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **ज्ञानानन्दयोरिति** ॥ अत्र यद्यपि प्रतियोग्यभावयोः प्रतियोगिनः प्राबल्यादाद्यसूत्रे रूपवत्वं द्वितीये त्वरूपवत्वं वक्तव्यम् । तथापि रूपवान्न वेति विकल्पविशेषपरिहारक्रमेण प्रथमे रूपाभावः द्वितीये विलक्षणरूपवत्वात् श्रुतिद्वयावैय्यर्थ्यम्, तृतीये हेतोरसिद्धिपरिहाराय विष्णुतच्छरीरयोरभेदाभिप्रायेण विलक्षणरूपवत्वे प्रमाणोक्तिः । चतुर्थे स्पष्टं रूपस्यापि ज्ञानानन्दमात्रत्वे प्रमाणोक्तिरिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

दर्शयति स्मर्यत इत्येतावता पूर्तौ अथोऽपीति किमर्थमुक्तमित्यत आह । **(ग्रन्थपात इवाभाति)** ॥

## वाक्यार्थविवरणम्

**न त्विति** ॥ ब्रह्मरूपस्यानन्दाद्यात्मकत्वं न श्रूयत इति यावत् ॥ **ज्ञानानन्दयोरिति** ॥ ब्रह्मरूपस्य ज्ञानानन्दात्मकत्वाश्रवणमित्यर्थः ॥ **आनन्दस्य ब्रह्मरूपत्वम्** ॥ ब्रह्मरूपज्ञानात्मकत्वमित्यर्थः । भाष्ये धीराः आनन्दरूपम् आनन्दमयरूपवत् तत् ब्रह्म विज्ञानेन परिपश्यन्तीत्यर्थः ॥ **शुद्धेति** ॥ स्मृतौ ज्ञानमयरूपवतो हरे ऋते इत्यर्थः ।

## वाक्यार्थमञ्जरी

आनन्दरूपमिति श्रुतिः आनन्दस्य रूपं दर्शयति अथोऽपि ज्ञानस्यापि रूपत्वं शुद्धस्फटिकेति स्मृत्योच्यत इत्यर्थः ।

**॥ इति अरूपाधिकरणम् ॥ ९ ॥**

## १०. उपमाधिकरणम्

**॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ १८ ॥**

यस्मादेवं परमेश्वररूपाणां मिथो न कश्चिद्भेदोऽत एव सादृश्याज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ।

'रूपं रूपं प्रतिरूपो बभूव' (बृ.उ.४-५-१९)

'बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले ।
एवमेवाऽऽत्मका लोके परात्मसदृशा मता' इत्यादि ॥

अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा, नोपाध्यधीनत्वादिना ।

### तत्त्वप्रदीपिका

एवञ्च जीवानां परमेश्वरेण चिदानन्दलक्षणरूपत्वसादृश्याद्भेदः स्वगतश्च स्थानभेदेऽपि न स्यादित्याशङ्का स्यात् । तत्परिहाराय तस्य जीवस्य सूर्यकादिवत्प्रतिबिम्बत्वं वदन्ती भेदं दर्शयति श्रुतिः । अत एव सादृश्यादेव प्रतिबिम्बत्वमुक्त्वा भेदं दर्शयतीति तदुक्त्यैव भेदं दर्शयतीत्यर्थः । सूत्रगतेन चशब्देन भेदं दर्शयति श्रुतिरिति दर्शयति भगवान् बादरायण इत्येषोऽर्थश्चशब्देन भेदं दर्शयंतीति भाष्यस्य । प्रतिबिम्बत्ववचनेनैव भेदो दर्शितो भवति । प्रतिबिम्बस्य भिन्नत्वनियमात् । बिम्बान्मिथश्च भिन्नान्येव हि प्रतिबिम्बानि दृश्यन्ते । न च प्रतिबिम्बत्वं बिम्बेऽध्यस्तम् । येन चिन्मात्रे ब्रह्मणि जीवत्वाध्यासस्य दृष्टान्तः स्यात् । प्रतिबिम्बप्रतिभानसमय एव तद्व्यतिरेकेण बिम्बोपलम्भात् । नेदं प्रतिबिम्बमिति बिम्बे प्रत्ययाच्च । न हि रजताध्यासकाले शुक्तिरियं न रजतमिति प्रतीतिः । न च तयोस्तदा भेदेन युगपद्ग्रहणम् । तस्मान्न प्रतिबिम्बप्रतीतिर्भ्रान्तिः । अपरथा बिम्बापरोक्ष्ये निवर्तेत । बिम्ब एव नेदं प्रतिबिम्बमिति च प्रतीतिः स्यात् तत्काले । न च तयोर्भेदप्रतीतिरेव भ्रान्तिर्न स्वरूपप्रतीतिरिति वाच्यम् । ऐक्यप्रत्ययस्य बाधकस्य जात्वनुदयात् । न च दर्पणादिरधिष्ठानं स्फटिक इव लोहितिम्नि इति वाच्यम् । साध्यान्तर्भूतत्वात्तस्य । हन्तायमियन्तं कालं स्वच्छ एव स्फटिको दृष्टः पटुदर्शनस्यैव ममेदानीं जपाकुसुमसामीप्याल्लोहितो दृश्यत इति हि तत्र प्रतीतिः । बिम्बनिमित्तेन जन्यते चेत्, तन्नाशेऽपि न नश्येत् । निमित्तकारणनाशेऽपि कार्यस्थितेरिति चेन्न । स्पर्शज्ञानादौ व्यभिचारात् । अतो दर्पणाद्युपादानं मुखादिनिमित्तं प्रतिबिम्बमुत्पद्यत इत्यभ्युपगमे न कश्चिद्दोषः ।

(तत्त्वप्रदीपिका)

'रूपं रूपम्' इत्यादेरयमर्थः । अस्य परमेश्वरस्य रूपं रूपं प्रति प्रतिविम्बाख्यो जीवो बभूव । 'तदस्य' परमेश्वरस्य 'रूपं' 'अस्य' प्रतिबिम्बभूतस्य जीवस्य 'प्रतिचक्षणाय' । 'इन्द्रः' परमेश्वरः । इदि परमैश्वर्य इति धातोः । 'इन्दो ह वै नामैप योऽयं दक्षिणेऽक्षन् पुरुपस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते' इति श्रुतेश्च । प्रसिद्धो हि दक्षिणाक्षिस्थो विष्णुः श्रुतिषु । 'तमिन्द्रं सन्तमिन्द्र इत्याचक्षत' इति च परमात्मप्रकरण एव मायाभिस्सामर्थ्यैरिच्छाभिर्वा वहुरूप ईयते । अस्य ह्यवतारात्मका 'हरयो' 'युक्ता' इति । 'अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि' इति ह्युपरि ।

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः' इति नारायणश्रुतिः ॥

'पृथगुपदेशात्' 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' 'ततो ह्यस्य बन्धविपर्ययौ' इत्यादिपु प्रपञ्चितानि हि भिन्नत्वतदधीनत्वसादृश्यानि । अतोऽत एवेत्याह । नोपाध्यधीनत्वेन सूर्यकाद्युपमा । जीवः परस्यानुपाधिरिति पुर एव परिहृतत्वात्तस्य । आदिशब्दान्न च भेदाभावेन । भेदस्य प्रतिपादितत्वात् । न च स्थिरविनाशिनोः सूर्यसूर्यकयोरभेदसम्भव इति ।

## तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तिसाधनभक्त्यर्थं जीवाभेदनिरासादस्ति शास्त्रादिसङ्गतिः । जीवाभेदे स्वस्मिन्निव परमात्मन्यपि भक्त्ययोगात्स निराकार्यः । प्रकृता भक्तिरेव विपयः । परमात्मनि युक्ता न वेति सन्देहः । युक्तायुक्तसाधनोपदेशः सन्देहबीजम् । न युक्तेति पूर्वः पक्षः । जीवस्य परमात्माभिन्नत्वात् । न हि स्वस्मिन्नेव भक्तिरुपपद्यते । न चाभेदे विवदितव्यम् । जीवः परमात्मनो न भिद्यते चेतनत्वात्तदंशत्वान्मत्स्यादिवदित्यनुमानसिद्धत्वात् । मत्स्यादीनां परमात्मनश्च मिथो न भेद इति प्रागेव सिद्धम् । न च वाच्यं भेदस्य समर्थितत्वान्नाभेदो युक्त इति । सर्वचेतनसमुदायस्येशांशत्वेनैकैकजीवस्य परमात्मना भेदाभेदादभेदेऽपि भेदाविरोधात् । अतः परमात्मभक्तेरयुक्तत्वाद्व्यर्थं तन्महिमवर्णनमिति ।

सिद्धान्तयत्सूत्रमुपन्यस्य पूर्वपक्षं तावदनुवदति ॥ **अत एवेति** ॥ यस्मादेवं न स्थानतोऽपीत्युक्त प्रकारेणेश्वररूपाणामीश्वरस्य च मिथोऽभेदः सिद्धः । अतस्तत्सादृश्याच्चेतनत्वादेव जीवस्यापि

(तत्त्वप्रकाशिका)

परमात्माभेदः स्यादिति पूर्वः पक्ष इत्यर्थः । तत्परिहाराय सूर्यकादिवच्चेति पदं व्याचष्टे ॥ **तस्येति** ॥ एवं प्राप्ते सूत्रकारो जीवस्येशप्रतिविम्बत्वहेतुं सूर्यकादिवदित्यनेन दृष्टान्तकथनेनैवोक्त्वा चशब्देन साध्यं भेदं समुच्चिनोतीत्यर्थः । इदमुक्तं भवति । जीवो ब्रह्माभिन्नो न भवति तत्प्रतिविम्बत्वात् । यो यत्प्रतिविम्वः स तस्मात् भिन्नो यथा सूर्यकः सूर्यादिति । जीवस्येश्वरप्रतिबिम्वत्वमेव कुत इत्यत आह ॥ **रूपमिति** ॥ इत्यादि प्रतिविम्वत्वं दर्शयतीत्यनुपज्यते । अथ वा यस्मादेवमित्यादि सिद्धान्त एव । तथा हि । यस्मादुक्तरीत्या परमेश्वररूपांशानां ज्ञानैश्वर्यादौ न कश्चिद्विशेषः । अतो जीवस्याऽपि परमेश्वरस्वरूपांशत्वे मत्स्यादिसाम्यात्तद्वज्ज्ञानैश्वर्याद्यविशेषः स्यात् । न चैवम् । 'अतोंऽशत्वेऽपि जीवो ब्रह्मप्रतिबिम्व एवेति तस्य प्रतिबिम्वत्वमत एवोपमेति पदैरुक्त्वा तद्धेतुना सूर्यकादिदृष्टान्तेन भेदं चशब्देन समुच्चिनोतीति । अनेन प्राचीनानुमानस्याऽप्रतिबिम्वत्वोपाधिश्च सूचितो भवति । अभेदांश एव विवादात्तन्निरासः । भेदस्यापि सद्भावेन नैश्वर्यादीति चेन्न ब्रह्मस्वरूपानुगतेरावश्यकत्वात् । ऐश्वर्यादेश्च स्वरूपत्वान्मत्स्यादिवच्चेति युक्तिदृष्टार्थ एव श्रुतिः ।

यदुक्तं सूर्यकादिवज्जीवो ब्रह्मप्रतिबिम्व इति तदयुक्तम् । तथा हि । किमसौ सूर्यकादिवदुपाध्यायत्तत्वादिधर्मा न वा । आद्ये अनित्यत्वादिदोषः । द्वितीये न सूर्यकाद्युपमा सम्भवति । अतः प्रतिविम्बत्वाभावादुक्तं तदवस्थमेवेत्यत आह ॥ **अत एवेति** ॥ न सूर्यकाद्युपमासम्भवो नाप्यनित्यत्वापत्तिः । 'पृथगुपदेशात्' 'सन्ध्ये सृष्टिराह हि' 'तद्गुणसारत्वात्' इत्युक्तैर्भिन्नत्वादिभिः सूर्यकाद्युपमोपपत्तेः । उपाध्यायत्तत्वादिसर्वप्रतिबिम्वधर्मानभ्युपगमेनानित्यत्वाप्रसङ्गात् । यौ हि साध्यसाधनधर्मौ विवक्षितौ तत्सद्भावेनैव दृष्टान्तदार्ष्टान्तिकयोः साम्यमन्यथा सर्वानुमानलोपात् । अत्र च भिन्नत्वं साध्यं तदधीनत्वं तत्सादृश्यं च प्रतिबिम्बपदोक्तं साधनं दृष्टान्तदार्ष्टान्तिकयोरस्तीति न कश्चिद्दोष इति भावः । अतो जीवस्य भिन्नत्वाद्युक्ता भगवति भक्तिरिति युक्तं तन्महिमवर्णनमिति सिद्धम् ।

## गुर्वर्थदीपिका

पूर्वपक्षं तावदनुवदतीति टीकोक्तेः अतः न स्थानतोऽपीत्यधिकरणे बहुस्थानगतस्वांशानामभेदोक्तेः कारणादंशभूतजीवानामप्यंशत्वाविशेषादुपमा तदुपमा तद्वदभेद इत्यर्थः । नेति स्पष्टं निषेधाभावात्पूर्वस्यानुवादमात्रम् । तद्विरुद्धसिद्धान्तयुक्तेर्निरूपितत्वादार्थिकोऽपि नञ् ग्राह्य इति टीकाकारस्याभिप्रायः । एवं च 'न च परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेदः' इति

(गुर्वर्थदीपिका)
न्यायविवरणोक्तेः 'न स्थानतोऽपि' इति सूत्रान्नञावृत्त्या अत उपमेति यदुक्तं तन्नैवेति सिद्धान्तारम्भोऽपि ज्ञातव्यः । अतः सूत्रस्य न न्यूनता । कुत इत्याकाङ्क्षायां सूर्यकादिवदिति निदर्शनेन प्रतिबिम्बत्वाख्यहेतोरपि सूचितत्वात् चशब्देन तद्योग्याभेदाभावाख्यभेदरूपसाध्यस्यापि सूचितत्वात् 'जीवः परमात्माऽभिन्नो न भवति तत्प्रतिबिम्बत्वात् यो यत्प्रतिबिम्बः स तस्मादभिन्नो न भवति यथा सूर्यकस्सूर्यात्' इत्यनुमानाख्यं प्रमाणं सूत्रखण्डेन निरूपितमिति सूत्रभाष्ययोरभिप्रायः ।

प्रतिबिम्बत्वमत एवोपमेति पदैरुक्तेति वदता अत एव मत्स्यादिवत्सर्वसाम्याभावादेव उपमा अल्पोपमा प्रतिबिम्बत्वमिति यावदिति सौत्रपदानामर्थो दर्शितः । तद्धेतुनेत्यस्य तेन प्रतिबिम्बत्वाख्यहेतुनेत्यर्थः । ब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यत्राभेदे सतीति प्रागुपस्कर्तव्यम् । मत्स्यादिवदित्यतः परमैश्वर्यवान्जीवः स्यान्न चैवमित्युपस्कर्तव्यमिति हेतोः किञ्चित्सादृश्याख्ययुक्त्या दृष्टेऽर्थे प्रतिबिम्बत्वे । श्रुतिः जीवस्य भगवदंशत्वश्रुतिः । एवं चाभेदे ब्रह्मस्वरूपानुगतेरावश्यकत्वादैश्वर्यादेश्च स्वरूपत्वान्मत्स्यादिवज्जीवश्च स्यात् । न चैवमिति हेतोर्युक्तिदृष्टार्थ एव वर्तत इति योजना । नोपाध्यायत्तत्वादिनेति वदता प्रतिबिम्बत्वघटकभेदतदधीनत्वसादृश्यनिरूपणवदुपाधेः प्रागसूत्रितत्वादिति सूचितम् । एवं च अतोंऽशत्वाज्जीवस्य मत्स्याद्युपमा नेत्येका योजना । यदि मत्स्याद्युपमा जीवस्य स्यात्तर्हि तद्वदैश्वर्यादिकमपि स्यात् । न चैवम् । अतो मत्स्यादिवत्सर्वैश्वर्याभावादुपमैव सूर्यकोपमैव न तु मत्स्याद्युपमेति द्वितीययोजना । अतो भिन्नत्वतदधीनत्वसादृश्यानामेव प्राक् सूत्रकृतोक्तेरुपाधेरनुक्तेश्च तावतैव सूर्यकोपमा । न तूपाध्यधीनापीति सूत्रखण्डस्य तृतीया योजनिकेत्युक्तं भवति ।

## भावबोधः

अत्रानन्तरसङ्गतिः प्रागेवोक्ता ॥ **युक्ता न वेति** ॥ अत्र भक्तिः परमात्मनि युक्ता न वेति चिन्ता । तदर्थं जीवस्य परमात्मना भेद उत नेति । तदर्थमभेदसाधकं चेतनत्वांशत्वानुमानमनाभासमुताभासमिति । तदर्थं भेदसाधकं जीवस्येश्वरप्रतिबिम्बत्वं नोपपद्यते उतोपपद्यत इति । तदर्थं जीवस्योपाध्यायत्तत्वादिकं प्रतिबिम्बत्वप्रयोजकं भवत्युत नेति । अतः सादृश्याज्जीवस्यापि तथा स्यादिति परमात्मना चेतनत्वसाम्येन जीवस्याप्यभेद इति भाष्यन्यायविवरणाभ्यामुक्तमनुमानमाह– **जीव इति** ॥ दृष्टान्तस्य साध्यवैकल्यपरिहारपरस्य यस्मादेवं परमेश्वरस्वरूपाणां मिथो न कश्चिद्भेद इति भाष्याभिप्रायमाह– **मत्स्यादीनामिति** ॥ प्रागेव 'न स्थानतोऽपि' इत्यत्रेत्यर्थः ।

(भावबोध:)

ननु 'पृथगुपदेशात्' इत्यत्र भेदस्य निपुणतरं समर्थितत्वात् कथम् अभेदेन पूर्वपक्षोत्थानमित्याशङ्क्य निषेधति– **न च वाच्यमित्यादिना** ॥ 'समुदायैक्यमापतेत् ।' 'ईशाख्या समुदाये स्यात्' इत्यनुव्याख्यानं मनसि निधायोक्तम्– **सर्वचेतनसमुदायस्येति** ॥ अत्रेशपरमात्मशब्दाभ्यां ब्रह्माभिप्रेतम् । परेणेशस्यापि जीववद् ब्रह्मांशत्वाङ्गीकारात् । 'ईशाख्य' इत्याद्यनुव्याख्यानानुसारेण तु ईशत्वेनेत्युक्तमिति ज्ञातव्यम् । तस्य प्रतिबिम्बत्वमुक्त्वेत्यनेन सूर्यकादिवदिति पदं कथं व्याख्यातमित्यत आह– **दृष्टान्तकथनेनैवेति** ॥ सूर्यकादिदृष्टान्तेऽभेदाभावव्याप्तत्वेन प्रतिबिम्बत्वस्य सुप्रसिद्धत्वादिति भाव: ।

ननु जीवब्रह्मणोर्भेदाङ्गीकारवादिनं प्रति भेदसाधने सिद्धसाधनता स्यादित्यत: 'न च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते' इत्यनुव्याख्यानं मनसि निधाय प्रयोगप्रकारमाह– इदमुक्तं भवतीत्यादिना । अत एवाभेद एवांश एव विवादात्तन्निरास इति वक्ष्यति–

'यत आभासतामेव श्रुतिरस्य वदत्यलम्'

इत्यनुव्याख्यानं मनसि निधाय रूपं रूपमिति भाष्यमवतार्य व्याचष्टे– **जीवस्येति** ॥ तथा च प्रतिबिम्बत्वहेतो: श्रौतत्वेन प्राबल्यात्तेनांशत्वचेतनत्वयोर्बाध इति भाव: । इत्यादीति कर्तृवाचकपदस्य कर्मक्रियानुवर्तनेनान्वयमाह– **इत्यादीति** ॥ यस्मादेवमित्यादिभाष्यस्य भिन्नवाक्यत्वेन पूर्वपक्षानुवादपरत्वे पूर्वपक्ष इत्यध्याहारप्रसङ्ग: । प्रतिबिम्बत्वहेतो: कण्ठतोऽनुक्ति: कश्चिदित्यस्य वैयर्थ्यं विपर्ययपर्यवसानायोगेन स्यादित्यापादनानुपपत्तिश्च स्यादिति यस्मादित्यादिदर्शयतीत्यन्तं भाष्यमेकवाक्यतया योजयति– **अथवेत्यादिना** ॥ अस्मिन्नपि पक्षे जीवस्यापि परमेश्वरस्वरूपांशत्व इत्याद्यापादकाध्याहारस्यावश्यकत्वादाद्यं व्याख्यानमिति ज्ञातव्यम् । स्यादित्यापादनबललभ्यं विपर्ययपर्यवसानं दर्शयति– **न चैवमिति** ॥ जीवानामल्पगुणत्वेनानुभवादिप्रमाणसिद्धत्वादिति भाव: । अनेनाल्पगुणत्वादिविरोध इति न्यायविवरणमुक्ततात्पर्यं भवति । भाष्ये इति शब्दात् प्राक्तनो यस्मादेवमित्यादिको ग्रन्थ: सौत्रा'त:'शब्दपरामृश्यमानार्थप्रतिपादक: । इतिशब्दस्तु सौ'त्रात:' शब्दोक्तहेत्वर्थक: । उपमैवेत्येवशब्दसम्बन्ध: । उपमाशब्द: प्रतिबिम्बपर इत्यभिप्रेत्येति तस्य प्रतिबिम्बत्वमुक्त्वेति भाष्यं व्याचष्टे– **अत: अंशत्वेऽपीत्यादिनोक्त्वेत्यन्तेन** ॥ प्रतिबिम्ब एवेति 'इति'शब्द: प्रकारार्थ: । चशब्देनेत्यादिभाष्यं सोपस्करं व्याचष्टे– **तद्धेतुनेत्यादिना** ॥ स चासौ हेतुश्चेति विग्रह: ॥ **उपाधिश्चेति** ॥ अत एवांशत्वेऽपीत्य'पि'पदेन हेतोरप्रयोजकत्वमुक्तम् ।

(भावबोधः)

ज्ञानैश्वर्यादीश्वरसाम्ये जीवानां नेश्वराभेदः प्रयोजकः किं तु तद्भेदाभाव इत्याशङ्कते । **भेदस्यापीति ॥ ब्रह्मस्वरूपानुगतेरिति ॥** मृदादिना भिन्नाभिन्ने घटादौ मृदादिस्वरूपानुगतिवत् ब्रह्माभिन्नेषु जीवेषु ज्ञानैश्वर्यादिरूपब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यर्थः । किं च परेण भिन्नाभिन्नतयाऽङ्गीकृतेष्वपि मत्स्यादिषु ऐश्वर्यादिब्रह्मस्वरूपानुगतेर्दर्शनात्तद्वज्जीवेष्वपि स्यादि-त्यभिप्रेत्याह– **मत्स्यादिवच्चेति ॥** नन्वस्यां योजनायां युक्तित एव प्रतिबिम्बत्वहेतुसिद्धे 'रूपं रूपम्' इति श्रुत्युदाहरणं किमर्थमित्यत आह– **युक्तिदृष्टार्थ एवेति ॥** 'अत एवोपमा' इति सूत्रखण्डस्य व्याख्यानान्तरपरमत एव तदधीनत्वमित्यादिभाष्यं तन्निवर्तनीयाशङ्काप्रदर्शन-पूर्वकमवतारयति– **यदुक्तमित्यादिना ॥** 'अथाभासा' 'मुख्यतः प्रतिबिम्बवत्' 'यदा तदोपाध्या-यत्तरूपाणां नाशिता भवेत्' 'यदाभास उपाध्यायत्त ईयते' 'उपाध्यायत्तताभावात्' इत्यनुव्याख्यानं मनसि निधाय विकल्प्य दूषयति– **किमसावित्यादिना ॥ न सूर्याद्युपमा सम्भवतीति ॥** प्रतिबिम्बमात्रस्योपाध्यायत्तता नियमात् । उपाध्यायत्तत्वाभावे तस्य दृष्टान्तत्वासम्भवः । यतस्तस्य दृष्टान्तत्वासम्भवः, अत उपाध्यायत्तत्वादिव्यापकाभावेन तत्प्रतिबिम्बत्वाभावात् । बाधाद्यभावेन यदुक्तं चेतनत्वांशत्वाभ्यां जीवानां ब्रह्माभेद इति तत्तदवस्थमेवेत्यर्थः । 'नातिसाम्यं निदर्शन' इत्यनुव्याख्यानं मनसि निधायाह– **यौ चेति ॥** भाष्ये भिन्नत्वादित्रितयोक्तेः प्रयोजनमाह– **अत्र चेति ॥**

## भावदीपः

**जीवाभेदेति ॥** अस्य भेदाभेदशङ्कानिरासपरत्वेऽपि भेदे विवादाभावेन सूत्रे चशब्देनाऽभेद-निरासरूपसाध्यस्यैवोक्तत्वादभेदेत्येवोक्तम् । यद्वा भेदसहिताऽभेदनिरासादित्यर्थः । प्रतिबिम्बत्व-हेतुनेति भावः । तेन न पृथगुपदेशादित्यादिना गतार्थत्वम् । तथा न स्थानत इत्यत्र समग्ररूपेणैव नानास्थानस्थितानामीशांशानामभेदे कथिते अनित्यत्वाद्यापत्त्या रूपमेव तस्य नेति शङ्कायां च निरस्तायां अत्र पुनस्तद्वंशत्वाऽविशेषाद्विश्वाद्यंशवत् जीवरूपांशानामपीशेनाऽभेदोऽस्त्विति शङ्कनाद्वा मत्स्यादिरूपेषु प्राकृतादिरूपराहित्येऽपि जीवसमुदायस्यैव ब्रह्मत्वेन जीवरूपस्वरूपांशेषु प्राकृतादिरूपवत्त्वेनाऽरूपवदित्ययुक्तम् । भेदस्यापि सत्त्वेन न स्थानतोऽपि परस्योभयलिङ्ग-मित्यप्ययुक्तमिति शङ्कनाद्वा सङ्गतिश्चेति बोध्यम् । भक्त्यर्थमित्युक्तं व्यनक्ति ॥ **जीवेति ॥** स्वस्य

(भावदीपः)

परमप्रेमास्पदत्वस्य विश्वजनीनत्वेनात्मनः स्नेहपात्रत्वेऽपि भक्तेर्माहात्म्यज्ञानपूर्वकस्नेहरूपतया तस्य चाऽऽत्मन्यभावात् स्वस्मिन्निवेत्युक्तम् ॥ युक्त्यायुक्तेति ॥ पूर्ववद्व्याख्या । फलोक्तिपूर्वमभिप्रेतहेतूक्त्या पूर्वपक्षमाह ॥ **न युक्तेतीति** ॥ अत एवोपमेति सूत्रांशविवरणपरं अत इत्यादिभाष्यम् । तत्तु न च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यत इत्यनुभाष्यदिशा व्याचष्टे ॥ **न चेत्यादिना** ॥ सादृश्यशब्दार्थश्चेतनत्वात्तदंशत्वादिति । चित्त्वादित्युपलक्षणमिति भावः । एतेन न च परमात्मनो चेतनत्वन्यायसाम्येन जीवस्याप्यभेद इति न्यायविवरणेऽप्युपलक्षणं व्याख्येयमिति सूचितम् । यस्मादित्यादेरत इत्यन्तस्यार्थमाह ॥ **मत्स्यादीनामिति** ॥ **प्रागेव** न स्थानत इत्यत्र । चेतनत्वेन चांशत्वात्समुदायैक्यमापतेत् । अतः पृथक्त्वमुदितं समुदायांशयोर्भवेदित्यनुव्याख्यानोक्तमत्र शङ्कापूर्वकं संयोजयति ॥ **न च वाच्यमिति** ॥ पृथगुपदेशादित्यादौ समर्थितत्वात्' इत्यर्थः ॥ **भेदाविरोधादिति** ॥ अभेदस्य स्वाभाविकत्वाद्भेदस्य चौपाधिकत्वादिति भावः । एतेन प्रकाशादिवन्नैवं परः स्मरन्ति चेत्यादिभिः सूत्रैः अंशो नानाव्यपदेशादित्यधिकरणे जीवानां भिन्नांशत्वस्य मत्स्यादेः स्वरूपांशत्वस्य च सिद्धत्वात्कथमंशत्वेन मत्स्यादिवदभेदानुमानमिति निरस्तम् । भेदमुपेत्याभेदस्यापि मत्स्यादिरूपेष्विवाऽऽशङ्कनेन भेदाविरोधादिति । फलोक्त्या भाष्यार्थमुपसंहरति ॥ **अत इति** ॥ जीवस्य परमात्माभिन्नत्वादित्यर्थः ॥

**पूर्वपक्षमिति** ॥ अत एवोपमेत्यंशेनोक्तमित्यर्थः । आत्मनोक्तत्वादनुवदतीत्युक्तम् । यस्मादित्यादिभाष्यं पूर्वपक्षोपन्यासदशायां विवृतमपि वक्ष्यमाणार्थान्तराऽसङ्कीर्णत्वायाऽक्षरशो व्याचष्टे ॥ **यस्मादेवमिति** ॥ एवमित्यस्यार्थो नेत्यादि ॥ **अत इति** ॥ अभेदस्य सिद्धत्वादित्यर्थः ॥ **पूर्वः पक्ष इतीति** ॥ सूत्रे न भेदादिति चेदित्यत इति चेदित्यनुवर्त्यमिति भावः । सौत्रचशब्दस्याऽन्वयपूर्वमनुवादः सूर्यकादिवच्चेति । पदमिति समुदायाशयम् । पदद्वयमित्यर्थः ॥ **एवं प्राप्त इति** ॥ भाष्ये स्यादितीतिशब्दानन्तरं प्राप्त इति शेष इति सूचितम् ॥ **दृष्टान्तेति** ॥ सूर्यप्रतिबिम्बसूर्यकदृष्टान्तकथनेनेत्यर्थः । अन्तरङ्गत्वाद् व्याप्त्यादिभावाच्च तस्यैव हेतोर्लाभ इति भावः । ननु कथमत्र प्रयोगप्रकारः । जीवः परमात्मनो भिन्नः प्रतिबिम्बत्वात्सूर्यकादिवदित्युक्तौ सिद्धसाधनतापत्तेरभेद एव विप्रतिपत्तेर्भेदसाधने अर्थान्तराच्चेत्यत आह ॥ **इदमिति** ॥ **प्रतिबिम्बत्वमेव कुत इति** ॥ यद्यप्यंशाधिकरणे आभास एव चेति गुणसूत्र एव सिद्धम् । तथापि तदेवाऽत्र भाष्ये श्रुत्युक्त्या दर्शयतीत्यर्थः ॥ **इत्यनुषज्यत इति** ॥ पदद्वयमनुवर्तत इत्यर्थः । यत आभासतामेव श्रुतिरस्य

(भावदीपः)

वदत्यलमित्यनुभाष्योक्तेरिति भावः । रूपमिति श्रुत्यर्थस्तु आभास एव चेत्यत्र टीकायां व्यक्तः । एतेन प्रतिबिम्बत्वहेतोरसिद्धिरपास्ता ।

यत्तु दर्पणादिसन्निकृष्टाः प्रतिहताः परावृत्ता नयनरश्मयो मुखेन सन्निकृष्टास्तदेव विषयीकुर्वन्ति न ततोऽन्यः प्रतिबिम्बोऽस्तीति प्रतिबिम्बत्वमभेदेनैव व्याप्तमिति विरुद्धो हेतुरिति चोद्यं तत्तु आभासत्वविरोधत इत्यनुभाष्य एवाशंक्य निरासाद्वा अत्रैव वक्ष्यमाणवर्णकान्तरेण वा निरस्तप्रायमिति भावः । सूत्राक्षरैरेव प्रतिबिम्बत्वहेतूक्तितत्समर्थनयोर्लाभप्रकारमाह ॥ **अथवेति** ॥ यद्वा श्रुत्या प्रतिबिम्बत्वं जीवस्य समर्थ्य युक्त्याऽपि साधयितुमाह ॥ **अथवेति** ॥ **सिद्धान्त एवेति** ॥ अत एवोपमेत्यंशस्य सिद्धान्तपरत्वेनैवानुभाष्ये व्याख्यानादिति भावः ॥ **न चैवमिति** ॥ एतच्च अशेषशक्तियुक्तश्चेत्स्वातन्त्र्याद्दोषवान्कथमित्यादिनाऽन्यत्र विस्तृतमिति भावः । भाष्यस्थेतिशब्दं हेत्वर्थं मत्वाह ॥ **अत इति** ॥ भाष्ये तस्य प्रतिबिम्बत्वमित्यनन्तरमध्याहार्यमाह ॥ **अत एवोपमेति पदैरिति** ॥ उक्त्वेत्यतः पश्चादपि शेषमाह ॥ **तद्धेतुनेति** ॥ तेन हेतुनेत्यर्थः ॥ **अनेनेति** ॥ सूत्रादौ जीवस्य सयुक्तिकं प्रतिबिम्बत्वसमर्थनेनेश्वररूपाणां सर्वसाम्योक्तेर्हेतूकरणेन चेत्यर्थः । यद्वा श्रुत्या युक्त्या च जीवानां प्रतिबिम्बत्वमीश्वररूपाणां तद्राहित्यमिति कथनेनेत्यर्थः । साधनाऽव्यापकत्वसाध्यव्यापकत्वयोः सम्भवादिति भावः ॥ **उपाधिश्चेति** ॥ न केवलं प्रतिबिम्बत्वानुमानविरोधश्चेतनत्वाद्यनुमानस्येति चार्थः । अभेदनिरासमात्रेण कथं भेदाभेदवादिभङ्ग इत्यत आह ॥ **अभेदेति** ॥ तर्कस्याप्रयोजकत्वमाशङ्क्य निराह ॥ **भेदस्यापीति** ॥ औपाधिकभेदस्यापीत्यर्थः ॥ **मत्स्यादिवच्चेति** ॥ परमते मत्स्यादिरूपेषु जगदनुग्रहार्थं लीलया विग्रहोपादानेन तदुपाधिकृतभेदे सत्यपि स्वरूपांशत्वेनैश्वर्याद्यविशेषस्तथाऽत्राऽपि स्यादित्यर्थः । दृष्टान्तबलाच्चेति चार्थः ।

यत्त्वस्त्येव जीवेष्वप्यैश्वर्यादि किं तु तिरोहितमस्तीति तदपि मत्स्यादिवच्चेत्युक्त्यैव निरस्तम् । तत्र तत्तिरोधानाभाववदत्राऽप्याऽऽपत्तेरिति । यदपि मत्स्याद्या लीलाविग्रहोपाधिभिन्ना इत्यतिरस्कृतैश्वर्यादिमत्त्वात्तदनुसन्धानवन्तः । जीवास्त्वनाद्यविद्याकामकर्मादिनिबन्धनदेहेन्द्रियाद्युपाधिभिन्ना इति तिरोहितब्रह्मस्वभावत्वान्नानुसन्धानवन्त इति ॥ **तदप्ययुक्तम्** ॥ हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वानुसन्धानादित्यादिना तत्वोद्योतोपाधिखण्डनादौ निरासादिति भावः ।

(भावदीपः)

विस्तृतश्चाऽयमर्थो न्यायामृते द्वितीयपरिच्छेदे । स्वरूपांशत्वे ज्ञानाद्य वैशेष्याद्यापत्तिरित्या-द्युक्तयुक्त्यैव प्रतिबिम्बत्वसिद्धेः । अस्मिन्पक्षे भाष्ये रूपमित्याद्युक्तिर्व्यर्थेत्यत आह ॥ **युक्तीति** ॥ उक्तार्थद्वये वक्ष्यमाणार्थे च सूत्राक्षरयोजना तन्त्रदीपिकायां व्यक्ता । अथाभासा मुख्यतः सूर्यकादिवत् । यदा तदोपाध्यायत्तरूपाणां नाशिता भवेत् । इत्याशङ्कानिवृत्त्यर्थमाह वेदाधिपः प्रभुः । अत एवोपमेत्येव चान्याभासविशेषिताम् । यदुक्तं तदधीनत्वं सर्वावस्थास्वशेषतः । जीवस्येत्याद्यनुभाष्यदिशा अत एवोपमेत्यंशस्य वर्णकान्तरपरभाष्यशेषमवतार्य व्याचष्टे ॥ **यदुक्तमिति** ॥ **सूर्यकादिवदिति** ॥ एतेन अथाऽऽभासा मुख्यतः सूर्यकादिवदित्युक्तदिशा । पूर्वत्र भाष्येऽपि तस्य सूर्यकादिवत्प्रतिबिम्बत्वमुक्त्वा इत्यपि योजना सूचिता । अन्यथा तस्य चशब्दसूचिताऽभेदनिरासरूपसाध्य एव दृष्टान्तोक्त्याऽसदनुवादः स्यात् ॥ **उपाध्यायत्तत्वादि-धर्मेति** ॥ तत्राशनाश्यत्वजडत्वतत्कृतविकारादिरादिपदार्थः । धर्मादनिच्केवलादित्यनिच् प्रत्ययः ॥ **अनित्यत्वादीति** ॥ कृतहानाकृताभ्यागमादिरादिपदार्थः ॥ **अत इति** ॥ यदाभास उपाध्यायत्त ईयते । उपाध्यायत्तताभावादित्यनुभाष्योक्तदिशा प्रतिबिम्बत्वव्याप्तोपाध्यधीनत्वाभावादित्यर्थः ।

ननु यावदात्मभावित्वाच्च न दोषस्तद्दर्शनादित्यत्र जीवचिन्तापेटिकायां बिम्बोपाधितत्सन्निधीनां नित्यत्वेन जीवस्य नित्यत्वोपपादनात्कथमेषा शङ्का । मैवम् । तत्र ज्ञोऽत एवेत्यत्र देहयोगेन जीवोपाध्युत्पत्तावुक्तायां तर्हि देहरूपोपाध्युत्पत्तौ तद्विनाशे च तदुपाधिकस्य प्रतिबिम्बरूप-जीवस्याऽप्यनित्यत्वमिति शङ्कायां देहस्य न जीवोपाधित्वं येनानित्यत्वमित्येवोक्तम् । न तु नित्योपाध्यधीनत्वम् । तथैव भाष्यन्यायविवरणयोः प्रतीतेः । तत्वप्रदीपे तथैव व्याख्यानाच्च । टीकायां जीवोपाधिर्द्विधा प्रोक्त इत्यादिवचनोक्तिपूर्वकं तदुक्तिस्तु देहस्य जीवोपाधित्वं नेत्येतत्स्पष्ट-मुपपादयितुम् । यद्वा अथोपाधयोऽविनाशिनस्तदा प्रत्यक्षादिविरोधः सर्वदा संसारित्वं च स्यादिति सुधोक्तदिशा स्वरूपोपाधौ विप्रतिपत्त्या विशेषशङ्काऽत्रेति भावः । फलोक्तिपूर्वं तत्र हेतुत्वेन सूत्रभाष्ये व्याचष्टे ॥ **न सूर्यकादीति** ॥ अत एवेत्यस्याऽप्रकृतपरामर्शित्वभ्रान्तिं निराह ॥ **पृथगिति** ॥ **उपाध्यायत्तत्वादीति** ॥ उपपादितमेतदाभास एव चेत्यत्र 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीव ईशस्याऽनुपाधिरिन्द्रचापो यथा रवेः' इति । नन्वेवमतिसाम्याभावा-द्दृष्टान्तदार्ष्टान्तिकभावो न स्यादित्यतो नातिसाम्यं निदर्शन इत्यनुभाष्योक्तं तात्पर्योक्त्या व्यनक्ति ॥ **यौ हीति** ॥ अन्यथा सर्वसाम्ये । सादृश्यं चेत्युक्त्या प्रत्येकं साधनमिति दर्शितम्

(भावदीपः)

॥ **प्रतिबिम्बपदोक्तमिति** ॥ तथा च प्रतिबिम्बत्वादित्यस्य तदधीनत्वात्तत्सदृशत्वाच्चेत्यर्थ इति भावः । इमौ च हेतू प्रागुपपादितावेव सन्ध्ये सृष्टिरित्यादिभिरनेकैः सूत्रैः सप्रमाणं सूत्रकृतेति नासिद्धौ भेदेन व्याप्तावेवेति कृत्वा च न विरुद्धानैकान्तिकत्वादीति भावेनोक्तं न कश्चिद्दोष इति । नन्वथाऽपि बिम्बप्रतिबिम्बयोरैक्यात्सूर्यकादिदृष्टान्तः साध्यसाधनहीन इत्यतो न कश्चिद्दोष इत्ये-तदुपपादनायोक्तं दृष्टान्तदार्ष्टान्तिकयोरस्तीति । बिम्बप्रतिबिम्बयोर्भेदस्तु सुधायामुपपादित इति भावः । विस्तरस्तु न्यायामृते बिम्बप्रतिबिम्बवादे चन्द्रिकायां चाऽदृष्टानियमादित्यधिकरणे द्रष्टव्यः । सूत्रोक्तं हेतूकृत्य फलोक्त्योपसंहरति ॥ **अत इति** ॥ अभेदस्य प्रबलनिर्दोषयुक्ति-बाधादित्यर्थः ।

## अभिनवचन्द्रिका

भेदाऽभेदमतमत्र निराक्रियते । तथा हि जीवब्रह्मणोर्भेदस्तावत्सिद्धान्तिनाऽङ्गीक्रियते श्रुत्यादिसिद्धश्च । अभेदस्तु 'जीवो ब्रह्माऽभिन्नः चेतनत्वात्, तदंशत्वाच्च, मत्स्यादिव'त् इत्यनुमानसिद्धः । अत उत्तरं पठति 'सूर्यकादिवच्च' इति सूत्रखण्डेन । अनेन जीवो न परमात्माऽभिन्नः तदाभासत्वात् सूर्यकादिवत्' इति प्रयोगः सूचितः । तत्रेयमाशङ्का उपाध्यायत्तो ह्याभास उच्यते । यथा सूर्यकादिः । न चाऽसावुपाध्यायत्तः । अनित्यत्वप्रसङ्गात् । ततश्चाऽसिद्धमाभासत्वम् । सूर्यकाद्युपमा चाऽनुपपन्नेति । तां परिहर्तुं स्वाभिप्रायं व्यनक्ति 'अत एव चोपमा' इति सूत्रखण्डेन । अत एव 'संध्येसृष्टिराह ही' इत्यादौ प्रकृताभ्यां तदधीनत्वतत्स-दृशत्वाभ्यामेवाऽभेदो निराक्रियते । सूर्यकादिदृष्टान्तेन तादृशाऽऽभासत्वस्यैव हेतुत्वेन सूचितत्वात् तदधीनत्वतत्सादृश्ययोरेव विवक्षितत्वेनोपमा चोपपन्ना भवति । उक्तं च सुधायाम्, 'अनेन **अत एव** प्रकृताभ्यां तदधीनत्वतत्सदृशत्वाभ्यामेव आभासत्वं सूर्यकाद्युपमा चोक्तेति स्वाभिप्रायप्रकटनं सूत्रार्थ इत्युक्तं भवति' इति ॥ **भक्त्ययोगादिति** ॥ दोषिणा ऐक्ये दोषाणामवर्जनीयत्वादिति भावः ॥ **भक्तिरेव विषय इति** ॥ यद्यपि अत्र परमात्मा विषयः । जीवाऽभिन्नो न वेति सन्देहः । अभिन्न इति पूर्वपक्ष इत्येव वक्तव्यम् । तथापि जन्माधिकरणोक्तगुणपूर्णत्वे जीवाभिन्नत्वयुक्ति-विरोधपरिहारात्मकत्वादस्याधिकरणस्य युक्तिपादे निवेशो युक्त इति शङ्कानिरासायास्याधिकरणस्य युक्तिविरोधनिरासफलकत्वमिव भक्तिसिद्धिफलकत्वमप्यस्तीति विवक्षावशादत्राऽन्तर्भावो युक्त इति ज्ञापनाय तथोक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **न हीति** ॥ न हि स्वाधिकत्वेन स्वात्मनि

(अभिनवचन्द्रिका)

भक्तिरुपपद्यत इत्यर्थः । **परमात्मनो नभिद्यते इति** ॥ अत्यन्तभेदशून्यः अभिन्न इति यावत् । एतेन पूर्वपक्षिणो भेदाऽभेदवादित्वाद्भेदनिराकरण्मयुक्तमिति परास्तम् ॥ **न भेद इतीति** ॥ अभेद इति प्रागेव सिद्धमित्यर्थः । **दृष्टान्तकथनेनोक्त्वेति** ॥

ननु दृष्टान्तकथनस्य परकालत्वेन चशब्दात्पूर्वकालत्वाभावात् क्त्वाप्रत्ययोऽनुपपन्न इति चेत् न ब्रूमो वयम् 'अत एव च' इति श्रुतचशब्देन साध्यभेदं समुच्चिनोतीति येनोक्तदोषः स्यात् किंनाम सूर्यकादिवदित्यतःपरमनुवृत्तेन चशब्देनेति । एवं च कृत्वा स दोषः परिहृतो भवति । अनुवृत्त च शब्दात् दृष्टान्तवचनस्य पूर्वकालत्वात् । तदिदमुक्तम् **सूर्यकादिवच्चेति पदे व्याचष्ट इति** ॥ अन्यथाचसूर्यकादिवदिति पदे व्याचष्ट इत्यवक्ष्यत् । श्रूयमाणश्चशब्दो न केवलं तदधीनत्व-तत्सदृशत्वयोर्हेतुतया विवक्षितत्वात् हेतुर्नासिद्धः । अपि तु अत एवोपमा चोपपन्नेति समुच्चयार्थः । अनुवृत्तस्तु साध्यसमुच्चयार्थ इति विवेकः ॥ **अत एवोपमेति पदैरुक्त्वेति** ॥ मत्स्यादिवत् ज्ञानैश्वर्याद्यविशेषप्रसङ्गात् उपमैव भगवत्प्रतिबिम्बत्वमेव न मत्स्यादिवदंशत्वमिति अत एवोपमेति-पदैरुक्त्वा तद्धेतुना अत एवोपमेति पदलब्धहेतुना सह सूर्यकादिदृष्टान्तेन लब्धं भेदं चशब्देन समुच्चिनोतीत्यर्थः । साधनस्य साध्येन समुच्चयार्थ एव चशब्दः । न तु हेतुसमुच्चयार्थ इति भावः । ननु पूर्वपक्षिणा भेदस्याङ्गीकृतत्वाद्भेदसाधनं व्यर्थमित्यत आह– **अभेदांश एवेति** ॥ अभेद एव विवादात्तन्निराकरणमेव सूत्रार्थः न तु भेदसाधनमिति भावः । **ब्रह्मस्वरूपानुगतेरावश्यकत्त्वा-दिति** ॥ स्वरूपानुगतेरैक्यव्यापकत्वेन ऐक्यं प्रतिजानतस्तत्स्वरूपाऽनुगतेरावश्यकत्वात् भेदबलेन ऐश्वर्यादिनिषेधो न कार्य इति भावः । ननु अस्तु तर्हि ब्रह्मस्वरूपानुगतिर्जीवेषु, तथापि ऐश्वर्यनिषेधः कुतो न युक्त इत्यत आह– **ऐश्वर्यादेश्चेति** ॥ चोऽवधारणार्थः । अनेन जीवो यदि ब्रह्माऽभिन्नः स्यात् तर्हि ऐश्वर्याद्यनुगतिमान् स्यात् मत्स्यादिवत् घटवच्चेति तर्कः सूचितो भवति । विशेषव्याप्तौ मत्स्यादिदृष्टान्तः । सामान्यव्याप्तौ तु अनुक्तसमुच्चयार्थेन चकारेण सूचितो घटादिदृष्टान्त इति विवेकः । एतेन मत्स्यदिवदित्येतावतैव पूर्णत्वाच्चकारो व्यर्थ इति परास्तम् । ननु अस्यां योजनायां युक्तित एव प्रतिबिंबत्वहेतुसिद्धेः 'रूपं रूपम्' इत्यादिश्रुत्युदाहरणं किमर्थमित्यत आह– **युक्तिदृष्टार्थ एवेति** ॥ **दृष्टान्तदार्ष्टान्तिकयोरस्तीति** ॥ दृष्टान्तस्य साध्य-साधनवत्त्वं निश्चितमेव विवक्षितम् । दार्ष्टान्तिकस्य तु साधनवत्त्वं नाम तत्त्वेन निश्चितत्वम् साध्यवत्त्वं तु तत्त्वेन विवक्षितत्वमात्रं न तु तत्त्वेन निश्चितत्वमिति बोध्यम् । एतेन दार्ष्टान्तिकस्य

(अभिनवचन्द्रिका)

साध्यवत्तया निश्चितत्वेऽनुमानवैयर्थ्यमिति निरस्तम् । अत एव साध्यं साधनं चाऽस्तीत्युक्तम् । अन्यथा व्याप्यं व्यापकं चाऽस्तीत्यवक्ष्यत् ।

पूर्वपक्षस्तु जीवस्तावत्परमात्मनो भिद्यते इति श्रुत्यादिसिद्धम् अनुमतं च भवताम् । एवं सति प्रयुज्यते 'जीवः परमात्माऽभिन्नः चेतनत्वात् तदंशत्वात् मत्स्यादिवत्' एवं च ईश्वरस्य जीवे भिन्नत्वेऽपि अभेदस्याऽपि भावात् दोषिणा ऐक्ये च दुष्टत्वावश्यंभावात् न परमात्मनि भक्तिर्युक्तेति ।

सिद्धान्तस्तु जीवो न परमात्माऽभिन्नः तत्प्रतिबिम्बत्वात् यो यत्प्रतिबिम्बः नाऽसौ तदभिन्नः यथा सूर्यकादिः । ननु उपाध्यायत्तः प्रतिबिम्ब उच्यते न चाऽसावुपाध्यायत्तः तथात्वेऽनित्यत्वप्रसङ्गात् । ततश्च असिद्धं प्रतिबिम्बत्वम् । अथ परमात्माधीनत्वे सति चेतनत्वेन तत्सादृश्यं हेतुतया विवक्षितम्, तर्हि अनुपपन्नो दृष्टान्तः प्राप्नोतीति चेत्, न । चेतनत्वादिविशेषरूपस्याऽविवक्षितत्वात् । तदधीनत्वतत्सदृशत्वयोरेव हेतुतया विवक्षितत्वात् । अत एवोपमाप्युपपन्ना । बिम्बाधीनत्वमिव बिम्बसादृश्यस्याऽपि तत्र सत्त्वात् । नन्वेवमपि पक्षे सर्वदृष्टान्तधर्माभावात् 'तथा चाऽयम्' इत्युपनयो न सम्भवतीति चेत्, न यथा दृष्टन्तः साध्यव्याप्यसाधनवान् तथा पक्षोऽपीत्येतावन्मात्रस्य उपनये विवक्षितत्वेन यावत्साधर्म्यस्याविवक्षितत्वात् । अन्यथा अनुमानमात्रोच्छेदप्रसङ्ग इति । अतो जीवपरमात्मनोरभेदाभावात् युक्ता भगवति भक्तिरिति तन्महिमवर्णनमुपपन्नमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्रानन्तरसङ्गतिः प्रागेवोक्ता ॥ **भक्त्ययोगादिति** ॥ स्वात्मात्मीयसमस्तवस्तुभ्योऽधिको माहात्म्यज्ञानपूर्वः स्नेहो हि भक्तिः । सा च जीवाभेदे स्वस्मिन्निव परमात्मन्ययुक्तेति भावः । एतेन माहात्म्यपूर्वकस्नेहस्य स्वस्मिन्विद्यमानत्वात्स्वस्मिन्निवेत्युक्तमयुक्तमिति निरस्तम् ॥ **युक्तीति** ॥ भक्तिः परमात्मन्ययुक्तोत युक्तेति चिन्ता । तदर्थं जीवस्य परमात्मनाभेदोऽस्ति न वेति । तदर्थमभेदसाधकं चेतनत्वाद्यनुमानमनाभासमुताभासमिति । तदर्थमभेदाभावसाधकं प्रतिबिम्बत्वं नोपपद्यत उतोपपद्यत इति । न्यायसाम्यमिति न्यायप्रदर्शकयस्मादेवमित्युत्तरभाष्यानुसारेण पूर्वपक्षयति ॥ **न युक्तेति** ॥ ननु पृथगुपदेशादित्यन्तसूत्रैः भेदस्य श्रुत्यादिभिः समर्थितत्वादनुमानं बाधितम् । गतार्थं चेदमधिकरणमित्याशङ्क्य 'समुदायैक्यमापतेत् । ईशाख्या समुदाये स्यात्' इत्यनुव्याख्यानं मनसि

(वाक्यार्थमुक्तावली)

निधाय निषेधति ॥ **न चेति** ॥ **अनुवदतीति** ॥ बहिरेव पूर्वपक्षमाह । न तु यस्मादेवमित्यत-इशब्दार्थतयोच्यत इति । केचित्तु उपमेत्यनन्तरं न भेदादिति सूत्रादिति चानुवर्तते । ततो हि अस्य इत्यतो अस्येत्यस्ति । अत एवेत्यावर्तते । तथा च अत एव ईशरूपाणामभेदस्य साधितत्वादेव अत एव चेतनत्वादिहेतोरेव अस्य जीवस्योपमा मत्स्यादिसाम्यं मत्स्यादिवदभेद इति यावदिति चेन्नेति सूत्रार्थकथनपरं भाष्यमित्याहुः ॥ **अतस्तत्सादृश्याच्चेतनत्वादेरिति** ॥ ईश्वररूपाणाम-भेदात्तद्दृष्टान्ताच्चेतनत्वादेर्हेतोरित्यर्थः । यद्वा चेतनत्वादिरूपतत्सादृश्यादित्यर्थः । प्रतिबिम्बहेतुः केनोक्त इत्यत आह । सूर्यकादिवदिति दृष्टान्तकथनेनोक्त्वा सूचयित्वेति भेदं दर्शयतीति भाष्यस्या-भेदं निरस्य शुद्धभेदं दर्शयतीत्यर्थः । भेदाभेदवादिनो भेदस्य सिद्धत्वात् । अत एवानुव्याख्याने चर्चितत्वात् अभिन्नमित्यभेदो निरस्त इति भावेन प्रयोगप्रकारमाह ॥ **इदमुक्तं भवतीति** ॥ अत एव वक्ष्यति अभेदांश एव विवादात्तन्निरास इति ।

एवं यस्मादेवमित्यादिभाष्यं पूर्वपक्षानुवादपरमिति व्याख्याय तस्य प्रतिबिम्बत्वमित्यादिकं सूर्यकादिवच्चेति सूत्रखण्डविवरणपरमिति व्याख्यातम् । तर्हि पूर्वपक्ष इत्यध्याहारः प्रतिबिम्बत्वहेतोः कण्ठतोऽनुक्तिः कश्चिदित्युक्तस्य वैय्यर्थ्यमित्युक्त्यरुच्या यस्मादेवमित्यादिसमग्रभाष्यं अत एवेत्यादिसमग्रसूत्रविवरणपरतया सिद्धान्तपर एवेति पक्षान्तरमाह ॥ **अथवेति** ॥ अत इत्यस्य प्रदर्शनपरं यस्मादेवमित्यादिभाष्यं व्याचष्टे ॥ **यस्मादित्यादिना** ॥ अत इत्यस्य तर्हीत्यर्थं मनसि निधायापादकमाह ॥ **जीवस्यापि परमेश्वरस्वरूपत्व इति** ॥ यत उपमा अत इत्यपि सम्बन्धं मत्वा प्रवृत्तस्य जीवस्यापि तथा स्यादित्यस्यार्थमाह ॥ **तद्वज्ज्ञानैश्वर्याद्यविशेषः स्यादिति** ॥ आपादन-लब्धं विपर्यये पर्यवसानमत्यल्पतेत्युक्तन्यायमनुसृत्याह ॥ **न चैवमिति** ॥ न च जीवस्येश्वरेण ज्ञानैश्वर्याद्यविशेषोऽयुक्तः । अल्पगुणत्वेनानुभवात् । अतो न परमेश्वरांशत्वं युक्तमिति विपर्यय-पर्यवसानं द्रष्टव्यमिति भावः । अस्त्वेवं ततः किमित्यतः प्रवृत्तस्यात उपमैवेति सूत्रखण्ड-स्योपयोगकथनपरमिति तस्य प्रतिबिम्बत्वमिति भाष्यं व्याचष्टे । अतोंऽशत्वेऽपि जीवो ब्रह्म-प्रतिबिम्ब एव । भाष्ये इतिशब्दः सौत्रातःशब्दोक्तहेत्वर्थकः । सूत्रे उपमाशब्दः उपमाव-त्प्रतिबिम्बपरः । तथा च यत एवं जीवस्य ब्रह्मस्वरूपांशत्वं नास्ति, अतोंऽशत्वेऽपि जीवो ब्रह्मण उपमा प्रतिबिम्ब एवेति तस्य प्रतिबिम्बत्वं अत एवोपमेति पदैः साधयित्वेत्यर्थ इति भावः । यत उपमा प्रतिबिम्बः अतः सूर्यकादिवच्च नाभिन्न इति सूत्रार्थमभिप्रेत्य प्रवृत्तस्य प्रतिबिम्बत्वमुक्त्वा

(वाक्यार्थमुक्तावली)

चशब्देन भेदं समुच्चिनोतीति भाष्यस्यार्थमाह ॥ **तद्धेतुत्वेनेति** ॥ स चासौ हेतुश्चेति विग्रहः । ततश्चायं सूत्रार्थः । अतो मत्स्यादीनां परमेश्वरेण ज्ञानानन्दाद्यविशेषस्योक्तत्वात् अतस्तर्हि जीवस्यापि परमेश्वरस्वरूपांशत्वे यत उपमा अतस्तत्सादृश्यात् उपमा स्यात् ज्ञानाद्यविशेषप्रसङ्गो न चैवमतो जीवांशोऽपि उपमैव प्रतिबिम्ब एव यतोऽतस्सूर्यकादिवच्च भिन्न एवेति ॥ **अनेनेति** ॥ प्रतिपक्षवचनेनेत्यर्थः ॥ **उपाधिश्चेति** ॥ अंशत्वस्य प्रयोजकत्वं चेत्यर्थः । अत एवांशत्वेऽपीत्युक्तम् ।

न चाभेदः प्रागेव निरस्त इति भेदाभेदोऽत्र निरसनीयः, कथमभेदनिरासेन चारितार्थ्यमित्यत आह ॥ **अभेदांश एवेति** ॥ ननु ज्ञानैश्वर्यादीश्वरसाम्ये जीवानां नेश्वराभेदः प्रयोजकः, किन्तु तद्भेदाभावः । प्रकृते भेदस्य सत्त्वान्नैश्वर्यादिसाम्यमित्याशङ्कते ॥ **भेदस्यापीति** ॥ **ब्रह्मस्वरूपानुगतेरिति** । मृदादिना भिन्नाभिन्ने घटादौ मृदादिस्वरूपानुगतिवत् ब्रह्माभिन्नेषु जीवेषु ज्ञानैश्वर्याद्यनुगतेरावश्यकत्वादित्यर्थः । किञ्च परेण भिन्नाभिन्नतयाङ्गीकृतेष्वपि मत्स्यादिष्वैश्वर्यादि-ब्रह्मस्वरूपावगतेर्दर्शनात्तद्वज्जीवेष्वपि स्यादित्यभिप्रेत्याह ॥ **मत्स्यादिवच्चेति** ॥ नन्वस्यां योजनायां युक्तित एव प्रतिबिम्बत्वहेतुसिद्धेः रूपं रूपमिति श्रुत्युदाहरणं किमर्थमित्यत आह ॥ **युक्तीति** ॥ अत एवोपमेति सूत्रखण्डस्य व्याख्यानान्तरपरतयैव तदधीनत्वमित्यादिभाष्यं तन्निवर्तनीयाशङ्का-पूर्वमवतारयति ॥ **यदुक्तमित्यादिना** ॥ उपाध्यायत्तत्वादीत्यादिपदेन जडत्वं गृह्यते । अनित्यत्वा-दीत्यादिपदेन जन्ममोहाभावादि गृह्यते ॥ **अत इति** ॥ व्यापकस्योपाध्यायत्तत्वादेः नित्येषु चेतनेषु जीवेष्वभावात्तद्व्याप्यप्रतिबिम्बत्वाभावात् हेतोरसिद्धेरुपाध्यभावाच्च यदुक्तं चेतनत्वाशांत्वाभ्यां जीवानां ब्रह्माभेद इति तत्तदवस्थमेवेत्यर्थः ॥ **पृथगुपदेशादिति** ॥ पृथगित्यत्र भिन्नत्वं सन्ध्य इत्यत्र तदधीनत्वं तद्गुणेत्यत्र तत्सादृश्यमिति विवेकः ॥ **उपाध्यायत्तत्वादिसर्वप्रतिबिम्बधर्मेति** ॥ उपाध्यधीनत्वतन्नाशनाश्यत्वजडत्वाद्यैरपि नेत्यर्थ इति सुधानुसारेण सर्वशब्दार्थो ज्ञेयः । क्वातिसाम्यं निदर्शने इत्यनुव्याख्यानं मनसि निधायाह ॥ **यौ चेति** ॥ भाष्ये भिन्नत्वादित्रितयोक्तेः प्रयोजनमाह ॥ **अत्र चेति** ॥

## तत्त्वसुबोधिनी

**जीवस्येति** ॥ ननु जीवपरमात्मनोरभेदेऽपि कुतः परमात्मनि भक्त्ययोग इत्यत आह ॥ **न हीति** ॥ तथा लोकेऽदृष्टत्वादिति भावः । ननु द्वा सुपर्णा' इत्यादिना जीवपरमात्मनोर्भेद-

(तत्त्वसुबोधिनी)

स्योक्तत्वादभेदे विमतिरित्यत आह ॥ **न चेति** ॥ ननु मत्स्यादेः परमात्मभिन्नत्वात् तत्र साध्यवैकल्यमित्यत आह ॥ **मत्स्यादीनामिति** ॥ प्रागेव न स्थानतोऽपीत्यत्रोक्तमित्यर्थः । ननु पृथगुपदेशादित्यत्र भेदस्य निपुणतरं समर्थितत्वात् कथमभेदेन पूर्वपक्षोत्थानमित्याशङ्क्य निषेधति ॥ **न चेति** ॥ नात्र केवलभेदोऽभिप्रेतः । किन्तु जीवसमुदायस्य परमात्मनाऽभेदो एकैकजीवेन भेद इति भेदाभेदावभिमतावित्याह ॥ **सर्वेति** ॥ **ईशत्वेनेति** ॥ ईशाख्यवत्वेनेत्यर्थः । अभेदे सति कथं भेदस्तयोर्विरोधादित्यत आह ॥ **अभेदेऽपीति** ॥ एवं च समुदायत्वावच्छेदेनाभेदः एकैकजीवत्वावच्छेदेन भेदः इति व्यवच्छेदकभेदादविरोध इति भावः । तस्य प्रतिबिम्बत्वमुक्त्वेत्यनेन सूर्यकादिवदिति पदं कथं व्याख्यातमित्यत आह ॥ **दृष्टान्तकथनेनैवेति** ॥ सूर्यकादिदृष्टान्ते अभेदाभावव्याप्तत्वेन प्रतिबिम्बत्वस्य सुप्रसिद्धत्वादिति भावः । ननु जीवब्रह्मणोर्भेदाभेदाङ्गीकारवादिनं प्रति भेदसाधने सिद्धसाधनता स्यादित्यत आह ॥ **इदमुक्तं भवतीति** ॥ रूपं रूपमिति भाष्यमवतार्य व्याचष्टे ॥ **जीवस्येति** ॥ तथा च प्रतिबिम्बत्वहेतोः श्रौतत्वेन प्राबल्यात् तेनांशत्वचेतनत्वयोर्बाध इति भावः । इत्यादीति कर्तृवाचकपदस्य कर्मक्रियावर्तनेनान्वयमाह ॥ **इत्यादीति** ॥ आत्मकाः आत्मन इमे आत्मकाः जीवाः । यस्मादेवमिति भाष्यस्य भिन्नवाक्यत्वेन पूर्वपक्षानुवादपरत्वे पूर्वपक्ष इत्यस्याध्याहारप्रसङ्गात् प्रतिबिम्बत्वहेतोः कण्ठतोऽनुक्तेः कश्चिदित्यस्य वैय्यर्थ्यम् । विपर्ययपर्यवसानायोगेन स्यादित्यापादनानुपपत्तिश्च स्यादित्यतो यस्मादित्यादि दर्शयतीत्यन्तं भाष्यमेकवाक्यतया योजयति ॥ **अथ वेत्यादिना** ॥ अत्रापि जीवस्यापि परमेश्वरस्वरूपांशत्वे इत्यापादकाध्याहारस्यावश्यकत्वात् आद्यव्याख्यानमिति ज्ञातव्यम् । स्यादित्यापादनलभ्यं विपर्ययपर्यवसानमाह ॥ **न चैवमिति** ॥ ज्ञानैश्वर्याद्यविशेषस्तु नेत्यर्थः । जीवानामल्पगुणत्वेनानुभवादिप्रमाणसिद्धत्वादिति भावः ।

भाष्ये इतिशब्दात्प्राक्तनः यस्मादेवमित्यादिको ग्रन्थः सौत्रतच्छब्देन परामृश्यमाणार्थप्रतिपादक इति सौत्रातःशब्दोक्तहेत्वर्थक उपमैव इत्येवशब्दसम्बन्धः उपमाशब्दः बिम्बपर इत्यभिप्रेत्य व्याचष्टे ॥ **अतोऽशत्वेऽपीति** ॥ **प्रतिविम्ब एवेति** ॥ इतिशब्दः प्रकारार्थः । चशब्देनेत्यादिभाष्यं व्याचष्टे ॥ **तद्धेतुनेति** ॥ स चासौ हेतुश्चेति विग्रहः । प्रतिबिम्बत्वहेतुना भेदः साध्यः ॥ **अनेनेति** ॥ प्रतिबिम्बत्वस्य हेतुत्वकथनेनेत्यर्थः । चशब्दोऽप्रयोजकत्वसमुच्चयार्थः । अत एवाशंत्वेऽपीत्यपिपदेन हेतोरप्रयोजकत्वं पूर्वमुक्तम् । ननु भेदाभेदयोरङ्गीकृतत्वात् कथमभेदमात्रनिरास इत्यत आह

(तत्त्वसुबोधिनी)

॥ **अभेदांश एवेति** ॥ ज्ञानैश्वर्यादीश्वरसाम्ये जीवानां नेश्वरभेदः प्रयोजकः किन्तु तद्भेदाभाव इत्याशङ्कते ॥ **भेदस्यापीति** ॥ **ब्रह्मस्वरूपानुगतेति** ॥ मृदादिनाऽभिन्नघटादौ मृदादिस्वरूपानुगतिवत् ब्रह्माभिन्नेषु जीवेषु ज्ञानैश्वर्यादिरूपब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यर्थः । ननु जीवस्य ब्रह्माभेदेऽपि ज्ञानैश्वर्यादिरूपाननुगतिः । तस्य ब्रह्मस्वरूपत्वाभावादित्यत आह ॥ **ऐश्वर्यादिश्चेति** ॥ किञ्च परेण भिन्नाभिन्नतयाङ्गीकृतेष्वपि मत्स्यादिषु ऐश्वर्यादिरूपब्रह्मस्वरूपानुगतेर्दर्शनात् तद्वत् जीवेष्वपि स्यादित्यभिप्रेत्याह ॥ **मत्स्यादिवच्चेति** ॥ नन्वस्यां योजनायां ब्रह्मस्वरूपत्वे ज्ञानैश्वर्यादिविशेषः स्यात् । न चैवं अतोऽशत्वेऽपि प्रतिबिम्बत्वमेवेति युक्तित एव प्रतिबिम्बत्वहेतुसिद्धेः रूपं रूपमिति श्रुत्युदाहरणं किमर्थमित्यत आह ॥ **युक्तिदृष्टार्थ एवेति** ॥ तथा च युक्तिसिद्धार्थे संवादितया श्रुत्युदाहरणं न त्वसिद्धप्रतिबिम्बत्वरूपहेतुसाधनार्थम् ।

अत एव चोपमेति सूत्रखण्डस्य व्याख्यानान्तरं अत एव तदधीनत्वमित्यादिभाष्यं तन्निवर्तनीयाशङ्कापूर्वकमवतारयति ॥ **यदुक्तमिति** ॥ **आद्य इति** ॥ सूर्यकादिवदिति भावः ॥ **न सूर्यका हीति** ॥ प्रतिबिम्बमात्रस्योपाध्यायत्ततानियमात् प्रतिबिम्बस्य जीवस्योपाध्यायत्तताभावे तस्य दृष्टान्तत्वासम्भवः । यतस्तस्य दृष्टान्तत्वासम्भवः अत उपाध्यायत्तत्वादिव्यापकाभावे तद्वत्प्रतिबिम्बत्वाभावात् । बाधाभावेन यदुक्तं चैतन्यांशत्वाभ्यां जीवानां ब्रह्माभेद इति तत्तदवस्थमेवेत्यर्थः । तर्ह्यनित्यत्वमत आह ॥ **उपाधीति** ॥ ननु जीवप्रतिबिम्बत्वे न सूर्यकादिदृष्टान्तः सम्भवतीति दृष्टान्तस्थोपाध्यायत्तत्वादिधर्माणां तत्राभावादित्यत आह ॥ **अत्र चेति** ॥ अत्र सूत्रे सूर्यकादिवदित्यनेन प्रतिबिम्बत्वहेतुः ग्राह्यः । चशब्देन भेदरूपसाध्यसमुच्चयः । एवं च जीवः ब्रह्माभिन्नो न भवति तत्प्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः स तेनाभिन्नो न । यथा सूर्यकः सूर्यप्रतिबिम्बस्तेनाभिन्नो न भवति । ननु जीवस्य ब्रह्मप्रतिबिम्बत्वं न, उपाध्यायत्तत्वादिरूपप्रतिबिम्बधर्माभावादित्यत उक्तम् ॥ **अत एवोपमेति** ॥ अत एव भिन्नत्वतदधीनत्वतत्सादृश्येनैवोपमा सूर्यकादिसाम्यम् । न तूपाध्यायत्तत्वेनेत्यर्थः । यद्वा अतश्शब्द उक्तार्थपरामर्शकः । चशब्दः भेदरूपसाध्यसमुच्चायकः । उपमाशब्दः प्रतिबिम्बत्वार्थः । उपमैवेत्येवकारसम्बन्धः । सूर्यकादिवदिति दृष्टान्तः । एवं च जीवस्य मत्स्यादिवत् स्वरूपांशत्वे ज्ञानैश्वर्याद्यविशेषरूपबाधकसद्भावो यतोऽतः कारणात् जीव उपमैव ब्रह्मप्रतिबिम्ब एव ॥ **न तेनाभिन्नः** ॥ सूर्यकादिदृष्टान्तवदित्यर्थः । अनुमानं तु पूर्ववदेवोह्यमिति सूत्राक्षरार्थः ।

## वाक्यार्थविवरणम्

॥ **अत एवोपमेतिपदैरुक्त्वेति** ॥ सूचयित्वेत्यर्थः न तु भेदांश इत्येवार्थः तदधीनत्व-तत्साद‍ृश्यैरेव सूर्यकाद्युपमेत्युक्त्या तदधीनत्वे सति तत्साद‍ृश्यरूपं प्रतिबिम्बत्वं सूचितमित्यर्थः । पूर्वं सूर्यकादिवदिति द‍ृष्टान्तोक्त्या प्रतिबिम्बत्वसूचनमुक्तमत्र तु अत एवोपमेति पदैरिति ध्येयम् ॥ **प्राचीनानुमानस्य** ॥ **चेतनांशत्वानुमानस्य** ॥ **उपाधिश्चेति** ॥ न केवलं भेदसाधकप्रतिबिम्ब-त्वानुमानबाधः सूचितः । किं नाम अप्रतिबिम्बत्वोपाधिश्चानेन सूत्रेण सूचित इत्यर्थः । ननु भेदाभेदनिरासः साधनीयो न त्वभेदाभावमात्रमित्यत आह ॥ **अभेदांश एवेति** ॥ द्वितीययोजनायां जीवस्यापि तथा स्यादित्यापादनं न युक्तमित्याशङ्कते ॥ **भेदस्यापीति** ॥ **आवश्यकत्वादिति** ॥ घटादौ मृदादिस्वरूपानुगतिवदिति भावः । ऐश्वर्यादिश्च ब्रह्मस्वरूपत्वात् जीवानां तदभेदे ऐश्वर्याद्यनुमतिर्जीवेषु स्यादित्यापादनं युक्तमिति योज्यम् ॥ जीवानां ब्रह्मणा भेदाभेदाङ्गीकारेऽप्यैश्वर्याद्यनुगत्याऽवश्यम्भाव्यमेव । मत्स्यादौ द‍ृष्टत्वादतश्चापादनं युक्तमित्याशयेनाह ॥ **मत्स्यादि-वच्चेति** ॥ **अनित्यत्वादीति** ॥ उपाधिनाशेनेत्यर्थः ॥ **द्वितीयेनेति** ॥ उपाध्यायत्तत्वादिना साम्याभावादिति भावः ॥ **उक्तम्** ॥ अंशित्वहेतुनाऽभिन्नत्वमित्यर्थः । पृथगित्यत्र भिन्नत्वम् । सन्ध्य इति तदधीनत्वं, तद्गुणेत्यत्र साद‍ृश्यमिति बोध्यम् ॥ **तत्सद्भावेनैवेति** ॥ तयोर्धर्मयोः सत्त्वेनेत्यर्थः ॥ **अन्ययेति** ॥ द‍ृष्टान्तदार्ष्टान्तिकयोः सर्वैरपि धर्मैः साम्याङ्गीकारे ॥ **सर्वेति** ॥ धूमानुमानेऽपि पर्वतमहानसयोः पर्वतत्वमहानसत्वादिधर्मेण साम्याभावादिति भावः ।

## वाक्यार्थमञ्जरी

**प्रागेवेति** ॥ न स्थानतोऽपीत्यनेनेत्यर्थः ॥ **समर्थितत्वादिति** ॥ पृथगुपदेशादित्यनेनेति शेषः ॥ **सर्वचेतनसमुदायस्येति** ॥ पटस्य सर्वतन्तुभिरत्यन्ताभेदस्यैकैकतन्तुना भेदाभेदस्य च भवद्भि-रभ्युपगमादिति भावः ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ अत एव ब्रह्म तदंशानां मत्स्यादीनामभेदस्योक्तत्वादेव अत एव अंशत्वहेतोरेवोपमा जीवस्य मत्स्यादिवद् ब्रह्माभेद-साम्यमिति न मन्तव्यम् । कुतः ? अत एव जीवस्येशप्रतिबिम्बांशत्वादेव । कथं सूर्यकादिवत् यथा सूर्यप्रतिबिम्बादिकं सूर्येणाभिन्नं न भवति तत्प्रतिबिम्बांशत्वात्तथा जीवोऽपीशेन भिन्न इत्यर्थः ॥ **सूर्यकादिवच्चेति** ॥ अनेन चशब्दो भिन्नक्रम इति सूचितं भवति । ननु भेदाभेदवादिनं प्रति

(वाक्यार्थमञ्जरी)

भेदसाधने सिद्धसाधनमित्यत आह ॥ **इदमुक्तं भवतीति** ॥ तथा च भेदशब्दोऽभेदाभावपर इति भावः ॥ **इत्यादीति** ॥ कर्तृवाचकपदस्य क्रियानवर्तनेनान्वयमाह ॥ **इत्यादीति** ॥ पूर्वव्याख्याने पूर्वपक्ष इत्यध्याहारः । प्रतिबिम्बहेतोः कुतोऽनुक्तिरित्याद्यरुच्याह ॥ **अथवेति** ॥ भेदशब्दार्थो विशेष इति । **तद्धेतुना** तेन प्रतिबिम्बत्वहेतुना ॥ **अनेनेति** ॥ जीवस्य भेदसाधनायोक्त-प्रतिबिम्बत्वेनेत्यर्थः ॥ **प्राचीनेति** ॥ अभेदसाधकचेतनत्वादेरित्यर्थः । ननु तेन भेदाभेदाङ्गीकारात् कथमभेदमात्रनिरास .इत्यत आह ॥ **अभेदांश एवेति** ॥ ज्ञानैश्वर्यादीश्वरसाम्ये जीवानां नेश्वराभेदः प्रयोजकः किन्तु तद्भेदाभावः स चात्र नास्तीति न साम्यमित्याशङ्कते ॥ **भेदस्यापीति** ॥ **ब्रह्मस्वरूपानुगतेरिति** ॥ मृदादिना भिन्नाभिन्ने घटादौ मृदादिस्वरूपानुगतिवद् ब्रह्मणा भिन्नाभिन्नेषु जीवेषु ज्ञानैश्वर्यादिब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यर्थः । किं परेण भिन्नाभिन्न-तयाऽङ्गीकृतेष्वपि मत्स्यादिष्वैश्वर्यादिब्रह्मस्वरूपानुगतेर्दर्शनात्तद्वज्जीवेष्वपि स्यादित्यत आह ॥ **मत्स्यादिवच्चेति** ॥ नन्वस्यां योजनायामंशत्वेऽपि विशेषवत्वरूपयुक्तित एव प्रतिबिम्बत्व रूपहेतुसिद्धे रूपमित्यादिश्रुत्युदाहरणं किमर्थमित्यत आह ॥ **युक्तिदृष्टार्थ एवेति** ॥

**उपाध्यायत्तेति** ॥ उपाध्यधीनत्वादिप्रतिबिम्बधर्मवान्न वेत्यर्थः ॥ **अनित्यत्वेति** ॥ देहाद्युपाधेरनित्यत्वादिति भावः । यद्यपि यावदात्मभावित्वादिति स्वरूपोपाधिर्नित्य उक्तः तथाप्यधीनत्वं भेदसापेक्षमिति भिन्नोपाध्यधीनत्वाद्येवात्र विकल्पितमिति ध्येयम् ॥ **न सूर्यका-दीति** ॥ उभयोरुपाध्यधीनत्वधर्मेण साम्याभावादिति भावः । तर्हि मास्तु सूर्यकादिदृष्टान्तः । तथापि जीवप्रतिबिम्बत्वमस्त्वित्यत आह ॥ **अत इति** ॥ सर्वेषां प्रतिबिम्बानामुपाध्यधीनत्व व्याप्तत्वेनोपाध्यधीनत्वरूपव्यापकनिवृत्तौ व्याप्यभूतप्रतिबिम्बत्वस्यापि निवृत्या भेदसाधकानामभावे नोक्तचेतनत्वाद्यनुमानेनाभेदसाधनं युक्तमित्यर्थः । प्रतिज्ञाद्वयं क्रमेणोपपादयति ॥ **पृथगिति** ॥ **इत्युक्तैरिति** ॥ इति सूत्रैः क्रमेणोक्तैरित्यर्थः । सर्वधर्मानभ्युपगमे कथं सूर्यकादेर्दृष्टान्तत्वमित्यत आह ॥ **यौ हीति** ॥ **सर्वेति** ॥ पर्वतमहानसादेरपि यावत्साम्याभावादिति भावः ॥ **प्रतिबिम्बपदोक्तमिति** ॥ तथा च हेतूकृतप्रतिबिम्बशब्दार्थनिरूपणायैव भाष्ये तथोक्तिरिति भावः ।

॥ इति उपमाधिकरणम् ॥ १० ॥

## ११. अम्बुवदधिकरणम्

नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादि प्रयोजनमित्यतो ब्रवीति—

**॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ १९ ॥**

अम्बुवत्स्नेहेन । ग्रहणं ज्ञानम् । भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ।

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (कठ.उ.२-२-३) इति हि श्रुतिः ।

'महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।
तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम्' इति पाद्मे ॥

### तत्त्वप्रदीपिका

सादृश्याच्च सूर्यकाद्युपमेत्युक्तम् । एवञ्च नित्यसिद्धत्वात्सादृश्यस्य किं भक्त्या संरम्भतः प्रतिपाद्यमानया तज्जनितज्ञानेन तज्जनकवैराग्येण वा प्रयोजनमित्यतो ब्रवीति ॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ अम्बुवदित्यनूद्य स्नेहेनेति व्याख्याति । स्नेहात्मकत्वादम्बुनः । तेन मानसं स्नेहं लक्षयति । ग्रहणपदं ज्ञानमिति व्याख्याति । अम्बुवद्ग्रहणं स्नेहसहितं ज्ञानमित्यर्थः । अभिप्रायं कथयति **भक्तिमिति ॥** सलक्षणं दर्शयितुमेवमुक्तिः । गोपनीयत्वेन च । महित्वबुद्धिरिति च महत्त्वबुद्धिः । 'वैश्वानर महि नः शर्म यच्छ' इत्यादिवत् । विष्णोरतिमहत्स्वरूपत्वात् स्वरूपज्ञानमेव तत्र महित्वबुद्धिः । अतत्वविज्ञानत्वप्रसङ्गादन्यथा ।

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति भविष्यत्पर्वणि ॥

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तत्फलनिरूपणादस्ति शास्त्रादिसङ्गतिः । तस्या विफलत्वे अकर्तव्यत्वप्रसङ्गात्फलं साध्यमेव । प्रकृता भक्तिरेव विषयः । कर्तव्या न वेति सन्देहः । द्विविधार्थ-दर्शनं च सन्देहबीजम् । पूर्वपक्षयति **॥ नित्येति ॥** न भगवद्भक्तिः कर्तव्या प्रयोजनाभावात् । न च भगवज्ज्ञानं प्रयोजनम् । तेनापि प्रयोजनाभावात् । न च तत्प्रसादः प्रयोजनम् । तेनापि

(तत्त्वप्रकाशिका)

**प्रयोजनाभावात् । न च मोक्षः प्रयोजनम् । नित्यानन्दज्ञानादिमत्त्वं हि मोक्षस्तस्य च नित्यसिद्धत्वात् । कुतः । भगवत्सादृश्यस्य जीवे नित्यसिद्धत्वात् । नित्यं विद्यमानस्याभिव्यक्त्यर्थं भक्त्यादीत्युक्तमिति चेन्न । विद्यमानस्य कदाचित्स्वयमेवाभिव्यक्तिसम्भवात् सुप्ताविवेति निष्फलत्वान्न भक्तिः कर्तव्या । अतो व्यर्थं माहात्म्यवर्णनमिति भावः ।**

सिद्धान्तयत्सूत्रमवतार्य अम्बुवदिति पदतात्पर्यमाह ॥ **अत इति** ॥ ग्रहणपदं व्याचष्टे ॥ **ग्रहणमिति** ॥ सूत्रार्थमाह ॥ **भक्तिमिति** ॥ कर्तव्यैव भगवद्भक्तिः भगवत्सादृश्यस्य नित्यसिद्धत्वेऽपि तदभिव्यक्त्यर्थत्वात् । न च सुप्तौ भक्तिं विनापि सुखाद्यभिव्यक्तिदर्शनात्तद्वैयर्थ्यम् । भक्तिं विना सम्यगभिव्यक्त्यभावात् । न च सापि स्वयमेव भवति । तथा सत्यनादिसंसारप्रवाहानुपपत्तेरिति भावः । ननु सादृश्याभिव्यक्तिर्भक्त्या भवतीत्येतत्कुत इत्यत आह ॥ **यमिति** ॥ स्वां तनुं तत्स्वरूपमित्यर्थः । यदुक्तं स्नेहेन ज्ञानं भक्तिस्तया जीवस्वरूपस्य सम्यगभिव्यक्तिरिति तत्स्फुटमत्र न प्रतीयत इत्यतः स्मृतिं चाह ॥ **महित्वेति** ॥ अतः प्रयोजनवती भक्तिः कार्यैवेति युक्तं माहात्म्यवर्णनमिति सिद्धम् ।

## गुर्वर्थदीपिका

अल्पाक्षरत्वलाभाय भक्त्यभावादित्येव वक्तव्ये यत् 'अम्बुवद्ग्रहणात्' इति सूत्रं तद्भक्तेस्स्वरूपनिरूपणार्थमिति भावेनोक्तं अम्बुवत्स्नेहेन ग्रहणं ज्ञानमिति । माहात्म्यज्ञानपूर्वकस्नेहो हि भक्तिः । तर्हि स्नेहेनाज्ञानादिति कुतो नोक्तमिति चेत्सत्यम् । अम्बुनि चिक्कणताख्यः स्नेहो यथा आजानजत्वादतिसुदृढस्तथाऽतिसुदृढस्नेहलाभायाम्बुवदित्युक्तम् । गृह्णाति कदाऽपि न मुञ्चतीति ज्ञानेऽपि दार्ढ्यसूचनाय ग्रहणमित्युक्तम् । अतः प्रौढशिरोमणिः सूत्रकार इति ज्ञेयम् ॥

## भावबोधः

**फलनिरूपणादिति** । विषयविचारानन्तरं फलविचार इति परमात्मनो भक्तिविषयत्वं विचार्य फलं विचार्यत इत्यनन्तरसङ्गतिरिति भावः । **कर्तव्या न वेति** । अत्र भक्तिः किं न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं किं सा निष्प्रयोजनोत सप्रयोजनेति । तदर्थं जीवानां नित्यसिद्धं ज्ञानानन्दादीश्वरसादृश्यं सुप्ताविव मुक्तावपि स्वत एवाभिव्यज्यते ॥ **उत भक्त्यादिसाधनेनेति** ॥ न भक्त्या प्रयोजनमित्येव वक्तव्ये यज्ज्ञानानन्दादिनेत्युक्तं तदभिप्रायमाह– **न च भगवज्ज्ञान-**

(भाववोध:)

**मित्यादिना** ॥ आदिशब्दार्थमाह– **प्रसाद इति** ॥ भाष्ये नित्यसिद्धत्वाज्ज्ञानानन्दादेरित्येतावता पूर्णे सादृश्यस्येति किमर्थमुक्तमित्यतो नित्यसिद्धत्वादित्यस्योभयत्रान्वयमङ्गीकृत्य हेतुहेतुमद्भावापन्नार्थप्रतिपादकत्वेन वाक्यद्वयं योजयति– **नित्येति** ॥ **भगवत्सादृश्येति** ॥ ज्ञानानन्दादिना सादृश्यस्येत्यर्थः । अनेन सादृश्यस्येति न्यायविवरणांशोऽपि व्याख्यातः । न भक्त्यादिना प्रयोजनमिति भाष्यं साधनं विनैव जीवस्य तादृशत्वाभिव्यक्तिरिति न्यायविवरणं च तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे– **नित्यमित्यादिना** ॥ **उक्तमिति** ॥ 'पुंस्त्वात्' इत्यत्रेत्यर्थः । स्वयमेव, साधनं विनैवेत्यर्थः । सूत्रार्थमाहेति । अम्बुवदिति सादृश्यार्थे 'वतिः' । ग्रहणाभावादिति नञोऽन्वयः । ततश्च स्नेहपूर्वकमहत्त्वज्ञानाभावादिति । ततश्चाम्बु यथा स्नेहेन गृह्यते तथा स्नेहपूर्वं परमात्मनो ग्रहणात् न तथात्वमिति तात्पर्यम् । 'अम्बुवदग्रहणात्' इति सूत्रांशस्य भक्तिं विनेत्यनेन पुंस्त्वादिवत्त्वस्येत्युक्तं सादृश्यस्याभिव्यक्तत्वम् 'तथात्वम्' इत्यनेन परामृश्यते । 'तु' शब्देन तु सम्यक्त्वमुच्यत इति । 'न तथात्वम्' इति सूत्रांशस्य 'न तत्सादृश्यं सम्यगभिव्यज्यते' इत्यनेन व्याख्यानादिति भावः । अनादितः संसारस्यानिवृत्तत्वेन भावादिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकं व्याचष्टे– **न च सापीत्यादिना** ॥ तत्स्वरूपमिति जीवस्वरूपमित्यर्थः । अनेन श्रुतौ स्वशब्दो जीवपर इत्युक्तं भवति ।

## भावदीपः

**तत्फलेति** ॥ सादृश्याभिव्यक्तिरूपफलेत्यर्थः । एतेन सादृश्याच्च सूर्यकाद्युपमेत्युक्तम् । एवं च नित्यसिद्धत्वात्सादृश्यस्य किं भक्त्येति तत्वप्रदीपोक्तदिशा प्राक्प्रकृतसादृश्यमुपजीव्यात्र शङ्कोत्थानादनन्तरसङ्गतिः सूचिता ॥ **द्विविधार्थेति** ॥ भोजनादेः कर्तव्यस्य शिरोवेष्टनेन नासिकाग्रहणादेर्निष्फलस्य कालबलादागमिष्यत्सुप्त्याद्यर्थप्रयत्नस्य वाऽकर्तव्यस्य दर्शनमित्यर्थः । फलोक्तिपूर्वं न भक्तिज्ञानादिना प्रयोजनमिति भाष्यं तत्र हेतुत्वेन व्याचष्टे ॥ **न भगवद्भक्तिरित्यादिना** ॥ अनुबन्धादिभ्य इत्यत्र दृष्टेर्भगवद्भक्तिसाध्यत्वस्योपासनापादे स्पष्टत्वात्कथमत्र प्रयोजनाभावोक्तिरित्यतस्तदाशङ्क्य निराह ॥ **न चेति** ॥ ननु विद्यैव तु निर्धारणादिति नयेऽग्रे ज्ञानस्य प्रसादद्वारा मुक्तिफलकत्वं स्पष्टमित्यतो भाष्यस्थाऽदिपदार्थं विवृण्वन्प्रसादरूपं फलं तावदाशङ्क्य निराह ॥ **न च तत्प्रसाद इति** ॥ प्रियो हि ज्ञानिनोऽत्यर्थमित्यादेरिति भावः । एतेन

(भावदीपः)

भक्तेर्ज्ञानादिरूपं प्रयोजनं नेति ज्ञानादेः प्रयोजनं नेति च भाष्ययोजना सूचिता । नित्यसिद्धत्वान्नित्यानन्दज्ञानादेरिति भाष्यांशव्यावर्त्यमाह ॥ **न च मोक्ष इति** ॥ **नित्यानन्देति** ॥ 'अनित्यत्वात्सदुःखत्वान्न धर्माद्याः परं सुखम् । मोक्ष एव परानन्दः ससारे परिवर्तताम्' इत्यादेरिति भावः । तत्र हेतुत्वेन नित्यसिद्धत्वात्सादृश्यस्येत्यंशं व्याचष्टे ॥ **कुत इत्यादिना** ॥ एवं यथाभाष्यं व्याख्याय सादृश्यस्य सत्त्वात्साधनं विनैव जीवस्य तादृत्त्वव्यक्तिरित्यन्यत्रोक्तमर्थं पुंस्त्वादिवदित्यत्रोक्ताभिव्यक्तिफलकत्वं शङ्कानिवर्तकत्वेनाऽत्र सङ्गमयति ॥ **नित्यमिति** ॥ **इत्युक्तमिति** ॥ तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तेरिति तत्र टीकायामुक्तत्वादिति भावः । सुप्ताविवेतीतिशब्दो हेतौ ।

**तात्पर्यमाहेति** ॥ अक्षरार्थस्तु अम्बुना तुल्यं वर्तत इत्यंबुवत् । अम्बु यथा स्नेहवत्तथा मानसस्नेहयुक्तग्रहणाभावादिति । तत्वप्रदीपे तु स्नेहात्मकत्वादंबुनस्तेन मानसस्नेहं लक्षयति । अम्बुवद्ग्रहणं स्नेहसहितं ज्ञानमित्यर्थ इत्युक्तम् । कथमेतावतोक्तशङ्कानिरास इत्यतोऽभिप्रायमाह ॥ **कर्तव्यैवेति** ॥ एवं भाष्ये यथान्यायं भाववर्णनं कृत्वा अनादितः संसारस्याऽनिवृत्तत्वेन भावादित्यन्यत्रोक्ताशयं शङ्कापूर्वमाह ॥ **न च सापीत्यादिना** ॥ एष विष्णुर्यं वृणुते तेन लभ्यस्तस्य प्रसन्नो भवति । ततश्च तस्याधिकारिणः स्वस्वरूपं प्रकाशयतीत्यर्थः । अत्र वृणुत इत्यनेन भक्तत्वं सूचितमिति जिज्ञासासूत्रे टीकायां व्याख्यानात्कथमत्रोक्तार्थे साक्षिणीयं श्रुतिरित्यतोऽत्रोपयोग्यर्थमाह ॥ **स्वां तनुमिति** ॥ न चानेकार्थत्वं दोष इति शंक्यम् । न च बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम् । वचनेनैव प्रतीयमानत्वादर्थस्य कल्पनाभावादित्यादिना कर्मनिर्णय एवास्य चोद्यस्य निरासादिति भावः ॥ **स्नेहेनेति** ॥ स्मृतौ स्नेहपूर्वा महित्वबुद्धिर्भक्तिरिति माहात्म्यज्ञानस्य विशेष्यत्वेनोपादानात् पूर्वं भाष्यादौ तथैवोक्तेः स्नेहेन ज्ञानं भक्तिरित्यनुवादः कृतः । विशेषणविशेष्यभावे कामचारात् 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा' इति भारततात्पर्यनिर्णयोक्तवचनेनाऽविरोधः ॥ **तयेति** ॥ सूत्रोक्तव्यतिरेकस्याऽयमन्वयमुखेनाऽनुवादो वक्ष्यमाणस्मृत्यानुकूल्याय । यद्यपि स्नेहपूर्वज्ञानरूपभक्तौ सत्यामपि न जीवस्वरूपसुखस्य सम्यगभिव्यक्तिः । तथात्वे ज्ञानोत्तरशुभकर्मणो वैयर्थ्यापत्तेः । वक्ष्यते च स्तुतयेऽनुमतिर्वेति नयभाष्ये । 'ज्ञानान्मोक्षो भवत्येव सर्वाऽकार्यकृतोऽपि तु । आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धत' इति । तथापि जीवस्वरूपावरणयोरविद्येश्वरशक्त्योर्मध्ये

(भावदीपः)

ज्ञानोत्तरशुभकर्मसाध्येश्वर-शक्तिनिवृत्त्यनन्तरभाव्यानन्दाभिव्यक्त्यन्या निश्शेषाविद्यानिवृत्यनन्तर-भाविनी या अभिव्यक्तिस्तस्या एवाऽत्र सम्यगभिव्यक्तिशब्देन ग्रहणम् । यद्वोपासया कर्मभिश्च भक्त्या चाऽऽनन्दचित्रतेत्युक्त्या भक्तेरानन्दवृद्धावपि हेतुत्वात्सम्यगभिव्यक्तेरेवात्र ग्रहणेऽपि कर्मणो हेतुत्वाऽनिरासात् सूत्रार्थं हेतूकृत्य फलोक्त्योपसंहरति ॥ **अत इति** ॥ भक्त्यैव स्वरूपसुखस्य सम्यग्व्यज्यमानत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

**फलनिरूपणादिति** ॥ फलप्रापकत्वमपि भगवन्महिमैवेति न भगवन्महिमोक्तिपरपादेऽनन्तर्भावः । सादृश्याच्च सूर्यकाद्युपमेत्युक्तम् । एवं च नित्यसिद्धत्वात्सादृश्यस्य किं भक्त्येति फलाक्षेपे तन्निरासेन फलसमर्थनादनन्तरसङ्गतिः तत्त्वप्रदीपानुसारेण द्रष्टव्या ॥ **कर्तव्येति** ॥ किं भक्तिर्न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं सा किं सप्रयोजनोत निष्प्रयोजनेति । तदर्थं जीवानां नित्यसिद्धं ज्ञानानन्दादीश्वरसादृश्यं सुप्ताविव मुक्तावपि स्वत एव व्यज्यते न वेति । स नो भव इत्युक्तन्यायप्रदर्शकं नित्यसिद्धमिति पूर्वपक्षभाष्यमवतार्य व्याचष्टे ॥ **पूर्वपक्षयतीति** ॥ न भक्तिज्ञानेति भाष्यस्य भक्त्या ज्ञानेन आदिशब्दोक्तप्रसादेन च न प्रयोजनमित्याकाङ्क्षाक्रमेण भावमाह ॥ **न भगवदित्यादिना** ॥ भाष्ये नित्यसिद्धत्वात्सादृश्यस्य नित्यसिद्धत्वान्नित्यानन्दज्ञानादेरिति नित्यसिद्धत्वादित्यस्योभयत्रान्वयं अङ्गीकृत्य हेतुहेतुमद्भावेन योजयति ॥ **न च मोक्ष इत्यादिना** ॥ पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगादित्यनेन गतार्थतामाशङ्क्य परिहरति ॥ **विद्यमानस्येति** ॥ एतेन भक्तिज्ञानादिना नित्यानन्दज्ञानादेरभिव्यक्तिलक्षणप्रयोजनं नास्ति । विद्यमानस्याभिव्यक्तेरपि सुप्ताविव नित्यसिद्धत्वात् आगन्तुकसाधनापेक्षां विनैव सिद्ध्युपपत्तेरिति भाष्यं प्रकारान्तरेण व्याख्यातं भवति ।

अम्बुवदिति पदतात्पर्यमाह ॥ **अम्बुवदिति** ॥ सादृश्यार्थे वतिः । अम्बुसादृश्यं च ग्रहण-शब्दितज्ञानस्य विवक्षितम् । तथाम्बुवत् अम्बुन इव तत्सादृश्येनेत्यर्थः । सादृश्यं च स्नेह एवेति स्नेहेनेति तात्पर्यमुक्तमिति भावः ॥ **सूत्रार्थमिति** ॥ अम्बु हि स्नेहशब्दितचिक्कणतोपेतं स्वसम्बन्धिलग्नं भवति । तथा ज्ञानमपि स्नेहयुक्तं स्वविषये श्लिष्टतरं भवति । अन्यथा शुष्ककुड्ये पतितशरवदलग्नं भवेत् । तथा चाम्बुवदम्बुसादृश्येन स्नेहेन युक्तज्ञानाभावात् भक्तिं विनेति यावत् ।

(वाक्यार्थमुक्तावली)

तु सम्यक् । तथात्वं पुंस्त्वादिवदित्यत्रोक्तं सादृश्यस्याभिव्यक्तत्वं नेति सूत्रार्थमाहेत्यर्थः । तत्त्वप्रदीपे तु अम्बुवदित्यन्तं स्नेहेनेति व्याख्याति । स्नेहात्मकत्वादम्बुनः तेन मानसस्नेहं लक्षयति । ग्रहणपदं ज्ञानमिति व्याख्यातम् । अम्बुवदग्रहणं स्नेहसहितज्ञानमित्यर्थः । अभिप्रायं कथयति ॥ **भक्तिमितीति** ॥ टीकायामप्ययमेवार्थः । अम्बुवदित्यस्य लक्षणालब्धस्नेहावत्त्वार्थकत्वात्स्नेहेनेति सहयोगे तृतीयेति भावेन पदतात्पर्यमाहेत्युक्तमिति ज्ञेयम् ॥ **अनादिसंसारेति** ॥ एतेन भव इत्युक्तन्यायोऽप्यारूढो दर्शितः । ननु सादृश्याभिव्यक्तिर्भक्त्येति ज्ञानानन्दाद्यात्मकजीव-स्वरूपाभिव्यक्तिः स्नेहपूर्वकज्ञानलक्षणभक्त्या भवतीत्यर्थः ॥ **स्फुटमिति** ॥ यं एष भगवान्वृणुते तेन लभ्यः ज्ञेय इत्युक्ते भक्तमेव वृणुते इति प्रसिद्धत्वात् भक्तिमतैव ज्ञेयः । भक्तिज्ञानवतः स्वां तनुं तत्स्वरूपं विवृणुते इत्युक्ते भक्तेरर्थाल्लाभेऽपि तत्स्वरूपानिरूपणादस्पष्टमिति भावः । ननु ज्ञानपूर्वकस्नेहस्य भक्तित्वमन्यत्रोक्तं अत्र स्नेहपूर्वकज्ञानस्य भक्तित्वमतो विरोध इति चेन्न । अन्यत्र परिहृतत्वात् ।

## तत्त्वसुबोधिनी

विषयविचारानन्तरं फलविचार इति । परमात्मनो भक्तिविषयत्वं विचार्य फलं विचार्यत इत्यनन्तरसङ्गतिरिति भावः । भगवज्ज्ञानस्यैव भक्तिप्रयोजनवत्वात् कथं प्रयोजनाभाव इत्यतः सुखदुःखाभावोत्तरत्वात् न तस्य पुरुषार्थत्वं स्वतः । अतः तत्साधनत्वेन पुरुषार्थत्वं वाच्यम् । न च तदस्तीत्याह ॥ **न च भगवज्ज्ञानमित्यादिना** ॥ तेनापि प्रयोजनाभावात् इत्यादेरप्येवमेव योजना द्रष्टव्या । ननु भाष्ये नित्यसिद्धत्वात् ज्ञानानन्दादेः इत्येतावता पूर्णे सादृश्यस्येति किमर्थमित्यतो नित्येत्यस्योभयत्रान्वयमङ्गीकृत्य हेतुहेतुमद्भावापन्नार्थप्रतिपादकत्वेन वाक्यद्वयार्थमाह ॥ **नित्येति** ॥ एवं च नित्यसिद्धत्वादित्यस्योभयत्रान्वयः । सादृश्यस्य नित्यत्वात् ज्ञानानन्दादे-र्नित्यत्वादिति । भगवत्सादृश्यस्येति ज्ञानानन्दादिसादृश्यस्येत्यर्थः ॥ **उक्तमिति** ॥ पुंस्त्वादि-वदित्यत्रेत्यर्थः । स्वयमेव साधनं विनेत्यर्थः ॥ **सूत्रार्थमाहेति** ॥ अम्बुवदिति सादृश्यार्थे वतिः । ग्रहणाभावादिति नञोऽन्वयः । ततश्च स्नेहपूर्वकमहत्वज्ञानाभावादिति । अम्बुवदग्रहणादिति सूत्रांशस्य भक्तिं विनैवेत्यनेन परामृश्यते । तुशब्देन सम्यक्त्वमुच्यते इति न तथात्वं त्विति सूत्रांशस्य न तत्सादृश्यं सम्यगभिव्यज्यते इत्यनेन व्याख्यानात् इति भावः । ननु भगवत्सादृश्यस्य

(तत्त्वसुबोधिनी)

नित्यसिद्धत्वात् तदर्थं भक्तिवैय्यर्थ्यम् इत्यत आह ॥ **भगवदिति** ॥ **तत्स्वरूपमिति** ॥ जीवस्वरूपमित्यर्थः । एवं च श्रुतौ स्वशब्दो जीवपरः ।

## वाक्यार्थविवरणम्

**फलं साध्यमिति** ॥ फलमस्तीति साधनीयमित्यर्थः ॥ **भगवत्सादृश्येति** ॥ अनेन नित्यानन्दादेस्तद्रूपस्य सादृश्यस्य नित्यसिद्धत्वादित्यन्वयो द्रष्टव्यः ॥ **स्वयमेवेति** ॥ भक्तिं विनैवेत्यर्थः ॥ **सुषुप्ताविवेति** ॥ सुषुप्तौ सुखस्येवेत्यर्थः ॥ **तात्पर्यमाहेति** ॥ अम्बुवदिति सादृश्यार्थे वतिः । इदं च सादृश्यं ग्रहणस्य विवक्षितम् । अम्बुसादृश्यं च स्नेहवत्त्वेनैव । स्नेहः चिक्कणताऽम्बुनि प्रसिद्धा । अत्र तु मनोवृत्तेर्द्रवीभावाख्यचिक्कणतैव स्नेहो द्रष्टव्यः । एवं चाम्बुवत्स्थितं यद्ग्रहणं अम्बुसदृशं यद्ग्रहणं तद्वत् स्नेहयुक्तं यद्ग्रहणमित्यर्थः ॥ इयांस्तु विशेषः ॥ अम्बुनि स्नेहवत्त्वं स्नेहसमवायः । ग्रहणे तु स्नेहवत्त्वं नाम स्नेहसाहित्यम् । एवं चाम्बुवद्ग्रहणं स्नेहयुक्तं माहात्म्यज्ञानं भक्तिरिति यावत् । तथा चाम्बुवद्ग्रहणाभावात् भक्तिं विनेति यावत् । तथात्वमानन्दादिसादृश्यस्य सम्यगभिव्यक्तत्वं न भवतीति सूत्राक्षरार्थः । किन्तु स्नेहयुक्तज्ञानरूपभक्त्यैव सादृश्यं सम्यगभिव्यज्यत इति सूत्रफलितोऽर्थः । अत एवोत्तरत्र यदुक्तं स्नेहेन ज्ञानं भक्तिरिति फलितार्थमनुवदिष्यति । तद्वाक्ये स्नेहेन सहितं ज्ञानमित्यर्थो द्रष्टव्यः ॥ **सम्यगिति** ॥ सुप्तौ तु भक्तिरूपसाधनाभावात् किञ्चिदभिव्यक्तिरेव न सम्यगभिव्यक्तिरिति भावः ॥ **साऽपीति** ॥ सम्यगभिव्यक्तिरपीत्यर्थः ॥ **स्वयमेव** ॥ भक्तिं विनैव ॥ **अनादीति** ॥ अनादौ पूर्वकाले कदाचित् स्वयमेवाभिव्यक्तिसम्भवेन मुक्तत्वसम्भवादिदानीं संसारोपलम्भो न स्यादित्यर्थः । केचित्तु (तत्त्वप्रदीपिकाकाराः) सादृश्ये वतिमनङ्गीकृत्य तद्वत्त्वमेव वत्यर्थमुपादाय ग्रहणस्याम्बुवत्त्वायोगादम्बुवत्पदेन तन्निष्ठस्नेहमुपादाय ग्रहणस्य तदाधारत्वरूपतद्वत्त्वायोगात् तत्सहितत्वमेव तद्वत्त्वम् । तथा चाम्बुवद्ग्रहणम् । स्नेहेनेति तात्पर्यकथनं युक्तमित्याहुः ॥ **स्वां तनुमिति** ॥ जीवसम्बन्धिनीं तनुं ज्ञानानन्दादिरूपं जीवस्वरूपमित्यर्थः । तथा च वृणुत इत्यस्य भक्तत्वेन स्वीकरोतीत्यर्थो द्रष्टव्यः । वृणुत इति भक्तत्वसूचितं भक्तमेव हि वृणुत इति प्रसिद्धमित्युक्तत्वादिति ध्येयम् ॥ **स्फुटमिति** ॥ वृणुत इत्यस्य स्वीकरोतीत्यैवार्थसम्भवेन तनुं स्वामित्यस्य भगवान् स्वस्वरूपं जीवाय वृणुत इत्यर्थसम्भवेन सावकाशत्वादिति भावः ॥ **प्रयोजनवतीति** ॥ सम्यग्भगवत्सादृश्याभिव्यक्तिरूपप्रयोजनवतीत्यर्थः ।

## वाक्यार्थमञ्जरी

**भगवत्सादृश्यस्येति** ॥ ज्ञानानन्दादिना भगवत्सादृश्यस्येत्यर्थः । उक्तं पुंस्त्वादिवदित्यनेन ॥ **सुप्ताविवेति** ॥ मुक्तियोग्यजीवस्य भक्तिं विनैव स्वरूपस्य सुखस्य व्यक्तिवदित्यर्थः ॥ ॐ **अम्बुवदग्रहणात्तु न तथात्वम्** ॐ ॥ अम्बुवदग्रहणात्स्नेहयुक्तज्ञानाख्यभक्त्यभावात्तां विनेति यावत् । तथात्वं ज्ञानादिसादृश्यं तु नाभिव्यज्यत इत्यर्थः ॥ **तथा सतीति** ॥ स्वयमेव जायमानाभिव्यक्तेर्विलम्बे निमित्ताभावेनेतः पूर्वमेव तत्सम्भवादिति भावः ॥ **तत्स्वरूपमिति** ॥ जीवस्वरूपमित्यर्थः ।

॥ इति अम्बुवदधिकरणम् ॥ ११ ॥

## १२. वृद्धिह्रासाधिकरणम्

### ॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ २० ॥

तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभात्त्वं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् । एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान्प्रति च सामञ्जस्यं भवति ।

'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुता' इति च ब्राह्मे ॥

### तत्त्वप्रदीपिका

भक्त्यंशत्वेऽपि ज्ञानस्य पृथगुक्तिः स्नेहबहुमानात्मको भाव एवापरोक्षज्ञानसाधनमिति सूचयितुम् ।

'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन' इति च भगवद्वचनम् ॥

'पारोक्ष्येणैव तत्वं तु लोकं चापि विदन्ति ये ।
तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात् ।
नाऽपरोक्ष्येण च ज्ञानं तेपामुत्पद्यते कचित्' इति सद्गुणे ॥

तस्य च भक्तिज्ञानवैराग्यादेः साधनस्याधिकारिभेदेन वृद्धिह्रासभात्त्वमङ्गीकर्तव्यम् । ब्रह्मादीनामुत्तमानां मनुष्यादीनामधमानां चेति सर्वेपामधिकारिणां भक्तत्वेऽन्तर्भावात् । न हि मनुष्यादयो ब्रह्मादीनपेक्ष्यात्यल्पभक्तियुता अप्यभक्ता उच्यन्ते । अतो भक्तिर्वृद्धिह्रासवतीत्यङ्गीकारो युक्तः । भक्त्यादिसाधनतारतम्याङ्गीकार एव साधकेपु ब्रह्मादिषु मनुष्यादिषु च सामञ्जस्यमीश्वरस्य स्यादन्यथा न स्यादिति ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य भक्त्यनुसारिफलदानसमर्थनादस्ति शास्त्रादिसङ्गतिः । भक्त्यनुसारिफलाभावे तत्करणानुपपत्तेस्तदर्थतो निरूप्यते । प्रकृता भक्तिरेव विषयः । किं भक्तेष्वेक-प्रकारा वृद्धिह्रासवती वेति सन्देहः । उभयविधधर्मदर्शनं सन्देहबीजम् । एकप्रकारैवेति पूर्वः पक्षः ।

(तत्त्वप्रकाशिका)

**तत्फलस्य मुक्तत्वानन्दित्वादेः सर्वेषु साम्यात् । अन्यथा फलसाम्येऽपि साधनातिशयस्य वैयर्थ्यं केषाञ्चिदसम्यङ्मुक्तिर्वा स्यात् । न चैवम् । अतो भक्तिरेकप्रकारैवेति ।**

**सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ वृद्धीति ॥ अस्त्येव भक्त्यादेः साधनस्य साधकेषु वृद्धिह्रासवत्त्वम् । ब्रह्मादीनामपि भक्तत्वात्तेषां चोत्तमफलत्वादन्येषामल्पफलत्वादिति भावः । महदल्पफलत्वेऽपि ब्रह्मादीनामन्येषां कुतो भक्तितारतम्यमित्यत आह ॥ एवमिति ॥ यदि विषम-फलानां ब्रह्मादीनामितरेषां च भक्तितारतम्यं स्यात् तर्ह्येव विषमफलदातुर्भगवतो वैषम्यादिदोषाभावः स्यान्न तु समभक्तीनां फलवैषम्ये । अतः फलवैषम्याऽन्यथाऽनुपपत्त्या भक्तेरपि वैषम्यमिति भावः । फलसाधनवैरूप्ये युक्तिविरोधमुक्त्वा स्मृतिविरोधं च दर्शयति ॥ साधनस्येति ॥ आनन्द-श्रुतिर्वक्ष्यमाणा ।**

## गुर्वर्थदीपिका

तत्करणानुपपत्तेरित्यस्य विचित्रभक्तिकरणानुपपत्तेरित्यर्थः ।

## भावबोधः

**भक्त्यनुसारिफलदानेति** ॥ भक्तेः सामान्यतो फलहेतुत्वसिद्धौ एतद्विशेषस्य स्वानुसारिफल-हेतुत्वचिन्तावसर इत्यनन्तरसङ्गतिरिति भावः ॥ **अर्थत इति** ॥ ब्रह्मादिषु भक्तेः वृद्धिह्रासवत्त्वे प्रतिपादिते हि भगवतस्तदनुसारिफलदानमर्थात् सिद्ध्यति । भगवतो भक्त्यनुसारिफलदानं विना भक्तेर्वृद्धिह्रासवत्त्वानुपपत्तेरिति भावः ॥ **किं भक्तेष्वेकप्रकारेति** ॥ अत्र भक्तिः किं ब्रह्मादिभक्तेषु एकप्रकारोत वृद्धिह्रासवतीति चिन्ता । तदर्थं ब्रह्मादिमनुष्यान्तानां तारतम्यं भक्त्यादिसाधन-तारतम्यसाधकं न भवत्युत भवतीति । तदर्थं फलतारतम्यरूपहेतोर्व्याप्तिपक्षधर्मते न स्त उत स्त इति । मुक्तत्वादिगुणसाम्याद् ब्रह्मादीनां भक्त्यादिगुणसाम्यमिति न्यायविवरणानुसारेण पूर्वपक्ष-माह– **एकप्रकारैवेति** ॥ अनेन ब्रह्मादीनां भक्त्यादिगुणसाम्यमित्ययमंशो व्याख्यातः । तत्फल-स्येत्यनेन हेत्वंशश्च । आदिपदेननिर्दुःखादेर्ग्रहणम् । हेतोरप्रयोजकतापरिहारार्थमाह– **अन्यथेति** ॥ फलसाम्यमेवासिद्धमित्यत आह– **केषाञ्चिदसम्यगिति** ॥ मुक्तिः संसारनिवृत्तिरूपेत्यर्थः । **भक्त्यादेरिति** ॥ आदिपदेन ज्ञानोपासनादिकम् । यद्यपि भक्तेरेव वृद्धिह्रासभाक्त्वं साधनीयम् । अत एव सुधायामस्ति भक्तेर्वृद्धिह्रासभाक्त्वमित्येवोक्तम् । तथाप्यपरोक्षज्ञानादिसाधनतारतम्याभावे

(भावबोधः)

तत्साध्यमुक्तिजनकभक्तौ तारतम्यं न सिध्येदिति 'प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम्' इति वक्ष्यमाणं ज्ञानादिना तारतम्यं हेतुत्वेन दर्शयितुं भाष्ये ज्ञानादेरिति न्यायविवरणे भक्त्यादीत्युक्तमिति भावः । उत्तमानामित्यस्याभिप्रायमाह– **तेषां चोत्तमफलत्वादिति** ।। **अन्येषामल्पफलत्वादिति** ।। अनेन भाष्ये उत्तमानामित्यतः परं मनुष्योत्तमानामल्पानां चेतीति शेष इत्युक्तं भवति । अत एव सुधायाम् 'अन्तर्भावात्' इति सौत्रो हेतुः ब्रह्मादीनामस्मदादीनां च भक्तत्वेऽन्तर्भावादिति व्याख्यातः । तथा च ब्रह्मादीनामुत्तमानां मनुष्योत्तमानामल्पानां चेत्येवं सर्वेषां मुक्तियोग्यानां भक्तत्वेऽन्तर्भावादिति भाष्ययोजना सूचिता भवति । अनेन ब्रह्मादिमनुष्योत्तमान्ताः, तारतम्योपेतभक्तिज्ञानादिसाधनवन्तः, तारतम्योपेतानन्दादिफलवत्त्वादित्यनुमानमुक्तं भवति । व्याप्तिसाधनतर्कप्रदर्शनपरमेव भक्त्यादीति भाष्यम् । तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वमेवं भक्त्यादीति भाष्यमवतार्य व्याचष्टे– **महदल्पफलत्वेऽपीत्यादिना** ।। **स्मृतिविरोधं चेति** ।। उपलक्षणमेतत् । यथा यथा अधिकार इति न्यायविवरणोदाहृतश्रुतिविरोधोऽपि द्रष्टव्यः ।

## भावदीपः

**भक्त्यनुसारिफलदानेति** ।। आर्थिकाभिप्रायमेतत् । कण्ठतो भक्तितारतम्योक्तेः । एतेन पूर्वत्र भक्तेः सम्यक्स्वरूपाभिव्यक्तिफलकत्वोक्तावत्र तर्हि तदैकरूप्यात्साप्येकरूपैव स्यात् । अन्यथा तया केषाञ्चित्सम्यगभिव्यक्तिर्नेत्यापत्तेरिति शङ्कनात्सङ्गतिस्सूचिता । साक्षान्न श्रूयत इत्यत आह ।। **तदर्थत इति** ।। फलमत उपपत्तेरिति वक्ष्यमाणन्यायेन फलदातुरीश्वरस्य सामञ्जस्योपपत्तये भक्तितारतम्योक्तावर्थात्फलवैषम्येण भक्तिवैषम्यसिद्धेर्भक्त्यनुसारिफलमित्येतदर्थात्सिध्यतीत्यर्थः । एतेन 'तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्' इत्युक्तिरार्थिकाभिप्रायेति सूचितम् ।। **उभयविधेति** ।। लोके देवतान्तरभक्तेषु केषुचिदेकप्रकारायाः केषुचिद्द्विरूपाया भक्तेर्दर्शनमित्यर्थः । यद्वोभयविधवस्तूनां लोके दर्शनमित्यर्थः । मुक्तत्वादिगुणसाम्याद्ब्रह्मादीनां भक्त्यादिगुणसाम्यमित्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ।। **एकेति** ।। **अन्यथेति** ।। साधनतारतम्य इत्यर्थः ।। **फलसाम्येऽपीति** ।। साधनतारतम्य इति पूर्वेणान्वयः । **केषाञ्चित्** न्यूनभक्तिमताम् ।। **न चैवमिति** ।। जीवन्मुक्त्यविशेषापाताद्वा मुक्तेरपुमर्थत्वप्रसङ्गाद्वेति भावः ।। **अत इति** ।। तत्फलस्य मुक्तत्वादेः साम्यादित्यर्थः ।

(भावदीपः)

भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ भाष्ये ज्ञानस्य पृथगुक्तेर्भक्तिपदेन तदेकदेशस्नेहस्य ग्रह इति भावेनोक्तं भक्त्यादेरिति । भाष्ये पृथगुपादानं तु पूर्वसूत्रे स्नेहज्ञानयोः पृथगुक्तेः तदनुवृत्तिसूचनाय । तत्वप्रदीपे तु भक्त्यंशत्वेऽपि ज्ञानस्य पृथगुक्तिः स्नेहबहुमानात्मको भाव एवापरोक्षज्ञानसाधनमिति सूचयितुमित्युक्तम् । पूर्वस्मादम्बुवद्ग्रहणपदाभ्यां भक्तेरेवात्र प्रकृतत्वेऽपि सा वैराग्यादेरुपलक्षणमिति भावेनादिपदप्रयोगः । कियानादिपदार्थ इत्यनियमनिरासायाह ॥ **साधनस्येति** ॥ एतेन प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्चेत्यत्र ध्यानतारतम्येन तत्फलस्य दृष्टेः तारतम्योक्तिर्युक्ता ध्यानतारतम्यस्य काप्यनुक्तेरिति प्रत्युक्तम् । अत्रैव भक्त्युपलक्षितसाधनमात्रस्य तत्सिद्धेरिति । यावदधिकारमित्यत्र तु प्राचीनयोग्यताभेदनिबन्धना मुक्तौ तारतम्येनावस्थितिः । न तु साधकप्रयत्नैकनिबन्धनेत्युच्यत इति भेदः । तद्भक्तितारतम्येन तारतम्यं विमुक्तिगमित्यनुभाष्यसङ्क्षेपभाष्ये तु भूयस्त्वात्त्वनुबन्ध इति न्यायेन प्राधान्याभिप्राये ॥ **तेषां चोत्तमफलत्वादिति** ॥ सर्वभेदादन्यत्रेम इत्यत्र वक्ष्यमाणन्यायेनेति भावः । सामञ्जस्यशब्दार्थमाह ॥ **वैषम्यादिदोषाभाव इति** ॥ स च प्राक् वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यत्र युक्तिपादे समर्थित इति भावः ॥ **युक्तीति** ॥ ईश्वरसामञ्जस्यानुपपत्तिरूप-युक्तीत्यर्थः ।

## अभिनवचन्द्रिका

**तस्येति** ॥ परमात्मनो भक्त्यनुसारिफलदाने तत्र भक्तिः स्यात् । अन्यथा वैषम्यादिदोषवति विश्वासाभावात् भक्तिर्न स्यादिति भावः । नन्वत्र सूत्रे भक्त्यादितारतम्यमेव प्रतिपाद्यं दृश्यते । न तु भगवतो भक्त्यनुसारिफलदातृत्वमित्यत आह– **अर्थतो निरूप्यत इति** ॥ यद्यपि साक्षाद्भक्तितारतम्यमेवेह प्रतिपाद्यते, तथापि अर्थाद्भगवतो भक्त्यनुसारिफलदातृत्वेन सिध्यतीति भावः । ननु आर्थिकार्थेन भक्त्यनुसारिफलदानेनाऽस्य पादसङ्गतिः किमर्थमुच्यते । वाचनिकार्थेन भक्तितारतम्येनैव पादान्तर्भावः किं नोच्यत इति चेत्, न भक्त्युत्पादार्थं भगवन्महिमोक्तेरेव पादार्थत्वेन भक्तिस्वरूपनिरूपणमात्रस्याऽपादार्थत्वात् ॥ **एकप्रकारैवेति** ॥ ब्रह्मादीनां, मनुष्योत्त-मानां च, एकप्रकारेत्यर्थः ॥ **तत्फलस्येति** ॥ साक्षात् तत्फलस्य मुक्तत्वस्य, तत्प्रयुक्तानन्दाद्या-विर्भावस्य च, सर्वेषु साम्यादित्यर्थः । भक्तिफलं तावदावरणनिवृत्तिरेव । सा च सर्वेषु समा । अभावे तारतम्याभावात् । आनन्दतारतम्येऽपि न तदभिव्यक्त्यर्थं भक्तितारतम्यमपेक्षितम् ।

(अभिनवचन्द्रिका)

आनन्दाभिव्यक्तेरतत्कार्यत्वात् । तद्यथा समाभ्यां प्रदीपाभ्यां गृहद्वयवृत्त्यन्धकारविनाशे यत्र यावदस्ति तत्र तावत्स्वयमेवोपलभ्यते न तु अधिकपदार्थदर्शनाय प्रदीपतारतम्यमपेक्षितमिति भावः ॥ **अन्यथेति** ॥ **फलसाम्येऽपि** आवरणनिवृत्तिरूपस्य फलस्य साम्येऽपि । यदि साधन-तारतम्यमङ्गीक्रियते, तदा वक्तव्यम् मनुष्योत्तमेषु विद्यमाना भक्तिः सम्यगावरणनिवृत्तौ समर्था वा न वा । आद्ये ब्रह्मादिषु भक्तिभागवैयर्थ्यम् । इतरांशेनैव फलसम्भवात् । द्वितीये मनुष्यादीना-मसम्यङ्मुक्तिः स्यादित्यर्थः । वाशब्दो व्यवस्थितविकल्पार्थो बोध्यः ॥ **तेषां चोत्तमफलत्वादिति** ॥ मोक्षस्य अधमैः साम्येऽपि आनन्दरूपभक्ति फलस्यात्युत्तमत्वादित्यर्थः । आनन्दस्य मोक्षवत् साक्षाद्भक्तिफलत्वमेव, न तु आवरणनिवृत्तौ स्वयमेवानन्दाभिव्यक्तिर्भवति, 'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः' इति वचनादिति भावः । ननु अनन्दसाधनमपि भक्तिः न प्रधानसाधनम्, अपि तु भगवानेव । ततश्च भक्तिसाम्येऽपि स्वतन्त्रत्वात्प्रसन्नः परमात्मा महदल्पं च फलं पुरुष-वदेव दद्यात् । तद्यथा महाराजोऽमात्यादिभिः सेवितोऽपि केषाञ्चिदल्पम्, अन्येषां महत्फलं ददातीति शङ्कते **महदल्पफलत्वेऽपीति** ॥ एतेन फलतारतम्यस्य साधनतारतम्याधीनत्वात्फल-तारतम्यमङ्गीकृत्य, साधनतारतम्याक्षेपो न युक्त इति परास्तम् ॥ **वैषम्यादिदोषाभावः स्यादिति** ॥ अप्रामाणिकवैषम्याद्यप्रसक्तिः स्यादित्यर्थः । एतेन इतरेषां नरकादिहेतुत्वेन वैषम्यादेर्दोषत्वेऽपि न परमात्मनस्ते दोषाः तदहेतुत्वात् । अन्यथा सर्वसंहर्तुर्भगवतः ब्रह्महत्यादयोऽपि दोषाः स्युरिति परास्तम् । अप्रामाणिकत्वेनैव तेषां दोषत्वाङ्गीकारात् । प्रसिद्धं हि प्रामाणिकपरित्यागवत् अप्रामाणिकस्वीकारोऽपि दोष इति ।

पूर्वपक्षस्तु ब्रह्मादीनां मनुष्योत्तमानां च भक्तिरेकप्रकारैव । मोक्षरूपैकफलभागित्वात् । न हि यावत्या भक्त्या मनुष्योत्तमानां मोक्षो भवति तावत्या ब्रह्मादीनां मोक्षसम्भवे अधिकानुष्ठानाय प्रेक्षावतां प्रवृत्तिः सम्भवति । अथ न तावती भक्तिः तेषां मोक्षसाधनायालम् । हन्त तर्हि मनुष्योत्तमानामपि मुक्तिर्न स्यात्, पर्याप्तसाधनाभावात् । न हि दुःखाभावरूपे मोक्षे तारतम्य-मस्ति । येन भक्तितारतम्यमुपपन्नं स्यात् । अतो भक्तिरेकप्रकारैवेति ।

सिद्धान्तस्तु नैकप्रकारा सर्वेषां भक्तिः । किंतु वृद्धिह्रासवती । अन्यथा प्रमाणसिद्धं सर्वभक्तान्प्रति परमेश्वरस्य सामञ्जस्यं न स्यात् । 'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।

(अभिनवचन्द्रिका)

ब्रह्मादयः क्रमेणैव यथाऽऽनन्दः श्रुतौ श्रुत इति स्मृतेश्च । ननु भवेत्साधनतारतम्यं यदानन्दतारतम्यं स्यात् तदेव कुत इति चेत्– 'अथात आनन्दस्य मीमांसा भवति' इत्यादिश्रुतिसिद्धत्वात् । 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने' इति स्मृतेश्च । अतो भक्तेः फलानुसारेण तारतम्यसद्भावेन ईश्वरस्य विषमत्वाभावात् युक्ता तत्र भक्तिरिति सिध्दम् ।

## वाक्यार्थमुक्तावली

**भक्त्यनुसारीति** ॥ सामान्यतो भक्तिफलदातृत्वे समर्थित एव तदनुसारिफलदातृत्वविचारावसर इत्यनन्तरसङ्गतिः ॥ **तत्करणानुपपत्तेरिति** ॥ साधनाधिक्येऽपि साध्यस्याल्पत्वे तदल्पत्वेऽपि साध्यबाहुल्ये च तस्य साधनत्वाभावेन तत्करणानुपपत्तेस्तद्भक्त्यनुसारि फलं निरूप्यते इत्यर्थः । यद्वा भक्त्यनुसारिफलाभावे वैषम्यनैर्घृण्यवति भक्त्यनुत्पादात्तद्भक्त्यनुसारिफलं निरूप्यत इत्यर्थः । ननु ब्रह्मादिभक्तेः तारतम्यमत्र निरूप्यते न तु तदनुसारिफलं निरूप्यत इत्यर्थः । भगवन्महिमोक्तिपरपादान्तर्भावसिद्धये आर्थिकार्थस्यानुसरणीयत्वादिति भावः ॥ **किं भक्तेष्विति** ॥ अत्र भक्तिः किं ब्रह्मादिष्वेकप्रकारोत वृद्धिह्रासवतीति चिन्ता । तदर्थं तेषु फलतारतम्यं नास्त्युतास्तीति । सिद्धान्ते आनन्दादिगुणतारतम्योक्त्या सूचितं साम्यमित्युक्तन्यायं प्रदर्शयन्पूर्वपक्षमाह ॥ **तत्फलस्येति** ॥ मुक्तत्वं लिङ्गदेहात् । आनन्दित्वमलं बुद्धिगोचरपरानन्दवत्वम् । आदिपदेन 'निर्दुःखत्वं, निर्दुःखत्वं परानन्दो लिङ्गभेदः समा मता' इत्युक्तेरिति भावः । अस्त्वावरण-निवृत्त्यादिफलसाम्यं भक्तितारतम्यं च भवतु इत्यप्रयोजको हेतुरिति चेदेवं वदन् प्रष्टव्यः । आवरणनिवृत्त्यादिफलसाम्ये किमस्मदादौ विद्यमानाल्पा भक्तिः पर्याप्ता न वा । आद्ये दोषमाह ॥ **अन्यथेति** ॥ साध्यं विनापि फलसाम्याङ्गीकारे फलसाम्यं प्रति चास्मदादिनिष्ठभक्तिमात्रस्य पर्याप्तत्वे ब्रह्मादावस्मदधिकसाधनभागस्य वैय्यर्थ्यं स्यादित्यर्थः । फलसाम्यं प्रत्यस्मदादिनिष्ठा भक्तिर्न पर्याप्ता किन्त्वधिकाप्यपेक्षितेति द्वितीये दोषमाह ॥ **केषाञ्चिदिति** ॥ अस्मदादिनिष्ठभक्तेः फलसाम्यं प्रत्यपूर्णत्वात्केषाञ्चिदसम्यङ्मुक्तिः स्यादित्यर्थः । वाशब्दो व्यवस्थितविकल्पे । तर्कद्वयस्य विपर्यये पर्यवसानमाह ॥ **न चैवमिति** ॥ भावबोधे तु फलसाम्यमेवासिद्धमित्यत आह ॥ **केषाञ्चिदसम्यगिति** ॥ मुक्तिः संसारनिवृत्तिरूपेत्यर्थ इत्युक्तम् ।

सूत्रे अम्बुवद्ग्रहणपदोक्ता भक्तिरन्वेतीति भावेन भाष्ये तस्य च भक्तिज्ञानादेरित्युक्तम् । ज्ञानादेरित्यादिपदेन भक्तिसाधनवैराग्यस्य तत्साध्योपासनस्य च ग्रहणम् । यद्यपि भक्तेरेव

(वाक्यार्थमुक्तावली)

वृद्धिह्रासवत्वं साधनीयम् । अत एव सुधायां अस्ति भक्तेर्वृद्धिह्रासवत्वमित्येवोक्तं तथापि भक्ति-साधनसाध्यतारतम्याभावेऽधिकरणार्थमुक्तिफलतारतम्यं न सिद्ध्येदिति साधनान्तरस्यापि ग्रहणम् । ननु प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तमित्यत्रोपासनाभेदवद्दर्शनभेदस्य वक्ष्यमाणत्वात् अत्र भक्तेरित्येव वाच्यमिति चेन्न । वक्ष्यमाणानुकूल्याय भक्तितारतम्यमेवोपासनादितारतम्यसाधनमिति वक्तुं भाष्यकृता ज्ञानादिग्रहणोपपत्तेः । यद्वा तत्त्वप्रदीपोक्तदिशा भाष्ये भक्तिपदेन तदेकदेशस्त्रेह उच्यते । ज्ञानपदेन भक्त्यंशो ज्ञानं, आदिपदेन वैराग्यं, त्रयाणां पूर्वप्रकृतत्वात् तच्छब्देन पूर्वप्रकृतपरामर्शो-पपत्तिः, नापि वक्ष्यमाणस्य गतार्थतेति भावेन भाष्यार्थमाह ॥ **अस्त्येवेति** ॥ ब्रह्मादीनां सर्वेषामुत्तमानामित्यत्र ब्रह्मादीनामुत्तमानां मनुष्यादीनामधमानां चेति सर्वेषामित्यर्थं मत्वाह ॥ **ब्रह्मादीनामिति** ॥ उत्तमत्वमधमत्वं चानन्दादिफलानुभवकृतमिति भावेनाह **तेषां चेति** ॥ एतेन ब्रह्मादयो भक्त्यादिसाधनतारतम्यवन्तः आनन्दादिफलतारतम्यवत्वात् इत्यनुमानमुक्तं भवति । हेतोरप्रयोजकत्वमाशङ्क्य विपक्षे बाधकप्रदर्शकत्वेनैवमित्यादिभाष्यं व्याचष्टे **महदिति** ॥ सूत्रे एवमित्यस्य एवं सत्येवेत्यर्थः । परस्येत्यनुवर्तते । उभयसामञ्जस्यादित्यस्योभयान्प्रति सामञ्जस्य सम्भवादित्यर्थः । एवं सत्येवेत्यनेनान्यथासम्भवादित्यर्थः ॥ **फलसाधनवैरूप्य इति** ॥ फलमनेकरूपं साधनं तु नेत्येवं वैरूप्ये सूत्रोक्ततर्कबाधमुक्त्वा स्मृतिविरोधं स्वयं दर्शयतीत्यर्थः ।

## तत्त्वसुबोधिनी

**भक्त्यनुसारिफलदानेनेति** ॥ भक्तेः सामान्यतः फलहेतुत्वसिद्धावेव तद्विशेषस्यानुसारि-फलहेतुत्वचिन्तावसर इत्यनन्तरसङ्गतिरिति भावः ॥ **अर्थत इति** ॥ ब्रह्मादिषु भक्तेर्वृद्धिह्रासवत्वे प्रतिपादिते भगवतः तदनुसारिफलदानमर्थात्सिद्ध्यतीति भगवतो भक्त्यनुसारिफलदानं विना भक्तेर्वृद्धिह्रासवत्वानुपपत्तेरिति भावः । तत्र हेतुमाह ॥ **तत्फलस्येति** ॥ नन्वस्तु मुक्तानन्दित्वादेः साम्यम् । तथापि भक्तेः भिन्नप्रकारत्वं कुतो नेत्यप्रयोजकत्वमित्यत आह ॥ **अन्यथेति** ॥ फलसाम्येऽपि साधनस्य बहुप्रकारत्वे इत्यर्थः । फलसाम्यमेवासिद्धमित्याह ॥ **केषाञ्चिदिति** ॥ मुक्तिः संसारनिवृत्तिरूपेत्यर्थः । भक्त्यादेरित्यादिपदेन ज्ञानोपासनादिकम् । यद्यपि भक्तेरेव वृद्धिह्रासभाक्त्वं साधनीयम् । तथापि अपरोक्षज्ञानादिसाधनतारतम्याभावे तत्साध्यमुक्तिजनकभक्तौ तारतम्यं न सिद्ध्येदिति ज्ञानादितारतम्यं हेतुत्वेन दर्शयितुं भाष्ये ज्ञानादेरित्युक्तमिति भावः । अस्तु तेषां भाक्त्वं ततः किमित्यत आह ॥ **तेषां चेति** ॥ अनेनोत्तमानामिति भाष्याभिप्राय उक्तो

(तत्त्वसुबोधिनी)

भवति ॥ **अन्येषामिति** ॥ अनेनोत्तमानामित्यतः परं मनुष्योत्तमानामल्पानां चेत्येव सर्वेषां मुक्तियोग्यानां भक्तत्वेऽतर्भावादिति भाष्ययोजना सूचिता भवति । अनेन ब्रह्मादिमानुषोत्तमान्ताः ज्ञानिनः तारतम्योपेतभक्तिज्ञानादिसाधनवन्तः । तारतम्योपेतानन्दादिफलवत्वादित्यनुमानमुक्तं भवति । व्याप्तिसाधकतर्कप्रदर्शनपरमेव भक्त्यादीति भाष्यं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकमवतार्य व्याचष्टे ॥ **महदल्पेति** ॥ **फलसाधनवैरूप्येति** ॥ अधिकारिणां फलस्य वैषम्यं साधनसाम्यमिति । वैरूप्ये इत्यर्थः । तर्हि फलतारतम्यं कथं घटत इत्यत आह ॥ **फलेति** ॥

## वाक्यार्थविवरणम्

**उभयविधेति** ॥ आत्मत्वादिधर्मा एकप्रकाराः । ज्ञानाद्यास्तु धर्मा वृद्धिह्रासवन्त इत्यर्थः ॥ **मुक्तत्वेति** ॥ लिङ्गभङ्गरूपेत्यर्थः । ब्रह्मादीनां भक्तिरेकप्रकारा तत्फलभूतमुक्तत्वादेः समत्वादित्यनुमानेऽप्रयोजकतां परिहरति ॥ **अन्यथेति** ॥ फलसाम्ये साधनभूतभक्तेरेकप्रकारत्वाभावे । तद्विवरणं **फलसाम्येऽपीति** ॥ भक्तेरेकप्रकारत्वाभाव इति शेषः ॥ **वैय्यर्थ्यमिति** ॥ फलवैषम्ये स साधनातिशयो युक्तः । न चैवमिति भावः । फलसाम्यमेवासिद्धमिति चेत्तत्राह ॥ **केषाञ्चिदिति** ॥ **असम्यगिति** ॥ बहुभक्तिमतो बह्वीअल्पभक्तिमतोऽल्पा लिङ्गभङ्गरूपा मुक्तिः स्यादित्यर्थः । अनिष्टं चेदम् । ध्वंसे तारतम्यायोगादिति द्रष्टव्यम् ॥ **विपमफलदातुरिति** ॥ भक्तिरूपसाधनमपेक्ष्य तदनुसारेणेति शेषः ॥ **फलसाधनवैरूप्य इति** ॥ फलमविचित्रं भक्तिरूपं साधनं विचित्रमित्येवं फलसाधनयोर्वैचित्र्यावैचित्र्यरूपवैरूप्याङ्गीकारे भगवतो वैषम्यादिदोषप्राप्तिरूपयुक्तिविरोधमुक्त्वेत्यर्थः ।

## वाक्यार्थमञ्जरी

**अर्थत इति** ॥ ब्रह्मादिषु भक्तेर्वृद्धिह्रासवत्त्वरूपतारतम्ये प्रतिपादिते भगवतस्तदनुसारिफलदानमर्थात्सिद्ध्यति । भगवतो भक्त्यनुसारिफलदानं विना भक्तेर्वृद्धिह्रासवत्त्वनुपपत्तेरिति भावः ॥ **मुक्तत्वेति** ॥ संसारध्वंसवत्त्वेत्यर्थः । साम्यहेतोरप्रयोजकत्वं परिहरति ॥ **अन्यथेति** ॥ फलसाम्येऽपि साधनतारतम्याङ्गीकार इति भावः । साम्यमेवासिद्धमित्यत आह ॥ **केपाञ्चिदिति** ॥ **मुक्तिः संसारनिवृत्तिः** ॥ **ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवम् ॐ** ॥ भक्तेर्वृद्धिह्रासभाक्त्वं आधिक्यन्यूनतावत्त्वमस्ति । कुतः ? अन्तर्भावात् महाफलवतां

(वाक्यार्थमञ्जरी)

ब्रह्मादीनामल्पफलवतामस्मदादीनां भक्तत्वेऽन्तर्भावादेवं भक्तितारतम्याङ्गीकार एव परमात्मनः उभयान् ब्रह्मादीनस्मदादींश्च प्रति सामंजस्यात् समीचीनत्वसम्भवादित्यर्थः । वैरूप्ये वैषम्ये ।

## सूत्रभाष्यम्

कुतः ?—

**॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥**

**'अथात आनन्दस्य मीमांसा भवति' (तै.उ.२८) इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् । चशब्दात्स्मृतिः—**

**'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदन' इति ॥**

## तत्त्वप्रदीपिका

कुत एतदित्यत आह– **दर्शनाच्च** ॥ 'अथात आनन्दस्य मीमांसा भवति । युवा स्यात्साधु युवाऽऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य' इत्यारभ्य प्रवृत्तायां श्रुतौ मनुष्योत्तमादिब्रह्मपर्यन्तेषु मुक्तेषु सुखतारतम्यदर्शनात् । तच्च मुक्तसुखतारतम्यं दृश्यमानं तत्साधनभूतभक्तितारतम्यानङ्गीकारे तेषां नीचोच्चसुखप्रदस्येश्वरस्य सामञ्जस्यमुपरुणद्धि । तच्च प्रसाधितमधस्तादेव । अतो ब्रह्मादिषूत्तमेष्वधमेषु मनुष्यादिषु च सामञ्जस्यात्तस्यैवमेवाङ्गीकर्तव्यम् । अल्पसुखेष्वल्पा भक्तिरधिकसुखेष्वधिकेति । वक्ष्यति च यावदधिकारमानन्दतारतम्यमुपरि । न च वाच्यमानन्दश्रुतौ श्रूयमाणमानन्दतारतम्यं संसारिविषयमेव न मुक्तविषयमिति । तस्यामेव तत्र तत्र श्रोत्रियादिपदोदितेषु ब्रह्मपर्यन्तेषु सुखविशेषदर्शनात् । प्रपञ्चितश्चैतत् प्रमाणभूतप्रभूतगुणगुरुतममुखत एव बृहदारण्यकभाष्ये– 'अथात आनन्दस्य मीमांसा भवति' इत्यारभ्य मानुषादि ब्रह्मानन्तानां मुक्तानामानन्दे शतगुणविशेषश्चोच्यते । मुक्तानां चायं विशेषः । 'श्रोत्रियस्य चाकामहतस्य' इति विशेषणात् । न हि ब्रह्मादीनामनधिगतश्रुतित्वं केषाञ्चिदस्ति । न च ब्रह्माण एव केचनाकामहताः केचन कामहता इत्यत्र प्रमाणमस्ति । तस्माच्छ्रोत्रिय इति प्राप्तश्रुतिफलत्वान्मुक्त उच्यते । अकामहतत्वं च मुख्यं मुक्तस्यैव ।

(तत्त्वप्रदीपिका)

'प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वात्तथाऽकामहताः स्मृता' इति भारते ॥

'ब्रह्मणोऽपि ह्यमुक्तस्य नाकामहतता परा ।
यतस्तस्यापि कामस्य क्षणव्यवहितिर्भवेत्' इति च ॥

'कामहतता' कामेनोपद्रवः ।

'ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः ।
नास्त्यासम्बद्धतया भोगाभावात्कथञ्चन' इति च ॥

न चान्यस्य कस्यचिच्छ्रोत्रियस्य चाकामहतस्य ब्रह्मणा समं सुखं युज्यते ॥

'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्' इत्यादिना

श्रोत्रियत्वादिगुणैस्तस्यैवान्येभ्य आधिक्यात् ।

न चेन्द्रादिपदाद्विरक्तस्येन्द्रादिसमं सुखं ब्रह्मपदाद्विरक्तस्य तत्सममित्यत्र किञ्चिन्मानमस्ति । दृष्टवस्तुनि विराग आयासाभावात् । कश्चित्सुखविशेषोऽन्यत्र दृश्यते । ब्रह्मपदाद्विरक्तस्येन्द्रपदाद्विरक्तस्य च न हि कश्चिद्विशेषो दृश्यते । अतोऽनुभवविरुद्धत्वाद्यत्किञ्चिदेतत् ।

'नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः ।
निश्शेषदुःखहीनानां नित्यानन्दैकभोगिनाम् ।
अप्यानन्दे मिथो ह्युक्तस्त्वध्वर्यूणां श्रुतौ पृथक्' इति हरिवंशेष्विति ॥

'सर्वं श्रुतिफलं मुक्तैः प्राप्यं नान्येन केनचित् ।
अतस्तु श्रोत्रियो मुक्तो ह्यन्यः श्रोत्रियको भवेत् ॥
अदुःखत्वं च तस्यैव कामैरहतता तथा ।
यः कामितं न प्राप्नोति स कामहत उच्यते ॥
काम्याप्राप्तेश्च पापाश्च कामात्कामहतः स्मृतः ।
उभयस्याप्यभावेन मुक्तोऽकामहतो मतः' इति महामीमांसायाम् ॥

(तत्त्वप्रदीपिका)

'यस्तु साधुगुणैर्युक्तः तस्यैवाप्यखिला मही ।
त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः ॥
अधीतिफलपूर्णत्वादाध्यायक इतीरितः ।
स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः ॥
एकानन्दस्वरूपोऽसौ मानुपो मुक्त इष्यते ।
तस्माच्छतगुणानन्दा गन्धर्वा मानुषा मताः ॥
मुख्याः श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा ।
तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ॥
ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च' इत्यादि यजुस्संहितायाम् ॥

'यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते ॥
यस्य कामास्तु सत्याः स्युः स हि कामैर्न हन्यते ।
न ह्यकामः क्वचित्कश्चिद्दृश्यते श्रूयतेऽपि च' इति ब्रह्मण्डे ॥

स्पष्टं चानुव्याख्याने–

'तस्मादमुक्तसुखगं तारतम्यं पृथक्पृथक् ।
उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः ।
आहेति पेशलं तच्च चशब्दादेव गम्यते' इत्यादि ॥

'तस्येयं पृथिवीत्यादिपूर्वभावव्यपेक्षया ।
स एक इति संसारगतमुक्त्वा सुखं पुनः ॥
श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम् ।
संसारगाच्च संसारगतस्यैव शताधिकम् ।
मुक्तामुक्तस्य युक्तं स्यात् श्रुत्युक्तमभिवीक्षत' इति च ॥

## तत्त्वप्रकाशिका

ननु भवेदेतद्यदि ब्रह्मादीनां फलतारतम्यं स्यात् । तदेव कुत इत्याक्षिपति ॥ **कुत इति** ॥ एतत्परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ **दर्शनाच्चेति** ॥ अस्तु फलतारतम्यं तथापि भक्तिसाम्यं किं न स्यात् । फलतारतम्यस्य भक्तीतरसाधनतारतम्येनाऽपि सम्भवादित्यत आह ॥ **चशब्दादिति** ॥ समुच्चितेति शेषः । अतो भक्तेः फलाऽनुसारित्वाद्युक्ता सेति सिद्धम् ॥

## भावबोधः

आद्ये 'वृद्धिह्रासभाक्त्वम्' इति प्रतिज्ञायाम् 'अन्तर्भावात्' इत्यनेन हेतुमभिधाय तस्यो 'भयसामञ्जस्यात्' इत्यनेन व्याप्तिमुपपाद्य, द्वितीयेन पक्षधर्मताप्रतिपादनमिति सूत्रक्रमः ।

## भावदीपः

प्राचीनयोग्यतातारतम्येन फलतारतम्यस्य यावदधिकारमित्यत्र वक्ष्यमाणत्वेन तस्याव्यवच्छेद्यत्वात्साधनान्तरतारतम्यनिमित्तत्वमेव व्यावर्त्यमिति भावेनोक्तं भक्तीतरसाधनतारतम्येनापीति ॥ **अत इति** ॥ परमात्मसामञ्जस्यान्यथानुपपत्तिरूपयुक्त्या वृद्धिह्रासभाक्त्वादित्यर्थः ॥ **सा** भक्तिरित्यर्थः ।

## अभिनवचन्द्रिका

अम्बु तावत्प्रियतमेष्वभ्यर्हिततमं 'काममपः पिब आपोमयःप्राणः न पिबतो विछेत्स्यत' इति वचनात् । ततश्च अम्बु यथा स्नेहेन गृह्यते तथा स्नेहपूर्वकं परमात्मनोऽग्रहणात् ज्ञानाभावे तथात्वं परमात्मवत् आविर्भूतज्ञानानन्दादिमत्त्वं न भवतीत्यर्थः । तत्वप्रदीपिकायां तु – स्नेहात्मकत्वादम्बुनः तेन मानसं स्नेहं लक्षयति । **ग्रहणं** ज्ञानम् । अम्बुवद्ग्रहणं स्नेहसहितज्ञानमित्यर्थ इत्युक्तम् ॥ **तत्फलनिरूपणादिति** ॥ भक्तिव्यतिरेके आनन्दाविर्भावरूपफलव्यतिरेकोक्त्या तस्य भक्तिफलत्वमुक्तं भवतीति भावः । ज्ञानं तु न मुख्यं प्रयोजनमिति सिद्धमेव । प्रयोजनानुबन्धित्वादपि प्रयोजनं नेत्याह– **तेनापीति** ॥ **तथा सतीति** ॥ विनैव कारणं ज्ञानानन्दादेः सम्यगाविर्भावश्चेत् इतःपूर्वमेव तत्प्रसङ्गेन अनादिसंसारस्य एतत्कालपर्यन्तं प्रवाहो न स्यादित्यर्थः । अनादिकालमारभ्य अनुवृत्तस्य संसारस्य विच्छेदो न महता कारणेन विनोपपद्यते इति द्योतनायाऽनादित्वविशेषणम् ।

पूर्वपक्षस्तु न मोक्षो भक्तिफलम् । अनादिसिद्धत्वात् । नित्यानन्दज्ञानादिमत्वं हि मोक्षः, तच्च स्वरूपमेव । न च स्वरूपमागन्तुकं चेति सम्भवति । ततश्च मोक्षस्य भक्तिफलत्वाभावात् न तदर्थं भक्तिः कर्तव्या । नापि प्रयोजनान्तरमस्तीत्यकर्तव्यैव भक्तिरिति ।

सिद्धान्तस्तु भक्तिफलमेव मोक्षः । ज्ञानानन्दादेर्जीवस्वरूपत्वेन नित्य सिद्धत्वेऽपि तदाविर्भावस्य भक्तिसाध्यत्वात् । भक्त्यभावे तदभावनियमात् । न च भक्त्यभावे सुप्तौ ज्ञानानन्दा-

(अभिनवचन्द्रिका)

द्याविर्भावो दृष्ट इति वाच्यम् । आविर्भावमात्रसद्भावेऽपि सम्यगाविर्भावाभावात् । सम्यगाविर्भाव एव हि मोक्षशब्दार्थो भक्त्या साध्यः नादिर्भावमात्रम् । 'यमेवैष वृणते' इति श्रुतेः । 'महत्व-बुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते । तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम्' इति स्मृतेश्च । ततश्च मोक्षस्य भक्तिसाध्यत्वात्कर्तव्यैव तदर्थं भक्तिः । तदर्थत्वात्तन्महिमवर्णनं च सार्थकमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सूत्रं पठित्वेति** । विशेषदृष्टिरित्युक्तन्यायप्रदर्शकं सूत्रमिति भावः । फलतारतम्यस्येति शेषोक्तिः । ननु फलतारतम्यमङ्गीकृत्य भक्तिसाम्याङ्गीकारे फलतारतम्यस्य निर्निमित्तत्वेनेश्वरस्य वैषम्यादिदोषः स्यादित्युक्तमेवेत्यत आह ॥ **फलतारतम्यस्येति** ॥ ननु साधनतारतम्यस्याक्षिप्तत्वात् कथं भक्तीतरसाधनतारतम्येनापीत्युच्यत इति चेत्पुरुषनिष्ठसाधनमन्तरेणेश्वरनिष्ठमोक्षसाधनप्रसाद-तारतम्येनेति विवक्षितत्वात् । प्रसादतारतम्यस्यापि निर्निमित्तत्वे पुनर्वैषम्याद्यापत्तेः भक्त्यादि-तारतम्यस्यैवानुसरणीयत्वादिति सिद्धान्ताभिप्रायः । यावदधिकारमवस्थितिरित्युपासनापादीयाधि-करणस्यैतदाक्षेपेण प्रवृत्तेर्योग्यतारतम्यस्य साध्यत्वाच्च गतार्थतेति तत्रैव स्पष्टीकरिष्यामः । अत्राद्ये भक्तितारतम्येन फले तारतम्यस्य हेतूक्तिः । द्वितीये हेतोरसिद्धिपरिहार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अत्राद्ये सूत्रे वृद्धिह्रासभात्त्वमिति प्रतिज्ञायामन्तर्भावादित्यनेन हेतुमभिधाय तस्योभय-सामञ्जस्यादित्यनेन व्याप्त्युपपादनम् । द्वितीयेन पक्षधर्मताप्रतिपादनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

नन्वेवं तर्हि साधनस्योत्तमत्वेनेत्युक्तस्मृतिविरोधेन भक्तिसाम्ये फलतारतम्यमेव न स्यादित्यत आह ॥ **फलतारतम्यस्य भक्तीतरेति** ॥ तदनुसारेण फलदातृत्वाद् भगवतो वैषम्यादिदोष-प्राप्तिश्चेति भावः । भाष्ये लिङ्गभेदने जातेऽनन्तरं मुक्तावानन्दाभिव्यक्तिरूपमुक्तावपि विशेषो दृश्यत इत्यर्थः ।

## वाक्यार्थमञ्जरी

अथात इत्यादावानन्दरूपफलतारतम्यस्य श्रवणादित्यर्थः ।

॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

## १३. पालकत्वाधिकरणम्

सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरित्यत आह —

**॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ २२ ॥**

उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति ।

'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' (ऋ.सं. १०-३१-८) इति । चशब्दात्स्मृतिश्च ।

'सृष्टिं च पालनं चैव संहारं नियमं तथा ।
एक एव करोतीशः सर्वस्य जगतो हरिः' इति ब्रह्माण्डे ॥

### तत्त्वप्रदीपिका

ननु नास्य सृष्टिसंहारकर्तुः पालकत्वमहिमा विशेषतो वर्णनीयः । सृष्टानां यावन्न संहारस्तावत्स्थितेः स्वतः सिद्धत्वात् । अतो मुक्तौ संहाराभावादेव स्थितिसिद्धेर्न पालकत्वमित्यत आह ॥ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** ॥ 'अस्येदेषा सुमतिः पप्रथाने'त्यादिनोक्तं सृष्टिसंहारकर्तृत्वम् । 'अस्य' विष्णोः सकाशादेव 'एषा' ब्रह्मादीनां 'सुमति' रतिशयेन प्रथमानाऽभवत् । अनेन भूम्ना पूर्वतना 'गौरभवत्' । 'गौरिः' इति द्यौः पृथिवी चोच्यते । 'यतो द्यावापृथिवी' इति ह्युपरि च, 'अस्य' विष्णोर्महिम्नैव सुमतिर्गौश्चाभवदिति वा । 'असुरस्य' वायो 'र्योनौ' भार्यायां आभरणे 'आ' समन्ताद्भरणस्थाने ध्रियमाणा देवा 'अस्य' सकाशादेव 'सनीळाः' । अस्मादेव निलीयन्त इत्यर्थः । 'असुरो' वायुः । असुत्वेन रमणादसुषु रमणाच्च । 'महद्देवानामसुरत्वमेकम्' इति श्रुतिः ।

'या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम् ।
चतुर्मुखाभांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमौ' इति च ब्रह्माण्डे ॥

भगवन्महिम्नैव द्युभ्वाद्युत्पत्तिरित्यनङ्गीकारे तन्निर्माणेऽधिष्ठानादि किं स्यादित्याक्षेपः । 'किं स्विद्वनम्' इत्यादिरिति ह्यवोचत् । सम्यक्स्थायिन्यौ द्यावाभूमी 'इतः' समुद्भूतज्ञानादिके 'अहान्युपस'श्चेत एव जीर्णा अभूवन् । अनेन भूम्ना विष्णुनैतावदेव न, सर्वोत्तमादस्मादन्यदप्यस्ति ।

(तत्त्वप्रदीपिका)

**जगतो जलामृतादिभिरुक्षणशीलो द्यावापृथिवी बिभर्ति च । इत्थम्भूतस्य पूर्णानन्दस्य परमस्य स्मृत्या तद्वन्तो भूत्वा शरीरं 'पवित्रं कृणुत' । येन पवित्रीकरणेन 'हरितस्सूर्यम्' इव सदा भगवन्तमक्लेशेन 'प्रजा वहन्ति'ति । स आनन्दी शरीरं पवित्रं करोति ध्यातश्चेदिति वाऽर्थः ॥**

## तत्त्वप्रकाशिका

**अत्र ब्रह्मप्राप्तिसाधनभक्त्यर्थं तस्य विश्वपालकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । पालकत्व-गुणाभावे तत्र निरतिशयभक्त्यनुदयात्तत्समर्थनीयमेव । सृष्ट्यादिकं जगतो हरिः करोतीत्युक्तम् । तत्र जगत्पालनमेव विषयः । विष्णोर्युक्तमयुक्तं वेति सन्देहः । गुणानामपि युक्तायुक्तत्वदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ सृष्टीति ॥ न पालकत्वं भगवतोऽस्ति । सृष्टिसंहारकर्तृत्वात् । सत्यां च सृष्टौ यावत्संहारं जगत्स्थितेः स्वत एव सिद्धेः । संहर्तुरसंहाराऽतिरिक्तव्यापारस्य रक्षारूपस्यैवाऽयोगात् । अन्यस्य तु सृष्ट्यादिकर्तृत्वे सम्भवति निवारणादिव्यापारः । एतेनाऽवान्तरोपद्रवनिवारणं च प्रत्युक्तम् । तत्रापि स्वयं कर्तृत्वात् । अतः पालकत्वाऽभावेन महामहिमत्वाऽभावादयुक्ता तत्र निरतिशया भक्तिरिति भावः ।**

**सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्त्येव हरेः पालकत्वम् । यतो 'नैतावदेना' इति श्रुतिः प्रकृतस्य सृष्ट्यादिकर्तृत्वस्य तावन्मात्रत्वं निषिध्य ततोऽधिकं पालनमपि ब्रवीति । तेन ज्ञायते सृष्टिसंहारकर्तुरपि पालकत्वमिति भावः । अनेनेश्वरेण भवत्कार्यमेतावत्प्रागुक्तं सृष्टिसंहारमात्रं न भवति । किं त्वन्यदस्ति । किं तत् । स परो भक्ताऽभिलषितसेचको द्यावापृथिवी धत्ते पुष्णाति चेत्यर्थः । सृष्टिसंहारकर्तुरपि पालकत्वे स्पष्टस्मृतिं चाह ॥ चशब्दादिति ॥ समुच्चितेति शेषः । अनेन स्थितेः स्वतः सिद्धत्वं च परिहृतम् । धारणपोषणादेरुक्तत्वादिति । अतः पालनादिमहा-महिम्नि हरौ भक्तिर्युक्तेति सिद्धम् ।**

## गुर्वर्थदीपिका

यद्यपि 'पराभिध्यानादेव तु तल्लिङ्गात्स' इति परमात्मनस्संहारकत्वाक्षेपसमाधानयोः पूर्वमेव पालकत्वस्याप्याक्षेपः समाधानं च कर्तव्यम् । अवसरप्राप्तत्वात् । तथापि भक्तिपादेऽस्मिन् जगत्पालकत्ववर्णनेन जगदन्तःपातिनस्स्वस्यापि पालकत्वेन स्वोपकारित्वबुध्या तस्मिन् भक्त्यति-शयो भवति । अतो भक्त्युपयोगित्वात्पालकत्वाख्यमाहात्म्यमत्रैव चर्चितमिति ज्ञेयम् । सम्भवति

(गुर्वर्थदीपिका)

निवारणादिव्यापार इत्यस्य निवारणं संहर्तुः पुरुषस्य निवारणम् । आदिपदेन स्रष्टारं प्रति सृजेति याचनं गृह्यत इत्यर्थः । एतेनावान्तरोपद्रवनिवारणमित्यस्य संहारं विना पालनसमय एव ये उपद्रवा आन्तराः व्याध्यादयः बाह्याः शत्रुताडनादयः तन्निवारणमेव पालकस्य व्यापार इत्येतदप्येतेन संहर्तुस्स्वस्यासंहरणमेवालं न पृथक् स्थितौ प्रयत्न इति यथा न्यायः तथा स्रष्टुस्स्वस्य व्याध्यादीनामसर्जनमेवालं न पृथक् स्थितौ प्रयत्न इति न्यायस्यात्रापि साम्येन प्रत्युक्तमित्यर्थः । तत्रापि स्वयं कर्तृत्वादित्यस्य तत्र व्याध्याद्युत्पत्तौ बाह्यशत्रुताडनाद्युत्पत्तौ च स्रष्टुस्स्वस्यैव कर्तृत्वादित्यर्थः । अत्रापि सृष्टेरकरणमात्रेण चरितार्थत्वान्न पृथक्पालनं नाम व्यापार इति भावः । 'किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । सन्तस्थाने अजरे इत ऊती रहानि पूर्वी उषसो जरन्त' इति श्रुतौ 'सुपां सुलुक्' इति वचनात् न किंस्वित् कस्मात् आस जातं स वृक्षः वनादन्यत्र विद्यमानः एकैकवृक्षश्च कः कस्माज्जात इति प्रश्नः । किंस्वित्किंकारणकं वनमास । वृक्षोत वृक्षश्च कः किंकारणक आसेति वा । तसेः सार्वविभक्तिकत्वात् । 'पातालमेतस्य हि पादमूलम्' इत्यादिस्मृतेर्यतः ये भगवदवयवाः द्यावापृथिवी द्यावापृथिव्युपलक्षितचतुर्दशभुवनानि निष्टतक्षुः नितरां कृतवन्तः । तस्यामेव स्मृतौ 'लोमानि वृक्षौषधय' इत्युक्तेस्तेभ्य एव भगवदवयवेभ्यो वनवृक्षादिकं जातमित्युत्तरम् । इतः भूमेरारभ्याजरे नाशरहिते सन्तस्थाने सम्यक् ते तते वैकुण्ठस्थाने ऊतिर्व्याप्तिर्यस्य परमात्मनः तस्मात्पूर्वीः अहानि उषसश्च जरन्त जीर्णा आसन्निति सृष्टिसंहारयोः प्रस्तुतत्वात् प्रागुक्तं सृष्टिसंहारमात्रमित्युक्तम् । धारणपोषणादेरित्यत्र धारणं कूर्मरूपेण विश्वरूपेण धारणं पोषणमन्नपानादिना दिनेदिने अभिवर्धनमित्यर्थः ।

## भावबोधः

**पालकत्वेति ॥** अत्र पूर्वं यस्याः स्नेहादिरूपाया भक्तेस्तारतम्यं समर्थितं सा भक्तिरेव विष्णोः पालकत्वाभावे न सम्भवति । लोके स्वपालक एव स्नेहोत्पत्तिदर्शनादित्याक्षेपोत्थानात् पूर्वत्र 'दर्शनाच्च' इति सूत्रेण भक्तितारतम्यसाधकानन्दतारतम्ये श्रुतिस्मृतिरूपप्रमाणोपन्यासवदत्रापि विष्णोः पालकत्वे 'ब्रवीति च' इति श्रुतिस्मृत्योरुपन्यासाद्धाऽनन्तरसङ्गतिरिति भावः ॥ **विष्णोरिति ॥** अत्र जगत्पालनं विष्णोर्न युक्तमुत युक्तमिति चिन्ता । तदर्थं पालनसाध्या स्थितिः सृष्टिसंहारकर्त्रीश्वरव्यापारनिरपेक्षोत तत्सापेक्षेति । तदर्थं पालनमसंहारमात्ररूपमुत तद्व्यतिरिक्त-

(भावबोधः)

व्यापाररूपमिति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । कर्तृत्वादिति कर्तृत्वाभ्युपगमादित्यर्थः । अन्यथा पूर्वपक्षिणः सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वादिति भावः । अत एवोक्तमनुव्याख्याने 'सृष्टिनाशौ तदधीनौ' इति । 'ईरित इति स्वभावत्वात् स्थितेः' इति अनुव्याख्यानानुसारेण जगत्स्थितेरिति भाष्ये शेषोक्तिः । स्थितेरेव पालनरूपत्वादिति भावः । संहारकर्तुः संहारादन्यरक्षाया अयोग इति न्यायविवरणं मनसि निधायाह– **संहारकर्तुरिति** ॥ अयोगमेवोपपादयति– **अन्यस्य त्विति** ॥ प्रथमादिपदेन संहारः । द्वितीयेन तु सृष्टौ प्रेरणम् । तदुक्तं सुधायाम्– यदि खलु सृष्टिसंहारयोः कर्ताऽन्यः स्यात्तदोदासीनस्य तस्य सृष्टौ प्रेरणाद्यर्थं संहारे प्रवृत्तस्य निवारणार्थं च स्थितावीश्वरापेक्षा सम्भवेदिति ॥ **प्रागुक्तमिति** ॥ 'अस्येदेषा सुमतिः पप्रथाना' इत्यादिश्रुतौ प्रागुक्तमित्यर्थः । एनेत्यर्थोऽनेनेति 'सत्' इत्यस्य च भवमिति कार्यमिति चार्थद्वयम् । 'उक्षे' इत्यस्यार्थो भक्ताभिलषितसेचक इति । 'बिभर्ति' इत्यस्य धत्ते पुष्णाति चेत्यर्थद्वयम् ॥ **समुच्चिनोतीति** ॥ उपलक्षणमेतत् । स सृजतीत्यादिन्यायविवरणोक्तमपि समुच्चितमिति ज्ञातव्यम् ॥ **धारणपोषणादेरिति** ॥ अनेनान्नदानाद्युपपत्तेरिति न्यायविवरणमप्युक्तार्थं भवति ।

## भावदीपः

**विश्वपालकत्वेति** ॥ पालनरूपव्यापारान्तरसद्भावोक्त्येति भावः । एतेन पूर्वत्र हीश्वरस्य सौख्यदानं प्रस्तुतं न केवलं साधूनां ब्रह्मादीनामेव केषाञ्चित्सौख्यदानं किन्तु विश्वेषामिति वा न केवलं मुक्तावेव किं त्वन्यदापीति वा साधनादवान्तरसङ्गतिः सूचिता । एतेनैतदपि निरस्तम् । यत्पूर्वत्रेश्वरस्य तारतम्येन सौख्यदानमभिमतं तदयुक्तम् । सृष्टिसंहारान्यपालनस्येवा विद्यानिवृत्त्यन्यानन्ददानस्याभावात् । ध्वंसरूपाविद्यानिवृत्तौ च न तारतम्यं येन भक्तितारतम्यं सिध्येदिति । अत्रत्यसिद्धान्तन्यायेन सृष्टिसंहारान्यपालनस्येवाविद्यानिवृत्त्यन्यस्यानन्ददानस्य सिद्धेः । अत एव च पूर्वत्र वृद्धिह्रासभाक्त्वं फलवशादित्यनुक्तवान्तर्भावादुभयसामञ्जस्यादेवमित्युक्तम् । अत एव चास्य तदनन्तरं प्रपञ्चः । विवृतमेतत् 'आनन्ददत्वमानन्ददश्च मुक्तानामित्यत्र जिज्ञासाधिकरणसुधायाम् । प्रदर्शितं च प्रागस्माभिरानन्दमयनये । अप्रसक्तचिन्तां निराह ॥ **सृष्टीति** ॥ **उक्तमिति** ॥ जन्मादिसूत्र इत्यर्थः ॥ **गुणानामपीति** ॥ ज्ञानबलैश्वर्यादिगुणानां मध्ये चैत्रादौ केषाञ्चिद्युक्तत्वदर्शनं केषाञ्चिदयुक्तत्वदर्शनमित्यर्थः । भाष्येऽस्य न पालकत्वं स्वतः सिद्धेरित्येव पूर्तौ

(गुर्वर्थदीपिका)
निवारणादिव्यापार इत्यस्य निवारणं संहर्तुः पुरुषस्य निवारणम् । आदिपदेन स्रष्टारं प्रति सृजेति याचनं गृह्यत इत्यर्थः । एतेनावान्तरोपद्रवनिवारणमित्यस्य संहारं विना पालनसमय एव ये उपद्रवा आन्तराः व्याध्यादयः बाह्याः शत्रुताडनादयः तन्निवारणमेव पालकस्य व्यापार इत्येतदप्येतेन संहर्तुस्स्वस्यासंहरणमेवालं न पृथक् स्थितौ प्रयत्न इति यथा न्यायः तथा स्रष्टुस्स्वस्य व्याध्यादीनामसर्जनमेवालं न पृथक् स्थितौ प्रयत्न इति न्यायस्यात्रापि साम्येन प्रत्युक्तमित्यर्थः । तत्रापि स्वयं कर्तृत्वादित्यस्य तत्र व्याध्याद्युत्पत्तौ बाह्यशत्रुताडनाद्युत्पत्तौ च स्रष्टुस्स्वस्यैव कर्तृत्वादित्यर्थः । अत्रापि सृष्टेरकरणमात्रेण चरितार्थत्वान्न पृथक्पालनं नाम व्यापार इति भावः । 'किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । सन्तस्थाने अजरे इत ऊती रहानि पूर्वी उषसो जरन्त' इति श्रुतौ 'सुपां सुलुक्' इति वचनात् न किंस्वित् कस्मात् आस जातं स वृक्षः वनादन्यत्र विद्यमानः एकैकवृक्षश्च कः कस्माज्जात इति प्रश्नः । किंस्वित्किंकारणकं वनमास । वृक्षोत वृक्षश्च कः किंकारणक आसेति वा । तसेः सार्वविभक्तिकत्वात् । 'पातालमेतस्य हि पादमूलम्' इत्यादिस्मृतेर्यतः ये भगवदवयवाः द्यावापृथिवी द्यावापृथिव्युपलक्षितचतुर्दशभुवनानि निष्टतक्षुः नितरां कृतवन्तः । तस्यामेव स्मृतौ 'लोमानि वृक्षौषधय' इत्युक्तेस्तेभ्य एव भगवदवयवेभ्यो वनवृक्षादिकं जातमित्युत्तरम् । इतः भूमेरारभ्याजरे नाशरहिते सन्तस्थाने सम्यक् ते तते वैकुण्ठस्थाने ऊतिर्व्याप्तिर्यस्य परमात्मनः तस्मात्पूर्वीः अहानि उषसश्च जरन्त जीर्णा आसन्निति सृष्टिसंहारयोः प्रस्तुतत्वात् प्रागुक्तं सृष्टिसंहारमात्रमित्युक्तम् । धारणपोषणादेरित्यत्र धारणं कूर्मरूपेण विश्वरूपेण धारणं पोषणमन्नपानादिना दिनेदिने अभिवर्धनमित्यर्थः ।

## भावबोधः

**पालकत्वेति ॥** अत्र पूर्वं यस्याः स्नेहादिरूपाया भक्तेस्तारतम्यं समर्थितं सा भक्तिरेव विष्णोः पालकत्वाभावे न सम्भवति । लोके स्वपालक एव स्नेहोत्पत्तिदर्शनादित्याक्षेपोत्थानात् पूर्वत्र 'दर्शनाच्च' इति सूत्रेण भक्तितारतम्यसाधकानन्दतारतम्ये श्रुतिस्मृतिरूपप्रमाणोपन्यासवदत्रापि विष्णोः पालकत्वे 'ब्रवीति च' इति श्रुतिस्मृत्योरुपन्यासाद्वाऽनन्तरसङ्गतिरिति भावः ॥ **विष्णोरिति ॥** अत्र जगत्पालनं विष्णोर्न युक्तमुत युक्तमिति चिन्ता । तदर्थं पालनसाध्या स्थितिः सृष्टिसंहारकर्त्रीश्वरव्यापारनिरपेक्षोत तत्सापेक्षेति । तदर्थं पालनमसंहारमात्ररूपमुत तद्व्यतिरिक्त-

(भावबोधः)

व्यापाररूपमिति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । कर्तृत्वादिति कर्तृत्वाभ्युपगमादित्यर्थः । अन्यथा पूर्वपक्षिणः सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वादिति भावः । अत एवोक्तमनुव्याख्याने 'सृष्टिनाशौ तदधीनौ' इति । 'ईरित इति स्वभावत्वात् स्थितेः' इति अनुव्याख्यानानुसारेण जगत्स्थितेरिति भाष्ये शेषोक्तिः । स्थितेरेव पालनरूपत्वादिति भावः । संहारकर्तुः संहारादन्य-रक्षाया अयोग इति न्यायविवरणं मनसि निधायाह– **संहारकर्तुरिति** ॥ अयोगमेवोपपादयति– **अन्यस्य त्विति** ॥ प्रथमादिपदेन संहारः । द्वितीयेन तु सृष्टौ प्रेरणम् । तदुक्तं सुधायाम्– यदि खलु सृष्टिसंहारयोः कर्ताऽन्यः स्यात्तदोदासीनस्य तस्य सृष्टौ प्रेरणाद्यर्थं संहारे प्रवृत्तस्य निवारणार्थं च स्थितावीश्वरापेक्षा सम्भवेदिति ॥ **प्रागुक्तमिति** ॥ 'अस्येदेषा सुमतिः पप्रथाना' इत्यादिश्रुतौ प्रागुक्तमित्यर्थः । एनेत्यर्थोऽनेनेति 'सत्' इत्यस्य च भवमिति कार्यमिति चार्थद्वयम् । 'उक्षे' इत्यस्यार्थो भक्ताभिलषितसेचक इति । 'बिभर्ति' इत्यस्य धत्ते पुष्णाति चेत्यर्थद्वयम् ॥ **समुच्चिनोतीति** ॥ उपलक्षणमेतत् । स सृजतीत्यादिन्यायविवरणोक्तमपि समुच्चितमिति ज्ञातव्यम् ॥ **धारणपोषणादेरिति** ॥ अनेनान्नदानाद्युपपत्तेरिति न्यायविवरणमप्युक्तार्थं भवति ।

## भावदीपः

**विश्वपालकत्वेति** ॥ पालनरूपव्यापारान्तरसद्भावोक्त्येति भावः । एतेन पूर्वत्र हीश्वरस्य सौख्यदानं प्रस्तुतं न केवलं साधूनां ब्रह्मादीनामेव केषाञ्चित्सौख्यदानं किन्तु विश्वेषामिति वा न केवलं मुक्तावेव किं त्वन्यदापीति वा साधनादवान्तरसङ्गतिः सूचिता । एतेनैतदपि निरस्तम् । यत्पूर्वत्रेश्वरस्य तारतम्येन सौख्यदानमभिमतं तदयुक्तम् । सृष्टिसंहारान्यपालनस्येवा विद्यानिवृत्त्य-न्यानन्ददानस्याभावात् । ध्वंसरूपाविद्यानिवृत्तौ च न तारतम्यं येन भक्तितारतम्यं सिध्येदिति । अत्रत्यसिद्धान्तन्यायेन सृष्टिसंहारान्यपालनस्येवाविद्यानिवृत्त्यन्यस्यानन्ददानस्य सिद्धेः । अत एव च पूर्वत्र वृद्धिह्रासभाक्त्वं फलवशादित्यनुक्त्वान्तर्भावादुभयसामञ्जस्यादेवमित्युक्तम् । अत एव चास्य तदनन्तरं प्रपञ्चः । विवृतमेतत् 'आनन्ददत्वमानन्ददश्च मुक्तानामित्यत्र जिज्ञासाधिकरणसुधायाम् । प्रदर्शितं च प्रागस्माभिरानन्दमयनये । अप्रसक्तचिन्तां निराह ॥ **सृष्टीति** ॥ **उक्तमिति** ॥ जन्मादिसूत्र इत्यर्थः ॥ **गुणानामपीति** ॥ ज्ञानबलैश्वर्यादिगुणानां मध्ये चैत्रादौ केषाञ्चिद्युक्तत्व-दर्शनं केषाञ्चिदयुक्तत्वदर्शनमित्यर्थः । भाष्येऽस्य न पालकत्वं स्वतः सिद्धेरित्येव पूर्तौ

(भावदीपः)

शेषोक्तिस्तदुपपादिकेति भावेन तदुपयोगमाह ॥ **सृष्टिसंहारकर्तृत्वादिति** ॥ एतस्य स्वत एव सिद्धेरित्यत्र हेतुतां व्यनक्ति ॥ **सत्यां चेति** ॥ स्वत एव पुंव्यापारं विनैव स्वतस्सिद्धेरिति भाष्यस्थो हेतुरपि न साक्षान्न पालकत्वमित्यत्र हेतुरपि तु संहारकर्तृरसंहारादन्यरक्षाया अयोग इत्यन्यत्रोक्तार्थे हेतुः । स एव च साक्षाद्धेतुरिति भावेनाह ॥ **संहर्तुरिति** ॥ **असंहारातिरिक्तस्येति** ॥ संहाराभावातिरिक्तस्य संहारनिवारणरूपस्यायोगादसंहाररूपरक्षायाश्च स्वतस्सिद्धेरित्यर्थः । स्वतस्सिद्धिं सृष्टिसंहारकर्तृत्वयोरुपपाद्योपपादकभावं व्यनक्ति ॥ **अन्यस्य त्विति** ॥ **निवारणादीति** ॥ संहारनिवारणं सृष्टिप्रेरणं चेत्यर्थः ॥ **अत इति** ॥ रक्षारूपव्यापारस्यैवायोगादित्यर्थः ॥

साध्यमध्याहृत्य तत्र हेतुत्वेन सूत्रभाष्ये व्याचष्टे. ॥ **अस्त्येवेति** ॥ **प्रकृतस्येति**. ॥ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति गुणेन समासनिषेधेऽपि तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशाज्ज्ञापकात्प्रकृतैतावत्त्वमिति समास इति भावः । अधिकमिति भाष्यानुवादः । पालनमपीति व्याख्या । भाष्योक्तश्रुत्यर्थमाह ॥ **अनेनेति** ॥ **एनेत्यस्यार्थोऽयम्** ॥ भवत्कार्यमिति शेषः । यद्वा एना एनदित्यर्थः । तस्य व्याख्याऽनेनेश्वरेण भवत्कार्यमिति ॥ **प्रागुक्तमिति** ॥ अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः । अस्य सनीळा असुरस्य योनौ समान आभरणे बिभ्रमाणाः । किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । संतस्थाने अजरे इत ऊती अहानि पूर्वीरुषसो जरन्त । नैतावदेनेति पूर्ववाक्योक्तमित्यर्थः । आ नो देवानामिति पूर्वत्र प्रकृतब्रह्मादिदेवानाम् । एषा पप्रथाना अतिशयेन प्रथमाना । सुमतिः शोभनबुद्धिः । अस्येत् अस्यैव प्रकृतविष्णोरेव सकाशादभवत् । भूमना भूम्ना । अस्येत्यस्य विपरिणामेनान्वयः । अनेन भूम्ना परमेश्वरेण । पूर्व्या पूर्वतनी गौरभवत् । गौरिति द्यौः पृथिवी चोच्यते । यतो द्यावापृथिवी निष्टतक्षुरित्युपरि श्रवणात् । असुरस्य असुषु रममाण इति व्युत्पत्त्या वायोः योनौ भार्यायाम् । समाने साधारणे । आभरणे आसमन्ताद्भरणस्थाने । बिभ्रमाणाः ध्रियमाणाः देवाः । अस्य सकाशादेव । सनीळाः अस्मादेव निलीयन्ते । या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम् । चतुर्मुखाभांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमाविति ब्रह्माण्डस्मृतेः वायुभार्यया ध्रियमाणत्वं देवानां प्रसिद्धम् । भगवन्महिम्नैव द्युभ्वाद्युत्पत्तिरित्यनंगीकारे तन्निर्माणे अधिष्ठानादिकं स्यात् । न च तदस्तीति भावेनाधिष्ठानादिकमाक्षिपति । **किंस्विद्वनमित्यादिना** । सन्तस्थाने सम्यगवस्थायिन्यौ । अजरे द्यावाभूमी । इत ऊती । अस्मादेवोद्भूतज्ञानादिके । अहानि । पूर्वीः

(भावदीपः)

पूर्व्यः । उषसश्च यतो हरेः सकाशात् अजरन्त जीर्णा अभवन्निति पूर्वमन्त्रार्थस्तत्वप्रदीपोक्तो ध्येयः । उक्षा स इत्यत्र स इत्यस्यानुवादेनार्थमाह ॥ **स पर इति** ॥ उक्षेत्यस्यार्थो भक्तेत्यादि उक्ष सेचन इति धातोः । बिभर्तीत्यस्यार्थो धत्त इति । अन्यथा सृष्ट्यनन्तरं पुरुषेण धारणाभावे स्वरूपस्रवणप्रसङ्गः । 'यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेति' इति श्रुतेरिति भावः । अन्नदानाद्युपपत्तेश्चेति न्यायविवरणोक्तिमनुरुध्याह ॥ **पुष्णाति चेति** ॥ त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहंतीत्युत्तरार्धस्य तु इत्थंभूतस्य परस्य स्वधावान् स्वधावन्तो भूत्वा स्मृतिमन्तो भूत्वा त्वचं शरीरं पवित्रं कृणुत कुरुत । यद्वा स्वधावान् सुखवान् स परः परमात्मा त्वचं शरीरं पवित्रं कृणुत करोति । ध्यातश्चेदित्यर्थः । येन पवित्रीकरणेन हरितः दिशः सूर्यमिव सदा भगवन्तमक्लेशेन प्रजा वहन्तीत्यर्थः । स्मृत्युक्तेरुपयोगमाह ॥ **स्पष्टेति** ॥ **अनेनेति** ॥ श्रुतिस्मृतिकथनेनेत्यर्थः ॥ **पोषणादेरिति** ॥ तदीयदुरदृष्टप्राप्तावान्तरक्षुद्रोपद्रवनिवारणादिरादिपदार्थः ॥ **अत इति** ॥ धारणादिरूपपालनव्यापारवत्त्वे श्रुतिस्मृतिसत्त्वादित्यर्थः ।

## अभिनवचन्द्रिका

**सृष्टिसंहारकर्तृत्वादिति** ॥ ननु किमिदं हेतुद्वयं सृष्टिकर्तृत्वात्, संहारकर्तृत्वादिति, आहोस्वित्सृष्टिसंहारकर्तृत्वादिति विशिष्टं हेतुः । नाद्यः सृष्टिकर्तुरपि पालकत्वस्य, तथा वनस्पत्यादिसंहारकस्यापि प्रागुदकदानादिना पालकत्वस्य दर्शनेन व्यभिचारात् । अत एव न द्वितीयः कृषीवलादौ सस्योत्पत्तिविनाशकर्तृत्वेऽपि पालकत्वदर्शनात् । न च नासौ पालक इति शक्यते वक्तुम् । गोगवयादिभ्यस्तद्रक्षणस्याऽनुभवसिद्धत्वादिति चेत्, न ब्रूमो वयं पालकत्वाभावे सृष्टिसंहारकर्तृत्वं हेतुरिति । येनोक्तदोषः स्यात् । किंनाम 'जगत्स्थितेः स्वत एव सिद्धेः' इति वक्ष्यमाणहेतोरुपपादकमिति ॥ **स्वत एव सिद्धेरिति** ॥ उत्पत्त्युत्तर भाविनाशात्प्राग्भाविकालसम्बन्धस्यैव स्थितित्वेन तस्य कालमहिम्नैव सिद्धेरित्यर्थः ॥ अन्यस्य **सृष्ट्यादिकर्तृत्व इति** ॥ आदिशब्देन संहारग्रहणम् । अन्यस्य उत्पन्नपदार्थविनाशहेतुभूतार्थान्तरसर्जकत्वे, साक्षाद्विनाशकत्वे वा, तन्निवारणाय व्यापारोऽन्यस्य सम्भवति । स्वस्यैव तथात्वे तु न निवारणव्यापारः सम्भवतीति भावः । एतेन अन्यस्य संहारकर्तृत्वे, सम्भवति निवारणादिव्यापार इति वक्तव्यम् । संहारनिवारणस्यैव स्थित्युपयोगित्वात्, न तु सृष्टिग्रहणं तन्निवारणस्य स्थित्यनुपयोगादिति

(अभिनवचन्द्रिका)

परास्तम् । बिभर्तीत्येतव्द्याचष्टे **धत्ते पुष्णाति चेति** ॥ भृञ्धातोर्डु भृञ् धारणपोषणयो:' इत्यर्थद्वयश्रवणादिति भाव: ॥ **अनेनेति** ॥ 'उक्षा स द्यावापृथिवी बिभर्ति'ति श्रुतिग्रहणेनेत्यर्थ: ।

पूर्वपक्षस्तु नेश्वर: पालक: जगत्सृष्ट्वा स्थितस्येश्वरस्य विनाशप्रवृत्त्यभावमात्रेण कालविशेषसम्बन्धरूपस्थितिसम्भवेन पालनरूपतव्द्यापारानपेक्षणात् । न चावान्तरोपद्रवनिरासाय ईश्वरव्यापारोऽपेक्षित इति वाच्यम् । ईश्वरस्यैवावान्तरोपद्रवकर्तृत्वेन तदकरणमात्रेण समीहितसिद्धे: । अन्यस्य हि उपद्रवादिकर्तृत्वे तन्निवारणादिव्यापारत्त्वरूपं पालकत्वमन्यस्य सम्भवति । न चेश्वरादन्य: संहारकर्ता येन तन्निवारणेनेश्वरस्य पालकत्वं स्यात् । विरोधाभावेन स्वस्य स्वनिवारकत्वायोगात् । ततश्च पालकत्वाभावेन महामहिमत्वाभावात् न तत्र भक्तिरिति ।

सिद्धान्तस्तु भवत्येवेश्वर: पालक: 'नैतावदेनापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इति श्रुत्या सृष्टिसंहारमात्रकर्तृत्वं प्रतिषिध्य पालकत्वस्याप्यभिधानात् । 'सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीश: सर्वस्य जगतो हरि:' इति स्मृतेश्च । न चोपद्रवसंहारविलम्बमात्रेणैव स्थितिसिद्धे: न तदर्थमीश्वरापेक्षेति वाच्यम् । सर्वस्य धारणार्थं चेतनानामन्नपानाद्यर्थमीश्वरव्यापारस्यावश्यकत्वात् । अत: पालनादिमहामहिम्नि हरौ भक्तिर्युक्तेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**निरतिशयभक्त्यनुदयादिति** ॥ ब्रह्मशिवादौ मनसाप्यसम्भाव्यमानगुणातिशयज्ञानाद्धि निरतिशया भक्तिरुदेति । पालकत्वरूपमहामहिमाभावे तद्विशेषज्ञानायत्तभक्त्याधिक्यायोगादिति भाव: । एतेन भक्तितारतम्यं पूर्वं निरूपितम् । तच्च माहात्म्यज्ञानतारतम्यायत्तम् । माहात्म्यविशेषाभावे तदयोगादिति तदाक्षेपेणोत्थानादनन्तरसङ्गतिरिति चोक्तं भवति । अतो जगत्पालकत्वं विष्णोरयुक्तमुत युक्तमिति चिन्ता । तदर्थं जगत्स्थिति: ईश्वरव्यापारमन्तरेण स्वत एव भवति न वेति । तदर्थं संहर्तुरसंहारव्यतिरिक्तो रक्षारूपव्यापारो नास्त्युतास्तीति । ननु सृष्टिसंहारकर्तृत्वमेवास्येति भाष्यमयुक्तम् । सृष्टिसंहारकर्तृत्वाभ्युपगमस्यापि व्यर्थत्वात् । स्वत: सिद्धेरित्यत्रास्येत्यप्रतीते: स्थितेरित्यध्याहारेऽपि स्वभाववादाश्रयणस्य सृष्टिसंहारयोरपि साम्येन तत्कर्तृत्वाभ्युपगमानुपपत्ते: इत्यतो योग इति न्यायप्रदर्शकं पूर्वपक्षभाष्यं 'सृष्टिनाशौ तदधीनावितीरितौ । स्वभावत्वात्स्थितेर्नैतदपेक्षेति न युज्यते' इत्यनुव्याख्यानं मनसि निधाय व्याचष्टे ॥ **न**

(वाक्यार्थमुक्तावली)

**पालकत्वमिति** ॥ कुतः स्वतःसिद्धेरित्यंशमध्याहारेण योजयति ॥ **तत्स्थितेरिति** ॥ कथं स्थितेः स्वतः सिद्धिरित्यतस्तदुपपादनाय सृष्टिसंहारकर्तृत्वाभ्युपगम इति भावेनाह ॥ **सृष्टिसंहार-कर्तृत्वादिति** ॥ सृष्टिसंहारकर्तृत्वमात्रेण जगत्स्थितेः कथं स्वत एव सिद्धिरित्यत आह ॥ **सत्यां सृष्टौ यावत्संहारमिति** । अयमाशयः । ईश्वर एव हि विश्वस्य सृष्टिसंहारयोः कर्ता नान्य इत्यभ्युपगतम् । तथा च सृष्ट्वा यावन्न संहरेत्तावत्संस्थितिः स्वभावसिद्धैव न परव्यापारमपेक्षत इति । ननु सृष्ट्वा संहारपर्यन्तमीश्वरो न रक्षतीति परव्यापारोऽपेक्षत इत्यतोऽयोग इत्युक्तन्यायं विवृणोति ॥ **संहर्तुरिति** ॥ अयोगमेवोपपादयति ॥ **अन्यस्य त्विति** ॥ प्रथमादिपदेन संहारः । द्वितीयेन सृष्टौ प्रेरणम् । तदुक्तं सुधायां । यदि खलु सृष्टिसंहारयोः कर्ताऽन्यः स्यात्तदोदासीनस्य तस्य सृष्टौ प्रेरणार्थं संहारे प्रवृत्तस्य निवारणार्थं स्थितावीश्वरापेक्षासम्भवो न चैतदस्तीति ॥ **एतेनेति** ॥ ईश्वरस्यैवावान्तरोपद्रवकर्तृत्वे न तदकरणमात्रेण समीहितसिद्धेः । अन्यस्यैव ह्युपद्रवकर्तृत्वे तन्निवारणादिव्यापारो युज्येतेति भावः ।

सूत्रे परस्येत्यनुवर्तते । अस्त्येव पालकत्वमिति ततो भूय इत्युक्तिमहिम्ना लभ्यते । हिशब्दो यस्मादित्यर्थे इत्यभिप्रेत्य व्याचष्टे ॥ **अस्त्येवेति** ॥ **प्रकृतस्येति** ॥ श्रुतौ पूर्वं प्रकृतस्येत्यर्थः । **तावन्मात्रत्वमिति** ॥ पालनरूपगुणान्तरासाहित्यमित्यर्थः ॥ **न ज्ञायत इति** ॥ विशेषवाक्ये-नेत्यर्थः । अनेन विशेषवाक्यमित्युक्तन्यायः सूत्रारूढो दर्शितः । येनेत्यस्यार्थोऽनेनेश्वरेणेति । कर्तरि तृतीयाबलादध्याहरति भवत्कार्यमिति ॥ **प्रागुक्तमिति** ॥ अस्येदेषा सुमतिः प्रप्रथानेति श्रुतौ प्रागुक्तमित्यर्थः । श्रुत्यर्थस्तु तत्त्वप्रदीपवाक्योदाहरणपूर्वमन्यत्रो ज्ञेयः । उक्षा स द्यावापृथिवी बिभर्तीत्यत्र स इति तच्छब्दस्य स पर उक्षेत्यन्वयं प्रदर्शयन्नुक्षेति व्याचष्टे ॥ **स पर इति** ॥ भावबोधे तु । उक्षासदिति पदमभिप्रेत्य व्याख्यातम् । सदित्यस्य भवत्कार्यमिति चार्थद्वयमिति । बिभर्तीत्यस्य धत्ते पुष्णाति चेत्यर्थद्वयम् ॥ **धारणपोषणादेरिति** ॥ द्यावापृथिवी बिभर्तीति धारणम् । उक्षेत्यन्नपानादिना पोषणम् । अभिमतैश्वर्यादिदानं चोक्तमिति भावः ।

## तत्त्वसुबोधिनी

**पालकत्वेति** ॥ अत्र पूर्वं यस्याः स्नेहादिरूपाया भक्तेः तारतम्यं समर्थितं सा भक्तिः विष्णोः पालकत्वाभावे न सम्भवति । लोके स्वपालक एव स्नेहोत्पत्तिदर्शनादित्याक्षेपोत्थानात् पूर्वसूत्रे

(तत्त्वसुबोधिनी)

दर्शनाच्चेति सूत्रेण भक्तितारतम्यसाधकानन्दादितारतम्ये श्रुतिस्मृतिरूपप्रमाणोपन्यासवदत्रापि विष्णोः पालकत्वे ब्रवीति चेति श्रुतिस्मृत्योरुपन्यासाद्वानन्तरसङ्गतिरिति भावः । **सृष्टिसंहार-कर्तृत्वादिति** ॥ कर्तृत्वाभ्युपगमादित्यर्थः । पूर्वपक्षिणः सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वा-दित्यवधेयम् । अस्तु सृष्टिसंहारकर्तृत्वं तथापि पालकत्वं कुतो नेत्यत आह ॥ **सत्यां चेति** ॥ जगत्स्थितेरिति भाष्ये शेषोक्तिः । स्थितेरेव पालनफलत्वादिति भावः ॥ अयोगमेवोपपादयति ॥ **अन्यस्य त्विति** ॥ प्रथमादिपदेन संहारः द्वितीयेन तु सृष्टौ प्रेरणम् । एवं च यदि सृष्टि-संहारकर्तृत्वमन्यस्य स्यात् तर्ह्युदासीनस्य तस्य सृष्टौ प्रेरणार्थं संहारे प्रवृत्तस्य निवारणार्थं च स्थितावीश्वरापेक्षा सम्भवेत् । न चैवमिति भावः । ननु तथापि ईश्वरस्यावान्तरोपद्रवनिवारकत्वा-द्रक्षकत्वमित्येदप्यतिदेशेन दूषयति ॥ **एतेनेति** ॥ **तत्रापीति** ॥ अवान्तरोपद्रवकरणेऽपीत्यर्थः । तथा च न पालकत्वमिति भावः । तावन्मात्रत्वं सृष्टिसंहारकर्तृत्वमात्रम् ॥ **प्रागुक्तमिति** ॥ अस्येदेषा सुमतिः प्रप्रथानेत्यादिश्रुतौ प्रागुक्तमित्यर्थः । येनेत्यस्यार्थो तेनेति । अस्तीत्यस्य भवदिति कार्यमिति चार्थद्वयम् । उक्षेत्यस्यार्थो भक्ताभिलषितसेचक इति । धत्ते पुष्णातीति चेति अर्थद्वयम् ॥ **समुच्चिनोतीति** ॥ उपलक्षणमेतत् । स सृजतीति श्रुतिरपि समुच्चितेति ज्ञातव्यम् ।

## वाक्यार्थविवरणम्

**गुणानामपि** ॥ मध्य इत्यर्थः ॥ **युक्तायुक्तेति** ॥ गुणेत्यर्थः । अनित्यज्ञानादयो दुःखादयश्च धर्माः हरावयुक्ताः । नित्यज्ञानसुखाद्या धर्मा युक्ता दृष्टा इत्यर्थः । यावत्संहारम् । संहारपर्यन्तम् । स्वतः सिद्धःरक्षारूपस्यायोगादित्यादौ योज्यम् । ननु संहर्तुः कथं रक्षारूपव्यापारस्यायोगः । संहारोदासीनत्वमेव रक्षारूपव्यापार इत्यत उक्तम् ॥ **असंहारव्यतिरिक्तेति** ॥ संहारोदासीनत्व-मसंहार इति सुधोक्तरीत्या व्याख्येयम् । ननु कथमयोगः भगवदन्यस्मिन् कस्मिंचित्पुरुषे संहरणाय उद्युक्ते सति त्वया न संहर्तव्यमित्येवं तन्निवारणारूप एव व्यापारोऽसंहारव्यतिरिक्तो रक्षारूपः पालनापरपर्यायोऽस्तीति चेत् । सत्यम् । स्यादेवम् । यद्यन्यः संहर्ता स्यात् । न चैवम् । भगवत एव संहर्तृत्वाङ्गीकारात् । अतः स भगवान् जगत् सृष्ट्वा यावन्न संहरेत्तावत्पर्यन्तं जगत्स्थितिः स्वतः एव सिद्धेत्याह ॥ **अन्यस्य त्विति** ॥ **अवान्तरोपद्रवः** ॥ व्याधिचोरादिप्रयुक्तः । तदेव चासंहारव्यातिरिक्तं रक्षारूपं पालनमस्तीत्यर्थः । कथं प्रत्युक्तमित्यत एतेनेत्युक्तं विशदयति

**(वाक्यार्थविवरणम्)**

**॥ तत्रापीति ॥** अवान्तरोपद्रवसर्जनेऽपीत्यर्थः **॥ अयमर्थः ॥** यद्यवान्तरोपद्रवकर्ता अन्यः स्यात्तदा तन्निवारणमनेन क्रियमाणं पालननामकं स्यात् । न चैवम् । अवान्तरोपद्रवेऽपि स्वस्यैव कर्तृत्वात् । अतः स्वसृष्टस्य जगतोऽवान्तरोपद्रवं यावन्न सृजेत्तावत्पर्यन्तं अवान्तरोपद्रवोदासीनत्वरूपं पालनं स्वयमेव सिद्धमिति । डु भृञ् धारणपोषणयोरित्यतो धत्ते पुष्णाति चेत्युक्तम् । अन्नदानादिना पुष्णातीत्यर्थः **॥ धारणेति ॥** श्रुतौ बिभर्तीत्युक्तसंहारव्यतिरिक्तस्य धारणपोषणरूपपालनकर्तृत्वस्य भगवत उक्तत्वेन न धारणापरपर्यायस्थितेः स्वतः सिद्धत्वमित्यर्थः ।

## वाक्यार्थमञ्जरी

**गुणानामपीति ॥** आकाशे गन्धादेरयुक्तत्वदर्शनादिति भावः **॥ कर्तृत्वादिति ॥** कर्तृत्वाभ्युपगमादित्यर्थः । **यावत्संहारं** संहारपर्यन्तम् **॥ जगत्स्थितेरिति ॥** स्थितेरेव पालनफलत्वादिति भावः । ननु रक्षारूपपालनाभावे कथमसंहारमात्रेण स्थितिरित्यत आह **॥ संहारकर्तुरिति ॥ अयोगमेवोपपादयति ॥ अन्यस्य त्विति ॥** एतेनेत्युक्तं विशदयति **॥ तत्रापीति ॥** अवान्तरोपद्रवदानेऽपीत्यर्थः **॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥** विष्णोः पालकत्वं पृथगस्त्येव । कुतः ? हि यस्मान्नैतावदिति श्रुतिः प्रकृतस्य सृष्टिलयकर्तृत्वस्य एतावत्त्वं तावन्मात्रत्वं प्रतिषेधति । ततः सृष्टिलयकर्तृत्वाद्भूयः अधिकं पालकत्वमपि ब्रवीतीत्यर्थः **॥ प्रागुक्तमिति ॥** अस्ये देषा सुमतिः प्रपथानेत्यादिपूर्ववाक्योक्तमित्यर्थः । तदर्थस्त्वतो देवानामिति पूर्वप्रकृतदेवानामेषा प्रपथानातिशयेन प्रथमानषा सुमतिः शोभना बुद्धिरस्त्येव प्रकृतविष्णोरेव सकाशादभवदिति । एनेत्यस्यार्थोऽनेनेति । सदित्यस्य भवदिति कार्यमिति चार्थद्वयम् । उक्षेत्यस्य भक्ताभिलषितसेचक इति । बिभर्ति चेत्यस्य धत्ते पुष्णाति चेत्यर्थद्वयम् । **अनेन** श्रुतिस्मृत्युदाहरणेन ।

॥ इति पालकत्वाधिकरणम् ॥ १३ ॥

## १४. अव्यक्ताधिकरणम्

परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—

**॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥**

अव्यक्तमेव तद्ब्रह्म स्वतः ।

'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।
यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्य(क्ष)यो भवेत्' इति

हि कौण्ठरव्यश्रुतिः ।

### तत्त्वप्रदीपिका

अथ जीवो ज्ञानयोग्योऽपि श्रवणादिमानपि न स्वशक्त्या भगवन्तं पश्यति । किन्तु तत्प्रसादादेवेति वक्तुं तस्य स्वभावविशेषमाह । ॐ तदव्यक्तमाह हि ॐ ॥ यथा प्रकाशदेशादिसामर्थ्यात्पदार्थानामभिव्यक्तिर्न तथा ब्रह्मणोऽभिव्यक्तिः प्रकाशरूपस्यापि स्वतः ॥

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्योपलब्धियोग्यत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । उपलब्धियोग्यत्वे भक्तिवैयर्थ्यप्रसङ्गात्तदभावः समर्थनीयः । प्रकृता भक्तिरेव विषयः । कर्तव्या न वेति सन्देहः । कर्तव्याऽकर्तव्यव्यापारदर्शनं सन्देहबीजम् । न कार्येति पूर्वः पक्षः । प्रयोजनाभावात् । भगवदाऽऽपरोक्ष्यं प्रयोजनमिति चेन्न तद्भक्तिप्रयोजनम् । स्तम्भादिवत्पुरुषप्रयत्नेनैव तदापरोक्ष्य सम्भवात् । तस्याऽव्यक्तत्वं चेद्व्यर्थैव तद्भक्तिः । अव्यक्तस्वभावस्य साधनशतेनाऽपि दर्शनाऽयोगात् । तदभ्युपगमे चेश्वरो न प्रतीयतेऽव्यक्तस्वभावत्वाददृष्टादिवदिति युक्तिविरोधः । अतो भक्तेर्व्यर्थत्वादयुक्तं तदर्थं महामाहात्म्यवर्णनमिति ।

सिद्धान्तयत्सूत्रमवतारयति ॥ **परमात्मेति** ॥ तत्प्रसादाद्भक्तिसाध्यादिति शेषः । वक्तुमतोऽनन्तेनेत्यादौ । उच्यतेऽव्यक्तत्वमिति शेषः । सूत्रं व्याचष्टे ॥ **अव्यक्तमिति** ॥ कर्तव्यैव भगवद्भक्तिः । तस्याऽव्यक्तस्वभावत्वेन पुरुषप्रयत्नेन द्रष्टुमशक्यत्वात् । अव्यक्तत्वं च तस्य श्रुतिराहेति भावः ।

## गुर्वर्थदीपिका

तदभ्युपगम इत्यस्याव्यक्तस्वभावस्यापि बहुप्रयत्नेन दर्शनाभ्युपगमे इत्यर्थः ।

## भावबोधः

उपलब्धियोग्यत्वे भक्तिवैयर्थ्यप्रसङ्गादिति । अतीताधिकरणैर्महिमनिरूपणादिना भक्तेः कर्तव्यत्वसप्रयोजनत्वयोरुक्तयोरेव भक्तिप्रयोजनत्वेनाभिमतज्ञानादेः पुरुषप्रयत्नप्रयोजनत्वेनैव सिद्धेर्व्यर्था भक्तिर्न कार्येति शङ्कोदये तत्परिहारादनन्तरसङ्गतिरिति भावः ॥ **कर्तव्येति** ॥ अत्र भक्तिः किं न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं तत्प्रयोजनत्वेनाभिमतं ब्रह्मापरोक्षज्ञानं पुरुष-प्रयत्नसाध्यं भवत्युत नेति । तदर्थं ब्रह्म पिशाचादिवत् समाराधनभावाभावाभ्यां वा अग्न्यादिस्थूल-सूक्ष्मरूपाभ्यां वा व्यक्तत्वाव्यक्तत्वोपेतमुताव्यक्तैकस्वभावं वेति । तदर्थमव्यक्तैकस्वभावस्यापि ब्रह्मण उपासनादिसाध्यप्रसादजन्यापरोक्षज्ञानविषयत्वं न सम्भवत्युत सम्भवतीति । तदर्थ-मव्यक्तत्वापरोक्षत्वयोर्विरोधशामकं नास्त्युतास्तीति । एवं चाव्यक्तत्वापरोक्षत्वयोर्विरोधशामकाभावे उपासनादिसाध्यप्रसादेनाप्यपरोक्षज्ञानासम्भवेनाव्यक्तैकस्वभावत्वानुपपत्तेरपरोक्षज्ञानसिध्यर्थं च पिशाचादिवद्वाग्न्यादिवद्वा, व्यक्तत्वाव्यक्तत्वयोरङ्गीकार्यत्वे परोक्षज्ञानस्य पुरुषप्रयत्नेनैवान्यथासिद्धेर्न तदर्थं भक्तिः कर्तव्येति पूर्वपक्षे विरोधशामकाचिन्त्यशक्तिसद्भावे उपासनादिजन्यप्रसाद-साध्यापरोक्षज्ञानविषयत्वेऽप्यव्यक्तस्वभावत्वोपपत्तौ तदपरोक्षज्ञानस्य पुरुषप्रयत्नसाध्यत्वासम्भवात्, तदर्थं भक्तिरवश्यं कर्तव्येति सिद्धान्ते च फलफलिभावः ।

नन्वपरोक्षज्ञानं भक्तिप्रयोजनमभिलषता किं व्यक्तत्वं ब्रह्मणोऽङ्गीक्रियते, उताव्यक्तत्वमिति विकल्पं हृदि कृत्वाद्यं दूषयति– **स्तम्भादिवदिति** ॥ अनेन 'तदव्यक्तत्वमाह हि' इत्यादिसूत्रत्रय-निरसनीयपूर्वपक्ष उक्तो भवति । द्वितीयमाशङ्क्य दूषयति– **तस्याव्यक्तत्वं चेदिति** ॥ अनेन 'अतोऽनन्तेन' इति सूत्रनिरसनीयपूर्वपक्षांशः प्रदर्शितः ॥ **तदभ्युपगमे चेति** ॥ अव्यक्त-स्वभावस्यापि दर्शनाभ्युपगम इत्यर्थः । न प्रतीयते प्रत्यक्षेणेति शेषः । अनेनाव्यक्तस्वभावस्य दर्शने तर्कबाध इति न्यायविवरणं व्याख्यातं भवति । भक्तेः कर्तव्यत्वप्रतिपादनार्थं प्रवृत्तत्वात् परमात्मापरोक्ष्यं प्रसादादेवेत्युक्ते कथं भक्तेः कर्तव्यत्वसिद्धिरित्यत आह– **भक्तिसाध्यादिति** ॥ **शेष इति** ॥ **इत्यादाविति** ॥ आदिशब्देन 'प्रकाशश्च कर्मणि' इत्येतद् ग्राह्यम् । यद्वा 'आदौ' प्रथमत उच्यते । व्यक्तत्वमित्युत्तरत्रान्वयः ।

## भावदीपः

अतोऽनन्तेनेति सूत्रानुरोधादधिकरणार्थमाह ॥ **तस्योपलब्धियोग्यत्वेति** ॥ स्वतोऽव्यक्तस्यापि प्रसादद्वारेति भावः । यद्यपि तदयोग्यत्वमेव महिमा देवादौ दर्शनात् । तथापि महिमोक्तेर्भक्त्यर्थत्वाद्भक्तेश्चोपलब्ध्यर्थत्वात्तस्य च तदयोग्यत्वे भक्तेरेव व्यर्थतापत्तेरव्यक्तैकस्वभावस्यापि तस्य भक्त्यादिना प्रसन्नस्य स्वशक्त्योपलब्धियोग्यत्वस्य च महिमरूपत्वाच्च । अत एव सूत्रकृता तस्याव्यक्तैकस्वभावत्वमुक्त्वा पश्चादेव तद्योग्यत्वमुक्तम् । तदुक्तमनुव्याख्याने । अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिरितीति भावः । एतेन पूर्वसूत्रे जीवानामैहिकसौख्यकारणमन्नादिना पोषणादिकमीश्वरायत्तमित्युक्तम् । अत्र तु पारत्रिकसौख्यहेतुस्वापरोक्षज्ञानमपीश्वरायत्तमुच्यत इति सङ्गतिरपि सूचिता ॥ **भक्तिवैयर्थ्येति** ॥ भक्तेरनुबन्धादिभ्य इति वक्ष्यमाणदिशोपलब्ध्यंगत्वादिति भावः । क्वचिदुपलब्ध्ययोग्यत्वसमर्थनादित्यादिपाठः । तदा तूपोद्घातप्रमेयं हृदि कृत्वा आहेत्यवतारिका ध्येया ॥ **कर्तव्याकर्तव्येति** ॥ भोजनादेः सफलव्यापारस्य निष्फलस्य शिरोवेष्टनया नासिकाग्रहणादिव्यापारस्य च दर्शनमित्यर्थः । सूत्रेषु व्यक्तत्वाव्यक्तत्वयोरुक्तत्वादुभयत्र पूर्ववादी दोषमाह ॥ **स्तम्भादिवदित्यादिना** ॥ अव्यक्तस्वभावस्य दर्शने तर्कबाध इत्यन्यत्रोक्तमत्र संयोजयति ॥ **तदभ्युपगम इति** ॥ अव्यक्तस्वभावस्यापि दर्शनाभ्युपगम इत्यर्थः ॥ **अत इति** ॥ व्यक्तत्वाव्यक्तत्वरूपपक्षद्वयेऽपि दोषसद्भावादित्यर्थः ।

भक्तिसाफल्यायाह ॥ **भक्तिसाध्यादिति** ॥ फलोक्तिपूर्वं व्यक्तत्वपक्षोक्तदोषनिरासकतया सूत्रभाष्ये व्याचष्टे ॥ **कर्तव्यैवेति** ॥ स्वत इत्यस्यार्थः **स्वभावत्वेनेति** ॥ अव्यक्तत्वं श्रुतिराहेतीति भाष्ये श्रुतिशेषोक्तिस्तस्याव्यक्तत्वे भक्त्यादिवैयर्थ्यम् । अविषयस्य ज्ञानायोगेन फलाभावादिति शङ्काव्यावृत्त्यर्थं कर्मणीति वक्ष्यमाणस्योपोद्बलकतयेति भावः ।

## अभिनवचन्द्रिका

**भक्त्यर्थमिति** ॥ भक्तेरावश्यकत्वसिद्ध्यर्थं पुरुषप्रयत्नाधीनोपलब्ध्ययोग्यत्वसमर्थनादित्यर्थः । **उपलब्धियोग्यत्व इति** ॥ भक्त्यभावेऽपि उपलब्धियोग्यत्वे भक्तेरनावश्यकत्वप्रसङ्गात् समर्थनीयमित्यर्थः । एतेन भक्तेरुपलब्ध्यर्थत्वात् उपलब्धियोग्यत्व एव भक्तेः सार्थक्यात् उपलब्धियोग्यत्वमेव समर्थनीयम् न त्वयोग्यत्वं भक्तिवैयर्थ्यप्रसङ्गादिति निरस्तम् । ननु अव्यक्तमेव ब्रह्म

(अभिनवचन्द्रिका)

सहकारिसमवधानात्प्रत्यक्षं भवति । समाराधनमेव च सहकारि न भक्तिः । अव्यक्तयक्षसाक्षात्कारे तस्य सहकारित्वदर्शनात् । क्लृप्तसहकारिभावेन समाराधनेनैव तत्साक्षाकारो पपत्तौ भक्तिकल्पनस्याऽनुपपन्नत्वादिति शङ्कते **अस्त्विति** ॥ आराधनेऽप्यव्यक्तत्वस्येति ॥ आराधनसहकृतेन्द्रियायोग्यत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वादित्यर्थः ॥ **अव्यक्तत्वं प्रत्यक्षसिद्धमिति** ॥ अव्यक्तशब्दस्य प्रत्यक्षाऽयोग्यत्वार्थकत्वात् 'अव्यक्तत्वं प्रत्यक्षसिद्धम्' इति व्याहतम् । धर्मिणोऽयोग्यत्वेऽव्यक्तत्वरूपधर्मस्य तत्र प्रत्यक्षेण सिध्ययोगादित्याशङ्का 'प्रकाशश्च कर्मण्यभ्यासात्' इत्यत्र श्रवणाद्यभावदशायाम् अयोग्यस्यापि श्रवणाद्यभ्यासे योग्यत्वाभिधानेन गर्भःस्रावेणेव नङ्क्ष्यतीत्यर्थः । **न हि स्वगतविशेषशून्य इति** ॥

ननु स्वगतविशेषशून्यत्वाभिधानमयुक्तं, प्राक् स्वेनैवोत्पत्त्यनुत्पत्त्योर्व्यक्तत्वा व्यक्तत्वयोश्चाभिधानादिति चेत्, सत्यम् । अस्त्येव व्यक्तरूपे जननं तत एव व्यक्तत्वं च । न च तावता मूलरूपाद्विशेषः । जननस्य स्वेच्छागृहीतत्वात् । न हि स्वेच्छया दण्डमवष्टभ्य गच्छन् राजा शुद्धात्, क्षीणशक्तिर्भवति । किंनाम स्वगतविशेषशून्य एवोच्यते । दण्डस्य स्वेच्छागृहीतत्वात् । एवमीश्वरोऽपि स्वेच्छागृहीतजन्मादिरपि पूरुषार्थप्रदानादिविषये स्वगतविशेषशून्य एवेति भावः ॥ **न चैवं ब्रह्मणीति** ॥ ननु कथं ब्रह्मणि स्थूलत्वं नास्ति । रामकृष्णादिरूपाणां स्थूलत्वात् । न हि घटादिदर्शनात् अधिकसाधनसाध्यत्वं तत्कालभवानां रामकृष्णादिदर्शनस्य, येन तस्य स्थूलत्वं नेति प्रतीम इति चेत्, न वयं ब्रह्मणः सर्वथा प्रत्यक्षविषयत्वं व्यासेधामः, किंनाम भक्त्यभावे स्वस्वरूपभूतेन ज्ञानानन्दाद्यात्मना इन्द्रियग्राह्यत्वं व्यासेधामः । अस्ति च तेन रूपेण रामकृष्णादीनामपि इन्द्रियाग्रह्यत्वम् । अत एव तद्दर्शिनां मुक्त्यभावोऽपि । श्रुत्यैव स्थौल्यस्येव सूक्ष्मत्वस्यापि निषिद्धत्वात् सूक्ष्मत्वाङ्गीकारोऽयुक्त इत्यतः श्रुत्यर्थमाह – **केनचिद्रूपेणेति** ॥ श्रुत्या सूक्ष्मत्वं रूपान्तरात् विशेषो नेत्येव निषिद्धम्, न तु सर्वात्मना निषिद्धमिति भावः ।

ननु कथं **नित्याव्यक्तस्येति** ॥ सर्वात्मना साधनशक्त्यविषयस्येत्यर्थः ॥ **न हि साधनशतेनेति** ॥ इन्द्रियस्य ग्रहणशक्त्यभावे उपनेत्रादिसहस्रसामग्रीसमवधानेऽपि ज्ञानादर्शनादिति भावः । अन्यथा परमाण्वादीनां दर्शनप्रसङ्गः ।

पूर्वपक्षस्तु व्यक्त एवायमीश्वरः । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वात् । 'यदा पश्यः पश्यत' इति श्रुतेश्च । न हि अव्यक्तस्वभावत्वे साधनशतेनापि दर्शनमुपपद्यते । स्वभावस्याऽनपायात् ।

(अभिनवचन्द्रिका)
ततश्च स्तम्भादिवत् पुरुषप्रयत्नेनैव प्रत्यक्षसम्भवात् व्यर्थैव तद्भक्तिरिति तन्महिमवर्णनमपि व्यर्थमेवेति ।

सिद्धान्तस्तु अव्यक्त एवायमीश्वरः । 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम्, इति श्रुतेः । अत एव प्रत्यक्षताप्रयोजकप्राकृतरूपवत्त्वमसिद्धम् । ननु अस्तु स्वतोऽव्यक्तं ब्रह्म तथापि समाराधनेन यक्षादिवव्यक्तं भविष्यतीति चेत्, न भक्त्यभावे सत्यपि समाराधने ब्रह्माऽप्रत्यक्षत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वेन समाराधनस्य ब्रह्मप्रत्यक्षहेतुत्वाऽभावात्, यक्षस्यातिसूक्ष्मत्वाभावेन समाराधनसहकृतेन्द्रियग्राह्यत्वेऽपि अतिसूक्ष्मत्वेन ब्रह्मणस्तदयोगाच्च । ननु अस्तु मूलरूपेणाऽव्यक्तं ब्रह्म, अनुत्पन्नत्वात् । अवताररूपेण तु व्यक्तीभविष्यति उत्पन्नत्वात् । मूलरूपेणाऽव्यक्तानामपि अनलजलभुवामुत्पन्नरूपेण व्यक्तत्वदर्शनात् । न च मूलरूपमेव दृष्टं मोक्षसाधनं नाऽवताररूपमिति शक्यते वक्तुम् । लीलया विग्रहस्य गृहीतत्वेन उत्पत्त्यादेर्दोषत्वाभावात् मूलरूपेण समशक्तित्वात्, 'पूर्णमदः पूर्णमिदम्' इति वचनाच्च । ततो व्यर्था भक्तिरिति चेत्, न मूलरूपावताररूपयोरपि अव्यक्तत्वेन व्यक्ताव्यक्तत्वविशेषाभावात् । 'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे । सर्वत्रैक-प्रकारोऽसौ सर्वरूपेष्वजो यत' इति वचनात् ।

ननु यदि नित्याव्यक्तं तद्ब्रह्म व्यर्थैव तद्भक्तिः । अव्यक्तस्वभावस्य साधनशतेनापि व्यक्तं कर्तुमशक्यत्वादिति चेत्, न भक्तिपूर्वकं श्रवणाद्यभ्यासेन तत्प्रसादे जाते तदापरोक्ष्याङ्गीकारात् । ननु अव्यक्तस्वभावत्वरूपयुक्तिविरोधापरिहारादिति चेत्, न अव्यक्तस्वभावस्य साधनसामर्थ्येन ग्रहणाऽसम्भवेऽपि तत्प्रसादेनाऽऽपरोक्ष्याङ्गीकारे बाधकाभावात् । ईशस्याऽघटितघटकत्वेन सिद्धत्वात् । तदुक्तम् यद्धि युक्त्या विरुध्येत तदीशकृतमेव हीति । 'भगवत्प्रसादः तदपरोक्षसाधनं, मोक्षहेतुत्वात्' इत्यनुमानसिद्धत्वाच्च । अतो भक्तेः सफलत्वात् तदर्थं तन्महिमवर्णनं सार्थकमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अस्येदेषा सुमतिः प्रप्रथानेति पूर्वाधिकरणोपात्तश्रुतौ अस्य इत् अस्यैव प्रसादात् एषा ब्रह्मादीनां सुमतिः अपरोक्षज्ञानरूपा प्र अतिशयेन प्रथाना अभवदिति स्वप्रसादेनैवेश्वरस्योप-लभ्यत्वमहिमा निरूपितः । स न युक्तः । स्तम्भादिवत्प्रयत्नेनोपलब्धुं शक्यत्वात् प्रसादवैय्यर्थ्य-

(वाक्यार्थमुक्तावली)

मित्याक्षेपे तस्य जीवप्रयत्नेनोपलब्ध्ययोग्यत्वमहिम्नो वर्णनादनन्तरसङ्गतिरिति भावः ॥ **कर्तव्येति** ॥ अत्र भक्तिः किं न कर्तव्योत कर्तव्येति चिन्त्या । तदर्थं तत्प्रयोजनत्वेनाभिमतं ब्रह्मापरोक्षज्ञानं पुरुषप्रयत्नसाध्यं भवत्युत नेति । तदर्थं ब्रह्म पिशाचादिवत्समाराधनभावाभावाभ्यां वाय्वादिवत्स्थूल-सूक्ष्मरूपाभ्यां वा व्यक्तत्वोपेतमुताव्यक्तैकस्वभावं वेति । तदर्थमव्यक्तैकस्वभावस्याप्यपरोक्ष-ज्ञानविषयत्वं न सम्भवत्युत सम्भवतीति । **अकर्तव्यव्यापारदर्शनमिति** ॥ प्रयोजनराहित्येना-कर्तव्यकाकदन्तपरीक्षादिव्यापारदर्शनमित्यर्थः । न तु कलञ्जभक्षणादिनिषिद्धव्यापारदर्शनमित्यर्थः । नन्वपरोक्षज्ञानं भक्तिप्रयोजनमभिलषता किं व्यक्तत्वं ब्रह्मणोऽङ्गीक्रियते उताव्यक्तत्वमिति विकल्पं मनसि निधायाद्यं दूषयति ॥ **स्तम्भादिवदिति** ॥ अनेन तदव्यक्तमाह हीत्यादिसूत्रनिरसनीयपूर्वपक्ष उक्तो भवति । द्वितीयमाशङ्क्य दूषयति । तस्याव्यक्तत्वं चेदिति । अनेनातोऽनन्तेनेति सूत्रनिरसनीयपूर्वपक्षांशः प्रदर्शितः । अनन्तेनेत्यचिन्त्यशक्त्युक्त्या निरसनीयं तर्कबाध इत्युक्तपूर्वपक्षन्यायं प्रकटयितुमाह ॥ **तदभ्युपगमे चेति** ॥ अव्यक्तस्वभावस्यापि दर्शनाभ्युपगम इत्यर्थः ॥ **भक्तिसाध्यादिति** ॥ **विशेष इति** ॥ अन्यथा भक्तेः कर्तव्यत्वासिद्धेः प्रकृतानुपयोग इति भावः ॥ **इत्यादाविति** ॥ आदिपदेनापि संराधन इत्यस्य ग्रहणम् । तत्र न जीवशक्त्येति प्रतीतेः हि यस्मात्तदव्यक्तं अतो भक्तिः कर्तव्या । हि यस्मात्तद्ब्रह्माव्यक्तं श्रुतिराह तस्मात्तद-व्यक्तमिति सूत्रार्थं मत्त्वाह ॥ **कर्तव्यैवेति** ॥

## तत्त्वसुबोधिनी

**उपलब्धियोग्यत्व इति** ॥ अतीताधिकरणैः महिमनिरूपणादिना भक्तेः कर्तव्यत्व-सप्रयोजनत्वयोः उक्तयोरेव भक्तिप्रयोजनत्वेनाभिमतज्ञानादेः पुरुषप्रयत्नैव सिद्धेः व्यर्था भक्तिः न कार्या इति शङ्कोदये तत्परिहारादनन्तरसङ्गतिरिति भावः । अपरोक्षज्ञानं भक्तिप्रयोजनमभिलषता किं व्यक्तत्वं ब्रह्मणोऽङ्गीक्रियत उताव्यक्तत्वमिति विकल्पं मनसि कृत्वाद्यं दूषयति ॥ **स्तम्भादि-वदिति** ॥ अनेन तदव्यक्तमाह हीति सूत्रत्रयनिरसनीयः पूर्वपक्ष उक्तो भवति । द्वितीयमाशङ्क्य दूषयति ॥ **तस्याव्यक्तत्वं चेदिति** ॥ अनेनातोऽनन्तेनेति सूत्रनिरसनीयः पूर्वपक्षांशः प्रदर्शितः । अव्यक्तत्वेऽपि कुतो भक्तिवैय्यर्थ्यमित्यत आह ॥ **अव्यक्तेति** ॥ नन्वव्यक्तस्वभावस्यापि दर्शन-मङ्गीक्रियत इत्यत आह ॥ **तदभ्युपगमे चेति** ॥ न प्रतीयते प्रत्यक्षेणेति शेषः । नन्वस्य भक्तेः

(तत्त्वसुबोधिनी)
कर्तव्यत्वप्रतिपादनार्थं प्रवृत्तत्वात् परमात्मापरोक्ष्यं प्रसादादेवेत्युक्ते कथं भक्तेः कर्तव्यत्वसिद्धिरित्यत आह ॥ **भक्तिसाध्यादिति** ॥ **शेष इति** ॥ इत्यादावित्यादिशब्देन प्रकाशश्च कर्मणीत्येतद्ग्राह्यम् ।

## वाक्यार्थविवरणम्

स्तम्भादिवदित्यतः पूर्वं तस्य व्यक्तत्वं चेदिति शेषः । अत एवोत्तरत्र तस्याव्यक्तत्वं चेदिति पक्षान्तरवचनम् ॥ **पुरुषप्रयत्नेनेति** ॥ स्तम्भादौ पुरुषप्रयत्नः इन्द्रियार्थसन्निकर्षः, भगवति तु श्रवणादिरूप इति ध्येयम् । भाष्ये जीवशक्त्येत्यस्य श्रवणादिरूपजीवप्रयत्नेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

अपरोक्षज्ञानं भक्तिप्रयोजनमिति वदता किं ब्रह्मणः व्यक्तत्वमङ्गीक्रियते उताव्यक्तत्वं आद्ये आह ॥ **स्तम्भादिवदिति** ॥ द्वितीयमाशङ्क्य दूषयति ॥ **तस्येति** ॥ **तदभ्युपगम इति** ॥ अव्यक्तस्वभावस्यापि दर्शनाभ्युपगम इत्यर्थः । न प्रतीयते प्रत्यक्षेण ॥ **ॐ तदव्यक्तमाह हि ॐ** ॥ तद् ब्रह्माव्यक्तम् । कुतः ? हि यस्मादरूपमिति श्रुतिस्तथाहेत्यर्थः । भक्तेः कर्तव्यत्वसिध्यर्थमाह ॥ **भक्तिसाध्यादिति** ॥

## सूत्रभाष्यम्

**॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥**

**आराधनेऽप्यव्यक्तमेव । ज्ञानि(नां) प्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ।**

**'न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति ।**
**नित्याव्यक्तो यतो देवः परमात्मा सनातन' इति ब्रह्मवैवर्ते ॥**

## तत्त्वप्रदीपिका

स्वतोऽव्यक्तमप्याराधनेन व्यक्तं करिष्यतीत्यत आह– **अपि संराधने प्रत्यक्षानुमानाभ्याम्** ॥ आराधनेऽप्यव्यक्तमेव न व्यक्तं क्रियते । तदाऽपि ज्ञानिनामव्यक्तत्वेन स्थितेर्दृश्यमानत्वात् । न ह्याराधितवन्तोऽपि ज्ञानिनो व्यक्तत्वमापादयन्ति । सूक्ष्मा अपि परमाण्वादयो न स्पष्टा भवन्ति । किं पुनरत्यन्तसूक्ष्मं तद्ब्रह्मेत्यनुमानम् ।

## तत्त्वप्रकाशिका

**अस्तु ब्रह्म स्वतोऽव्यक्तं तथाप्याराधनेन पुरुषप्रयत्नेन व्यक्तीभविष्यति । समाराधनेनाऽव्यक्त-यक्षादिसाक्षात्कारदर्शनात् । एवं च किं भक्त्येत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ अपीति ॥ न भक्तिरहिताऽऽराधनेनाऽपि ब्रह्म व्यक्तीकर्तुं शक्यते । आराधनेऽप्यव्यक्तत्वस्य ज्ञानिप्रत्यक्ष-सिद्धत्वादतिसूक्ष्मत्वहेतुकाऽनुमानसिद्धत्वाच्चेत्यर्थः । अव्यक्तत्वं प्रत्यक्षसिद्धमिति व्याहतिरुत्तरत्र गर्भस्रावेणैव नङ्क्ष्यति । प्रत्यक्षसिद्धार्थेऽनुमानापेक्षाऽभावादेवेतरेषामित्युक्तम् । परप्रत्यक्षस्याऽ-सिद्धत्वात्कथमत्र ज्ञानिप्रत्यक्षं प्रमाणीक्रियते । ज्ञानिनां तदुक्त्यन्यथाऽनुपपत्त्या तत्प्रत्यक्षसिद्धिरिति भावेनाह ॥ नेति ॥ नित्याव्यक्त इत्यनेन यक्षादिप्रतिबन्दी परिहृता भवति ।**

## गुर्वर्थदीपिका

ज्ञानिनां तदुक्त्यन्यथानुपपत्त्येत्यत्र तदुक्तिराराधने कृतेऽप्यव्यक्त एव सन् तिष्ठतीत्यस्यार्थ-स्योक्तिः । तत्प्रत्यक्षसिद्धिरित्यत्र तैर्ज्ञानिभिरित्याहुरित्यनुक्तेरिति मन्यामह इत्यनुक्तेश्च नदीतीरे पञ्चफलानि सन्तीत्याप्तवाक्यस्येव तत्प्रत्यक्षमेव मूलमिति भावः । यक्षादिप्रतिबन्दी परिहृता भवतीत्यत्र यक्षादीनां त्वस्मदादिवद्दर्शनयोग्यस्थूलदेहानामेवान्तर्धानशक्त्या दर्शनम् । भगवांस्तु कालाकाशवद्दर्शनायोग्यसूक्ष्मदेह इति प्रसङ्गस्य तस्याघटितशक्त्यैवं दर्शनमिति तत्प्रसादस्सम्पाद-नीयः । प्रसादश्च भक्त्यैकसाध्यो न तु क्षुधितयक्षादिवदन्नपानादिदानरूपसमाराधनेन साध्यः । अत एव भक्तिहीनदुर्योधनकृतं महदपि समाराधनमुपेक्षितं भगवतेति भारते प्रसिद्धिः । अतो भक्तिरावश्यकीति भावः ।

## भावबोधः

**व्याहतिरिति** ॥ प्रत्यक्षायोग्यत्वरूपमव्यक्तत्वं प्रत्यक्षसिद्धमित्यङ्गीकारे व्याहतिरित्यर्थः । **उत्तरत्रेति** ॥ अतोऽनन्तेनेत्यर्थः ॥ **गर्भस्रावेणैवेति** ॥ अव्यक्तैकस्वभावस्यापि ब्रह्मणोऽ-चिन्त्यशक्त्या प्रत्यक्षत्वे तद्गताव्यक्तत्वस्यापि प्रत्यक्षत्वलाभादित्यर्थः । **अनुमानापेक्षाभावादिति** ॥ सिद्धसाधनत्वप्रसङ्गादित्यर्थः ।

## भावदीपः

भगवत्प्रसादाय तदाराधनविधिपरैः 'नास्ति श्रेयस्तमं नृणां विष्णोराराधनान्मुने' इति अनाराधितगोविन्दा ये तैः स्थानं नृपात्मज । न हि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम्' इत्याद्यैः कृष्णामृतमहार्णवोक्तैरनेकवचनैर्विरोधनिरासाय भाष्यं व्याचष्टे ॥ **न भक्तीति** ॥ लिङ्गादनुमानेनेति भाष्यार्थमाह ॥ **अतिसूक्ष्मत्वेति** ॥ परमाण्वाकाशादिदृष्टान्तसम्भवादिति तात्पर्यम् । चैत्ररथेन लिङ्गादित्यादाविव तृतीयापञ्चम्योर्हेतुरूपैकार्थत्वात् सामानाधिकरण्येन वा लिङ्गाल्लिङ्गस्य भावादनुमानेन सिद्धत्वादिति वैयधिकरण्येन वा योजना सूचिता ॥ **उत्तरत्रेति** ॥ अतोऽनन्तेनेत्यत्रेत्यर्थः । **नंक्ष्यति** नाशं यास्यति । ईश्वरानुग्रहहीनान् प्रत्यव्यक्तं योगिनां प्रत्यक्षमित्युक्तौ दोषाभावादिति भावः । यद्वा स्वतोऽव्यक्तं ईश्वरप्रसादोपचितप्रत्यक्षग्राह्यमित्युक्तौ व्याहत्यभावादिति भावः । स्मृतावुत्तरार्धोक्तेरुपयोगमाह ॥ **नित्याव्यक्त इतीति** ॥

## वाक्यार्थमुक्तावली

प्रकाशश्च कर्मण्यभ्यासादिति आराधनादिप्रयत्नेन व्यक्तत्वोक्तेः विरोधपरिहारायाह ॥ **न भक्तिरहितेति** ॥ लिङ्गादनुमानेति भाष्यस्य तद्धेतुकानुमित्येत्यर्थमाह ॥ **अतिसूक्ष्मत्वहेतुकेति** ॥ अव्यक्तत्वं प्रत्यक्षसिद्धमिति व्याहतिरिति । अव्यक्तशब्दस्य प्रत्यक्षायोग्यार्थत्वात् अव्यक्तत्वं प्रत्यक्षसिद्धमिति व्याहतम् । धर्मिणो योग्यत्वेऽव्यक्तत्वरूपधर्मस्य तत्र प्रत्यक्षेण सिध्ययोगादिति भावः ॥ **गर्भस्रावेणैवेति** ॥ अव्यक्तैकस्वभावस्याप्यचिन्त्यशक्त्या अतोऽनन्तेनेत्युत्तरत्र प्रत्यक्षत्वे निरूपिते तद्गताव्यक्तत्वस्यापि प्रत्यक्षत्वलाभादिति भावः ।

## तत्त्वसुबोधिनी

नन्वव्यक्तस्य समाराधनेन व्यक्तत्वं क्वोपलब्धमित्यत आह ॥ **समाराधनेनेति** ॥ **व्याहतिरिति** ॥ प्रत्यक्षायोग्यत्वरूपमव्यक्तत्वं प्रत्यक्षसिद्धमित्यङ्गीकारे व्याहतिरित्यर्थः ॥ **उत्तरत्रेति** ॥ अतोऽनन्तेनेत्यत्रेत्यर्थः ॥ **गर्भस्रावेणेति** ॥ अव्यक्तैकस्वभावस्यापि अचिन्त्यशक्त्या प्रत्यक्षत्वे तद्गताव्यक्ततत्वस्यापि प्रत्यक्षत्वलाभादित्यर्थः । भाष्ये इतरेषामिति कथमित्यत आह ॥ **प्रत्यक्षेति** ॥ **अनुमानेति** ॥ सिद्धसाधनत्वप्रसङ्गादित्यर्थः । शङ्कते ॥ **परप्रत्यक्षस्येति** ॥ **परिहरति** ॥

(तत्त्वसुबोधिनी)

**ज्ञानिनामिति** ॥ ननु यक्षादिरव्यक्तोऽपि समाराधनेन व्यक्तीभवति तथा प्रकृतेऽपि किं न स्यादित्यत आह ॥ **नित्येति** ॥ किञ्चित्कारणवशादेव तस्याव्यक्तत्वेन नित्याव्यक्तत्वाभावादिति भावः ।

## वाक्यार्थविवरणम्

**आराधनेन** ॥ पुरुषप्रयत्नेन । श्रवणादिना सम्यगाराधनरूपेण पुरुषप्रयत्नेनेत्यर्थः ॥ **इतरेषामिति** ॥ अज्ञानिनामित्यर्थः । शङ्कते ॥ **परेति** ॥ असिद्धत्वादस्माकमिति शेषः । उत्तरमाह ॥ **ज्ञानिनामिति** ॥ **तदुक्तीति** ॥ अव्यक्तत्वोक्तीत्यर्थः । भगवतो व्यक्तत्वं ज्ञानिनः स्वप्रत्यक्षेण ज्ञात्वा तथा ग्रन्थे उपनिबध्नन्ति । अतस्तदुक्तेस्तद्वचनस्य अन्यथा तेषामव्यक्तत्वविषयकप्रत्यक्षाभावेऽनुपपत्तेस्तत्प्रत्यक्षं सिद्ध्यतीत्यर्थः । नन्वेवं भगवत आराधनेऽप्यव्यक्तत्वोक्तौ समाराधनेनाव्यक्तयक्षसाक्षात्कारदर्शनात्तदभावोऽपि स्यादित्युक्तप्रतिबन्ध्याः का गतिरित्यत आह ॥ **नित्याव्यक्त इत्यनेनेति** ॥ यक्षादीनां नित्याव्यक्तत्वाभावात्समाराधने व्यक्तत्वम् । भगवतस्तु नित्याव्यक्तत्वात्समाराधनेऽप्यव्यक्तत्वमुपपद्यत इति परिहृता भवतीत्यर्थः ।

## वाक्यार्थमञ्जरी

संराधनेऽपि भक्तिहीनपूजादिकरणेऽपि ब्रह्माव्यक्तमेव । कुतः ? ज्ञानिप्रत्यक्षेण ब्रह्म न व्यक्तमतिसूक्ष्मत्वादित्यनुमानेन च तथा सिद्धत्वादित्यर्थः ॥ **व्याहतिरिति** ॥ प्रत्यक्षायोग्यत्वरूपमव्यक्तत्वं प्रत्यक्षसिद्धमित्यङ्गीकारे व्याहतिरित्यर्थः । **उत्तरत्र** अतोऽनन्तेनेत्यत्र ॥ **गर्भस्रावेणेति** ॥ अव्यक्तस्वभावस्यापि ब्रह्मणोऽचिन्त्यशक्त्या प्रत्यक्षत्वात्तद्गताव्यक्तत्वस्यापि प्रत्यक्षत्वलाभादिति भावः ॥ **नंक्ष्यति** नष्टीभविष्यति ॥ अनुमानस्य ज्ञानिनः प्रत्यक्षविशेषादितरेषामित्युक्तिरनुपपन्नेत्यत आह ॥ **प्रत्यक्षसिद्धार्थ इति** ॥ सिद्धसाधनत्वप्रसङ्गादिति भावः । उत्तरमाह ॥ **ज्ञानिनामिति** ॥

## सूत्रभाष्यम्

**नित्याव्यक्तेन रूपेण तथैव तिष्ठति । व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते । यथाऽग्न्यादयस्तन्मात्रारूपेणाऽदृश्या अपि स्थूलरूपेण दृश्यन्त एवमिति चेन्न ।**

(सूत्रभाष्यम्)

**॥ ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ २५ ॥**

अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात् ।

'नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परम इति' इति माण्डव्यश्रुतेः ।

'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे ।
सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यत' इति च गारुडे ॥

'अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे ।
सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दन' इति कौर्मे ॥

## तत्त्वप्रदीपिका

अग्न्यादीनां भिन्नावयवोपचयापचयकृत एव स्थूलसूक्ष्मादिव्यवहारः । अग्न्यादिष्वपि सूक्ष्मं रूपं केषाञ्चिन्महतामेव स्पष्टं प्रकाशते । अत्यन्तसूक्ष्मत्वात् ब्रह्म परममित्युच्यते । 'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वर' इति श्रुतेः । प्रकृतिवच्च नास्य सूक्ष्मत्वं नैव चाग्न्यादिवदिति चकारार्थः । जनिमतां तु जननात्पूर्वं सूक्ष्मं रूपमूर्ध्वं स्थूलमिति विभागो युक्तः । स नैवास्मिन्निति 'सर्वरूपेष्वजो यतः' इत्युक्तम् ।

## तत्त्वप्रकाशिका

**आक्षिपति ॥ नित्येति ॥** अस्तु ब्रह्म मूलरूपेणाऽव्यक्तं तस्योत्पत्त्यादिरहितत्वात् । तथापि गृहीतरूपैर्व्यक्तीभवत्येव तेषामुत्पत्तिमत्त्वात् । दृष्टं ह्यनलजलभुवां भूतानां तन्मात्रालक्षणानुत्पन्न मूलरूपेणाऽव्यक्तानामप्युत्पन्नरूपेण व्यक्तत्वम् । अतो भक्तिमन्तरेणाऽपि ज्ञानलाभाद्व्यर्था भक्तिः । न हि स्वगतविशेषशून्ये ब्रह्मणि नियमोऽस्ति मूलरूपापरोक्ष्यमेव पुरुषार्थहेतुरितीति भावः । एतत्प्रतिषेधति **॥ नेति ॥** एतेन सूत्रगतश्चशब्दः शङ्काव्यावृत्त्यर्थ इत्युक्तं भवति । हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे **॥ प्रकाशवदिति ॥** भवेदग्न्यादीनां केनचिद्रूपेण व्यक्तत्वं केनचिदव्यक्तत्वं स्थूलसूक्ष्मविशेषवत्त्वात् । स्थौल्यादिनिमित्तो हि व्यक्त्यादिभावः । न चैवं ब्रह्मणि केनचिद्रूपेण स्थूलत्वं केनचित्सूक्ष्मत्वमिति विशेषोऽस्ति येन व्यक्तत्वमव्यक्तत्वं च स्यादिति भावः । ब्रह्मणि स्थूलसूक्ष्मविशेषो नास्तीत्येतत्कुतः येन व्यक्ताव्यक्तताभाव इत्यत आह **॥ नासाविति ॥**

(तत्त्वप्रकाशिका)

**केनचिद्रूपेण सूक्ष्मः केनचिद्रूपेण स्थूल इति न किं तु सर्वत्र परमसूक्ष्म एवेत्यर्थः । उत्पन्नानुत्पन्नमूल-रूपाऽवतार रूपाणां कथं स्थूलसूक्ष्मविशेषाऽभाव इत्यत आह ।। स्थूलेति ।। एवं व्यापकानुपलब्ध्या व्यक्ताऽव्यक्तत्वाभावो ब्रह्मणीत्युक्तम् । स्मृत्याऽपि तदभावं साधयति ।। अव्यक्तेति ।। जननमर्दयतीति जनार्दनः ।**

## गुर्वर्थदीपिका

सर्वत्र 'इत्यत आह, इत्यतो ब्रवीति' इत्यादिसूत्रमवतार्य सूत्रमुखेनैव पूर्वपक्षं निराकुर्वतो भाष्यकारस्यास्मिन्सूत्रे सूत्रमनपेक्ष्य इति चेन्नेति स्वमुखेनैव पूर्वपक्षप्रतिषेधनं तस्यातिदुर्बलार्थत्व-सूचनार्थम् । अग्न्यादिवत्स्थूलरूपवत्त्वे सर्वैरपि भगवतो दृश्यत्वप्रसङ्गाददतिदुर्बलेयं शङ्केति भावः । अत एव सूत्रकारः 'प्रकाशवच्चेन्न वैशेष्यात्' इत्यनुक्त्वा 'प्रकाशवच्चावैशेष्यम्' इति वस्तुस्थिति-मेवाह । न तु शिखण्डिनं भीष्म इव साक्षात्स्वयं न्यषेधदिति ज्ञेयम् ।

## भावबोधः

'च'शब्दः शङ्काव्यावृत्त्यर्थ इति । दृष्टान्तान्तरस्यानुक्तत्वात् समुच्चयार्थत्वासम्भवादित्यर्थः । पर एव भवतीत्यस्यार्थः ।। **किं तु परमसूक्ष्म एवेति** ।। अवताररूपाणामुत्पन्नत्वस्य शङ्कितत्वेन तदभावप्रतिपादनस्य प्रकृतत्वात् जननमर्दयतीति व्याख्यातम् ।

## भावदीपः

स्वभावोक्तिभ्रान्तिं निराह ।। **आक्षिपतीति** ।। अग्न्यादय इत्येतदादिपदार्थोक्त्या व्यनक्ति ।। **अनलजलभुवामिति** ।। अग्नेरापः अद्भ्यः पृथिवी इति श्रुतेरिति भावः । एतेनाकाशवाय्वोर्द्वयोरपि स्थूलरूपेणाप्यदृश्यत्वमेवेति सूचितम् । अन्यथा सौत्रप्रकाशपदस्योपलक्षणत्वेनाग्न्यादय इत्यग्न्यादि-त्रयोक्तिर्न स्यादित्याहुः । यत्तु न्यायामृते प्रत्यक्षस्यानुमानबाध्यत्वबाधकोद्धारे भूताकाशस्य प्रत्यक्षत्वप्रतिपादनं तत्प्रौढिवादेन । अत एव वियत्पादीयानुभाष्ये भूतमप्यसितं दिव्यदृष्टिगोचरमेव चेति दिव्यपदोक्तिः । इति चेन्नेति भाष्यस्योत्सूत्रत्वभ्रमं निराह ।। **सूत्रगतश्चशब्द इति** ।। भाष्यं व्याचष्टे ।। **भवेदित्यादिना** ।। **स्थूलसूक्ष्मेति** ।। अवयवोपचयतद्राहित्यरूपेत्यर्थः । सौक्ष्म्यस्यापि निषेधपरत्वभ्रमनिरासाय श्रुत्यर्थमाह ।। **केनचिदिति** ।। **स्थूल इतीति** ।। अवयवोपचयवानित्यर्थः ।

(भावदीपः)

**सर्वत्र** सर्वरूपेष्वित्यर्थः । स्मृतिगताजपदव्यावर्त्योक्तिरुत्पन्नेति ॥ **इत्यत आहेति** ॥ सर्वरूपेष्वजत्वोक्त्योत्पत्तेः प्रादुर्भावरूपत्वेन भूताग्न्यादिवदुत्पत्त्यभावादिति शङ्कानिरास इति भावः ॥ **व्यापकेति** ॥ स्थौल्यादिरूपव्यापकेत्यर्थः । **तदभावं** व्यक्तत्वाभावम् । जनार्दन इत्यस्य हेतुत्वं व्यनक्ति ॥ **जननमिति** ॥ स भूतः स जनार्दन इति सो ह्यासीत्स नासीत्सादयतीति गीताभाष्योक्तश्रुतेरिति भावः । एवं च सर्वजनसम्बन्धिजननस्यापि अर्दकत्वप्रसङ्गात्तादृशस्य सर्वरूपेष्वप्यव्यक्तैकस्वभावत्वं युक्तमिति भावः ।

## वाक्यार्थमुक्तावली

**तस्योत्पत्त्यादिरहितत्वादिति** ॥ आदिपदेन वृद्ध्यादि गृह्यते । उत्पत्त्यादिमतो ह्यवयवोपचयकृतस्थौल्येन प्रत्यक्षत्वमिति भावः ॥ **तन्मात्रालक्षणेति** ॥ तन्मात्रालक्षणं च तदनुत्पन्नमूलरूपं चेति विग्रहः । तन्मात्रेति तत्सूक्ष्माण्युच्यन्ते । ननु मूलरूपापरोक्षस्यैव पुरुषार्थहेतुत्वात् तस्य चाव्यक्तत्वात् भक्तिस्तदपरोक्षायावश्यकीत्यत आह ॥ **न हि स्वगतेति** ॥ ननु स्वगतविशेषशून्यत्वे कथमुत्पत्त्यनुत्पत्तिः । स्थूलसूक्ष्मत्वादिविशेषाङ्गीकार इति चेत् चैतन्यानुबन्धिपुरुषार्थप्रदानविषये निर्विशेषस्यापि लीलाकृतोत्पत्तिव्यक्त्यादिविशेषाङ्गीकाराविरोधात् । चशब्दः शङ्काव्यावर्तक इति । शङ्काव्यवृत्त्यर्थकोऽपीति भावः । जलभूसमुच्चयार्थत्वस्य हेत्वर्थत्वस्य श्रुत्यादिसमुच्चयार्थत्वस्य च स्वीकार्यत्वात् अन्यथा अग्न्यादिवदिति भाष्ये आदिशब्दस्य स्थूलसूक्ष्मताविशेषाभावादिति पञ्चम्यन्तप्रयोगस्य श्रुत्याद्युदाहरणस्य चोत्सूत्रत्वप्रसङ्गात् ।

ततश्चायं सूत्रार्थः । तद्ब्रह्म प्रकाशवच्चाग्न्यादिवदव्यक्तं न केनचिद्रूपेणाव्यक्तं नेति यावत् । कुतः । यतःप्रकाशादिवदवैशेष्यम् । यथा प्रकाशादेः स्थूलसूक्ष्मत्वविशेषः तथा स्थूलसूक्ष्मत्वविशेषाभाव इति । पर एवेत्यस्यार्थः परमसूक्ष्म एवेति । प्रकाशवत्वे स्थूलसूक्ष्मत्ववैशेष्यं नास्ति कुतः? यतोऽवैशेष्यं उत्पत्त्यनुत्पत्तिवैशेष्याभाव इत्यर्थान्तरं व्याकुर्वत्स्मृतिमवतारयति ॥ **उत्पन्नेति** ॥ न च रूपवदेवेति प्राकृतादिरूपाभावस्यास्थूलमनण्विति स्वेच्छादिनिमित्तस्थौल्याद्यभावस्य न स्थानत इति सर्वरूपेषु निर्विशेषत्वस्य असम्भवस्तु सत इत्युत्पत्त्यभावस्य चोक्तत्वान्नित्याव्यक्तस्वरूपेणेत्यादिशङ्कानुदयात्सूत्रं व्यर्थमिति चेन्न । सदाव्यक्तं च निष्कलमित्यादिश्रुत्यातिसूक्ष्मत्वादियुक्त्याव्यक्तस्वाभावत्वमुक्तम् । द्रष्टव्य इत्यादिश्रुत्या प्रयत्नावैय्यर्थ्ययुक्त्या च

(वाक्यार्थमुक्तावली)

व्यक्तत्वं च । विरोधस्तु परिहरणीयः । सिद्धान्तिनाऽचिन्त्याद्भुतशक्त्या विरोधोऽपाक्रियते । केनापि प्रकारेण विरोधाशान्तौ हि शक्त्या परिहरणीयः । यद्धि युक्त्या विरुध्येत तदीशकृतमेव हीत्युक्तेः । तत्र द्वितीयसूत्रे साधनं विनाव्यक्तस्य यक्षस्य साधनेन व्यक्तिवत् साधनभावा-भावव्यवस्थया विरोधपरिहारशङ्का निरस्ता । ततो विरोधसम्भ्रान्तचित्तेन गत्यन्तरमपश्यमानेन स्थूलसूक्ष्मत्वव्यवस्थया विरोधपरिहारे शङ्किते पूर्वोक्तस्मारणेन प्रमाणविशेषोपन्यासेन च तां शङ्कां परिहृत्यानन्यशरणतयाचिन्त्यशक्त्यैवात्र विरोधशान्तिरिति प्रमेयविशेषोपन्यासाय परिशेषयितुं पुनराशङ्कोपपत्तेरिति ज्ञेयम् । सर्वत्राव्यक्तस्वरूपत्वे जनार्दनपदोक्तं दुष्टजनमर्दकत्वं कथं हेतुरित्यत आह ॥ **जननमर्दयतीति** ॥ यतस्सर्वत्र जनार्दन उत्पत्तिरहितोऽतः सर्वत्रातिसूक्ष्म एवातः सर्वत्राव्यक्तरूप इति हेतुहेतुमद्भावः । सर्वरूपेष्वजो यत इत्युक्तत्वादिति भावः ।

## तत्त्वसुबोधिनी

गृहीतरूपेण व्यक्तत्वं कुत इत्यत आह ॥ **तेषामिति** ॥ ननु मूलरूपेणाव्यक्तत्वं गृहीतरूपेण व्यक्तत्वं कोपलब्धमित्यत आह ॥ **दृष्टं हीति** ॥ ननु तथापि मूलरूपापरोक्षस्यैव पुरुषार्थहेतुत्वात् गृहीतरूपापरोक्षस्य च पुरुषार्थहेतुत्वाभावात् तस्मिन् सत्यपि मूलरूपापरोक्ष्याभावात्तदर्थं भक्ति-रावश्यकीत्यत आह ॥ **न हीति** ॥ **एतेनेति** ॥ शङ्काप्रदर्शनेनेत्यर्थः ॥ **चशब्द इति** ॥ दृष्टान्तान्तरस्यानुक्तत्वात् समुच्चयार्थत्वासम्भवादित्यर्थः । पर एव स भवतीत्यस्यार्थः । **परमसूक्ष्म एवेति** ॥ **व्यापकानुपलब्ध्येति** ॥ व्यक्ताव्यक्तत्वव्यापकस्थूलसूक्ष्मत्वादिरूपविशेषानुपलब्ध्येत्यर्थः । अवताररूपाणामुत्पन्नत्वस्याशङ्कितत्वेन तदभावप्रतिपादनस्य प्रकृतत्वात् जननमर्दयतीति व्याख्यातम् ।

## वाक्यार्थविवरणम्

उपादानभूतसूक्ष्मरूपाणां तन्मात्रेति संज्ञा ॥ **अनुत्पन्नेति** ॥ 'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम्' इत्युक्तत्वादिति भावः ॥ **ज्ञानलाभादिति** ॥ पुरुषप्रयत्नेनैवेति शेषः । ननु भक्तेर्न वैय्यर्थ्यम् । मूलरूपापरोक्ष्यमेव हि पुरुषार्थहेतुर्न गृहीतरूपापरोक्ष्यमिति नियमाङ्गीकारात् । तच्च मूलरूपमव्यक्तमेव । अतस्तद्व्यक्त्यर्थं भक्तिः सार्थकेत्यत आह ॥ **न हीति** ॥ ननु स्थूलसूक्ष्मविशेषस्य कथं व्यक्तत्वाव्यक्तत्वयोः प्रयोजकत्वमित्यतस्तदुपपादयति ॥ **स्थौल्यादीति** ॥

(वाक्यार्थविवरणम्)

प्रथमादिपदेन सूक्ष्मत्वं द्वितीयेनाव्यक्तत्वं ग्राह्यम् । मूलरूपावान्तररूपाणामिति पाठे अवान्तर-मूलरूपाणामिति व्यत्यासेनान्वयो द्रष्टव्यः ॥ **व्यापकेति** ॥ व्यक्ताव्यक्तत्वव्यापकस्य स्थूलसूक्ष्म-विशेषस्यानुपलब्ध्येत्यर्थः ।

## वाक्यार्थमञ्जरी

**उत्पत्त्यादिरहितत्वादिति** ॥ तथा च व्यक्तत्वोपयोगिस्थूलत्वालाभ इति भावः । **गृहीतरूपैः** अवताररूपैः ॥ **तन्मात्रेति** ॥ भूतसूक्ष्मरूपरसगंधस्पर्शाख्यतन्मात्रालक्षणेत्यर्थः । अवताररूपा-परोक्षज्ञानस्य मोक्षाहेतुत्वान्मूलरूपापरोक्षज्ञानाय भक्तिरपेक्षितेत्यत आह ॥ **न हीति** ॥ इति नियमो न ह्यस्तीत्यन्वयः ॥ **शङ्काव्यावृत्त्यर्थ इति** ॥ दृष्टान्तान्तरानुक्त्या समुच्चयार्थत्वासम्भवादिति भावः ॥ **ॐ प्रकाशवच्चावैशेष्यं ॐ** ॥ ब्रह्म प्रकाशवच्च अग्निवद्व्यक्त्यव्यक्तिमन्न भवति । कुतः ? अवैशेष्यं तद्वद्विशेषरहितत्वं यत इत्यर्थः । पर एव सम्भवतीस्यार्थः । परमसूक्ष्म एव सम्भवतीति । अवताररूपाणामुत्पन्नत्वस्य शङ्कितत्वेन तदभावप्रतिपादनायाह ॥ **जननमर्दयतीति** ॥

## सूत्रभाष्यम्

**तर्हि किं यत्नेनेत्यत आह—**

**॥ ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ॥ २६ ॥**

**विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात्प्रकाशश्च भवति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' (बृ.उ.४-४-५) इति श्रुतेः ॥**

## तत्त्वप्रदीपिका

यद्येवं स्वतोऽव्यक्तं परतोऽप्यव्यक्तं रूपान्तरेऽप्यव्यक्तमेव । तर्हि तद्दर्शनार्थं श्रवणादिना यत्नेन किं स्यादित्यत आह– **प्रकाशश्च कर्मण्यभ्यासात्** ॥ निराकृतेऽप्यशब्दत्वे तदव्यक्तमित्युक्त्या कस्यचिदविषयत्वाशङ्का स्यादिति विषयभूते तस्मिन्नेवेत्युक्तम् । तद्विषयाण्येव श्रवणादी-न्यभ्यसनीयानीत्यभिप्रायः । न ह्यत्रावाच्यत्वमज्ञेयत्वं चाभिमतम् । अत एव श्रुतिरव्यक्तमित्युक्त्वा 'यज्ज्ञात्वा मुच्यते जन्तुः' इत्याह ।

## तत्त्वप्रकाशिका

**नन्वेवं ब्रह्मणः सर्वथाऽव्यक्तत्वे किं भेत्त्यादिना प्रयोजनमित्याशङ्कापरिहाराय सूत्रमवतार्य व्याचष्टे ॥ तर्हीति ॥ अव्यक्तत्वेऽपि ब्रह्मणो न ज्ञानार्थं प्रयत्नवैयर्थ्यम् । तद्विषये श्रवणाद्यभ्यासेन भक्तिपूर्वकेण तदापरोक्ष्यभावात् । अवाच्यस्य शास्त्रविषयत्वाऽभावान्न श्रवणादीति न वाच्यम् । विषयत्वस्येक्षत्यधिकरणे साधितत्वादिति भावः । श्रवणाद्यभ्यासेन ब्रह्मदर्शनं भवतीत्येतत्कुत इत्यत आह ॥ आत्मेति ॥**

## गुर्वर्थदीपिका

'कर्मण्यभ्यासात्' इति साक्षाद् ब्रह्मण एव श्रवणादिरूपशास्त्राभ्यासविषयतां वदतः सूत्रकृतो विरुद्धभाषिणो दुर्भाष्यकारस्य शङ्कामुत्थाप्य दूषयति **अवाच्यस्येति** ॥

## भावबोधः

**विषयत्वस्येक्षत्यधिकरण इति** ॥ अनेन सूत्रे कर्मणीत्यस्य तद्व्याख्यानपरस्य विषयभूते तस्मिन्नेवेति भाष्यस्य च प्रयोजनमुक्तं भवति ।

## भावदीपः

**सर्वथेति** ॥ एवं सूत्रत्रयोक्तदिशा क्रमात्स्वतो वा परतो वा रूपान्तरेण वा अव्यक्तत्व इत्यर्थः । शङ्कानिरासकतया सूत्रभाष्ये हेतुत्वेन व्याचष्टे ॥ **अव्यक्तत्वेऽपीति** ॥ भाष्ये वक्ष्यमाण-श्रुत्यनुरोधात् श्रवणपदमुपलक्षणं मत्वोक्तम् ॥ **श्रवणादीति** ॥ सूत्रे कर्मणीति भाष्ये च विषयभूत इति कस्मादुक्तमित्यतस्तत्साफल्यमाह ॥ **अवाच्यस्येति** ॥ लक्षणया शास्त्रविषयत्व-मस्त्वित्यनवस्थापराहतमिति प्रागेवोक्तमिति भावः । कथं विषयभूत इत्युक्तिमात्रेण शङ्कानिरास इत्यत आह ॥ **ईक्षतीति** ॥ ईक्षतेर्नाशब्दमित्यत्रेत्यर्थः । कर्मणीत्यनेन तत्रत्यन्यायस्मारणमात्रं कृतमिति भावः । स्मारणं चात्र निराकृतेऽप्यशब्दत्वे तदव्यक्तमित्युक्त्या कस्यचिदविषयत्वशङ्का स्यादिति तन्निवृत्त्यर्थमित्युक्तं तत्वप्रदीपे । नन्वथापि कथं श्रवणादित्रितयस्य तद्विषयत्वम् । श्रवणमननयोरौपदेशिकवाक्यार्थज्ञानयुक्तिपरामर्शजन्यानु मितिरूपयोर्ब्रह्मविषयकत्वेऽपि न निदिध्यासनस्य तद्युक्तम् । तस्य श्रवणमननजन्यवासनामयविषयकत्वात् । तस्य च ब्रह्मतायाः

(भावदीपः)

तथान्यत्प्रतिषेधादित्यत्र निरसिष्यमाणत्वादिति चेत्सत्यम् । तदधिष्ठानप्रतिमाविषयकनिदिध्यासनस्याऽपि तद्विषयत्वात् । वक्ष्यति च भाष्यकारः । तदुपासनं च भवति प्रतिमोपासनं यथेति ॥ **इत्यत आहेति** ॥ श्रुतौ श्रवणादिविधिमात्रप्रतीतावपि तदभ्यासेनैव तद्विधिपर्यवसानस्यावृत्तिरसकृदुपदेशादित्यत्र वक्ष्यमाणत्वादिति भावः ।

## वाक्यार्थमुक्तावली

तदव्यक्तमित्यनुवर्तते । चोऽप्यर्थे । तेनान्वेति । शङ्काव्यावृत्त्यर्थश्च । तस्मिन्नेवेत्यवधारणार्थश्च । विरोधसमुच्चयाय प्रकाशश्चेति यथाश्रुतान्वयश्च । ततश्च तदव्यक्तमपि न ज्ञानार्थं प्रयत्नवैय्यर्थ्यम् । यतः कर्मणि विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात्प्रकाशोऽपि भवतीति सूत्रार्थमाह ॥ **अव्यक्तत्वेऽपीत्यादिना** ॥ विषयभूते तस्मिन्नेवेति विषयत्वस्य पूर्वं प्रकृतत्वमुक्तम् । कुत्र तस्य प्रकृतत्वं किं च तत्स्मरणेनेत्यत आह ॥ **अवाच्यस्येति** । तदुक्तं तत्त्वप्रदीपे । निराकृतेऽप्यशब्देऽव्यक्तमित्युक्त्या विषयत्वशङ्का स्यादिति ॥ **विपयभूते तस्मिन्नेवेत्युक्तमिति** ॥

## तत्त्वसुबोधिनी

**तद्विपय इति** ॥ ब्रह्मविषय इत्यर्थः ।

## वाक्यार्थविवरणम्

ब्रह्मणः सर्वथाऽव्यक्तत्व इत्यनेन भाष्यस्थं तर्हीति पदं व्याख्यातम् ॥ **किं भक्त्यादिनेति** ॥ तथा च भाष्ये किं यत्नेनेत्येतद्भक्त्यादिरूपजीवप्रयत्नेन किं प्रयोजनमिति व्याख्यातमिति ध्येयम् ॥ **प्रयत्नेति** ॥ भक्तिश्रवणादिरूपेत्यर्थः । तस्मिन्नेव श्रवणादित्यत्र विषयत्वं सप्तम्यर्थ इत्याशयेनोक्तम् ॥ **तद्विषयेति** ॥ भाष्ये आत्मा द्रष्टव्यः दर्शनार्थं श्रोतव्य इत्यादियोजना द्रष्टव्या ।

## वाक्यार्थमञ्जरी

कर्मणि ब्रह्मविषये कृतादभ्यासात् पुनः पुनः कृतश्रवणादेः सकाशात्प्रकाशश्चापरोक्षज्ञानं भवतीत्यर्थः ।

## सूत्रभाष्यम्

नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—

**॥ ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ ॥ २७ ॥**

उभयत्र प्रमाणभावात्तत्प्रसादादेव प्रकाशो भवति । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.उ. १.१०) इति लिङ्गात् ।

युज्यते च तस्यानन्तशक्तित्वात् ।

'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येतामितं प्रभुम्' इति नारायणाध्यात्मे ।

## तत्त्वप्रदीपिका

अव्यक्तोऽपि प्रकाशते प्रसन्नः सन् । तादृशशक्तिमत्त्वात् । न चाव्यक्तं प्रकाशत इति विरुद्धम् । अव्यक्तं ज्ञात्वा मुच्यत इति श्रुतेरेव । 'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः' इति स्मृतेश्च ।

## तत्त्वप्रकाशिका

ननु कथं नित्याऽव्यक्तस्य ब्रह्मणः प्रकाशः श्रवणादिनाऽपि भवति । युक्तिविरोधात् । न हि साधनशतेनाऽदृष्टं दृष्टं भवतीत्याशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे ॥ **नित्येति** ॥ अव्यक्तस्याऽप्यापरोक्ष्यं ब्रह्मणो भवत्येव साधनसामर्थ्येन तदभावेऽपि तत्प्रसादादेव । कुत एतत् । अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसद्भावात्तदन्यथाऽनुपपत्त्या पुरुषप्रयत्नेनाऽप्रत्यक्षत्वं स्वप्रसादात् प्रत्यक्षत्वं च ज्ञायत इति भावः । बलवद्युक्त्या चैतत्साधयति ॥ **तस्येति** ॥ तस्याऽभिध्यानात् । इच्छया प्रसादेन संसारो निवर्तत इत्युच्यते । एतच्च मोक्षस्य प्रसादसाध्यत्वं लिङ्गं भगवत्प्रसादेन तद्दर्शनभावं च ज्ञापयति । 'दृष्ट्वैव तं मुच्यते' इति मोक्षस्य तद्दर्शनसाध्यत्वश्रवणात् । प्रसादाद्दर्शनं दर्शनान्मोक्ष इत्यवश्यमङ्गीकार्यत्वादिति भावः । नन्वव्यक्तस्वभावस्य प्रसादेनापि प्रत्यक्षता न युज्यते । न हि प्रसन्नोऽपि नरो वानरो भवितुमीष्ट इत्यत आह ॥ **युज्यते चेति** ॥ सूत्रार्थे स्मृतिं चाह ॥ **नित्येति** ॥ अतो दर्शनार्थं भक्तेः कर्तव्यत्वायुक्तं माहात्म्यवर्णनमिति सिद्धम् ।

## भावबोधः

प्रकाशपदमनुवृत्त्या'नन्तेन' इति सौत्रप्रतिज्ञाभागव्याख्यानपरं 'तत्प्रसादादेव प्रकाशो भवति' इति भाष्यं व्याचष्टे– **अव्यक्तस्यापीति ॥** प्रसादादेवेति । अनेन 'प्रसन्नेनानन्तेन' इति सूत्रयोजना सूचिता भवति । सौत्रा'तः'शब्दव्याख्यानपरमुभयत्र प्रमाणाभावादिति भाष्यं व्याचष्टे– **अव्यक्तत्व इति ॥ प्रसादसाध्यत्वलिङ्गमिति ॥** 'योजनतत्त्वभावपदो' क्तोपासनावृत्तिजनितप्रसादसाध्यत्वरूपं लिङ्गमित्यर्थः । दर्शनस्योक्तरूपभगवत्प्रसादजन्यत्वे कथमेतल्लिङ्गमित्यत आह– **दृष्ट्वैवेति ॥ दर्शनसाध्यत्वेति ॥** दर्शनैकसाध्यत्वेत्यर्थः ॥ **प्रसादाद्दर्शनमिति ॥** उपासनाजनितप्रसादस्य साक्षान्मोक्षजनकत्वाभावादित्यर्थः । प्रकृतब्रह्मपरामर्शस्य तत्पदादिनैव सम्भवादन्तेनेति किमर्थमुक्त-मित्यतोऽनन्तपदप्रयोजनप्रतिपादनपरं युज्यते चेत्यादिभाष्यं तन्निवर्तनीयाशङ्काप्रदर्शन-पूर्वकमवतारयति– **नन्विति ॥** अनेनानन्तशक्तित्वात् विष्णोस्तच्छक्त्याव्यक्तापि दर्शनोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति । सूत्रक्रमस्तु अत्राद्ये सूत्रे ब्रह्मणोऽव्यक्तैकस्वभावत्वोक्तिः । द्वितीये लौकिकयक्षादिप्रतिबन्दीमोचनम् । तृतीये वैदिकाग्न्यादिप्रतिबन्दीनिवारणम् । चतुर्थे अव्यक्तत्वे भक्त्यादिसाधनवैयर्थ्यपरिहाराय दृश्यत्वोक्तिः । पञ्चमे तदुभयं विरुद्धमित्या-शङ्कापरिहाराय विरोधशामकानन्तशक्तित्वाद्युक्तिरिति ।

## भावदीपः

**युक्तीति ॥** अव्यक्तैकस्वभावत्वात्परमाण्वाकाशादिवदप्रत्यक्षं ब्रह्मेति युक्तिविरोधादित्यर्थः । साधनसामर्थ्यादस्त्वित्यत आह **॥ न हीति ॥** प्रकाशो भवतीत्यन्तं भाष्यं व्युत्क्रमेण व्याचष्टे ॥ **अव्यक्तस्यापीति ॥** एतेनाव्यक्तपदस्यापिपदस्य चानुवृत्तिः सूचिता । एवकारव्यावर्त्योक्तिः साधनेति **॥ प्रमाणेति ॥** सदाव्यक्तं च निष्कलमिति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति च श्रुतिरूपप्रमाणेत्यर्थः **॥ बलवद्युक्त्या चेति ॥** प्रागुक्ताप्यर्थापत्तिरूपा युक्तिरेव बलवती च । तथापि प्रागुक्तप्रमाणस्य श्रुतिरूपत्वमुपेत्यैवमुक्तम् । यद्वा प्रसादस्य संसारनिवर्तकत्ववचनरूपलिङ्गेन मोक्षस्य प्रसादसाध्यत्वानुमानं प्रसादरूपकार्येण चापरोक्षज्ञप्त्यनुमानमित्यनुमानरूपयुक्त्येत्यर्थः । प्राचीनार्थापत्तिरनुमानविशेष इति भावः **॥ एतच्चेति ॥** लिङ्गमित्यन्वयः । ज्ञापयतीत्युक्तं ज्ञाप्यज्ञापकभावं व्यनक्ति **॥ दृष्ट्वैवेति ॥ सूत्रार्थे** सूत्रस्य फलितार्थे **॥ स्मृतिं चेति ॥** न केवलं

(भावदीपः)

युज्यत इत्यादिना युक्तिमुक्तवानिति चार्थः ॥ **अत इति** ॥ अव्यक्तैकस्वभावस्यापि निजशक्त्यादिना प्रत्यक्षत्वस्य प्रमितत्वादिति भावः ।

## वाक्यार्थमुक्तावली

तदव्यक्तमपि तस्य प्रकाश इत्यनुवर्तते । अनन्तेनेत्यस्यापरिच्छिन्नशक्तिकेनेत्यर्थः । तत्प्रसादेनेति यावत् । अवधारणार्थकश्चकारोऽत्रानुवर्तत इति भावेन प्रवृत्तं तत्प्रसादादेव प्रकाशो भवतीति भाष्यं व्याचष्टे ॥ **अव्यक्तस्यापीत्यादिना** ॥ अत इत्यनेनाह हि प्रकाशश्चेत्यत्यत्राभिप्रेतश्रुतिद्वयं परामृश्यत इति भावेन प्रवृत्तमुभयत्र प्रमाणाभावादित्येतद्व्याचष्टे । **कुत एतदित्यादिना** ॥ **बलवद्युक्त्येति** ॥ व्याप्त्यादिमत्वेन श्रौतत्वेन च बलवत्वमिति भावः । तथेति समुच्चये । हिशब्दो यस्मादित्यर्थे । हि यस्मात्तस्याभिध्यानादिति श्रुत्युक्तमोक्षस्य प्रसादसाध्यत्वलक्षणलिङ्गमस्ति तस्मादनन्तप्रसादेनैव प्रकाश इति सूत्रार्थपरं तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरिति लिङ्गात् तत्प्रसादादेव प्रकाशो भवतीति भाष्यं व्याचष्टे ॥ **तस्याभिध्यानादिति** ॥ अभिध्यानादित्यस्यार्थः इच्छया प्रसादेनेति । प्रसादो नामेच्छाविशेष इत्यत्र टीकायामेवोक्तेरिति ज्ञेयम् । कथमेतल्लिङ्गं प्रसादेनापरोक्षज्ञानं भवतीत्येतज्ज्ञापयतीत्यत आह ॥ **दृष्ट्वैवेति** ॥ तत्प्रसादादिति वाच्ये अनन्तेनेत्युक्तिः किमर्थेत्यतो विरोधपरिहारकं पुंशक्तिरित्युक्तन्यायं प्रदर्शयितुमिति भावेन प्रवृत्तं भाष्यं व्याचष्टे ॥ **नन्विति** ॥ योजनान्मनो योजनाद्भूयो भूयो तत्वभावादुपासनादभिव्यक्तात्तस्याभिध्यानात् प्रसादादन्ते विश्वबन्धकमायानिवृत्तिरिति श्रुत्यर्थः । पूर्वपक्षिणा ब्रह्म किं व्यक्तमुताव्यक्तमिति विकल्प्य दूषितम् । तत्र प्रथमविकल्पोक्तदोषपरिहाराय सूत्रत्रयम् । तत्राद्येऽव्यक्तस्वभावत्वे श्रुत्युक्तिः । द्वितीये लौकिकयक्षादिप्रतिबन्दीमोचनम् । तृतीये वैदिकाग्न्यादिप्रतिबन्दीमोचनम् । चतुर्थे द्वितीयपक्षोक्तदोषोद्धारः । पञ्चमे विरोधपरिहार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**युक्तिविरोधादिति** ॥ एकस्यैव प्रत्यक्षायोग्यत्वरूपाव्यक्तत्वं प्रत्यक्षयोग्यत्वरूपं व्यक्तत्वं चेत्येतद्युक्तिविरुद्धमित्यर्थः । प्रकाशपदमनुवृत्य अनेनेति सौत्रप्रतिज्ञाभागव्याख्यानपरं तत्प्रसादादेव प्रकाशो भवतीति भाष्यं व्याचष्टे ॥ **अव्यक्तस्यापीति** ॥ **प्रसादादेवेति** ॥ अनेन प्रसन्नेनानन्तेनेति सूत्रयोजना सूचिता भवति । सौत्रातःशब्दव्याख्यानपरमुभयत्र प्रमाणाभावादिति भाष्यं व्याचष्टे ।

(तत्त्वसुबोधिनी)

**अव्यक्तत्व इति ॥ प्रसादसाध्यत्वं लिङ्गमिति ॥** योजनतत्त्वभावपदोक्तोपासनावृत्तिजनित-प्रसादसाध्यत्वं लिङ्गमित्यर्थः । दर्शनस्योक्तरूपभगवत्प्रसादजन्यत्वे कथमेतल्लिङ्गमित्यत आह ॥ **दृष्ट्वैवेति ॥ दर्शनसाध्यत्वेति ॥** दर्शनैकसाध्यत्वेत्यर्थः । प्रसादाद्दर्शनमिति उपासनाजनितप्रसादस्य साक्षान्मोक्षजनकत्वाभाव इत्यर्थः । प्रकृतब्रह्मपरामर्शस्य तत्पदादिनैव सम्भवादनन्तेनेति किमर्थमुक्तमित्यतोऽनन्तपदप्रयोजनप्रतिपादनपरं युज्यते चेत्यादिभाष्यं तन्निवर्तनीयाशङ्कापूर्वक-मवतारयति ॥ **नन्विति ॥** नित्याव्यक्त इति भाष्ये प्रसादादेवेति शेषः । एवं च नित्याव्यक्ता-परोक्षभगवान् पुरुषेण भगवत्प्रसादादेव ईक्ष्यते । कुत इति न वाच्यम् । कः पुमानमितं प्रभुं परमात्मानं तमृते भगवत्प्रसादं विना निजभक्तितः स्वसामर्थ्येन पश्येत् न कोऽपीत्यर्थः । अत्राद्ये सूत्रे ब्रह्मणोऽव्यक्तैकस्वभावोक्तिः । द्वितीये यक्षादिप्रतिबन्दिमोचनम् । तृतीये अग्न्यादिप्रतिबन्दि-निवारणम् । चतुर्थे दृश्यत्वोक्तिः । पञ्चमेऽचिन्त्यशक्तित्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**प्रसादात्प्रत्यक्षत्वं चेति ॥** अत एवानुव्याख्याने 'अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः' इत्युक्तमिति ध्येयम् । अभिध्यानादित्यस्येच्छयेति व्याख्यानम् । इच्छया इत्यस्य प्रसादेनेति । अनेनास्मन्मते एनं जीवं मोचयिष्य इति भगवदिच्छाविशेष एव प्रसादो नान्य इत्युक्तं भवतीति ज्ञेयम् ॥ **तद्दर्शनभावम् ॥** भगवदापरोक्ष्यस्य सत्त्वम् ॥ **प्रसादादिति ॥** नन्वात्यन्तिकप्रसादस्य दर्शनसाध्यस्य साक्षान्मोक्षहेतुत्वात् कथमेतदिति चेदुच्यते । नात्र प्रसादशब्देन ज्ञानसाध्य आत्यन्तिकोऽभिप्रेतः । किं नाम योजनात्तत्वभावादित्युक्तो भूयो भूयो भगवति मनोयोजना-ख्योपासनाजनित एव प्रसादः । तस्य चोपसनाजनितस्य 'विश्वमायानिवृत्तिः' इत्युक्तमोक्षहेतुत्वं साक्षान्न सम्भवति ॥ **दृष्ट्वैवेति ॥** श्रुतिविरोधादत उपासनाजन्यात् प्रसादाद्दर्शनं, दर्शनान्मोक्ष इति व्याख्यानकरणाददोषः । अत एव प्रसादसाध्यत्वलिङ्गमित्येतदप्युपासनाजनितप्रसादसाध्यत्व-लिङ्गमित्येव व्याख्येयमिति ध्येयम् ॥ **अव्यक्तत्स्वभावस्य ॥** प्रत्यक्षत्वस्वभावशून्यस्य । अनन्त-शक्तित्वादित्युक्त्या अनन्तेन अघटितघटकतयाऽनन्ता या शक्तिस्तद्युक्तेनेत्यर्थकरणादतत्स्व-भावस्यापि भगवतस्तद्बलाद्युक्तमपरोक्षत्वम् । प्रसन्ने च नरे तादृशशक्त्यभावाद्धानराभवनं युक्तमिति ध्येयम् । भाष्ये निजशक्तितोऽघटितघटकसामर्थ्यतोऽधिकारिणा ज्ञानेन विषयीक्रियते ॥ तमृते ॥ प्रसन्नं तमृते तत्प्रसादं विनेति यावत् ॥ कः पश्येत् ॥ स्वप्रयत्नेनेति शेषः ।

## वाक्यार्थमञ्जरी

अनन्तेनापरिच्छिन्नशक्तिमता ब्रह्मणा तत्प्रसादेनेति यावत् । अव्यक्तस्यापि प्रकाशो भवति । कुतः ? अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसत्वात् तथा हि लिङ्गं बन्धनिवृत्तेः प्रसादसाध्यत्वरूपं ज्ञानस्य प्रसादसाध्यत्वे लिङ्गं ज्ञापकं हि यस्मात्तदस्तीत्यर्थः ॥ **प्रसादसाध्यत्वेऽपि** ॥ प्रयोजनस्तत्त्वभावपदोक्तोपासनाजनितमध्यमप्रसादसाध्यत्वलिङ्गमित्यर्थः । दर्शनस्योक्तप्रसादजन्यत्वे कथमेतल्लिङ्गमित्यत आह ॥ **दृष्ट्वेति** ॥ **दर्शनसाध्यत्वेति** ॥ दर्शनैकसाध्यत्वेत्यर्थः ॥ **प्रसादादर्शनमिति** ॥ उपासनाजन्यमध्यमप्रसादस्य साक्षान्मोक्षहेतुत्वाभावात् । अव्यक्तत्स्वभावस्याप्रत्यक्षत्वस्वभावस्य ।

॥ इति अव्यक्ताधिकरणम् ॥ १४ ॥

## १९. उभयव्यपदेशाधिकरणम्

स्वरूपेणाऽऽनन्दादिना कथमानन्दित्वादिरित्यत्रोच्यते —

**॥ ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ २८ ॥**

'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.२-४)। 'अथैष एव परम आनन्द' (बृ. उ. ६-३-३३) इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते। यथाऽहिः कुण्डली कुण्डलं च। तुशब्दात्केवलश्रुतिगम्यत्वं दर्शयति।

### तत्त्वप्रदीपिका

ज्ञानानन्दरूपं ब्रह्मेत्युक्तम्। अतो न भिन्ना ज्ञानानन्दादिगुणाः। न चेत्सम्बन्धो वाच्यः। न चासौ समस्तीष्यते वा। यद्यभिन्नास्तदा कथमानन्दित्वादिसम्बन्धव्यपदेशो दण्डीत्यादिवदित्यत्रोच्यते ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ स्वरूपत्वव्यपदेशात्तद्वत्त्वव्यपदेशाच्चाऽनन्दत्वमानन्दित्वं च। युज्यते च। लोके तथा दृष्टत्वात्। यथाऽहिः कुण्डली कुण्डलात्मकश्चेति।

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तिसाधनभक्त्यर्थं तस्य गुणित्वसमर्थनादस्ति शास्त्रादिसङ्गतिः। गुणित्वाभावे तत्र भक्त्यनुदयात्तत् समर्थनीयम्। प्रकृता भक्तिरेव विषयः। कर्तव्या न वेति सन्देहः। पूर्वोक्तमेव सन्देहवीजम्। पूर्वपक्षयति ॥ **स्वरूपेणेति** ॥ न भगवद्भक्तिः कर्तव्या। तस्याऽऽनन्दित्वाद्यभावात्। न ह्यगुणिनि भक्तिरुपपन्ना। न चाऽऽनन्दित्वादिकमङ्गीकर्तुं शक्यं ब्रह्मणः। आनन्दादीनां तत्स्वरूपत्वाभ्युपगमात्। अन्यथा समवायनिराकरणाऽनुपपत्तेः। स्वरूपेण चाऽऽनन्दादिना आनन्दित्वादेर्युक्तिविरुद्धत्वात्। अथाऽपि गुणित्वाऽङ्गीकारे गुणानां तत्स्वरूपत्वं त्याज्यम्। गुणानां गुणिस्वरूपत्वस्य युक्तिविरुद्धत्वात्। न चाऽऽनन्दादिभोक्तृतां विना तत्स्वरूपत्वं महिमा। द्रविणवत्त्वे हि पारिवृढ्यं न तु द्रविणत्वे। अतो गुणित्वाभावेन भक्त्ययोगाद्भक्त्यर्थं माहात्म्यवर्णनमिति भावः।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ कर्तव्यैव भगवद्भक्तिः। श्रुतिषु गुणात्मकत्वेन गुणित्वेन च व्यपदेशात्। गुणस्वरूपस्याऽप्यानन्दित्वाद्युपपत्तेरिति भावः। ननु श्रौतमपि

(तत्त्वप्रकाशिका)

गुणात्मकस्य गुणित्वं कथं युज्यते अदर्शनादित्यत आह ॥ **अहीति** ॥ तदेव विवृणोति ॥ **यथेति** ॥ यथा कुण्डलात्मकस्याप्यहेर्विशेषादेव कुण्डलित्वमेवमानन्दाद्यात्मकस्याऽपि ब्रह्मणो विशेषादेवाऽऽनन्दित्वादिकं युज्यत इति भावः । नेश्वरो गुणवान् गुणात्मकत्वाद्यथा न स्वः स्ववान् दण्डो दण्डवान्वा । आनन्दाऽऽद्या न ब्रह्मणो गुणास्तत्स्वरूपत्वाद् ब्रह्मवदित्यत आह ॥ **तुशब्दादिति** ॥ भवेदत्र युक्तिविरोधो यदि ब्रह्मस्वरूपादियुक्तिगम्यं स्यात् नैतदस्ति केवलश्रुतिगम्यत्वादिति भावः ।

## भावबोधः

**गुणित्वसमर्थनादिति** ॥ 'अतोऽनन्तेन' इति पूर्वसूत्रगता'तः'शब्दोक्तप्रमाणद्वयान्यथानुपपत्त्या व्यक्तस्वभावस्याप्यपरोक्षसाधनवदिहाप्यानन्दित्वानन्दत्वरूपोभयव्यपदेशादानन्दादिगुणरूपस्यापि ब्रह्मण आनन्दित्वादिगुणित्वसमर्थनादनयोरेकरूपसिद्धान्तयुक्त्युपेतत्वेनानन्तरसङ्गतिरिति भावः ॥ **कर्तव्येति** ॥ अत्र भक्तिर्न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं ब्रह्मणो गुणित्वं नास्त्युतास्तीति । गुणस्वरूपस्यापि ब्रह्मणो गुणित्वे युक्त्यभावतद्विरोधौ भवत उत नेति । तदर्थं ब्रह्म शुष्कतर्कगम्यं भवत्युत नेति ॥ **अन्यथेति** ॥ आनन्दादीनां भेदे गुणगुणिनोर्युतसिद्ध्यभावेन घटपटयोरिव संयोगासम्भवाद्गुणगुणिभावोपपत्त्यर्थं समवायस्यावश्यमङ्गीकार्यत्वेन तन्निराकरणानुपपत्तेरित्यर्थः । आनन्दादीनां स्वरूपत्वाभ्युपगमेऽपि कुतो ब्रह्मण आनन्दित्वादिकमङ्गीकर्तुमशक्यमित्यतः स्वरूपेणेत्यादिभाष्यं योजयति– **स्वरूपेणेति** ॥ युक्तिश्च नेश्वरो गुणवानिति वक्ष्यमाणा । गुणानां गुणिस्वरूपत्वं विरुद्धमिति न्यायविवरणं योजयितुमाह– **अथापीति** ॥ तद्योजयति– **गुणानामिति** ॥ युक्तिस्त्वानन्दाद्या न ब्रह्मगुणा इत्यादिवक्ष्यमाणा ।

ननु गुणित्वरूपमहिमाभावेऽपि आनन्दादिगुणस्वरूपत्वरूपमहिमवत्त्वेन ब्रह्मणो भक्तिविषयत्वं स्यादित्यत आह– **न चेति** ॥ यो यदात्मकः स तद्वान्न भवतीति सामान्यव्याप्त्यपेक्षयाह– **न स्व इति** ॥ यो यद्धर्मात्मकः स तद्धर्मवान्न भवतीति, विशेषव्याप्त्यपेक्षयाह– **दण्ड इति** ॥ यद्वा विशेष्यापेक्षयाद्यः, विशेषणापेक्षया द्वितीय इति ॥ **केवलश्रुतिगम्यत्वादिति** ॥ केवलशब्देन 'नेश्वर' इत्यादि शुष्कनिरासः । तेन 'उभयव्यपदेशात्तु' इति युक्तिकथनं न विरुद्धमिति ज्ञातव्यम् । यथा कुण्डलात्मकस्याप्यहेः कुण्डलित्वं यथा प्रकाशात्मकस्यादित्यस्य प्रकाशित्वं यथा कालस्य चेति वाक्यत्रयेण कालादिदृष्टान्तादिति न्यायविवरणमप्युक्ततात्पर्यं भवति ।

## भावदीपः

**गुणित्वेति** ॥ भाष्ये आनन्दित्वादीत्यनेन ज्ञानेच्छाशक्त्यादिगुणवत्त्वमात्रग्रह इति भावः । यद्यपि गुणात्मकत्वसमर्थनमपि प्रतीयते । तथापि समवायनिरासेन आह च तन्मात्रमित्यादिना गुणगुणिनोरभेदे विवादाभावात् गुणित्वे गुणरूपत्वं विरुद्धमिति प्रसक्तचोद्यनिरासाय गुणात्मकत्वस्योक्तावपि भक्त्यर्थं गुणित्वसमर्थन एव तात्पर्याद् गुणित्वेत्युक्तम् । यद्वा गुणात्मकत्वस्यापि समर्थनेऽपि तस्य भक्तावनुपयोगाद्गुणित्वेत्येकदेशानुवादः । एतेन पूर्वत्र स्वतोऽव्यक्तस्यापि निजशक्त्या व्यक्तत्वोक्तिवदत्रापि गुणात्मनोऽपि विशेषशक्त्या गुणित्वं चोच्यत इति वा तस्याभिध्यानादिति प्रागुक्तमयुक्तं इच्छादिरूपस्य तस्याभिध्यानादिति तस्यानन्तशक्तित्वादिति च निर्देशायोगादित्याक्षेपाद्वा पूर्वसङ्गतिः सूचिता । कथंशब्दस्य प्रश्नार्थत्वं निरसितुमाह ॥ **पूर्वपक्षयतीति** ॥ फलोक्तिपूर्वं भाष्यं व्याचष्टे ॥ **नेत्यादिना** ॥ कथंशब्दस्याऽक्षेपार्थत्वलब्धं हेतुमाह ॥ **तस्येति** ॥ हेतोरप्रयोजकत्वनिरासाय गुणानां गुणिस्वरूपत्वं विरुद्धमित्यन्यत्रोक्त्यनुरोधेन गुणित्वाभावे तात्पर्यमिति भावेन तस्य हेतुत्वं व्यनक्ति ॥ **न हीति** ॥ पूर्वभाष्यांशस्य तत्र हेतुत्वं व्यनक्ति ॥ **न चेत्यादिना** ॥ अन्यथा गुणगुणिनोर्भेदे । यद्यपि ज्ञानज्ञेयादेरिव गुणगुणिनोर्भेदेऽपि स्वरूपसम्बन्धेनैव विशिष्टप्रतीत्युपपत्या समवायनिरासस्म्भवेन न तन्निरासो गुणगुणिनोरभेदं गमयति । तथापि स्वरूपसम्बन्धे तेषां नानात्वे गौरवादेकः समवाय एव युक्तः । स चेन्निरस्यते तदैक्यमेवोपेतं भवतीति भावः । हेतोरप्रयोजकत्वं निराह ॥ **स्वरूपेण चेति** ॥ **युक्तीति** ॥ नेश्वर आनन्दादिमान् तदात्मकत्वात् यथा स्वयं न स्ववानिति । आनन्दाद्या न ब्रह्मगुणास्तदात्मकत्वात् ब्रह्मवदित्यादियुक्तिविरुद्धत्वादित्यर्थः । गुणानां गुणिस्वरूपत्वं विरुद्धमित्यन्यत्रोक्त्युपलक्षितं गुणानामित्यादिवाक्यं योजयति ॥ **गुणानामिति** ॥ **युक्तीति** ॥ न गुणाः गुणिस्वरूपं तद्धर्मत्वाद्भूतलधर्मिकघटवदित्यादियुक्तीत्यर्थः । मास्तु गुणित्वं गुणात्मकत्वेनैव भक्तिरुत्पद्यतामित्यत आह ॥ **न चेति** ॥ **भोक्तृतामिति** ॥ सा चानन्दित्व एव युक्ता अहं सुखीत्यनुभवस्यैव भोगरूपत्वादिति भावः ॥ **अत इति** ॥ गुणात्मनो गुणित्वायोगाद्ब्रह्मणश्च गुणात्मकत्वात् गुणात्मकताया अमहिमरूपत्वादित्यर्थः ।

फलोक्तिपूर्वं भाष्यं हेतुत्वेन योजयति ॥ **कर्तव्यैवेति** ॥ एतेन भाष्ये इत्युभयव्यपदेशात् युज्यते गुणस्वरूपस्याप्यानन्दादिगुणित्वमिति योजना सूचिता । तदभिन्ना गुणा नित्यमपि सर्वे विशेषतः ।

(भावदीपः)

गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थिता इत्यनुभाष्यदिशा हेतुं वदन् यथेत्यादिभाष्यं व्याचष्टे ॥ **कुण्डलात्मकस्यापीति** ॥ भूतलघटयोरिव भेदव्याप्तमुख्याधाराधेयभावस्याऽपि अभावमुपेत्याह ॥ **यथा न स्ववानिति** ॥ यो यदात्मकः स तद्वान्न भवति यथेश्वरो न स्ववानित्यर्थः । यदि न सङ्ख्योपसङ्ग्रहादिति सूत्रे 'यस्मिन्पञ्च पञ्चजनाः' इत्यादिश्रुतौ चैकस्यापि विशेषकृतमाधाराधेयभावं सिद्धं मन्यसे तदा देवदत्तो न स्ववानिति यथेत्यर्थो ध्येयः । यद्वा येन रूपेणाधारत्वं तेन रूपेणैव तत्प्रत्याधेयत्वं नेति भावेनोक्तम् ॥ **यथा न स्ववानिति** ॥ व्यतिरेकव्याप्तेरनुमित्यनङ्गत्वेऽपि व्यभिचारशङ्कानिवर्तनेन कथञ्चिदुपयुक्ततायाः प्रमाणपद्धत्यादावुक्तत्वात् यो यद्वान् स तदात्मको नेति व्यतिरेकव्याप्तिं मत्वा तत्र दृष्टान्तमाह ॥ **दण्डवान्वेति** ॥ यथेत्यनुषङ्गः । यथा दण्डवान् दण्डात्मको न भवति तथेत्यर्थः । क्वचित्तु यथा न स्वः स्ववान् दण्डो दण्डवान्वेति पाठः । तदा तु स्वोऽर्थः स्ववान्न दण्डो दण्डवान्नेत्यर्थः । विशिष्याप्याह ॥ **आनन्दाद्या इति** ॥ यद्वा तस्य गुणवत्त्वं निरस्य तेषां तद्गुणत्वं निराह ॥ **आनन्दाद्या इति** ॥ **नैतदस्तीति** ॥ तच्च प्रतिपादितं शास्त्रयोनिसूत्र इति भावः ।

## अभिनवचन्द्रिका

**अथापीति** ॥ समवायनिराकरणानुपपत्तिरूपदूषणसद्भावेऽपि गुणित्वाङ्गीकारे गुणानां तत्स्वरूपत्वं त्याज्यं स्यात् । न च तदिष्टम् तत्प्रतिपादकवेदाप्रामाण्यप्रसङ्गात् । ततश्च वेदविहिताया अपि भक्तेरकर्तव्यत्वप्रसङ्ग इति भावः । **भाष्येऽहिकुण्डलवदेवेति** ॥ तावदिति शेषः । अहिकुण्डलवदेव तावद्युज्यते । अहिकुण्डलदृष्टान्तमात्रेणैव अभिन्नयोर्धर्मधर्मि भावानुपपत्तिशङ्कापरिहाराय अहिकुण्डलदृष्टान्त उपात्तः, तावतैव च स्थूलमतीनां शङ्का निवर्तते । अत्यन्ताभिन्नयोर्धर्मधर्मिभावोऽसम्भावित इति शङ्कोदये च दृष्टान्तान्तरं वक्ष्यतीति । एतेन दृष्टान्तान्तरस्य वक्ष्यमाणत्वात् अहिकुण्डलवदेवेत्यवधारणमनुपपन्नमिति परास्तम् । स्थूलमतीनां तावन्मात्रेणैव शङ्का निवर्तत इत्याशयेन तदुपादानमित्यङ्गीकारात् ॥ **यथाकुण्डलात्मकस्यापीति** ॥ अत्र विशेषशब्दो भेदपरः । ततश्च यथा कुण्डलस्य सत्यप्यभेदे भेदमात्रेण धर्मधर्मिभावः, तथा ब्रह्मधर्माणां सत्यप्यभेदे भेदप्रतिनिधिना विशेषेणैव धर्मधर्मिभाव इत्यर्थः । एतेन कुण्डलस्याऽयावद्द्रव्यभावित्वेन भेदाभेदसद्भावात् विशेषेण धर्मधर्मिभाववर्णनमयुक्तमिति परास्तम् ॥ **दृष्टान्तान्तरेणेति** ॥ अहिकुण्डलदृष्टान्तस्याऽत्यन्ताभिन्ने धर्मधर्मिभावानुपपादकत्वात् दृष्टान्त्रान्तरेण श्रौतस्य धर्मधर्मिभावस्याऽ-

(अभिनवचन्द्रिका)

सम्भावनापरिहारेण उक्तमर्थमुपपादयत्सूत्रमित्यर्थः । **भाष्ये एवं वा दृष्टान्त इति** ॥ यथा प्रकाशाश्रयस्य प्रकाशाभेदेऽपि प्रकाशित्वम्, एवं ब्रह्मणोऽपि प्रकाशाभेदेऽपि प्रकाशित्वमित्यस्मिन्नर्थेऽयं दृष्टान्त इत्यर्थः । सूर्यादिदृष्टान्तेन प्रकाशगुणाभेदेऽपि तद्गुणित्वे सिद्धे तन्न्यायेन आनन्दाद्यात्मकत्वेऽपि आनन्दित्वादिकं सिध्यतीति भावः । इममेवाभिप्रायं मनसि निधायाह टीकायाम् **एवं ब्रह्मणो गुणात्म कस्यापीति** ॥ एतेन भाष्ये' एवं वा दृष्टान्त' इत्यभिधानं व्यर्थम् । दृष्टान्तत्वस्य स्फुटं प्रति भासत्वादिति परास्तम् । प्रकाशगुणाभेदेऽपि प्रकाशित्व-मित्यर्थविशेष एवाऽयं दृष्टान्त इति द्योतनार्थत्वात् ।

ननु यो यदात्मको नासौ तद्गुण इति परकीयसामान्यव्याप्तिखण्डनस्य आदित्यदृष्टान्तेनेव घटादिदृष्टान्तेनापि सम्भवात् किं विशिष्य आदित्यग्रहणेनेति भावेन सिद्धान्त्याशयमविद्वान् शङ्कते टीकायां **ननु घटादीनामिति** ॥ **भाष्ये तेजोरूपत्वाद्ब्रह्मण इति** ॥ ब्रह्मणः प्रकाशरूपत्वात्तद्गुणित्वसाधनाय यः प्रकाशात्मकः नासौ प्रकाशगुण इति विशेषव्याप्तिनिरासायैवाऽयं दृष्टान्त उपात्तः । न तु सामान्यव्याप्तिनिरासायेति भावः । एतेन विवक्षितसाध्यसाधनभावसाम्यस्यैव दृष्टान्तदार्ष्टान्तिकयोरपेक्षितत्वेन तेजस्त्वाभिधानमयुक्तमिति परास्तम् । सूत्रयोजना तु ब्रह्मणस्तेजोरूपत्वस्य प्रामाणिकत्वात् प्रकाशाश्रयवत् = सूर्यादिवत् विशेषबलेनैव तद्गुणित्वं न तु भेदेनेति । एतेन 'पूर्ववद्वा' इत्युत्तर सूत्रवत्प्रकाशाश्रयवद्वे'त्येतावतैव पूर्णत्वात्तेजस्त्वात्' इति व्यर्थम्' इति परास्तम् । प्रकाशरूपत्वस्य प्रामाणिकत्वात् विशेषबलेनैव प्रकाशित्वं निर्वाह्यम् न तु भेदेनेति ज्ञापनाय तद्ग्रहणस्याऽऽवश्यकत्वात् ॥ **एतत्समर्थयदिति** ॥ अत्यन्ताभेदेऽपि गुणगुणिभावं समर्थयत्सूत्रमित्यर्थः ॥ **व्यर्थोक्तेरिति** ॥ समर्थनीयस्यात्यन्ताभिन्नयोर्गुणगुणिभावस्य प्रकाशाश्रयदृष्टान्तेनैव समर्थितत्वात् 'पूर्ववत्' इति दृष्टान्तस्य नेदं प्रयोजनं वृथोक्तेरपर्यवसानेनायोगात् प्रयोजनान्तरमस्तीति तावद्गम्यते । किं तत्प्रयोजनं यदर्थं सूत्रकारो दृष्टन्तान्तरं वक्ति तद्वक्तव्यमित्यत आहेत्यर्थः । एतेन पूर्ववद्वेति दृष्टान्तस्य व्यर्थत्वनिश्चये 'किमर्थोऽयं दृष्टान्त' इति प्रश्नायोगः । नेति पक्षे 'व्यर्थो क्तेरपर्यवसानात्' इति व्यर्थमिति परास्तम् । **भाष्येऽतिसूक्ष्मत्वापेक्षयेति** ॥ ब्रह्मणोऽतिगहनत्वेन दुर्ज्ञेयत्वात् नैकेन दृष्टान्तेन तद्बोधनं शक्यमिति दृष्टान्तान्तरोपादानमित्यर्थः । टीकायां अलमनेनेति ॥ अनेन दृष्टान्तद्वयेन अलम् । अत्यन्ताभिन्नयोर्गुणगुणिभावसाधकत्वात् । तदसाधकेन किमाद्येन दृष्टान्तेनेत्यर्थः । एतेन प्रथमतृतीय-

(अभिनवचन्द्रिका)
दृष्टान्तयोः प्रयोजनमुक्त्वा द्वितीयदृष्टान्तस्य तदनभिधानात् स व्यर्थ इति प्राप्तमिति परास्तम् । शयनशब्दस्य निद्रापरत्वस्य प्रकृतेऽनुपयोगात् अयोगाच्च आह– **शयनमिति** ॥ अत्रापि स्मृतौ 'यथाङ्गे शयनादिकम्' इति दृष्टान्तद्वयं सूत्रेऽहिं कुण्डलदृष्टान्तवत् स्थूलबुध्यपेक्षयेति बोध्यम् । एतेन अवस्थाविशेषादेरयावद्द्रव्यभावित्वेन भिन्नाऽभिन्नत्वात् अत्यन्ताभिन्नयोर्धर्मधर्मिभावोपपादनाय तदुदाहरणमयुक्तमिति परास्तम् । **आदिपदेनेति** ॥ 'शयनादिक'मित्यादिपदेन 'अङ्गं शेत इत्यत्र' योऽङ्गस्य शयनरूपक्रियया सह क्रियाकर्तृभावः स ग्राह्यः । तथा च यथा अवस्थाविशेषस्याङ्गाऽभिन्नस्याऽङ्गक्रियात्वं भवति, तथा ब्रह्माभिन्नोऽ प्यानन्दः ब्रह्मविशेषणं भवतीत्यर्थः । पूर्वं शयनस्याङ्गाऽभिन्नस्य सामान्येनाङ्गविशेषणत्वमात्रमुक्तम्, इह तु अङ्गक्रियात्वमुक्तमिति भेदः । **घटादिवदिति** ॥ यथा घटस्य स्वावयवैरभेदमात्रं नात्यन्ताभेदः, तथा ब्रह्मणोऽपीति प्रतीतिनिरासाय 'एकमेव' इति सावधारणमेकत्वमुक्तमिति भावः ।

पूर्वपक्षस्तु न भगवद्भक्तिर्युक्ता । तस्यानन्दाद्यात्मकत्वेनानन्दित्वादिशून्यत्वात् । न च आनन्दादिभोक्तृत्वं विना तत्स्वरूपत्वं महिमा । अतो गुणित्वाभावेन तत्र भक्त्ययोगाव्द्यर्थं तन्माहात्म्यवर्णनमिति ।

सिद्धान्तस्तु युक्तैव भगवद्भक्तिः । उभयव्यपदेशबलेन गुणात्मकस्यापि अहिकुण्डलवत्, प्रकाशवत्, पूर्वकालवच्च विशेषणविशेष्यभावाङ्गीकारेण गुणित्वसम्भवात् किमनेन गुणगुणिनोरभेदमङ्गीकृत्य गुणगुणिभावाङ्गीकारेण भेद एव किं न स्यादिति चेत्, न 'एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन' इत्यादिना भेदस्य निषिद्धत्वात् । अतो गुणिनि हरौ भक्तिसम्भवाद्युक्तं माहात्म्यवर्णनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**गुणित्वसमर्थनादिति** ॥ पूर्वमचिन्त्यशक्तिमत्त्वादव्यक्तस्यापि व्यक्तत्वमुक्तम् । स्वरूपभूतया शक्त्या कथं शक्तिमत्वमित्यतः शक्तिमत्त्वसमर्थनादनन्तरसङ्गतिरिति भावः । यद्वा तर्कबाधो हि सूत्रपूर्वपक्षन्यायः । स एवात्रेत्यनन्तरसङ्गतिरिति भावः ॥ **कर्तव्येति** ॥ अत्र भक्तिर्न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं स्वरूपेणानन्दादिना तस्यानन्दित्वादि न सम्भवत्युत सम्भवतीति ॥ **अन्यथेति** ॥ तत्स्वरूपत्वानभ्युपगमे गुणगुणिनोर्युतसिद्ध्यभावेन दण्डपुरुषयोरिवासंयोगात्

(वाक्यार्थमुक्तावली)

गुणगुणिभावोपपत्त्यर्थं समवायस्याङ्गीकार्यत्वेन समवायनिराकरणानुपपत्तेरित्यर्थः । भाष्ये कथमित्याक्षेपे । तन्मूलश्च तर्कबाध इत्युक्तन्याय एवेति भावेनाह **स्वरूपेण चेति** ॥ नेश्वरो गुणवानिति वक्ष्यमाणयुक्तिविरुद्धत्वादित्यर्थः । एवमानन्दो ब्रह्मेत्यादिश्रुत्यवष्टम्भेनानन्दादेः स्वरूपभूतत्वमङ्गीकृत्य युक्तिविरोधेन आनन्दित्वाक्षेपपरत्वेन भाष्यं योजितम् । इदानीमानन्दं ब्रह्मण इत्यादिश्रुत्यानन्दित्वाद्यङ्गीकृत्य तच्च स्वरूपेणानन्दादिना कथमिति स्वरूपत्वाक्षेपपरत्वेन भाष्यं व्याचष्टे ॥ **तथापीति** ॥ युक्तिविरोधेऽपि श्रुत्यवष्टम्भेन गुणित्वाद्यङ्गीकार इत्यर्थः ॥ **गुणि-स्वरूपत्वं त्याज्यमिति** ॥ समवायश्चाङ्गीकार्य इति भावः ॥ **युक्तीति** ॥ नेश्वरो गुणात्मकः गुणित्वात् । यो यद्वान् न स तदात्मकः । यथा दण्डवान्न दण्डात्मक इति युक्तिविरुद्धत्वादित्यर्थः । ननु गुणित्वरूपमहिमाभावेऽपि गुणात्मकत्वरूपमहिमावत्वाद्गुणिन्यपि भक्तिरुपपन्नेत्यत आह ॥ **न चेति** ॥

सूत्रे तदित्यस्ति । गुणात्मकं विशेषाद्गुणि चेति साध्यमध्याहार्यम् । उभयव्यपदेशादिति तत्र हेतुः । गुणित्वस्य गुणात्मकत्वस्य चेत्युभयव्यपदेशादित्यर्थः । यत्र तदात्मकत्वतद्वत्त्व-व्यपदेशविषयत्वं तत्र तदात्मकत्वं तद्वत्त्वं चेति तत्र दृष्टान्तोऽहिकुण्डलवदिति । अहिरूपकुण्डलवत् कुण्डलाकाराहिवदिति यावदिति सूत्रार्थमभिप्रेत्याध्याहृतसाध्यमेव हेतुत्वेनोपादाय भक्तिः कर्तव्येति परमसाध्यमप्याह ॥ **कर्तव्यैवेत्यादिना** ॥ **अदर्शनादित्यत आहेति** ॥ अदर्शनादित्यतो निदर्शन-मित्युक्तन्यायप्रदर्शकं सूत्रखण्डं व्याख्याति ॥ **यथा न स्व इति** ॥ अत्र स्वशब्देन सत्त्वादिगुणा उच्यन्ते । यो यदात्मकः स तद्वान्न भवतीति सामान्यव्याप्त्यपेक्षयाह ॥ **दण्ड इति** ॥ अहिकुण्डल-वदेवेति भाष्यस्य नात्र निदर्शनं मृग्यम् । स्पष्टप्रतिभासात् अहिकुण्डलवदेव युज्यत इत्यर्थः ।

## तत्त्वसुबोधिनी

**गुणित्वसमर्थनादिति** ॥ अतोऽनन्तेनेति पूर्वसूत्रातश्शब्दोक्तप्रमाणं रूपद्वयान्यथानुपपत्त्या आनन्दित्वादिव्यक्तस्वभावस्याप्यरोक्षसाधनवत् इहाप्यानन्दित्वानन्दत्वरूपोभयव्यपदेशादानन्दादि-गुणरूपस्यापि ब्रह्मणो आनन्दित्वादिगुणित्वसमर्थनादनयोरेकरूपसिद्धान्तयुक्त्युपेतत्वेनानन्तर-सङ्गतिरिति भावः । आनन्दित्वाभावेऽपि भक्तेरकर्तव्यत्वं कुत इत्यत आह ॥ **न हीति** ॥ ननु ब्रह्मणः आनन्दित्वाङ्गीकारान्न तस्यागुणित्वमित्याशङ्क्य निषेधति ॥ **न चेति** ॥ **अन्यथेति** ॥

(तत्त्वसुबोधिनी)

आनन्दादीनां भेदे गुणगुणिनोः युतसिद्ध्यभावेन घटपटयोरिवासंयोगात् । गुणगुणिभावोपपत्त्यर्थं समवायस्यावश्यमङ्गीकार्यत्वेन निराकरणानुपपत्तेरित्यर्थः । आनन्दादीनां स्वरूपत्वाभ्युपगमेऽपि कुतो ब्रह्मणः आनन्दित्वमङ्गीकर्तुमशक्यमित्यत आह ॥ **स्वरूपेणेति** ॥ युक्तिश्च नेश्वरो गुणवानिति वक्ष्यमाणा । एतावत्पर्यन्तं गुणरूपत्वमङ्गीकृत्य गुणित्वं दूषितम् । अधुना गुणित्वमङ्गीकृत्य गुणरूपत्वं दूषयति ॥ **तथापीति** ॥ **गुणानामिति** ॥ युक्तिस्तु आनन्दाद्याः न ब्रह्मगुणाः इत्यादिवक्ष्यमाणा । ननु गुणित्वरूपमहिमाभावेऽप्यानन्दादिगुणस्वरूपत्वरूपमहिमावत्वेन ब्रह्मणो भक्तिविषयत्वं स्यादित्यत आह ॥ **न चेति** ॥ अत्र दृष्टान्तमाह ॥ **द्रविणवत्त्व इति** ॥ यो यदात्मकः स तद्वान्न भवति इति सामान्यव्याप्त्यपेक्षयाह ॥ **न स्व इति** ॥ यो यद्धर्मात्मकः स तद्धर्मवान्न भवतीति विशेषव्याप्त्यपेक्षयाह ॥ **दण्ड इति** ॥ यद्वा विशेष्यापेक्षयाद्यः । विशेषणापेक्षया द्वितीय इति ॥ **केवलश्रुतिगम्यत्वादिति** ॥ केवल इत्यनेन नेश्वर इत्यादिशुष्कतर्कनिरासः । तेनोभयव्यपदेशात्त्विति युक्तिकथनं न विरुद्धमिति ज्ञातव्यम् ।

## वाक्यार्थविवरणम्

**गुणित्वेति** ॥ गुणवत्त्वेत्यर्थः ॥ **अन्यथेति** ॥ आनन्दादीनां तत्स्वरूपत्वानभ्युपगमे ब्रह्मभिन्नत्वप्राप्त्या ब्रह्मभिन्नैरानन्दादिभिर्गुणैर्ब्रह्मणा सम्बन्धस्यावश्यं वाच्यत्वात्संयोगस्य चासम्भवात्समवायोऽवश्यमङ्गीकार्यः प्रसज्यते । तथा च समवायाभ्युपगमादिति समवायनिराकरणमयुक्तं स्यादतस्तदन्यथानुपपत्त्या स्वरूपत्वमङ्गीकार्यमिति भावः । ततः किमित्यत आह– **स्वरूपेण चेति** ॥ **युक्तीति** ॥ नेश्वरो गुणवान् गुणात्मकत्वात् यथा स्वः न स्ववान् इति वक्ष्यमाणयुक्तीत्यर्थः ॥ **न चेति** ॥ किन्त्वानन्दादिभोक्तृत्वमेव महिमा तच्च स्वरूपत्वाङ्गीकारे न सम्भवतीति शेषः । स्वरूपत्वं कुतो न महिमेत्यत आह ॥ **द्रविणवत्त्वे हीति** ॥ **पारिवृढ्यम्** प्रभुत्वम् । 'प्रभुः परिवृढः पतिरित्यमरः ॥ **विशेषात्** ॥ अभेदे भेदकार्यकारित्वरूपात् ॥ **कुण्डलित्वम्** वर्तुलत्वम् ॥ यथा न स्व इत्यादि । यद्यदात्मकं न तत्तद्वदिति सामान्यव्याप्तिरिति ध्येयम् ।

## वाक्यार्थमञ्जरी

**अन्यथेति** ॥ आनन्दादीनां भेदेन गुणगुणिनोर्युतसिद्धत्वाभावेन घटपटयोरिव संयोगाभावाद्गुणगुणिभावोपपत्त्यर्थं समवायस्यावश्यमङ्गीकार्यत्वेन तन्निराकरणानुपपत्तेरित्यर्थः ॥ **स्वरूपेण**

(वाक्यार्थमञ्जरी)

**चेति** ॥ नेश्वरो गुणवान् गुणात्मकत्वात् यथा न स्वःस्ववानिति वक्ष्यमाणयुक्तीत्यर्थः ॥ **गुणानामिति** ॥ आनन्दाद्याः न ब्रह्मगुणाः तत्स्वरूपत्वाद् ब्रह्मवदिति वक्ष्यमाणयुक्तीत्यर्थः । ननु गुणित्वरूपमहिमाभावेऽपि आनन्दादिगुणस्वरूपत्वरूपमहिमावत्त्वेन ब्रह्मणो भक्तिविषयत्वं स्यादित्यत आह ॥ **न चेति** ॥ **पारिवृढ्यं** आढ्यत्वम् ॥ **ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ** ॥ ब्रह्मणो गुणात्मकत्वं गुणित्वं चेत्युभयमप्यस्ति । कुतः ? एष परमानन्द इत्यानन्दात्मत्वं आनन्दं ब्रह्मण इत्यानन्दित्वमित्युभयोरपि व्यपदेशात्कथमेकस्योभयत्वं अहिकुण्डलवत् एकस्यैव सर्पस्य कुण्डलित्वं कुण्डलत्वं च यथेत्यर्थः ॥ **विशेषादेव कुण्डलित्वमिति** ॥ ननु यत्रात्यन्ता-भेदस्तत्रैव विशेष इति सिद्धान्तः । अहिकुण्डलयोश्च भेदाभेदौ । यद्वक्ष्यति भेदाभेदविषयेण किमाद्येन दृष्टान्तेनेति । सुधायां चाहेरवयवानामन्योन्यसंयोगविशेषो ह्यहिकुण्डलं स तावदहि-नात्यन्ताभिन्न इति शङ्काग्रन्थे यद्यप्यहिकुण्डलं भेदाभेदवदिति सिद्धान्तग्रन्थे चोक्तम् । तत्कथ-मेतदिति चेत् सत्यम् । नात्र विशेषशब्दो भेदकार्यकारिवस्तुसामर्थ्यपरः किन्तु भेदपर एव । भेदान्तरं विशेषश्च सूक्ष्मं चेत्यभिधीयत इति चतुर्थतात्पर्योक्तेः । न चैवं कथमत्यन्ताभेदे दृष्टान्त इति वाच्यम् । अहेःकुण्डलस्य भेदाभेदवत्त्वेऽपि मन्दानामभेदबुद्धिमवतारयितुमिदं यथा पृथिव्यामौषधयः सम्भवन्तीतिवदिति सुधोक्तरीत्याऽभेदमात्रे दृष्टान्तत्वोपपत्तेरिति । विशेष्यापेक्षयाह ॥ **यथा न स्व इति** ॥ विशेषणापेक्षयाह ॥ **दण्ड इति** ॥

## सूत्रभाष्यम्

### ॥ ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ॥ २९ ॥

**यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च, एवं वा दृष्टान्तः । तेजोरूपत्वाद् ब्रह्मणः ।**

## तत्त्वप्रकाशिका

**दृष्टान्ताऽन्तरेणैतदेव समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ प्रकाशेति ॥ यथा प्रकाशात्मकस्याप्या-दित्यस्य प्रकाशित्वं विशेषबलादेवं गुणात्मकस्यापि ब्रह्मणो गुणित्वं विशेषबलाद्युज्यत इति भावः ।** नन्वत्र घटादीनामपि दृष्टान्तयितुं युक्तत्वाद्विशिष्यादित्यग्रहणे का विवक्षेत्यत आह **॥ तेजोरूपत्वादिति ॥**

## गुर्वर्थदीपिका

घटादौ नीलो घटः नीलवान्घट इत्यादिव्यवहारदर्शनात्सोऽपि दृष्टान्तोऽस्त्विति शङ्कते **नन्विति ॥** तेजोरूपत्वादिति वदता भाष्यकारेणाऽऽदित्यस्य प्रकाशस्य च सविशेषाभिन्नत्वादन्तरङ्गोऽयं दृष्टान्त इति सूचितम् । एवं च मन्दमतीनां बोधायाऽऽद्यः, अन्तरङ्गत्वाद्द्वितीयः, अतिसूक्ष्मत्वबोधनाय तृतीयो दृष्टान्त इति सूत्रत्रयस्यापि सार्थक्यमिति ज्ञातव्यम् ।

## भावदीपः

**समर्थयदिति ॥** एतच्चोक्तनिर्वाहम् । दृष्टान्तस्य सम्भावनामात्रहेतुत्वेऽपि प्रागुक्तोभयव्यपदेशरूपमानसहितस्य तु साधकत्वमस्तीति समर्थयदित्युक्तम् । गुणित्वसाधनपरतया भाष्यं व्यनक्ति ॥ **यथेत्यादिना ॥**

## वाक्यार्थमुक्तावली

प्रकाशपदेन भास्वरं रूपमुच्यते ॥ **तेजोरूपत्वादिति ॥** ब्रह्मणस्तेजोरूपस्यापि भावात् । प्रकाशरूपस्यापि प्रकाशित्वं विशेषबलादित्यत्र साक्षाद्दृष्टत्वेनादित्यदृष्टान्तस्यान्तरङ्गत्वादित्यर्थः । आदित्यवदिति वाच्ये प्रकाशवदित्युक्तिः विशेषेण गुणगुणिभाव इति द्योतयितुम् ।

## तत्त्वसुबोधिनी

**नन्वत्र घटादीनामपीति ॥** घटादीनां रूपित्वरूपवत्वयोः सत्वादित्यर्थः ।

## वाक्यार्थविवरणम्

एवमुत्तरानुमानेऽपि यद्यत्स्वरूपं न तत्तद्गुणः यथा ब्रह्मेति द्रष्टव्यम् । आदिपदेन ब्रह्मणो गुणात्मकत्वगुणवत्त्वयोर्ग्रहणम् ॥ **एतत् ॥ गुणात्मकस्य** गुणित्वम् ॥ **प्रकाशित्वमिति ॥** प्रकाशाश्रयत्वमित्यर्थः । तथा च सूत्रे भावप्रधानो निर्देशः । तथा च प्रकाशत्ववत् प्रकाशाश्रयत्ववच्च । प्रकाशाश्रयत्वं नाम प्रकाशित्वं तद्वच्चेत्यर्थो द्रष्टव्यः ॥ **घटादीनामिति ॥** तथा घटादीनां पृथुबुध्नोदराकारत्वं चास्ति तद्वदित्येवं दृष्टान्तयितुमित्यर्थः ।

## वाक्यार्थमञ्जरी

यथा प्रकाशाश्रयस्यादित्यस्य प्रकाशत्वं प्रकाशित्वं च तद्वद्गुणात्मकस्येशस्य गुणित्वं सम्भवति। अन्यद्विहायादित्यग्रहणे को हेतुरित्यत आह ॥ **तेजोरूपत्वादिति** ॥ ब्रह्मणस्तेजो-रूपत्वेनान्तरङ्गत्वादित्यर्थः।

## सूत्रभाष्यम्

**॥ ॐ पूर्ववद्वा ॐ ॥ ३० ॥**

**यथैक एव कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति। अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः। स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः।**

'प्रकाशवत्कालवद्वा यथाऽङ्गे शयनादिकम्।
ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव तु' इति नारायणाध्यात्मे।

'आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत्।
कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेत्' इति पाद्मे (ब्राह्मे) ॥

## तत्त्वप्रदीपिका

यथैक एव कालः पूर्वकाल उत्तरकाल इत्यवच्छेदकोऽवच्छेद्यश्च भवति। पूर्व इति स्वयमेवावच्छेदकः काल इति स्वयमेवावच्छेद्यश्च। न तत्र भेदः कालस्य। कालान्तराभावात्। अतः सविशेषत्वाद्युज्यते। एवमानन्दीत्यादिकमवच्छेदकं ब्रह्मेत्यवच्छेद्यम्। अतः पूर्णानन्दत्व-सर्वज्ञत्वसर्वैश्वर्यादिको महिमा हरेर्निरर्गल एव।

## तत्त्वप्रकाशिका

दृष्टान्तान्तरेणैतत्साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **पूर्ववद्वेति** ॥ यथा कालस्य पूर्वेणाभेदेऽपि काल इति विशेष्यो भवति पूर्व इति विशेषको विशेषादेव। तथा गुणात्मकस्यापि ब्रह्मणो विशेषादेव गुणि ब्रह्मेति विशेषणविशेष्यभावो युज्यत इति भावः। व्यर्थोक्तेरपर्यवसानात्किमर्थोऽयं दृष्टान्त इत्यत आह ॥ **अतीति** ॥ ब्रह्मण इति शेषः। अलमनेन भेदाभेदविषयेण किमाद्यदृष्टान्तेनेत्यत

(तत्त्वप्रकाशिका)

आह ॥ **स्थूलेति** ॥ एकस्मिन्नेव विशेषणविशेष्यभावस्येति शेषः । अस्मिन्नेवार्थे स्मृती पठति ॥ **प्रकाशवदिति** ॥ शयनमवस्थाविशेषः । अङ्गादभिन्नोऽप्यङ्गे शयनमित्यङ्गविशेषणं भवतीत्यर्थः । आदिपदेन शेते इति कर्मकर्तृभावः । अभिन्न एव ब्रह्मणः मुक्तानामित्युच्यत इत्यर्थः । व्यवहारो विशेषणविशेष्यभावेन ।

## गुर्वर्थदीपिका

अहेः कुण्डलाकारस्य यावद्वस्तुभावित्वाभावेन भेदाभेदयोरावश्यकत्वादिति भावेनाह भेदाभेदेति । एकस्मिन्नेवेत्यस्य एकस्मिन्नपीत्यर्थः । शेत इति कर्तृकर्मभाव इत्यत्र शेत इत्यनेन शयनमुपलक्षयति । तथा चाङ्गं अधि अधिकृत्य शयनमस्तीति यदेकस्यैव कर्तृत्वं कर्मत्वं चोच्यते तदादिपदेन सङ्गृह्यत इत्यर्थः । अभिन्न एवेत्यत्र चानन्द इति शेषः ।

## भावबोधः

अहिकुण्डलदृष्टान्तस्य प्रथमतः कथने निमित्तप्रदर्शनपरं भाष्यं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे– **अलमनेनेति** ॥ शयनशब्दस्य निद्रापरत्वस्य प्रकृतेऽनुपयोगादयोगाच्चाह– **शयनमिति** ॥ **अङ्गविशेषणमिति** ॥ विशेषणं धर्मः । अङ्गं विशेषणं यस्येत्यङ्गविशेषणमिति वा । ब्रह्मणो मुक्तानां चानन्दो भिन्न एव त्विति उद्देश्यविधेयभावप्रतीतिनिरासार्थमाह– **अभिन्न एवेति** ॥ ब्रह्मणा मुक्तैश्चाभिन्न एवानन्दो विशेषबलादेव ब्रह्मणो मुक्तानामिति तत्सम्बन्धित्वेनोच्यत इत्यर्थः ।

## भावदीपः

अवच्छेद्यावच्छेदकशब्दयोरर्थः विशेष्यो विशेषक इति च । दण्डचैत्रयोरिव भेदाभावात्कथं विशेषणविशेष्यभाव इत्यतो विशेषतो गुणत्वेन गुणित्वेनेत्यनुव्याख्यानोक्तहेतुं दृष्टान्तेऽप्याह ॥ **विशेषादेवेति** ॥ सूत्रे आदित्यदृष्टान्तोक्तेः सूत्रकृतैव तेजस्त्वादिति प्रयोजनोक्त्या प्रथमचरमदृष्टान्तोक्तेरपि तदूह्यमिति सूचितत्वाद्भाष्ये तत्फलोक्तेस्तामवतार्य शेषोक्त्या व्यनक्ति ॥ **व्यर्थेति** ॥ **अस्मिन्नेवार्थ इति** ॥ यथा प्रकाशेत्यादिनोक्तेऽर्थ इत्यर्थः । मनोधर्मरूपशयनस्यात्र कथमुपयोग इत्यत आह ॥ **शयनमिति** ॥ आत्माभिन्नव्यापारविशेषश्शयनमित्युपेत्याह ॥ **शेत इतीति** ॥ कर्मकर्तृभावः क्रियाकर्तृभाव इत्यर्थः । स्मृतावानन्दस्याभिन्नत्वोक्तेरनुपयोगादाह ॥ **अभिन्न इति** ॥

(भावदीपः)

ब्रह्माद्यभिन्न एवानन्दो ब्रह्मण आनन्दः मुक्तानामानन्द इति च विशेषणविशेष्यभावेनोच्यत इत्यर्थः ॥ **विशेषणेति** ॥ आनन्दं ब्रह्मणो विद्वानित्यादिरूपेणेत्यर्थः ।

## वाक्यार्थमुक्तावली

**यथा कालस्य पूर्वेणेति** । पूर्वःकाल इत्यत्र पूर्व इत्यवच्छेदकः अवच्छेद्यश्च कालो नातीतो न वर्तमानः किन्तु पूर्व एव कालः अवच्छेदकश्च काल पूर्व एव काल इति कालस्य पूर्वेणाभेदेऽपीत्यर्थः । ननु यथा भास्वर आदित्य इत्यत्र भास्वरत्वमवच्छेदकम्, आदित्य अवच्छेद्यः एवं पूर्वः काल इत्यत्र पूर्वत्वमवच्छेदकं तद्वान् कालोऽवच्छेद्यः पूर्वत्वं च धर्मविशेष इति पूर्वोदाहरणसाम्यमेवेति कथं कालस्य स्वावच्छेदकत्वमिति चेन्न । अत्रोक्तं सुधायाम् । पूर्वत्वं च पूर्वकालसम्बन्ध इति सकललोकसिद्धमिति । तथा च पूर्वः काल इत्युक्ते पूर्वकालसम्बन्धी काल इति पर्यवसितत्वेन स्वस्यैवावच्छेदककोटिप्रवेशादवच्छेद्यत्वाच्च पूर्वदृष्टान्तवैषम्यं युक्तमिति भावः । **ब्रह्मण इति शेष इति** ॥ तथा च ब्रह्मणोऽतिसूक्ष्मत्वाद्ब्रह्मतद्गुणयोः परस्परकार्यत्वेन लोकविलक्षणाचिन्त्यशक्तिघटितविशेषेणैव गुणगुणिभावस्य घटनीयत्वेन सूक्ष्ममतिभिर्ज्ञेयत्वात् स्वस्यैवावच्छेद्यतयावच्छेदकतया चातिसूक्ष्मकालदृष्टान्त इति भावः । प्रकाशदृष्टान्तस्तु अत्यन्ताभेदविषयोऽपि तत्र धर्मधर्मिभावस्यावस्थितत्वात् सूक्ष्ममतिभिर्ज्ञेयः । केवलमन्तरङ्गत्वाभिप्रायेण तदुपन्यास इति ज्ञेयम् ॥ **आदिपदेनेति** ॥ पूर्वमधिकरणाधिकर्तव्यभावः । आदिपदेनाङ्गमधिशेत इति कर्तृकर्मभावः इत्यर्थः । ब्रह्मणो मुक्तानां चानन्दो भिन्न एव त्वित्युद्देशविधेयभावप्रतीतिनिरासार्थमाह ॥ **अभिन्न एवेति** ॥ ब्रह्मणो मुक्तेश्चाभिन्न एवानन्दो विशेषबलादेव ब्रह्मणो मुक्तानामिति तत्सम्बन्धित्वेनोच्यत इत्यर्थः ।

## तत्त्वसुबोधिनी

अहिकुण्डलदृष्टान्तस्य प्रथमतः कथने निमित्तप्रदर्शनपरं भाष्यं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे ॥ **अलमनेनेति** ॥ शयनपदस्य निद्रापरत्वायोगात् प्रकृतानुपयोगाच्चाह ॥ **शयनमिति** ॥ न सुप्तिरित्यर्थः । अनेन चाहिकुण्डलदृष्टान्त उक्तो भवति । शयनादिकमित्यत्रादिपदार्थमाह ॥ **आदिपदेनेति** ॥ देवदत्तोऽङ्गमधिशेत इत्यत्रावस्थाविशेषरूपशयनं प्रति देवदत्तस्य कर्तृत्वमङ्गस्य च कर्मत्वम्, अङ्गं चावस्थाविशेषो देवदत्तश्चावस्थावान् । अवस्थातद्वतोश्चैक्यादेकस्यैव कर्तृत्वकर्मत्व-

(तत्त्वसुबोधिनी)

वत् गुणरूपस्यापि हरेः गुणित्वमविरुद्धमित्यर्थः । न चावस्थातद्वतोर्भेदस्यापि सत्वात्कथमेकस्यैव कर्तृकर्मभाव इति वाच्यम् । भेदाभेदयोर्विरुद्धत्वेनाङ्गीकर्तुमशक्यत्वात् । यदि च विशेषबलात् भेदाभेदावविरुद्धौ तर्हि प्रकृतेऽपि विशेषबलात् गुणरूपस्यापि हरेः गुणित्वमविरुद्धमिति भावः ।

## वाक्यार्थविवरणम्

**कालस्य** अखण्डदण्डायमानकालस्य ॥ **पूर्वेण** अतीतकालीनेन ॥ **विशेष्यः** व्यावर्त्यः ॥ **विशेषकः** वर्तमानादिकालाद् व्यावर्तकः ॥ **व्यर्थोक्तेः** ॥ विवक्षादिविशेषरूपप्रयोजनशून्य-दृष्टान्तोक्तेरित्यर्थः ॥ **भाष्येऽतिसूक्ष्मत्वेति** ॥ अत्र कालस्य सूक्ष्मत्वं न देशतः तथात्वेऽणुत्वा-पत्त्या व्याप्तत्वविरोधात् । अतो घटिकादिकालापेक्षया क्षणलवादिकालानां सूक्ष्मत्वं विवक्षितम् । अत एव परमाणुरूपः कालः प्रसिद्धोऽतस्तद्वत् ब्रह्मणोऽपि परमसूक्ष्मत्वं द्योतयितुमयं दृष्टान्त इति भावः ॥ **अलमनेनेति** ॥ अत्यन्ताभेदसाधकेन प्रकाशकालरूपदृष्टान्तद्वयेनालमित्यर्थः ॥ **स्थूलेति** ॥ अतितेजोरूपद्वितीयदृष्टान्ते अतिसूक्ष्मत्वात्तृतीयदृष्टान्ते चैकस्मिन्नेव विशेषणविशेष्य-भावः स्थूलमतिभिः बोध्दुं न शक्यत इति तदर्थमाद्यो दृष्टान्तो युक्तः । न च भेदाभेदप्रसङ्गः । भेदाविवक्षयाऽभेदमेवोपादायैकस्मिन् विशेषणविशेष्यभावबोधनादित्याशयात् ॥ **अवस्थाविशेषः** ॥ कुण्डलित्वादिरूपः ॥ **अङ्गविशेषणमिति** ॥ नन्वङ्गे शयनमिति शयनस्याङ्गं प्रति विशेष्यत्वात् अङ्गं प्रति विशेषणत्वं कथमुच्यत इति चेन्न । अङ्गं विशेषणं यस्येत्यङ्गविशेषणकमिति व्याख्यानाददोषः । भाष्ये यथा यथा नेत्यर्थः । आदिपदार्थमाह ॥ **आदिपदेनेति** ॥ **शेत इति** ॥ अहिः स्वाङ्गे शेते शयनं प्राप्नोतीत्यर्थः । एवं च विशिष्टशुद्धयोरभेदेन शयनरूपावस्थाविशेषस्या-भिन्नत्वादेकस्यैवाहेः कर्तृत्वं कर्मत्वं च यथा विशेषबलादित्यर्थः ॥ **अभिन्न एवेति** ॥ ब्रह्मणा मुक्तैश्चाभिन्न एवानन्दः ब्रह्मण आनन्दो मुक्तानामानन्द इति विशेषणविशेष्यभावेन व्यवह्रियते विशेषबलादित्यर्थः । भाष्ये तदेव विवृणोति ॥ **यथेति** ॥ स्वावच्छेदकताम् । पूर्व इति स्वं प्रति व्यावर्तकतां काल इत्यवच्छेद्यतां च व्रजेदित्यर्थः ।

## वाक्यार्थमञ्जरी

यथा कालः पूर्वेणाभिन्नोऽपि पूर्वः काल इति तेन विशिष्यते तथा गुणात्मकं ब्रह्म गुणीति विशिष्यत इत्यर्थः । शयनशब्दस्य निद्रापरत्वस्य प्रकृतेऽनुपयोगादाह ॥ **शयनमवस्थाविशेष इति**

(वाक्यार्थमञ्जरी)

**॥ अङ्गविशेषणमिति ॥** अङ्गधर्ममित्यर्थः । अङ्गं विशेषणं यस्येति वा **॥ अभिन्न एवेति ॥** ब्रह्मणा मुक्तैश्चाभिन्न एवानन्दो विशेषबलादेव ब्रह्मणो मुक्तानामिति तत्सम्बन्धित्वेनोच्यत इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रतिषेधाच्च ॐ ॥ ३१ ॥**

'एकमेवाद्वितीयम्' (छां.उ.६-२-१) । 'नेह नानाऽस्ति किञ्चन' (कठ.उ.२-४-११) इति भेदस्य ।

## तत्त्वप्रदीपिका

'एकमेवाद्वितीयं' 'नेह नानाऽस्ति किञ्चन'ति सर्वगतस्य गुणगुण्यादिभेदस्य प्रतिषेधाच्च । इह परमेश्वरे रूपेष्ववयवेषु धर्मेषु च । किञ्चन नाना नास्तीत्यर्थः । स्वगतभेदाविवक्षायामिहेति विशेषणं व्यर्थं स्यात् ।

'भेदेन दर्शनाद्वाऽपि भेदाभेदेन दर्शनात् ।
विष्णोर्गुणानां रूपाणां तदङ्गानां मुखादिनाम् ।
तथा दर्शनकालात्तु क्षिप्रमेव तमो व्रजेत्' इति ब्रह्माण्डे ॥

## तत्त्वप्रकाशिका

किमनेन गुणगुणिनोरभेदमभ्युपेत्य गुणित्वप्रतिपादनेन । भेद एव तयोः किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ प्रतिषेधाच्चेति ॥** भाष्यस्य सूत्रेणान्वयः । घटादिवत्स्वावयवैकत्वनिषेधायैवकारः । समाधिकनिषेधोऽद्वितीयमिति । किञ्चन नाना गुणगुण्यादि । अतो गुणिनि हरौ भक्तिसम्भवाद्युक्तं तन्महिमवर्णनमिति सिद्धम् ।

## गुर्वर्थदीपिका

स्वावयवैकत्वनिषेधायेत्यस्य भिन्नावयवसहितैकत्वनिषेधायेत्यर्थः । नानागुणगुण्यादीत्यस्य नानाभूताः गुणाः नानाभूता गुणिनः हस्तपादाद्यवयवाः रामकृष्णाद्यवताराः आदिपदोक्तक्रिया-जात्यादिकं चेत्यर्थः ।

## भावबोधः

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात् पुरुषः स्मृतः ॥

भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ॥

इति स्मृत्यनुसारेणैकमेवाद्वितीयमिति श्रुतिं व्याचष्टे– **घटादिवदित्यादिना** ॥ अनेनैकमभिन्नमित्युक्ते घटादिवद् ब्रह्म स्वावयवैर्भिन्नाभिन्नमित्यपि प्रतीयेतातस्तन्निवृत्त्यर्थम् 'एव' इत्युक्तमिति श्रुत्यर्थ उक्तो भवति । उद्देश्यविधेयभावप्रतीत्यर्थं पदयोरन्वयप्रदर्शनपूर्वकं किञ्चनेति पदं व्याचष्टे– **किञ्चन नानेति** ॥

सूत्रक्रमस्तु– स्थूलमतिप्रभृतीनां बुद्ध्यारोहक्रममपेक्षयाद्ये सूत्रे प्रसिद्धाहिकुण्डलदृष्टान्तोक्तिः । द्वितीये बाह्यप्रत्यक्षसिद्धादित्यमण्डलदृष्टान्तोक्तिः । तृतीये– साक्षिप्रत्यक्षसिद्धकालदृष्टान्तोक्तिः । चतुर्थे किमनेन गुणगुणिनोरभेदमभ्युपेत्य गुणित्वसमर्थनेन भेद एव तयोः किं न स्यादित्याशङ्कापरिहाराय **भेदप्रतिषेध इति** ॥

## भावदीपः

भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारक इति छान्दोग्यभाष्योक्तस्मृत्यनुरोधेन श्रौतपदानामपौनरुक्त्यायार्थमाह ॥ **घटादीति** ॥ एकमित्युक्ते परिणामिनो घटादेः प्रत्येकं स्वावयवैर्भेदाभेदवतः एकत्वमस्तीति तन्निरासार्थमेवकार इत्यर्थः । किंचन नानेत्यन्वयपूर्वमनूद्य किञ्चनपदार्थमाह ॥ **गुणगुण्यादीति** ॥ आदिपदेन क्रियाक्रियावदादिग्रहः । नाना भिन्नं नास्तीत्यर्थः ॥ **अत इति** ॥ गुणात्मनोऽपि गुणित्वस्य प्रमाणादिसिद्धत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

उभयलिङ्गमिति प्रकृतभेदोऽत्रान्वीयत इति भावेन प्रवृत्तस्य भाष्यस्यान्वयमाह ॥ **भाष्यस्येति** ॥ सूत्रे चशब्दस्तु न भेद इति शङ्काव्यावर्तकः । अन्यथा सूत्रस्यानन्वयश्चशब्दवैय्यर्थ्यं च । भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारक इति तद्व्याख्यानप्रमाणमनुसृत्याह ॥ **घटादिवदिति** ॥ अनेनैकमभिन्नमित्येवोक्तौ घटादिवद्ब्रह्म स्वावयवैर्भिन्नाभिन्नमित्यपि प्रतीयेतातस्तन्निवृत्त्यर्थमेवे-

(वाक्यार्थमुक्तावली)

त्युक्तमिति सूत्रार्थ उक्तो भवति । उद्देश्यविधेयभावप्रतीत्यर्थं पदयोरन्वयप्रदर्शनपूर्वं किञ्चनेति पदं व्याचष्टे ॥ **किञ्चन नानेति** ॥ आनन्दादीनां तत्स्वरूपत्वं न वा । आद्ये आनन्दित्वायोगः । द्वितीये समवायानङ्गीकारेणानन्दित्वानुपपत्तिरिति परेण विकल्प्य दूषितम् । तत्राद्यमभ्युपगम्य तत्रोक्तदोषो निदर्शनत्रयेण त्रिसूत्र्या निरस्तम् । तत्रापि स्थूलमतीनां बुद्ध्यारोहाय भेदाभेदविषयमाद्यं सूत्रम् । सूक्ष्ममतिविषयमत्यन्ताभेदपरं द्वितीयं सूत्रम् । अतिसूक्ष्ममतिविषयमत्यन्ताभेदेऽप्यलौकिकविशेषपरं तृतीयम् । द्वितीयं विकल्पमनभ्युपगमेन दूषयितुं तुरीयमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ब्रह्मणो मुक्तानां चानन्दो भिन्न एवेति उद्देश्यविधेयभावप्रतीतिनिरासायाह ॥ **घटादिवदिति** ॥ घटादिवत् ब्रह्मापि स्वावयवैर्भिन्नाभिन्नमित्यपि प्रतीयेत तन्निवृत्यर्थमेवेत्युक्तमिति श्रुत्यर्थ इत्युक्तं भवति । उद्देश्यविधेयभावप्रतीत्यर्थं पदयोरन्वयप्रदर्शनपूर्वकं पदं व्याचष्टे ॥ **किञ्चनेति** ॥ आद्यसूत्रे अहिकुण्डलदृष्टान्तोक्तिः । द्वितीये आदित्यमण्डलदृष्टान्तोक्तिः । तृतीये कालदृष्टान्तोक्तिः । चतुर्थे गुणगुणिनोर्भेदप्रतिषेध इति ।

## वाक्यार्थविवरणम्

**स्वावयवैकत्वेति** ॥ यथा घटादीनां स्वावयवैरेकत्वं भेदसहितमेवास्ति तद्वत् भेदाभेदनिरासायैवेत्युक्तम् । तथा चैकमेवेति केवलमेकत्वमेवास्ति न भेदसहितमित्युक्त्या भेदाभेदनिरास इति ध्येयम् ॥ **किञ्चन नाना गुणगुण्यादीति** ॥ इह ब्रह्मणि किञ्चन गुणगुण्यादिकं नाना भिन्नं नास्तीत्यर्थः । अत्र भिन्नं नास्तीत्युक्ते विशेष्यनिषेधस्य बाधाद् गुणगुण्यादौ विशेषणीभूतभेदमात्रमेव निषिध्यत इति द्रष्टव्यम् ।

**॥ इति उभयव्यपदेशाधिकरणम् (पा. अहिकुण्डलाधिकरणम्) ॥ १५ ॥**

## १६. परानन्दा (परमता)धिकरणम्

**॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥**

न चाऽऽनन्दादित्वाल्लोकानन्दादिवत् । 'एष सेतुर्विधृतिः' (छां.उ.८-४-१) 'य एष आनन्दः परस्य' 'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ.६-४-२३) इति सेतुत्वं ह्युच्यते । 'यतो वाचो निवर्तन्ते' (तै.उ. २-४) इत्युन्मानत्वम् । 'एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति' (बृ. उ. ६-३-३२) इति सम्बन्धः ।

'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।
नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते' इति भेदः ॥

अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ।

### तत्त्वप्रदीपिका

अत्र 'एतस्यैवाऽनन्दस्ये'त्यादिना एतदंशप्रतिबिम्बत्वेनैतदधीनत्वादुपजीव्योपजीवकसम्बन्ध उच्यते नियम्यनियामकलक्षणश्च ।

'प्रतिबिम्बरूपविप्रुट्कांस्तदानन्दस्य चाखिलाः ।
मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदा' इति महासंहितायाम् ॥

आधारत्वामितत्वोपजीव्यत्वनियामकत्वानां व्यपदेशात् 'नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते' इत्याधिक्येन वैलक्षण्यव्यपदेशाच्च सर्वस्मादुत्तममेव ब्रह्मानन्दादिकम् ।

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तद्गुणानां लोकविलक्षणत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । लौकिकत्वे न तत्र निरतिशया भक्तिः स्यात् । अतस्तत्समर्थनीयम् । प्रकृतं भगवद्गुणजातं विषयः । लौकिकमलौकिकं वेति सन्देहः । उभयथापि सम्भावना सन्देहबीजम् । लोकसदृशमिति पूर्वः पक्षः । आनन्दादिशब्दवाच्यत्वात् । अन्यथा 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिप्रयोगस्तत्र न स्यात् । न हि घटविलक्षणार्थे घटपदं युज्यते । अस्ति च प्रयोगः । अतो लोकानन्दादिवदीश्वरानन्दादीति न तत्रातिशयेन भक्तिर्युक्तेति ।

(तत्त्वप्रकाशिका)

**सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ।। परमिति ।। न ब्रह्मानन्दादिकं तच्छब्दवाच्यत्वाल्लौकिकं किं त्वतो लौकिकानन्दादेः परं विलक्षणमेव । कस्माल्लोकानन्दादाव सम्भावितसेतून्मानत्वादेर्वैलक्षण्यस्य व्यपदेशादिति भावः । उन्मानत्वं पूर्णत्वम् । मात्रां तत्प्रतिबिम्बांशम् । सम्बन्धो बिम्बप्रतिबिम्बभावः । अन्यद्विलक्षणम् । अलौकिकत्वात्परमिति प्रकारिप्रकारदर्शनेन व्याख्यानमेव । अलौकिकत्वावगमादिति वा । अथवा न चेति पूर्वपक्षं प्रतिषिध्य एष इति सौत्रहेतून्व्याख्यायातः परमिति प्रतिज्ञा व्याख्यायते । तत्रात इत्यनुवादेन लौकिकत्वादिति व्याख्यानम् । लौकिकत्वात्परमिति अलौकिकमित्यर्थः ।**

## गुर्वर्थदीपिका

आनन्दादिशब्दवाच्यत्वादित्यत्र लौकिकानन्दगृहीतसङ्गतिकानन्दपदस्य तद्विसदृशे प्रयोक्तुमशक्यत्वादिति भावः । अतो लौकिकानन्दादेरिति वदता भावभवित्रोरभेदाल्लौकिकत्वपदं लौकिकपरमिति सूचितम् । सेतून्मानसम्बन्धभेदव्यपदेशेभ्य इति हेतोस्सूत्र एवोक्तत्वात्पुनरतःपदस्य वैयर्थ्यमाशङ्क्य परिहृतं भाष्ये । अतो लौकिकत्वात्परम् । एवं च एतेभ्यः प्रकारिभ्यः सिद्धेनालौकिकत्वाख्यप्रकारेण परं लौकिकानन्दाद्विलक्षणमिति फलितार्थः । अलौकिको भगवदानन्दः । अस्मदाद्यानन्दस्तु लौकिक इत्यनयोर्महदन्तरमिति भावः । वस्तुतस्त्वेतेभ्यश्चतुर्भ्यो हेतुभ्यः सिद्धादतोऽलौकिकत्वाख्यहेतोः परं लौकिकानन्दाद्विलक्षणमिति पारम्पर्येण द्वयोरपि हेतुतामभिप्रैति भगवान्भाष्यकारः । इदं च सेतुत्वादिकमपि लौकिकानन्देऽप्यस्तीति मन्दाशङ्कापरिहारायालौकिकत्वस्यैव साधका ये ते न तु लौकिके सम्भाविता इति सूचनार्थमिति ज्ञेयम् । व्युत्पत्तिस्तु आकारमात्रेणेषत्सदृशे मृत्त्वसुवर्णत्वाभ्यामत्यन्तविलक्षणे सुवर्णघटे घटशब्दस्येव निरुपाधिप्रेमास्पदत्वमात्रेणेति वक्ष्यति स्वयमेव टीकाकारः ।

## भावबोधः

**प्रकृतमिति ।।** पूर्वाधिकरण इत्यर्थः । अनेनानन्तरसङ्गतिरप्युक्ता भवति ।। **लौकिकमिति ।।** अत्र ब्रह्मण आनन्दादिगुणजातं लौकिकमलौकिकं वेति चिन्ता । तदर्थं ब्रह्मानन्दादेरलौकिकत्वे व्युत्पत्त्यसम्भवरूपबाधकमस्त्युत नेति । आनन्दादित्वाल्लोकानन्दादिवदिति भाष्यानुसारेण पूर्वपक्षमाह– **लोकसदृशमिति ।।** अनेन लोकानन्दादिवदिति साध्यप्रतिपादकांशो व्याख्यातः ।

(भावबोधः)

हेतोरप्रयोजकत्वशङ्कापरिहाराय विपक्षबाधकतर्कप्रदर्शनपरतया ब्रह्मानन्दादीनामन्यथात्वादतच्छब्दत्वमिति न्यायविवरणांशं व्याचष्टे– **अन्यथेति** ॥ अन्यथा लोकविलक्षणत्वे । अनेनान्यथात्वादलौकिकत्वादतच्छब्दत्वं स्यादिति न्यायविवरणं व्याख्यातम् । तच्छब्दत्वे लोकोपमत्वमिति न्यायविवरणांशं विपर्ययपर्यवसानपरतया व्याचष्टे– **अस्ति चेति** ॥ उद्गतं मानं वेदादिरूपप्रमाणं मर्यादा च यस्मादित्यभिप्रेत्याह– **उन्मानत्वमिति** ॥ ब्रह्मानन्दांशस्यान्यैरभोज्यत्वादाह– **मात्रामिति** ॥ परज्ञानस्य देवज्ञानभिन्नत्वेऽप्यलौकिकत्वालाभादाह– **अन्यद्विलक्षणमिति** ॥ **अलौकिकत्वावगमादिति** ॥ अतो व्यपदेशेभ्य इत्यर्थः । अत्राप्यतः परमित्यन्वयः । लौकिकत्वादिति पदच्छेदं तस्य च भवितृप्रधानत्वं चाभिप्रेत्याह– **अथ वेति** ॥ **न चेत्यादिना पूर्वपक्षं प्रतिषिध्येति** ॥ अनेन प्राचीनव्याख्याने इदमेव भाष्यं प्रतिज्ञाव्याख्यानमिति सूचितम् । अत एव किं त्वतो लोकानन्दादेरित्याद्युक्तम् । तत्र चानन्दित्वादिति हेत्वंशोक्तिर्व्यर्था । अत्र तु तत्सार्थकमिति ज्ञातव्यम् ।

## भावदीपः

**तद्गुणानामिति** ॥ गुणानामीश्वरतादात्म्येऽपि विशेषबलेनेश्वरगुणत्वस्य पूर्वत्रोक्त्या तेषु गुणेषु लौकिकत्वादिचिन्ता अवसरप्राप्तेति भावः । अन्यथान्यतरमात्रावशेषेण गुणेषु चिन्तानुपपन्ना स्यात् ॥ **लोकेति** ॥ लौकिकानन्दादिविलक्षणत्वेत्यर्थः । सूत्रे परमित्युक्त्यनुरोधादाह ॥ **गुणजातमिति** ॥ **उभयथेति** ॥ भगवदीयत्वादलौकिकत्वसम्भावना ज्ञानानन्दादिपदप्रयोगाल्लौकिकत्वसम्भावनेत्यर्थः । लोकानन्दादिवदिति भाष्यार्थमाह ॥ **लोकसदृशमितीति** ॥ आनन्दादित्वादिति हेत्वंशं व्याचष्टे ॥ **आनन्देति** ॥ सामान्यव्याप्त्या घटादिर्दृष्टान्त इति भावः । हेतोरप्रयोजकतां निराह ॥ **अन्यथेति** ॥ लोकानन्दादिवैसादृश्ये ब्रह्मानन्दादीनामन्यथात्वादतच्छब्दत्वमित्यन्यत्रोक्तेरिति भावः । कुत इत्यतस्तद्व्यनक्ति ॥ **न हीति** ॥ हेतोरसिद्धिं निराह ॥ **अस्ति चेति** ॥ आनन्दं ब्रह्मणो विद्वानित्यादाविति भावः ॥ **अत इति** ॥ आनन्दादिपदवाच्यत्वादित्यर्थः ।

अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकमिति वाक्यं न चानन्दादित्वाल्लौकिकानन्दादिवदिति प्रथमवाक्यशेषतया व्याचष्टे ॥ **न ब्रह्मेति** ॥ आनन्दादित्वादित्यादेरर्थः **तच्छब्दवाच्यत्वाल्लौकिकमिति** ॥ अत इत्यनुवादः । लौकिकानन्दादेरिति व्याख्या । भाष्ये अलौकिकत्वादित्ये-

(भावदीपः)

तत्परमित्यस्य व्याख्येत्युपेत्य परमित्यस्यार्थमाह ॥ **परं विलक्षणमेवेति** ॥ एष इत्यादिभाष्य-भावमाह ॥ **लोकेति** ॥ **उन्मानत्वं** मानागोचरत्वमिति भ्रमं निराह ॥ **पूर्णत्वमिति** ॥ वैश्वानरनये अभिविमानमित्यत्रोक्तदिशा व्याख्यातप्रायमेतदिति भावः । तदानन्दांशत्वभ्रान्तिं निराह ॥ **मात्रामिति** ॥ तस्य तन्मात्रोपभोग्यत्वात् । प्रतिबिम्बरूपविप्रुट्कांस्तदानन्दस्य चाखिलाः । मुक्ता ब्रह्मादयोऽश्नंति तारतम्येन नित्यदेति स्मृतेरिति भावः । भेदव्यपदेशमात्रेण वैलक्षण्यासिद्धेराह ॥ **अन्यद्विलक्षणमिति** ॥ दुर्गमत्वाद्व्यनक्ति ॥ **अलौकिकत्वादिति** ॥ **व्याख्यानमेवेति** ॥ परमित्यस्येत्यर्थः । परमलौकिकत्वप्रकारयुक्तमिति व्याख्यैव न तु हेतुरित्यर्थः । अलौकिकत्वाव-गमादित्यन्यत्रोक्त्यनुरोधेन व्याख्यानान्तरमाह ॥ **अलौकिकत्वेति** ॥ अत इत्यस्य सेतून्मानादि-व्यपदेशादित्यर्थ इति भावः । इदानीं न चेत्यादिवाक्यं अत इत्यादिवाक्यं च भिन्नवाक्यतया योजयति ॥ **अथवेति** ॥ स्वार्थे त्वप्रत्यय इति भावः ।

## अभिनवचन्द्रिका

**लौकिकमलौकिकं वेति** ॥ लोकसदृशं न वेत्यर्थः । **लोकसदृशमिति** ॥ ननु किं लोक-सादृश्यं साध्यते उत वैलक्षण्याभावः । नाद्यः वैलक्षण्यमङ्गीकुर्वता सिद्धान्तिना सालक्षण्यस्यापि अङ्गीकृतत्वेन सिद्धसाधनत्वात् । न द्वितीयः कदळीफलजन्यानन्दस्य आनन्दशब्दवाच्यत्वेऽपि, बदरीफलजन्यानन्दवैलक्षण्यवत्, ईश्वरानन्दस्यापि आनन्दशब्दवाच्यत्वेऽपि लौकिकानन्दवैलक्षण्य-सम्भवेनाऽप्रयोजकत्वादिति चेत्, न आनन्दस्य ज्ञानाद्यात्मकत्वं, ज्ञानादेश्च आनन्दात्मकत्वं नास्तीत्यर्थस्य साध्यतयेह विवक्षितत्वात् । न च एवं सति सिद्धसाधनता नाऽप्यप्रयोजकता । आनन्दज्ञानयोरत्यन्ताभेदे तच्छब्दयोः पर्यायताप्रसङ्गेन अपर्यायानन्दादिशब्दवाच्यत्वरूप-हेतूच्छित्तिप्रसङ्गात् । इममेवार्थं मनसि निधाय बाधकान्तरमाह– **अन्यथेति** ॥ लौकिकानन्दवत् ज्ञानादिभेदानङ्गीकार इत्यर्थः ।

ननु ज्ञानाद्यात्मकत्वेऽपि आनन्दत्वस्यापि भावात् आनन्दशब्दप्रयोग इत्यत आह– **न हीति** ॥ न हि घटविलक्षणार्थे घटत्वमङ्गीकृत्य घटशब्दः प्रामाणिकैः प्रयुज्यते । येन ज्ञानाद्यात्मके वस्तुनि आनन्दत्वमङ्गीकृत्य आनन्दशब्दः प्रयुज्येतेति भावः । एतेन घटविलक्षणे घटशब्दप्रयोगा-भावेऽपि भगवदानन्दे आनन्दशब्दो युज्यते । तस्य लौकिकानन्दविलक्षणत्वेऽपि आनन्द-

(अभिनवचन्द्रिका)

विलक्षणत्वाभावात् । न हि सुर्वणघटो मृद्धटविलक्षण इत्येतावता न घटशब्दवाच्यो भवतीति निरस्तम् ॥ **लोकानन्दादिवदिति** ॥ मनोवृत्त्यानन्दवत् ज्ञानादिभिन्न एवेश्वरानन्द इत्यर्थः । **विलक्षणमेवेति** ॥ ज्ञानाद्यात्मकतयेवेत्यर्थः ॥ **कस्मादिति** ॥ लौकिकत्वसाधकानन्दशब्द-वाच्यत्वादिहेतोः किं तद्बाधकं प्रमाणं यद्बलादलौकिकत्वं प्रतिपत्तव्यमित्यर्थः ।

ननु 'अतो लौकिकत्वात् परमेव ब्रह्मानन्दादिकम्' इति भाष्ये 'अतो लौकिकम्' इत्येताव-दुपपन्नम्, 'अलौकिकत्वात्परम्' इति तु साध्याविशिष्ट्यादनुपपन्नमित्यत आह– **अलौकिकत्वा-त्परमिति** ॥ **नन्वेवमानन्दादेरिति** ॥ आनन्दशब्दस्य तावत् ज्ञानादिभिन्ने आनन्दे शक्तिर्गृह्यते । शक्तिग्रहवशाच्च तमेवार्थं शब्दो बोधयेत् । न तु ज्ञानाद्यात्मकम् । ततश्च श्रुतिस्मृत्यादिषु भगवदानन्दादिबोधनाय आनन्दादिशब्दप्रयोगो व्यर्थः स्यादित्यर्थः । भाष्ये 'अप्रसिद्धस्य' इत्यनन्तरं 'बोधनाय' इति शेषः ॥ **यथा खल्विति** ॥ पादशब्दस्य शरीरावयवे, स्वरूपांशे च, सैन्धवशब्दवत् पृथक्पृथक्शक्तिग्रहमात्रेण भिन्नांशे शक्तिग्रहाभावेऽपि जीवेश्वरयोरंशांशिभावरूप-सम्बन्धज्ञापनार्थं 'पादोऽस्य विश्वा भूतानि' इति पादशब्दः प्रयुज्यत इत्यर्थः । ननु जीवोऽपि स्वरूपांशत्वाच्छक्तिग्रहविषयो अभ्युपगन्तव्यः । अन्यथा मिथ्याज्ञानोत्पादेनाऽनर्थप्रसङ्ग इत्यत आह– **ज्ञातांशभावस्त्विति** ॥ भेदश्रुतिपर्यालोचनया भिन्नांशत्वं प्रत्येति । तस्य शब्दस्य तत्र शक्तिं च पश्चात्प्रत्येतीत्यर्थः ॥ **अलौकिकत्वबुद्धिश्चेति** ॥ तस्य शब्दस्य तत्र शक्तिग्रहश्च भवतीत्यपि द्रष्टव्यम् ।

इदमत्राकूतम् भवत्येव भगवदानन्दादिर्लोकविलक्षणः । आनन्दादिशब्दास्तु लौकिकानन्द-भगवदानन्दाभ्यां सैन्धवशब्दवन्नानार्थाः । प्रथमं व्युत्पत्तिस्तु लौकिकानन्द एव वाच्यार्थस्य प्रत्यक्षसिद्धत्वेन शक्तिग्रहोपायसद्भावात् । न भगवदानन्दे उपायाभावात्, श्रौतव्यवहारानुसारेण भगवदानन्दस्यापि अनुकूलवेद्यत्वेऽवगते प्रमाणान्तरवशाच्च तस्य ज्ञाना द्यात्मकत्वे चाऽवगते लौकिकानन्दवैलक्षण्यं प्रतिपद्य, तत्र शब्दस्य परममुख्यवृत्तिं च प्रतिपद्यते । अनन्तरं तु शब्द-श्रवणमात्रादेव झटिति परममुख्यार्थं प्रतिपद्यते । तद्बाधे तु मुख्यार्थं लौकिकानन्दम् । तस्यापि बाधे गौणाद्यर्थं, विशेषसद्भावादपर्यायत्वं चेति । एतेन लौकिकानन्दस्य आनन्दशब्दवाच्यत्वात् ईश्वरानन्दस्य तदभावेनानानन्दत्वात् ईश्वरस्याऽऽनन्दित्वगुणाभाव इति परास्तम् । भाष्ये

(अभिनवचन्द्रिका)

**अलौकिकोऽपीति ॥** लौकिकज्ञानादिविलक्षणत्वात् लोकव्युत्पत्त्यविषयोऽपि ज्ञानादिः लोकस्य सामान्यव्युत्पत्तिद्वारा विशेषतच्छब्दवाच्यत्वज्ञापनाय ज्ञानादिशब्दैरेव भण्यते यथा देवराट् राजशब्दमुख्यवाच्यत्वज्ञापनाय आदौ राजवदेव राजशब्देन भण्यते तथेत्यर्थः । टीकायाम् **आनन्दो नेदृशानन्द इति ॥** श्रुत्यैवेश्वरधर्मस्य क्वचिदानन्द इति क्वचिच्च नेदृशानन्द इत्युक्ते महतामबाधितप्रत्ययानुसारेण लोकतः परं लौकिकानन्दात् अतिशयवदित्येव ईश्वरानन्दजातं प्रतिभाति, न पुनर्यथावद्दर्शनं विना महतां प्रत्यक्षमतिक्रम्याऽनुकूलवेद्यादन्य एव आनन्दादिशब्द-वाच्य इति भातीत्यर्थः । प्रमाणविरोधाभावाद्धि 'सैन्धवोऽयं नेदृशसैन्धव' इत्युक्ते लवण-विजातीयोऽश्वः प्रतीयते । प्रकृते तु ईश्वरानन्दस्यानुकूलवेद्यताग्राहकमहदनुभवस्य विद्यमानत्वात् 'आनन्दो नेदृशानन्द' इत्युक्त्या अतिशय एव गम्यते न वैजात्यमिति भावः ।

पूर्वपक्षस्तु ईश्वरानन्दादिः लौकिकानन्दादिवत् आनन्दादिरेव, न पुनर्ज्ञानादिरपि, आनन्द-शब्दवाच्यत्वात् । न हि ज्ञानात्मके आनन्दशब्दो युज्यते । पटेऽपि घटशब्दप्रयोगप्रसङ्गात् । ततश्च ईश्वरानन्दस्य लोकविलक्षणत्वाभावात् न तत्र निरतिशया भक्तिरिति ।

सिद्धान्तस्तु विलक्षणमेव लौकिकानन्दात् ब्रह्मानन्दादि । सेतुत्वपूर्णत्वबिम्बत्वानां वैलक्षण्यस्य च 'एष सेतुः' इत्यादिनोक्तत्वात् । किं च लौकिकानन्दादिकं हि दर्शनयोग्यं ईश्वरानन्दादि तु 'अदृष्टमव्यवहार्यम्' इत्यादिना दर्शनायोग्यमुच्यते । ततश्च तत् लोकविलक्षणमेव मन्तव्यम् । ननु यदि ईश्वरानन्दादिर्लोकानन्दविलक्षणः, कथं तर्हि लोकानन्दादौ गृहीतसङ्गतिकस्य आनन्दादि-शब्दस्य तत्र प्रयोगः । न हि लवणे गृहीतसङ्गतिकः सैन्धवशब्दोऽश्वे पृथक्सङ्गतिग्रहं विना प्रयुज्यते । येनेहापि तत्र सङ्गतिग्रहाभावेऽपि लौकिकेषु सङ्गतिग्रहणमात्रेण तत्र प्रयुज्येत इति चेत्, न लौकिकपादस्वरूपांशाभ्यां विलक्षणेषु भिन्नांशेषु जीवेषु 'पादोऽस्य विश्वाभूतानि' इति पाद-शब्दप्रयोगवत् लौकिकानां बुध्यर्थमेव लोके गृहीतसङ्गतिकस्याऽऽनन्दादिशब्दस्य किञ्चित्सादृश्य-मात्रेण भगा वदानन्दादौ प्रयोगोपपत्तेः । ज्ञाततावन्मात्रस्य प्रमाणान्तरवशात् वैलक्षण्ये ज्ञाते शब्दानां तत्र परममुख्यवृत्तिग्रहोऽपि भवति । अतोऽलौकिकगुणे हरौ भक्तिः कर्तव्येति सिद्धम् ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं सूचयति ॥ **प्रकृतमिति** ॥ अत्र ब्रह्मण आनन्दादिकं लौकिकमलौकिकं वेति चिन्ता । तदर्थं ब्रह्मानन्दादेरलौकिकत्वव्युत्पत्त्यसम्भवरूपबाधकमस्त्युत नेति । आनन्दादित्वा-

(वाक्यार्थमुक्तावली)

ल्लोकानन्दादिवदिति भाष्यानुसारेण पूर्वपक्षमाह ॥ **लोकसदृशमिति** ॥ अनेन लौकिकानन्दादीति साध्यप्रतिपादकांशो व्याख्यातः । आनन्दादिशब्दवाच्यत्वादित्यनेन आनन्दादित्वादिति हेत्वंशो व्याख्यातः । हेतोरप्रयोजकत्वं परिहरति ॥ **अन्यथेति** ॥ अन्यथा लौकिकविलक्षणत्वे । यदि लोकविलक्षणता स्यात्तर्हि आनन्दं ब्रह्मण इति श्रुतावनन्दशब्दप्रयोगो न स्यादिति तर्कस्य व्याप्त्यभावात् यस्य यद्विलक्षणत्वं तस्य तच्छब्दप्रयोगाविषयत्वमिति सामान्यव्याप्तिमाह ॥ **न हीति** ॥ विपर्यये पर्यवसानमाह ॥ **अस्ति चेति** ॥ एतेनानन्दादिशब्दवाच्यत्वे लोकोपमत्वमनुपमत्वे शब्दवाच्यत्वाभाव इति वैलोम्येत्युक्तन्यायोऽपि दर्शितो भवति ।

सूत्रे प्रकृतत्वाद्गुणजातमित्यन्वेति । प्रकाशाश्रयवदिति लौकिकगुणस्य प्रकृतत्वादत इति लौकिकगुणपरामर्शः । सेतून्मानेति भावप्रधानम् । भेदपदमावर्तते । सेतून्मानत्वसम्बन्धाख्यभेदानां वैलक्षण्यानां भेदस्य नित्यानन्दाव्ययं पूर्णं परज्ञानमित्याधिक्येन भेदस्य वैलक्षण्यस्य च व्यपदेशेभ्य इत्यर्थमभिप्रेत्य व्याचष्टे ॥ **किन्त्वत इत्यादिना** ॥ **सेतून्मानत्वादिवैलक्षण्यस्येति** ॥ सेतुत्वोन्मानत्वादिवैलक्षण्यस्येत्यर्थः । आदिपदेन सम्बन्धपदोक्तोपजीव्यत्वनियामकत्वरूपवैलक्षण्यस्य नित्यानन्दाव्ययं पूर्णमित्यानन्दात्मकत्वरूपज्ञाननिष्ठवैलक्षण्यस्य च ग्रहणम् । उद्गतं मानं वेदादिरूपं प्रमाणं मर्यादा च यस्मादित्यभिप्रेत्याह ॥ **उन्मानत्वमिति** ॥ ब्रह्मानन्दांशस्यान्यैरभोज्यत्वादाह ॥ **मात्रामिति** ॥ **बिम्बप्रतिबिम्बभाव इति** ॥ बिम्बप्रतिबिम्बभावेन बिम्बनिष्ठोपजीव्यत्वनियामकत्वरूपसम्बन्ध इति यावत् । भेदस्य लोकेऽपि सत्त्वाद्भेदमात्रं नालौकिकत्वसाधकमित्यत आह ॥ **अन्यद्विलक्षणमिति** ॥ ननु भाष्ये ब्रह्मानन्दादिकमिति पक्षस्याध्याहारः । अतःपरमिति सौत्रसाध्यानुवादः । अलौकिकत्वादित्युत्सूत्रमित्यत आह ॥ **अलौकिकत्वात्परमितीति** ॥ वैलक्षण्यप्रकारप्रदर्शनेनेत्यर्थः । इत्यादिश्रुतिभ्योऽलौकिकत्वावगमादिति न्यायविवरणानुसारेण विषयेण विषयिणो ज्ञानस्योपलक्षणमित्यलौकिकत्वमित्युक्तन्यायप्रदर्शकत्वेन व्याचष्टे ॥ **अलौकिकत्वावगमादिति** ॥ अस्मिन्पक्षे अत इत्यस्यातो व्यपदेशेभ्योऽलौकिकत्वावगमादतः आनन्दादेः परमित्यादावन्या योजनेति भावः । लौकिकत्वादिति पदच्छेदं तस्य भवितृप्रधानत्वं चाभिप्रेत्याह ॥ **अथवेति** ॥ प्रतिज्ञा व्याख्यायत इति । नन्विदं पूर्वोक्तपक्षेऽपि सममित्यतो व्याख्याने विशेषमाह ॥ **तत्रात इत्यनुवादेनेति** ॥ पूर्वत्रानुवादमात्रमिति भावः । भाष्ये एष नित्यो महिमा ब्राह्मणस्येत्यस्य य एषः ब्राह्मणस्य नित्यो महिमा सोऽपि सेतुरित्यन्वयः ।

## तत्त्वसुबोधिनी

**प्रकृत इति** ॥ पूर्वाधिकरण इत्यर्थः । अनेनानन्तरसङ्गतिरुक्ता भवति ॥ **अन्यथेति** ॥ लोकविलक्षणत्वेत्यर्थः । ननु लौकिकानन्दत्वविलक्षणत्वेऽप्यानन्दपदप्रयोगः किन्न स्यादित्यत आह ॥ **न हीति** ॥ तर्कस्य विपर्ययपर्यवसानमाह ॥ **अस्ति चेति** ॥ उद्गतं मानं वेदादिरूपं प्रमाणं मर्यादा च यस्मादित्यभिप्रेत्याह ॥ **उन्मानत्वमिति** ॥ ब्रह्मानन्दांशस्यान्यैरस्तेयत्वादाह ॥ **मात्रामिति** ॥ परज्ञानस्य जीवज्ञानसदृशत्वेऽलौकिकत्वालाभादाह । **अन्यद्विलक्षणमिति** । ननु सूत्रव्याख्यानस्य जातत्वादतोऽलौकिकत्वादिति भाष्यं किमर्थमित्यत आह ॥ **अलौकिकत्वादिति** ॥ तथा च भाष्ये अलौकिकत्वादिति पञ्चमी तृतीयार्थे । अतः परमिति सम्बन्धः । तथा चालौकिकत्वेन प्रकारेण अतो लोकानन्दादेः परं विलक्षणमिति व्याख्यानमित्यर्थः । यद्वा विषयेण विषयिणो ज्ञानस्योपलक्षणमित्यभिप्रेत्याह । **अलौकिकत्वावगमादिति** । अतो व्यपदेशेभ्य इत्यर्थः । अत्रापि अतःपरमित्यन्वयः । लौकिकत्वादिति पदच्छेदं तस्य च भवितृप्रधानत्वं चाभिप्रेत्याह ॥ **अथवेति** ॥ **न चेत्यादिनेति** ॥ अनेन प्राचीनव्याख्याने इदमेव भाष्यं प्रतिज्ञाव्याख्यानपरमिति सूचितम् ।

## वाक्यार्थविवरणम्

**न स्यादिति** ॥ व्युत्पत्त्यभावादतीन्द्रियत्वेन तत्रोपदेशासम्भवेन सादृश्यलिङ्गकानुमानस्यानुसरणीयत्वात् तस्य च सादृश्यस्य लोकविसदृशत्वाङ्गीकारेणासिद्धत्वादिति भावः ॥ **व्याख्यानमेवेति** ॥ अतःपरमित्युक्ते कथं परत्वमित्यतोऽलौकिकत्वादित्युक्तालौकिकत्वेन प्रकारेणेति परत्वप्रकारप्रदर्शकतयाऽलौकिकत्वमेव परत्वमित्यलौकिकत्वादित्येतत्परत्वव्याख्यानमेवेत्यर्थः ॥ **इति वेति** ॥ अतो लौकिकानन्दादेः परमित्युक्ते तत्कुत इत्याशङ्कायाम् अलौकिकत्वादित्युक्तम् ॥ सेतुत्वादिनाऽलौकिकत्वावगमादित्यर्थः । अस्मिन् पक्षे परत्वे प्रमाणप्रदर्शनमिदं न व्याख्यानमिति ध्येयम् ।

## वाक्यार्थमञ्जरी

**प्रकृतं** पूर्वाधिकरणे । अन्यथा लौकिकानन्दविलक्षणत्वे व्युत्पत्त्यभावादिति भावः ॥ ॐ **परमतःसेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** ॐ ॥ ब्रह्मानन्दादिकं अतः लौकिकानन्दादेः परं

(वाक्यार्थमञ्जरी)

विलक्षणम् । कुतः ? सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । एष सेतुरिति सेतुत्वस्य यतो वाच इत्युन्मानत्वस्य पूर्णत्वस्य तस्यैवानन्दस्येमि बिंबप्रतिबिम्बरूपसम्बन्धस्य अन्यज्ज्ञानमिति भेदस्य चाभिधानादित्यर्थः । उद्गतं मानं वेदादिप्रमाणं मर्यादा च यस्मादित्यभिप्रेत्याह ॥ **पूर्णत्वमिति** ॥ ब्रह्मानन्दस्यान्यैरभोज्यत्वादाह । मात्रं तत्प्रतिबिम्बांशत्वमिति अलौकिकत्वलाभायाह ॥ **अन्यद्विलक्षणमिति** ॥ साध्यावैशिष्ट्यनिरासायाह ॥ **अलौकिकत्वादिति** ॥ तथा च भाष्ये अलौकिकत्वादिति पञ्चमी तृतीयार्थे । अतः परमिति सम्बन्धः । ततश्चालौकिकत्वेन प्रकारेणातो लोकानंदादेः सकाशात् परं विलक्षणमिति व्याख्यानमित्यर्थः ॥ **अलौकिकत्वावगमादिति** ॥ अत्रातो व्यपदेशेभ्य इत्यर्थः । न चेत्यादिभाष्यस्य प्रतिज्ञाव्याख्यानपरत्वे आनन्दित्वादिति हेत्वंशोक्तिर्व्यर्थेत्यस्वरसात् प्रकारान्तरेण व्याकुर्वन् साध्यावैशिष्ट्यं प्रकारान्तरेण परिहरति ॥ **अथवेति** ॥ **लौकिकत्वादिति** ॥ तथा च नात्राकारप्रश्लेष इति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ दर्शनात् ॐ ॥ ३३ ॥

**दर्शनादेव चाऽन्याऽऽनन्दादीनाम् । 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते' इति कौण्डिन्यश्रुतिः ।**

## तत्त्वप्रदीपिका

अदृष्टत्वं परस्मादन्यैः । सर्वा मनाऽस्पष्टत्वेन चाव्यवहार्यम् । अहेयोपादेयम् ।

'ब्रह्माद्या यन्न जानन्ति कारणाद्यभिमानिनः ।
जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथार्चिषः ॥
अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फुटम् ।
वेदरूपा परानन्दं वैलक्षण्यात्समस्ततः ॥
आनन्दो नेदृशानन्द इत्युक्ते लोकतः परम् ।
प्रतिभाति न चाऽभाति यथावद्दर्शनं विना' इति ब्रह्मतर्के ॥

## तत्त्वप्रकाशिका

**हेत्वन्तरेणानन्दादेरलौकिकत्वं समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ।। दर्शनादिति ।। मनोवाग्गोचरत्वादित्यर्थः । तथापि कथमलौकिकत्वं ब्रह्मानन्दादेरित्यत आह ।। अदृष्टमिति ।। व्यवहारो वाचा व्यपदेशो विविक्ततया निरूपणम् ।**

## गुर्वर्थदीपिका

सावधिकत्वेन दर्शनादिति सूत्रार्थं मनसि निधाय तत्तात्पर्यमाह– **मनोवाग्गोचरत्वादिति ।।**

## भावबोधः

'अदृष्टमव्यवहार्यम्' इति श्रुत्यनुसारेण सूत्रभाष्ययोर्दर्शनपदमन्योपलक्षकमित्यभिप्रेत्याह– **मनोवाग्गोचरत्वादिति ।।**

## भावदीपः

भाष्ये चशब्दोक्तेराह ।। **हेत्वन्तरेणेति** ।। आनन्दादेरचाक्षुषत्वाद्दर्शनानुपपत्तिं मत्वाह ।। **मनोवागिति** ।। अदृष्टं साकल्येनामनोगोचरमिति स्फुटम् । अव्यवहार्यमित्ययुक्तम् । 'आनन्दं ब्रह्मणो विद्वान्' इति व्यवहारादित्यत आह ।। **व्यवहार इति** ।। **विविक्ततया** स्पष्टतया । 'ब्रह्माद्या यन्न जानन्ति करणाद्यभिमानिनः । जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथार्चिषः । अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फुटम् । वेदरूपा परानन्दं वैलक्षण्यात्समस्ततः । आनन्दो नेदृशानन्द इत्युक्तेर्लोकतः परम् । प्रतिभाति न चाभाति यथावद्दर्शनं विना' इत्येकादशस्कन्धतात्पर्योक्तस्मृतेरिति भावः ।

## वाक्यार्थमुक्तावली

तुरवधारणे । अत इति प्रकृतानामन्यानन्दादीनामेषामिति विपरिणामेनान्वयः । अतः परमित्यस्ति । तथा चान्यानन्दादीनामेव दर्शनात् ज्ञानान्मनोवाग्गोचरत्वादीश्वरानन्दादीनां तदभावादतः परमेव आनन्दादिकम् । न चात्र प्रमाणाभावः । दर्शनात् अदृष्टमव्यवहार्यमिति श्रुतेरिति सूत्रार्थः । न चोन्मानत्वमिति प्रत्यक्षादिप्रमाणागोचरत्वस्योक्तत्वाद्गतार्थता । तत्र पूर्णत्वे तात्पर्यात् ।

## तत्त्वसुबोधिनी

अदृष्टमव्यवहार्यमिति श्रुत्यनुसारेण सूत्रभाष्ययोर्दर्शनपदमन्योपलक्षकमित्यभिप्रेत्याह ॥ **मनोवाग्गोचरत्वादिति** ॥

## वाक्यार्थविवरणम्

श्रुतेरित्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ **मनोवागिति** ॥ **तथापीति** ॥ अन्यानन्दादिवद्ब्रह्मानन्दादेरपि मनोवाग्गोचरत्व इत्यर्थः । भाष्ये इतिशब्दः प्रभृत्यर्थः । सुखं ज्ञानमोजो बलमित्येतत्प्रभृतिगुणजातम् ॥ **अदृष्टम्** ॥ मनसोऽविषयीभूतम् ॥ **अव्यवहार्यम्** ॥ वाचा व्यवहर्तुमशक्यम् ॥ **अव्यपदेश्यम्** ॥ इदमेतादृशमिति विविक्ततया निरूपयितुमशक्यम् । तद्ब्रह्म पूर्णमित्याचक्षत इति योज्यम् ।

## वाक्यार्थमञ्जरी

अन्यानन्दादीनां मनोवाग्गोचरत्वात् तदगोचरब्रह्मानन्दस्य तद्वैलक्षण्यमित्यर्थः । वक्ष्यमाणश्रुत्यनुसारेण दर्शनपदमन्यथोपलक्षणमिति भावेनाह ॥ **मनोवागिति** ॥

## सूत्रभाष्यम्

**अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति–**

**॥ ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३४ ॥**

**जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथापादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानि' (ऋ.सं.१०-९०-३) इति तथा–**

**'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।**
**ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्' इति (च) पाद्मे ॥**

## तत्त्वप्रदीपिका

**सम्बन्धस्तदाभासत्वं, जीवस्योक्तश्च पूर्वसूत्रे । अधस्ताद्विवृतः पादशब्दार्थः । एवमत्यन्तविलक्षणो ब्रह्मानन्दादिरानुकूल्यादिलक्षणेनेतरानन्दादिसदृश आनन्दादिरित्युच्यते ।**

## तत्त्वप्रकाशिका

**नन्वेवमानन्दादेरलौकिकत्वात्कथं श्रुतिपुराणादिष्वानन्दादिप्रयोग इत्याशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे ॥ अप्रसिद्धस्येति ॥ यथा खलु प्रसिद्धचरणविलक्षणे मूर्तित्रयविलक्षणे च भूतपादे 'पादोऽस्य विश्वा भूतानि' इति पादपदं प्रयुज्यते । यथा पुरुषपादस्य तदंशत्वं तथा भूतानामिति जीवेशयोरंशांशित्वसम्बन्धज्ञापनार्थम् । ज्ञातांशभावस्तु भेदश्रुतिपर्यालोचनया भिन्नांशत्वं प्रत्येति । तथा लोकविलक्षणेऽप्यानन्दादौ तत्पदप्रयोगो युज्यते । तस्यानुकूलवेद्यत्वादिज्ञापनार्थत्वात् । अन्यथा तत्प्रत्यायनोपायाभावात् । ज्ञाततावन्मात्रस्य श्रुत्यन्तरबलेनालौकिकत्वबुद्धिश्च भवतीति भावः । अत्र स्मृतिं चाह ॥ अलौकिकोऽपीति ॥ उक्तं चान्यत्र । 'आनन्दो नेदृशानन्द इत्युक्ते लोकतः परम् । प्रतिभाति न चाभाति यथावद्दर्शनं विना' इति । व्युत्पत्तिश्च सौवर्णघटे घटशब्दस्येव किंचित्सादृश्येनैवोपपद्यते । अतोऽलौकिकगुणे हरौ कर्तव्या भक्तिरिति सिद्धम् ।**

## गुर्वर्थदीपिका

किञ्चित्सादृश्येनैवोपपद्यत इत्यत्र किञ्चित्सादृश्यं सुवर्णघटस्यापि घटपदं नौपचारिकम् । एवं भगवदानन्दादिकमपि निरुपाधिकप्रेमास्पदत्वाख्यसुखपदप्रवृत्तिनिमित्तघटितत्वादानन्दादिपदवाच्यमेव न त्वौपचारिकम् । 'बुद्ध्यर्थः पादवत्' इति सौत्रदृष्टान्तोऽपि पादविलक्षणेऽपि जीवसमुदाये अंशत्वज्ञापनाय यथा पादपदप्रयोगः, तथा लौकिकानन्दविलक्षणेऽपि भगवदानन्दे आनन्दपदप्रयोग इत्येतावतैव निरूपितः । न तु सर्वसाम्येन । जीवसमुदाये पादशब्दस्य गौणत्वात् । आनन्दादिपदानामानन्दमयाधिकरणे भगवदानन्दादौ निरुपाधिकनिरवधिकप्रेमास्पदत्वादिना परममुख्यत्वस्य स्वयमेवोक्तत्वादिति ज्ञेयम् ।

## भावबोधः

**प्रसिद्धचरणविलक्षण इति** ॥ प्रसिद्धचरणस्य देहावयवत्ववद् भूतानां परमात्मावयवत्वाभावादिति भावः ॥ **मूर्तित्रयविलक्षण इति** ॥ 'त्रिपादस्यामृतं दिवि' इत्युक्तश्वेतद्वीपानन्तासनवैकुण्ठगतनारायणादिमूर्तित्रयवद्भूतानां तत्स्वरूपांशत्वाभावान्मूर्तित्रयविलक्षण इत्यर्थः ॥ **भूतपाद इति** ॥ भूताख्यपाद इत्यर्थः ।

(भावबोधः)

नन्वेवं पुरुषपादयोरिव जीवेश्वरयोरभेदप्रतीतिः स्यादित्यत आह– **ज्ञातांशभावस्त्विति ॥ उक्तं चेति ॥** एकादशस्कन्धतात्पर्ये तृतीयेऽध्याये । अस्यार्थः आनन्द इत्यनेनानुकूलवेदनीयत्वे ज्ञापिते ईदृशो न भवतीति वैलक्षण्ये चोक्ते विलक्षणानन्दः सिद्ध्यति । विलक्षणानन्दाभावे बाधकमाह– **न चेति ॥** अत्र दर्शनशब्देन तद्विषयभूतानन्दो गृह्यते । यथावद्दर्शनभूतानन्दं विना लोकविलक्षणानन्दं विनेति यावत् । न चाभाति । नेदृशानन्द इति निषेधवचनार्थ इति शेषः । लौकिकानन्दादेरध्यक्षसिद्धत्वेन निषेधायोगादलौकिकानन्दाभावे निषेधवचनस्याप्रामाण्यं स्यादिति भावः । उपलक्षणं चैतत् । अलौकिकास्तस्येत्यादि न्यायविवरणोक्तमपि प्रमाणं ग्राह्यम् । 'युज्यते चोपदेशतः' । 'अन्यानन्दादिसादृश्यमानुकूल्यादिना परम्' इत्यनुव्याख्यानं मनसि निधायाह– **व्युत्पत्तिरिति ॥**

सूत्रक्रमस्तु प्रथमसूत्रे परमत इति प्रतिज्ञायां सेतून्मानादयः साक्षाद्धेतव उक्ताः । द्वितीये दृष्टत्वादयो हेतवो अर्थात् प्रदर्शिताः । तृतीये अलौकिके आनन्दादिशब्दप्रदर्शनम् ।

## भावदीपः

अप्रसिद्धोऽपीत्येतल्लोकतो वेदतोऽप्रसिद्धोऽपीत्यर्थतया व्याचष्टे ॥ **प्रसिद्धेति ॥ मूर्तित्रयेति ॥** वासुदेवनारायणवैकुण्ठाख्यमूर्तित्रयेत्यर्थः । त्रिपादिति मूर्तित्रये पादपदप्रयोगादिति भावः । भूतपादे भूताख्यपादे तथोक्तेः फलोक्तिपरं जीव इत्यादिभाष्यं व्याचष्टे ॥ **यथा पुरुपेति ॥** सम्बन्धपदोक्तेर्भावमाह ॥ **ज्ञातेति ॥** अन्यत्र एकादशस्कन्धतात्पर्ये इत्यर्थः । विद्वद्व्युत्पत्तितोऽपि च । तैस्तैः पदैश्च भण्यन्ते युज्यते चोपदेशतः । अन्यानन्दादिसादृश्यादानुकूल्यादिना परमित्यनुभाष्योक्तमाह ॥ **व्युत्पत्तिश्चेति ॥ सौवर्णघट इति ॥** विवृतमेतत्तर्कताण्डवे द्वितीयपरिच्छेदे । अलौकिकानां सर्वथा बुद्ध्यनारोहाद्व्युत्पत्तिरयुक्तेति चोद्यं कार्याख्यानादित्यत्र निरस्यमिह शिष्यहितायोक्तमिति ॥ **अत इति ॥** सेतून्मानत्वादिव्यपदेशादिसिद्धत्वाद् व्युत्पत्त्यादिसम्भवाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

पादवदिति 'तत्र तस्यैव' इति सप्तम्यर्थे षष्ठ्यर्थे च वतिः । आनन्दादावानन्दादिपदप्रयोग इति शेषः । बुद्ध्यर्थ इति ण्यन्तं बोधनार्थ इति यावत् । तथा च श्रुतानां परमात्मावयवत्वाभावेन प्रसिद्ध

(वाक्यार्थमुक्तावली)

चरणविलक्षणभगवत्स्वरूपत्वाभावेन श्वेतद्वीपादिगतमूर्तित्रयविलक्षणे भूतपादे यथा पुरुषपादस्य तदंशत्वमेवं भूतानामिति जीवेश्वरयोरंशांशित्वज्ञापनार्थं पादपदस्येव लोकविलक्षणेऽप्यानन्दादौ तस्यानुकूलवेद्यत्वादिज्ञापनार्थमानन्दादिपदस्य प्रयोग इति सूत्रार्थं मत्वा व्याचष्टे । यथा खल्वित्यादिना । नन्वेवं पुरुषपादयोरिव जीवेश्वरयोरभेदप्रतीतिः स्यादित्यत आह ॥ **ज्ञातांशभावस्त्विति** ॥ भाष्येऽलौकिकोऽपि लौकिकज्ञानादिविलक्षणोऽपि ज्ञानादिस्तच्छब्दै-र्लौकिकज्ञानादिव्युत्पन्नैः ज्ञानबुद्धिमत्यानन्दसुखादिशब्दैरुच्यते । तस्य पदार्थविषयत्वादि-ज्ञापनार्थत्वात् । अन्यथा तत्प्रत्यायनोपायाभावात् । तत्र दृष्टान्तो यथेति । लौकिकराज-विलक्षणोऽपि देवराट् लोकस्य छत्रचामरादियुक्तत्वज्ञापनाय प्रसिद्धराजेव तच्छब्दैः राजा जगदीश इत्यादिशब्दैरुच्यत इत्यर्थः । 'आनन्दो नेदृशानन्द' इत्यस्यायमर्थः । अनुकूलवेद्यत्वज्ञापनायानन्द इत्युक्तम् । ज्ञाततावन्मात्रं प्रति स चानन्दो नेदृशानन्द इत्युक्ते लोकविलक्षणं यथा भवति तथा प्रतिभाति । दर्शनमपरोक्षं विना यथावन्न चाभातीति । ननु घटविलक्षणे पटे घटशब्दव्युत्पत्त्य-भावाल्लौकिकानन्दविलक्षणे कथमानन्दशब्दव्युत्पत्तिः । शब्दस्य लौकिक एव व्युत्पत्तिप्रतीतेरित्यत आह ॥ **व्युत्पत्तिश्चेति** ॥ अत्र सूत्रद्वये स्वपक्षसाधनम् । तृतीये बाधकोद्धारः । द्वयोरप्याद्ये लोकविलक्षणत्वे बहुहेतूक्तिः । द्वितीये त्वेकस्येति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**प्रसिद्धचरणविलक्षणेति** ॥ प्रसिद्धचरणस्य देहावयवत्वात् भूतानां परमात्मावयवत्वा-भावादित्यर्थः ॥ **मूर्तित्रयविलक्षण इति** ॥ 'त्रिपादस्यामृतं दिवि' इत्युक्तश्वेतद्वीपानन्तासनवैकुण्ठ-गतनारायणादिमूर्तित्रयवद्भूतानां तत्स्वरूपांशत्वाभावात् मूर्तित्रयविलक्षणेत्यर्थः ॥ **भूतपाद इति** ॥ भूताख्यपाद इत्यर्थः । नन्वेवं पुरुषपादयोरिव जीवेश्वराभेदप्रतीतिः स्यादित्यत आह ॥ **ज्ञातांशभाव इति** ॥ किमर्थमित्यत आह ॥ **तस्येति** ॥ आनन्दपदप्रयोगस्येत्यर्थः । भगवदानन्दस्य यदनुकूलवेद्यत्वादिज्ञापनं तदर्थप्रयोजनं यस्यानन्दपदप्रयोगस्येत्यर्थः ॥ **अन्यथेति** ॥ आनन्दपद-प्रयोगाभाव इत्यर्थः । तर्हि तत्र लोकानन्दतुल्यत्वबुद्धिरेव स्यात् । न लौकिकत्वबुद्धिरित्यत आह ॥ **ज्ञानेति** ॥ ज्ञानं तावन्मात्रं आनन्दस्वरूपं येन स तथोक्तम् । तर्हि विलक्षणे आनन्दे चानन्दपदव्युत्पत्तिः कथमित्यत आह ॥ **व्युत्पत्तिश्चेति** ॥ अत्राद्ये सूत्रे भगवदानन्दस्य लोकानन्द-विलक्षणत्वे सेतुत्वादिरूपसाक्षात् हेतूक्तिः । द्वितीये दृष्टत्वादिहेतवोऽर्थात्प्रदर्शिताः । तृतीयेऽलौकिके आनन्दशब्दप्रयोगसमर्थनम् ।

## वाक्यार्थविवरणम्

**प्रयोग इति** ॥ व्युत्पत्त्यभावादिति भावः ॥ **भूतपादे** भूताख्यपादे । किमर्थं प्रयुज्यत इत्यत आह ॥ **यथेति** ॥ **पुरुषपादस्य** ॥ पुरुषदेहावयवभूतस्य प्रसिद्धचरणस्य ॥ **तदंशत्वम्** ॥ पुरुषदेहांशत्वम् ॥ भूतानाम् ईश्वरांशत्वमित्यर्थः । नन्वेवं तर्हि पुरुषपादस्य पुरुषदेहाद् भेदाभेदवद्भूतानामपीश्वराद् भेदाभेदप्रसक्तिरित्यत आह ॥ **ज्ञातांशत्व इति** ॥ ज्ञातमीश्वरांशत्वं भूतानां येनासौ तथोक्तः ॥ **भेदश्रुतीति** ॥ ईश्वरभूतयोरिति शेषः ॥ **प्रत्येति** ॥ भूतानामिति शेषः ॥ प्रयोजनाभावान्नानन्दादिपदप्रयोगो युज्यते इत्यत आह ॥ **तस्येति** ॥ लोकविलक्षणस्यापि भगवदानन्दादेरित्यर्थः । तज्ज्ञापनार्थमानन्दादिपदप्रयोगः कुत इत्यत आह ॥ **अन्यथेति** ॥ आनन्दादिपदप्रयोगाभावे भगवदानन्दादेरनुकूलतया वेदनीयत्वादिप्रत्यायनं ज्ञापनं न सम्भवति । आनन्दादिपदं विना तत्प्रत्यायनोपायाभावादित्यर्थः । आनन्दादिपदप्रयोगेन भगवदानन्दादेरनुकूलतया वेदनीयत्वादिज्ञापनाङ्गीकारे जीवानन्दादेरप्यनुकूलतया वेदनीयत्वात्तत्साम्यमेव भगवदानन्दादेः स्यात् । अत आह ॥ **ज्ञाततावन्मात्रस्येति** ॥ ज्ञाततावन्मात्रं जीवानन्दादिवदनुकूलतया वेदनीयत्वं ब्रह्मानन्दादेर्येनासौ तथोक्तः ॥ **श्रुत्यन्तरम्** ॥ अदृष्टमव्यवहार्यमित्यादिकम् । तथा च यथा जीवेश्वरयोरंशांशिभावसम्बन्धज्ञापनार्थम् अप्रसिद्धोऽपि भूताख्यपादः 'पादोऽस्य विश्वा भूतानि' इति श्रुतौ पादशब्देन व्यपदिश्यते । तथाऽप्रसिद्धोऽपि भगवदानन्दादिरनुकूलतया वेदनीयत्वादिज्ञापनार्थं 'आनन्दो ब्रह्मण' इत्यादिश्रुतौ आनन्दादिपदेन व्यपदिश्यत इति भाष्ययोजना द्रष्टव्या । स्मृतौ **तच्छब्दैः** आनन्दादिशब्दैः ॥ **ज्ञापनार्थाय** जीवज्ञानादिवद्बोधात्मकत्वादिज्ञापनार्थाय ।

**अत्र दृष्टान्तो यथेति** ॥ देवराडिन्द्रः कीदृश इत्युक्ते देवराट् राजेव राजवद्वर्तत इत्येवमलौकिकोऽपि देवराट् लोकानां सर्वोत्तमात्वादिज्ञापनार्थं राजवदिति राजसाम्येनादौ तावदुच्यते । ज्ञातराजसाम्यः पश्चात्प्रमाणान्तरेण देवराजस्य राजवैलक्षण्यं प्रत्येति तद्वदित्यर्थः ॥ **उक्तं चान्यत्र** ॥ भगवदानन्दादेरानन्दादिशब्दवाच्यस्यापि लौकिकविलक्षणत्वमेकादशस्कन्धे तत्तात्पर्ये चोक्तमित्यर्थः । आनन्दो भगवदानन्द इत्यानन्दशब्दं प्रयुज्य स आनन्द ईदृशानन्दो जीवानन्दसदृशो नेत्युक्ते लोकतः लौकिकानन्दात् परं विलक्षणमिति परोक्षतः प्रतिभाति । यथावद्दर्शनमपरोक्षज्ञानं विना आ सम्यगपरोक्षतो न च नैव भातीत्यर्थः । ननु घटविलक्षणार्थे घटपदस्येव लोकविलक्षणे भगवदानन्दादौ आनन्दादिपदव्युत्पत्त्यनुपपत्तेः कथं तत्पदप्रयोग इत्यत

(वाक्यार्थविवरणम्)

आह ॥ **व्युत्पत्तिश्चेति** ॥ अयमत्र क्रमः । विदुषां तावद्व्युत्पत्तिः सम्भवति । विद्वांसो हि साक्षात्कृतभगवद्गुणाः । पूर्वैर्विद्वद्भिर्व्युत्पादयितुं शक्यन्ते ॥ **यथोक्तम्** ॥ 'विद्वद् व्युत्पत्तितोऽपि च । तैस्तैः शब्दैश्च भण्यन्त' इति । अविदुषां तु कथं व्युत्पत्तिरिति चेत् । विद्वदुपदेशात इति ब्रूमः ॥ **यथोक्तम्** ॥ 'युज्यते चोपदेशात' इति । लोकविलक्षणे कथमुपदेश इति चेत् । तत्रेदमुपतिष्ठते । लोकविलक्षणस्य सौवर्णघटादेः पृथुबुघ्नोदराकारादिना मृण्मयघटसदृशो यो यः स सर्वोऽपि घटशब्दवाच्य इत्युपदेशतः सौवर्णघटे लौकिकघटविलक्षणेऽपि घटशब्दव्युत्पत्तिर्युज्यते, तद्वद-लौकिकस्यापि भगवदानन्दादेर्लौकिकानन्दसादृश्यं तावद्विद्यते । ततश्च योऽस्मदानन्दसदृशो भगवद्गुणः स आनन्दादिशब्दवाच्य इत्यादिरुपदेशो घटते । नन्वेवं पूर्वोत्तरविरोधः । पूर्वं तेषां लोकविलक्षणत्वमुक्त्वा इदानीमन्यानन्दादिसादृश्याभ्युपगमादिति चेत् । सत्यम् । अल्पत्वास्थिर-त्वादिधर्मेण सादृश्याभावेऽप्यनुकूलतया वेदनीयत्वबोधात्मकत्वादिनाऽऽनन्दज्ञानादेर्जी वानन्द-ज्ञानादिसादृश्याभ्युपगमात् । अत एव किञ्चित्सादृश्येनैवेत्युक्तम् । नाल्पत्वादियावत्सादृश्ये-नेत्येवार्थः ॥ **यथोक्तम्** ॥ 'अन्यानन्दादिसादृश्यमानुकूल्यादिना परम्' इति । अत एव सादृश्ये-नानन्दादिपदानामलौकिकभगवदानन्दादौ व्युत्पत्तेरुपपन्नत्वाद्युक्त स्तत्रानन्दादिपदप्रयोग इति भावः ।

## वाक्यार्थमञ्जरी

यथा लोकपादविलक्षणेष्वपि जीवेषु पादोऽस्येति पादपदप्रयोगो बुद्ध्यर्थः भूतानामीशांशत्व-ज्ञापनार्थः तथाऽलौकिकेऽप्यानन्दादिपदप्रयोगो बुद्ध्यर्थः अनुकूलवेद्यत्वादिज्ञापनार्थो युक्त इत्यर्थः ॥ **प्रसिद्धचरणविलक्षण इति** ॥ प्रसिद्धचरणस्य देहावयवत्ववद्भूतानां परमात्मावयवत्वाभावादिति भावः ॥ **मूर्तित्रयविलक्षण इति** ॥ 'त्रिपादस्यामृतं दिवि' इत्यादिनोक्तश्वेतद्वीपानन्तासन-वैकुण्ठादिगतनारायणादिमूर्तित्रयस्य भगवत्स्वरूपांशत्ववद्भूतानां तदभावादिति भावः । भूतपाद इति भूताख्यपाद इत्यर्थः । तर्हि तद्वदेवाभिन्नांशत्वप्रतीतिः स्यादित्यत आह ॥ **ज्ञातांश इति** ॥ **अनुकूलवेद्यत्वेति** ॥ इदं ममानुकूलमेव न प्रतिकूलमिति वेद्यत्वेनेत्यर्थः । अन्यथा आनन्दपदयोगं विना । तर्हि तद्वदेव लौकिकत्वबुद्धिः स्यादित्यत आह ॥ **ज्ञाततावन्मात्रस्येति** ॥ अनुकूल-वेद्यत्वमात्रज्ञानवत इत्यर्थः ॥ **आनन्द इति** ॥ भगवदानन्दो लौकिकानन्दवन्न भवतीत्युक्ते लोकानन्दतो विलक्षणः प्रतिभाति । लोकप्रसिद्धानन्दपदेनैव तदुपदेशः कुत इत्यत उक्तम् ॥ **न चाभातीति** ॥ स्वदृष्टवाचकपदोपदेशं विनालौकिकं वस्तु न भातीत्यर्थः ।

॥ इति परानन्दा (परमता)धिकरणम् ॥ १६ ॥

## १७. स्थानविशेषाधिकरणम्

परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दादीनां विशेष इत्यत उच्यते

**॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ३५ ॥**

यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात्प्रतिविम्बविशेष एवमानन्दादेरपि ।

'ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।
प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषत' इति वाराहे ॥

### तत्त्वप्रदीपिका

परानन्दादिप्रतिविम्वत्वे कथं ब्रह्माद्यानन्दादीनां मिथो विशेषः । **सृतिमानां** त्वदृष्टादिना वैमल्यकालुष्यादेर्वैचित्र्यमुपपद्यते । न मुक्तब्रह्माद्यानन्दादीनां विशुद्धरूपाणां तदुपपत्तिरित्यत आह **॥ स्थानविशेषात्प्रकाशादिवत् ॥** एवमानन्दादेरपीत्यस्यायमर्थः । एवं परमानन्दादेरपि ब्रह्मादिस्थानगुणविशेषात् प्रतिबिम्बभूतानन्दादिविशेषः । 'प्रतिविम्बत्वमायाति' प्रतिविम्बकरत्वमायातीत्यर्थः । अन्यथा सूर्यकाद्युक्तिविरोधात् । गुणानामेकैकशो गुणप्रतिविम्वत्वज्ञापनं चात्र क्रियते । अतश्चैतत्सिद्धं यावन्तो गुणा उपास्यन्ते तावन्तः स्वस्मिन्नपि लभ्यन्त इति ।

'ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु ।
प्रतिविम्बस्तु विप्रुट्को विष्णोरेव परं सुखम्' इति महावराहे ॥

'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ।
न चाभिन्नत्वमीशेन चिन्मात्रत्वं च युज्यते' इति ब्रह्मतर्के ॥

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं ब्रह्माद्यानन्दादीनां भगवदानन्दादिप्रतिविम्वत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । तदभावे प्रागुक्तालौकिकत्वासम्भवेन भक्त्यतिशयायोगात्तत् समर्थनीयम् । ब्रह्माद्यनन्दादीनां ब्रह्मानन्दादिप्रतिविम्बत्वमुक्तम् । तद्ब्रह्माद्यानन्दादि विषयः । भगवदानन्दादिप्रतिबिम्बं

(तत्त्वप्रकाशिका)

न वेति सन्देहः । उक्तद्वैविध्यदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **परेति** ॥ नान्यानन्दादयो भगवदानन्दादिप्रतिबिम्बभूताः । तथात्वे मिथो वैचित्र्यायोगात् । मिथो विचित्राणामपि तत्प्रतिबिम्बत्वे भगवदानन्दादौ वैचित्र्यं स्यात् । तथा च भगवद्रूपेषु गुणतारतम्यं स्यादिति न तत्र भक्तिर्युक्ता । न चादृष्टादिनियमेन वैचित्र्यम् । स्वाभाविकानन्दादेरादिमत्कारणानुपपत्तेः । अतोऽलौकिकत्वाभावान्न भगवति निरतिशया भक्तिर्युक्तेति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ भवत्यन्यानन्दादीश्वरानन्दादिप्रतिबिम्बभूतं न तावता वैचित्र्यानुपपत्तिः । नापि बिम्बवैचित्र्यापत्तिः । यथा खलु बिम्बवैचित्र्याभावेऽपि जलसूर्यकान्तादिस्थानगुणात्सूर्यादिप्रतिबिम्बेष्वग्निजनकत्वादिवैचित्र्यमेवं ब्रह्मादिस्थानगुणवैचित्र्येणाविचित्रभगवदानन्दादिप्रतिबिम्बानां वैचित्र्योपपत्तेरिति भावः । अत्र स्मृतिं चाह ॥ **ब्रह्मादीति** ॥ प्रतिबिम्बत्वमायाति प्रतिफलितो भवतीत्यर्थः ।

## गुर्वर्थदीपिका

उक्तद्वैविध्यदर्शनमित्यत्र 'एतस्यैवानन्दस्य मात्रामुपजीवन्ति' इति श्रुत्युक्तमात्रापदस्य स्वरूपांशे प्रतिबिम्बांशे च प्रयोगाख्यद्वैविध्यदर्शनमित्यर्थः । विचित्रजीवानामदृष्टादिनियमेन भगवत्प्रतिबिम्बत्वस्य प्राक्साधितत्वाद्विचित्रजीवस्यानन्दादीनामपि तत एव भगवदानन्दादिप्रतिबिम्बत्वमपि साधितप्रायम् । अतः किमधिकरणान्तरारम्भेणेति शङ्कापनोदायाह **स्वाभाविकानन्दादेरिति** ॥ अभ्यधिकाशङ्कया पुनरारम्भ इति भावः ।

## भावबोधः

तदभावे प्रागुक्तालौकिकत्वासम्भवेनेति । तदभावे प्रतिबिम्बत्वाभाव इत्यर्थः । अनेन 'परमतः' सूत्रस्थसम्बन्धपदेनोपक्षिप्तप्रतिबिम्बत्वविषयत्वेन तत्सूत्रोक्तालौकिकत्वाक्षेपेण च द्वेधानन्तरसङ्गतिरुक्ता भवति ॥ **ब्रह्मानन्दादिप्रतिबिम्बत्वमुक्तमिति** ॥ 'परमतः' सूत्रे सम्बन्धपदेनेत्यर्थः ॥ **भगवदानन्दादीति** ॥ अत्र ब्रह्माद्यानन्दादिभगवदानन्दादिप्रतिबिम्बं न भवत्युत भवतीति चिन्ता । तदर्थं प्रतिबिम्बभूतब्रह्माद्यानन्दादिवैचित्र्ये बिम्बवैचित्र्यातिरिक्तं कारणं नास्त्युतास्तीति । ब्रह्माद्यानन्दवैचित्र्येऽपि बिम्बभूतविष्ण्वानन्दावैचित्र्यमिति न्यायविवरणं योजयति– **मिथो विचित्राणामिति** ॥

(भावबोधः)

ननु विचित्रस्वभावानामपि जीवानामविचित्रभगवत्प्रतिबिम्बत्वस्य 'अदृष्टानियमात्' इत्यत्र समर्थितत्वेन तन्न्यायेनेदमपि किं न स्यादित्याशङ्कां परिहरति– **न चादृष्टादिनियमेनेत्यादिना** ॥ न हि सूर्यकान्तप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्यवैचित्र्यमिति न्यायविवरणं मनसि निधाय यथादित्यस्येत्यादिभाष्यं व्याचष्टे– **यथा खल्वित्यादिना** ॥ अनेनादित्यादिवदाधिक्यादिति न्यायविवरणगतं सूर्यकान्तादिस्थानपरमादिपदमपि सूर्यकान्तवच्चतुर्मुखादिस्थानानामाधिक्यादित्युक्ततात्पर्यकं भवति । प्रतिबिम्बत्वमायातीत्यस्य बिम्बमेव प्रतिबिम्बत्वमायातीति तयोरैक्यप्रतिपादकत्वभ्रमनिरासायाह– **प्रतिफलित इति** ॥ तदधीनत्वे सति तत्सदृशो भवतीत्यर्थः ।

## भावदीपः

**प्रतिबिम्बत्वसमर्थनादिति** ॥ भगवदानन्दादिषु वैचित्र्यापत्तिशङ्कानिरासेनेति भावः । अतो नादृष्टानियमादित्यनेन पौनरुक्त्यम् । तत्र विचित्रब्रह्मादिजीवानामेकरूपब्रह्मप्रतिबिम्बत्वायोगादिति शङ्काया एव निरासात् । यथोक्तं तत्र न्यायविवरणे । न च वैचित्र्यमनाभासत्वे कारणमिति । अत्र तु न च ब्रह्माद्यानन्दवैचित्र्येऽपि बिम्बभूतविष्ण्वानन्दवैचित्र्यमिति । उक्तं च चन्द्रिकायामेवापौनरुक्त्यं अदृष्टानियमादित्यत्र । एतेन प्रागुक्तसम्बन्धपदोक्तबिम्बप्रतिबिम्बभावाक्षेपेणेह पूर्वपक्षकरणात्पूर्वसङ्गतिः सूचिता ॥ **अलौकिकत्वासम्भवेनेति** ॥ बिम्बप्रतिबिम्बभावरूपहेतुना पूर्वत्र तत्साधनादिति भावः ॥ **उक्तमिति** ॥ प्राक्सम्बन्धपदेनेत्यर्थः ॥ **उक्तेर्द्वैविध्येति** ॥ लोक इत्यर्थः । ब्रह्माद्यानन्दवैचित्र्येऽपीत्याद्यन्यत्रोक्तमत्र योजयति ॥ **मिथ इति** ॥ इष्टापत्तिं निराह ॥ **तथा चेति** ॥ तच्च नेत्युक्तं न स्थानत इत्यत्रेति तद्विरोध इति भावः । अदृष्टानियमादित्यनेन गतार्थत्वमाशंक्य तदाक्षेपमाह ॥ **न चेति** ॥ **आदिमदिति** ॥ यद्यप्यदृष्टादेरनादित्वमप्यस्ति । उक्तं च तत्र भाष्ये अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यमिति ॥ तथाप्युक्तदिशाऽनाद्यदृष्टवैचित्र्यसिद्धब्रह्माद्यानन्दवैचित्र्येण बिम्बानन्दवैचित्र्यापादन एव तात्पर्यम् । अदृष्टादेरनादिमत्त्वोक्तिरप्यदृष्टव्यक्त्यपेक्षयेति ध्येयम् । यद्वा तत्र भाष्ये अनादित्वोक्तिरत्र वक्ष्यमाणाभिप्राया ॥ **अत इति** ॥ अलौकिकत्वसाधकबिम्बप्रतिबिम्बभावाभावादित्यर्थः ।

साध्यमध्याहृत्य तत्र हेतुतया भाष्यं योजयति ॥ **भवतीत्यादिना** ॥ **अत्रेति** ॥ स्थानगुणवैचित्र्येणेत्यादिनोक्तार्थ इत्यर्थः । परमात्मानन्दस्यैव प्रतिबिम्बत्वमिति भ्रमं निराह ॥ **प्रतिफलितो**

(भावदीपः)

**भवतीत्यर्थ इति ॥** एतच्च प्रतिफलनं यावदधिकारमित्यत्रोक्त दिशाऽनादिस्वरूपोपाधिनेति भावः । ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु । प्रतिबिम्बस्तु विप्रुट्को विष्णोरेव परं सुखम्' इति महावाराहस्मृतेः ।

## अभिनवचन्द्रिका

**प्रतिबिम्बत्वसमर्थनादिति ॥** भगवदानन्दादिभिन्नांशत्वसमर्थनादित्यर्थः । एतेन प्रतिबिम्बत्वस्य सादृश्यघटितत्वात् तस्य च भगवदानन्दाद्यलौकिकत्वविरोधित्वात् तत्समर्थनमयुक्तमिति परास्तम् । भिन्नांशत्वस्येह समर्थनेन अलौकिकत्वविरोध्यतिसादृश्यासमर्थनात् । **तदभाव इति ॥** ब्रह्माद्यानन्दादीनां भगवदानन्दादिप्रतिबिम्बत्वाभावे 'परमत' इति पूर्वसूत्रोक्तालौकिकत्वं न स्यात् । तत्र सम्बन्धपदोक्तबिम्बप्रतिबिम्बभावस्याऽसिद्धत्वेन तत्रोक्तहेत्वन्तरेऽप्यनाश्वासप्रसङ्गादिति भावः । **प्रतिबिम्बत्त्वमुक्तमिति ॥** पूर्वसूत्रे सम्बन्ध पदेनोक्तमित्यर्थः । **उक्तेर्द्वैविध्यदर्शनमिति ॥** वचनस्य प्रामाण्याप्रामाण्यदर्शनमित्यर्थः । **तथात्व इति ॥**

ननु भगवदानन्दप्रतिबिम्बत्वे मिथो वैचित्र्यायोग इत्यनुपपन्नम् । सूर्यप्रतिबिम्बयोः सूर्येन्द्रचापयोर्महावैलक्षण्यप्रदर्शनेन व्याप्त्यभावात् । इन्द्रचापस्य पक्षतुल्यत्वान्न तत्र व्यभिचारचोदनं युक्तमिति चेत्, मा भूत्तत्र व्यभिचारः । जलाऽऽदर्शाद्युपाधिषु प्रतीयमानतटस्थवृक्षाणां प्रतिबिम्बो हि सरसि ऊर्ध्वमूलोऽवाक्शाखः प्रतीयते । आदर्शे तु अवाङ्मूल ऊर्ध्वशाखः प्रतीयते । न चाऽनयोर्नैकप्रतिबिम्बत्वमिति साम्प्रतम् । बिम्बैक्यस्य सर्वानुभवसिद्धत्वात् । अत एव प्रतिबिम्बवैचित्र्याङ्गीकारे बिम्बरूपे भगवदानन्दादौ वैचित्र्यापादनमप्ययुक्तम् । प्रतिबिम्बवैचित्र्येऽपि तटस्थवृक्षे वैचित्र्याभावेन व्यभिचारात् । न च निर्मूलाशङ्का योगारम्भं प्रयोजयतीति अनारम्भणीयमेवेदमधिकरणमिति चेत् उच्यते । युक्तं वृक्षप्रतिबिम्बयोः बिम्बवैचित्र्याभावेऽपि वैचित्र्यमुपाधिधर्मस्य वैचित्र्यकारणस्य विद्यमानत्वात् । तथा हि जलोपाधेरुत्तानत्वेन तत्प्रतिबिम्बस्योर्ध्वमूलत्वमवाक्शाखत्वम्, आदर्शस्य तु सम्मुखत्वेन तत्रत्यप्रतिबिम्बस्य बिम्बानुसारित्वं भवति । यदा त्वादर्शोऽप्युत्तानो भवति तदा बिम्बविपरीतएकप्रतिबिम्बो भवत्युपाधिगुणात् । न चेह तथा सम्भवति उपाधिभूतानां ब्रह्मरुद्रा दीनामानन्दवैचित्र्यापादकबिम्बानधीनधर्मशून्यत्वात् । ततो ब्रह्मादिषु प्रतीयमानानन्दस्य विचित्रस्य भगवदानन्दप्रतिबिम्बत्वाभावो वा, भगवदानन्दतारतम्यं वाऽभ्युपेयमिति शङ्कासम्भवादारम्भणीयमेवेदमधिकरणमिति ।

(अभिनवचन्द्रिका)

तर्कस्याप्रयोजकत्वं परिहरति **मिथो विचित्राणामिति** ॥ वैचित्र्यरूपकारणविधुराणामिति शेषः । प्रतिबिम्बवैचित्र्ये हि उपाधिवैचित्र्यं, बिम्बवैचित्र्यं वा कारणम् । प्रकृते उपाधिवैचित्र्याभावे निश्चिते बिम्बवैचित्र्यमवर्जनीयमिति भावः । भगवति गुणतारतम्यस्येष्टत्वं परिहरति **न तत्र भक्तिरिति** ॥ भगवति निरतिशयभक्तिसिध्यर्थं हि ब्रह्माद्यानन्दस्य तत्प्रतिबिम्बत्वमिहोच्यते । भगवति तारतम्याङ्गीकारे तु न सा सिद्ध्यतीति, ब्रह्माद्यानन्दस्य तत्प्रतिबिम्बत्ववर्णनं व्यर्थमेव स्यादिति भावः ॥ **प्रतिफलितो भवतीति** ॥ स्वसदृशवस्तुव्यवस्थापको भवतीत्यर्थः ॥ **स्यादेतदिति** ॥ उपपत्तेश्चेति सूत्रे एतद्दूषणं स्यादित्यर्थः । किमेतद्दूषणमित्यत आह– **स्थानगुणेनेति** ॥ **न बिम्बसामर्थ्यमुपयुज्यत इति** ॥ एतद्दूषणं स्यादिति पूर्वेण सम्बन्धः ।

पूर्वपक्षस्तु न ब्रह्माद्यानन्दादयो भगवदानन्दादिप्रतिबिम्बभूताः । तथात्वे वैचित्र्याभावप्रसङ्गात् । प्रतिबिम्बवैचित्र्ये हि कारणद्वयं, बिम्बवैचित्र्यं वा, स्थानवैचित्र्यं वेति । न चात्र ब्रह्मादिस्थानवैचित्र्यं प्रतिबिम्बवैचित्र्योपपादकं सम्भवति । तस्यापि भगवद्धर्मप्रतिबिम्बत्वेन वैचित्र्यसिद्धये स्थानगुणान्तरवैचित्र्यानुसरणेऽनवस्थानात् । नापि बिम्बानन्दादिवैचित्र्यम् । भक्त्यभावप्रसङ्गात् । ततश्च कारणाभावेन वैचित्र्यासम्भवात् न तत्र ब्रह्मानन्दादिर्भगवदानन्दादिप्रतिबिम्ब इति तस्य लौकिकत्वाभावान्न तत्र निरतिशया भक्तिरिति ।

सिद्धान्तस्तु प्रतिबिम्ब एव ब्रह्माद्यानन्दादिः भगवदानन्दादेः । बह्मा दीनामनादिकालीनभक्त्यादिगुणवैचित्र्यपरमेश्वरैश्वर्याभ्यां सूर्यप्रतिबिम्बवैचित्र्यवदानन्दादिवैचित्र्यसम्भवात् । न च भक्त्यादिवैचित्र्याऽनुपपत्तिः तस्य परमेश्वरैश्वर्यवशादेवोपपत्तेः । परमेश्वरो हि वेदाऽप्रामाण्यकारणवैषम्यादिपरिहाराय भक्त्यादिवैचित्र्यमपेक्ष्यैव विचित्रानन्दादीन् ददाति । अनादिकालीनभक्त्यादिविचित्रगुणांस्तु स्वेच्छयैवैश्वर्यवशाद्ददाति । तत्र वैषम्यादेरदोषत्वात् । तदुक्तम्– 'ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता' इति । अतो ब्रह्मादिगुणबिम्बालौकिकगुणे हरौ युक्तैव भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

तदभावे प्रागुक्तलौकिकत्वेति । ब्रह्मानन्दादीनां प्रतिबिम्बत्वाभावे परमत इत्यत्र सम्बन्धेत्युक्तहेतुस्वरूपासिद्ध्या प्रागुक्तलौकिकत्वासम्भव इति शङ्कायां हेतुसाधकत्वेन तत्सूत्रोक्तालौकिकत्वा-

(वाक्यार्थमुक्तावली)

क्षेपपरिहारकत्वेन च द्वेधानन्तरसङ्गतिरिति भावः ॥ **भगवदानन्दादीति** ॥ अत्र ब्रह्माद्यानन्दादि भगवदानन्दादिप्रतिबिम्बं न भवत्युत भवतीति चिन्ता । तदर्थं प्रतिबिम्बभूतब्रह्माद्यानन्दवैचित्र्यं बिम्बभूतभगवदानन्दादिवैचित्र्यापादकमुत नेति । तदर्थं प्रतिबिम्बवैचित्र्ये बिम्बवैचित्र्यव्यतिरिक्तं कारणं नास्त्युतास्तीति । अत्र नानाभाव इत्युक्तन्यायप्रदर्शकं पूर्वपक्षभाष्यमवतार्य व्याचष्टे ॥ **पूर्वपक्षयतीति** ॥ भाष्यं योजयितुं प्रागुक्तहेतोरसिद्धिमाह ॥ **नान्यानन्दादय इति** ॥ कुतो नेत्यतः परानन्दमात्रत्वात् भगवदानन्दप्रतिबिम्बत्वात्प्रतिबिम्बत्वाङ्गीकार इति यावत् । ब्रह्माद्यानन्दादीनां विशेषो वैचित्र्यं कथमिति भाष्यं योजयति ॥ **तथात्व इति** ॥ प्रतिबिम्बत्व इत्यर्थः । भवतु भगवदानन्दप्रतिबिम्बत्वं वैचित्र्यं च को दोष इत्यत आह ॥ **मिथो विचित्राणामिति** ॥ एतेन विचित्राणामपि ब्रह्माद्यानन्दादीनां परानन्दमात्रत्वात् परानन्दप्रतिबिम्बत्वाङ्गीकारात् अङ्गीकार इति यावत् । कथं बिम्बप्रतिबिम्बयोर्मिथो विशेषः । प्रतिबिम्बवैचित्र्ये तद्बिम्बेऽपि वैचित्र्यं स्यादिति भाष्यार्थ उक्तो भवति । उक्तं च न्यायविवरणे । न च ब्रह्माद्यानन्दवैचित्र्येऽपि बिम्बभूत-विष्ण्वानन्दवैचित्र्यमिति । ननु विचित्रस्वभावानामपि जीवानामविचित्रभगवत्प्रतिबिम्बत्वस्यादृष्टा-नियमेनेत्यत्र समर्थितत्वेन तन्न्यायेनेदमपि किं न स्यादित्याशङ्कां परिहरति ॥ **न चेति** ॥

ननु जीवस्वभाववैचित्र्यमपि स्वाभाविकमिति कथं तेषां तस्यादिमद्विद्याकर्मवैचित्र्यकारण-कत्वम् ? कथं च विद्याकर्मणोरादिमत्त्वम् ? अनादिविद्याकर्मवैचित्र्यादिति तद्भाष्येऽनादित्व-स्योक्तत्वादिति चेत्तत्र सुरासुरनरत्वादिरूपं संसारे दृश्यमानं प्रतिबिम्बवैचित्र्यं कथमिति शङ्कायां यथाप्राज्ञं हि सम्भवाः यत्कर्म कुरुते तदभिसम्पद्यते इत्याद्यनुसृत्य प्रवाहतोऽनादिविद्याकर्मवैचित्र्यात् तद्वैचित्र्यमिति समाहितत्वेन शुद्धस्वभाववैचित्र्यस्याविचारितत्वात् । अत्र स्वाभाविकानन्दादि-विचारात् । तस्य च प्रवाह्यपेक्षया आदिमद्विद्याकर्मकारणकत्वानुपपत्तेरित्युक्तिसम्भवात् । विस्तरस्त्वन्यत्र कृतोऽनुसन्धेयः ।

सूत्रे विशेषादिति पदं विशेष इति प्रथमान्ततया विपरिणम्यते ॥ **प्रकाशादिवदिति** ॥ प्रकाशादेरिवेत्यर्थः । प्रकाशपदेन सूर्य उच्यते । आदिपदेन चन्द्रादिर्गृह्यते । आनन्दादेरिति शेषः । तथा च प्रकाशादिवत् प्रकाशादेरिव यथा सूर्यादिरूपबिम्बस्य स्थानविशेषात्सूर्यकान्तमय-दर्पणादिस्थानगुणवैचित्र्यात् विशेषः प्रतिबिम्बेऽग्निजनकत्वादिविशेषः, तथा भगवदानन्दादेरपि

(वाक्यार्थमुक्तावली)

स्थानविशेषात् ब्रह्मादिस्वरूपान्तःकरणाख्यस्थानगुणभक्त्यादिविशेषात् ब्रह्माद्यानन्दादिलक्षण-प्रतिबिम्बे विशेषो भवतीति सूत्रार्थपरं यथादित्यस्येति भाष्यं व्याचष्टे ॥ **यथा खल्वित्यादिना** ॥ ननु भगवदानन्दादेर्बिम्बत्वात् प्रतिबिम्बत्वमायातीत्येतत्कथमित्यत आह ॥ **प्रतिफलित इति** ॥ मुखं बिम्बं यथा दर्पणे प्रतिफलनयुक्तं भवति तथेति भावः ।

## तत्त्वसुबोधिनी

**तदभाव इति** ॥ प्रतिबिम्बत्वाभाव इत्यर्थः । अनेन परमत इति सूत्रस्थसम्बन्धपदेनोपक्षिप्त-प्रतिबिम्बत्वविषयत्वेन तत्सूत्रोक्तालौकिकत्वाक्षेपेण वा द्वेधानन्तरसङ्गतिरुक्ता भवति ॥ **ब्रह्मानन्दादिप्रतिबिम्बत्वमिति** ॥ परमत इति सूत्रे सम्बन्धपदेनेत्यर्थः । मिथो वैचित्र्येऽपि कुतो न भगवत्प्रतिबिम्बत्वमित्यत आह ॥ **मिथ इति** ॥ अस्तु ततः किमित्यत आह ॥ **तथा चेति** ॥ ननु विचित्रस्वभावानामपि जीवानामविचित्रभगवत्प्रतिबिम्बत्वस्य अदृष्टानियमादित्यत्र समर्थितत्वेन तन्न्यायेनेदमपि किन्न स्यादित्याशङ्क्य परिहरति ॥ **न चेति** ॥ प्रतिबिम्बत्वमायातीत्यस्येममेव प्रतिबिम्बत्वमायातीति तयोरैक्यप्रतिपादकत्वभ्रमनिरासायाह ॥ **प्रतिफलित इति** ॥ तदधीनत्वे सति तत्सदृशो भवतीत्यर्थः ।

## वाक्यार्थविवरणम्

**प्रागुक्तेति** ॥ परमत इत्यलौकिकत्वे बिम्बप्रतिबिम्बभावसम्बन्धस्य हेतुत्वेनोक्तिरिति भावः ॥ **उक्तेरिति** ॥ काचनोक्तिर्युक्ताऽस्ति । काचनाऽयुक्ताऽस्ति । अतः प्रतिबिम्बत्वोक्तिरपि ब्रह्माद्यानन्दादीनां प्रतिबिम्बत्वभावेन युक्ता वा तदभावेनायुक्ता वेति सन्देह इति ज्ञातव्यम् । तथात्व इत्युक्त्या परानन्दमात्रत्व इत्येतद् भगवदानन्दप्रतिबिम्बत्व इति व्याख्यातं भवति । वैचित्र्येति विशेषशब्दार्थः । ब्रह्माद्यानन्दादीनामिति शेषः ॥ **तदिति** ॥ भगवदानन्दादीत्यर्थः । भगवदानन्दादौ बिम्बभूत इति शेषः ॥ **आदिमदिति** ॥ अदृष्टादेश्च सादित्वादिति भावः । ब्रह्मादिस्थानगुणो भक्त्यादिरूपः । सूर्यकान्तादीत्यादिपदेन जलादिग्रहणम् । **सूर्यकम्** सूर्यप्रतिबिम्बः । **वैचित्र्यम्** अग्निजनकत्वादिरूपम् ।

## वाक्यार्थमञ्जरी

**तदभाव इति ॥** भगवदानन्दस्य ब्रह्माद्यानन्दप्रतिबिम्बत्वेनैव वैलक्षण्यस्य वक्तव्यत्वादिति भावः ॥ **द्वैविध्येति ॥** युक्तायुक्तत्वेत्यर्थः ॥ **वैचित्र्यं स्यादिति ॥** अन्यथा निर्निर्बन्धनत्वापत्तेरिति भावः ॥ **अदृष्टानियमेनेति ॥** अदृष्टादिवैचित्र्येणेत्यर्थः । अदृष्टानियमादित्यत्र विचित्रस्वभावानामपि जीवानामविचित्रभगवत्प्रतिबिम्बत्वसमर्थनादिति भावः ॥ **ॐ स्थानविशेषात्प्रकाशादिवत् ॐ** ॥ यथा सूर्यप्रतिबिम्बे स्थानविशेषात्सूर्यकान्तादिस्थानगुणवैचित्र्यादग्निजनकत्वादिवैचित्र्यं तथा ब्रह्मादिस्थानगुणवैचित्र्यादानन्दवैचित्र्यमित्यर्थः ॥ **प्रतिफलित इति ॥** तदधीनत्वे सति तत्सदृश इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ उपपत्तेश्च ॐ ॥ ३६ ॥**

**'ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ।**
**ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता' इति पाद्मे ॥ ३६ ॥**

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बवैचित्र्यमुपपादयत्सूत्रं पठित्वा स्मृत्यैव व्याचष्टे ॥ **उपपत्तेश्चेति ॥** न केवलं प्रतिबिम्बानन्दादिवैचित्र्यं ब्रह्मादिस्थानगतभक्त्यादिगुणेनोपपन्नं किं नाम विम्बभूतभगवदैश्वर्यवशाच्चेति भावः । पुरुषापाद्यानां भक्त्यादिस्थानगुणानां कथं स्वाभाविकानन्दादिवैचित्र्यहेतुत्वमिति परिहर्तुमनादित्वोक्तिः । स्यादेतत् । स्थानगुणैनैवोपपद्यमाने वैचित्र्ये न विम्बसामर्थ्यमुपयुज्यत इति । मैवम् । सूर्यकान्तादिगतसूर्यकादिवैचित्र्येऽपि बिम्बसामर्थ्यस्याप्युपयोगदर्शनात् । स्थानगुणस्यैव निमित्तत्वे मुखप्रतिविम्बस्यापि तद्गतस्याग्निजनकत्वप्रसङ्गात् । न च तर्हि बिम्बसामर्थ्यमेवोपयोगीति वाच्यम् । तस्य सर्वत्रापि साम्यात् । अतो युक्तं सूत्रद्वयमपि अतो ब्रह्मादिगुणविम्बालौकिकगुणे हरौ युक्तैव भक्तिरिति सिद्धम् ।

## गुर्वर्थदीपिका

अग्निजनकत्वादीत्यत्राऽऽदिपदेन मालिन्यशीतलत्वादिकं सङ्गृह्यते । बिम्बसामर्थ्यस्यापीति वदता तस्मिन्नेव सूर्यकान्ते चन्द्रादिबिम्बेभ्योऽग्न्यनुदयाद्बिम्बसामर्थ्यमप्यपेक्षितमिति सूचितम् ।

## भावबोधः

**बिम्बभूतभगवदैश्वर्येति** ॥ अनेनादित्यादिवदाधिक्यादिति न्यायविवरणमप्यादित्यवद्बिम्बभूतस्य भगवत आधिक्यादित्युक्तार्थं भवति । अत्र सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेरिति न्यायविवरणानुसारेण यथा सूर्यबिम्बसामर्थ्यात् सूर्यकान्तादौ सूर्यकादेरग्निजनकत्वादिवैचित्र्यं तथेत्यपि ग्राह्यम् । न हीत्यादिन्यायविवरणानुसारेण सूत्रद्वयस्यावश्यकत्वमाह– **स्यादेतदित्यादिना** ॥ **उपयुज्यत इति** ॥ तथा च द्वितीयं सूत्रं व्यर्थमिति भावः ॥ **उपयोगेति** ॥ तथा चाद्यं व्यर्थमित्यर्थः । तस्य सर्वत्र साम्यादिति । तस्य सूर्यरूपबिम्बसामर्थ्यस्य सर्वत्र जलादौ विद्यमानत्वेऽपि तद्गतसूर्यकादेरग्निजनकत्वाभावादिति भावः । अत्राद्ये सूत्रे स्थानसामर्थ्योक्तिः । द्वितीये– तदपेक्षया अत्यावश्यकबिम्बसामर्थ्योक्तिः ।

## भावदीपः

काऽनेनोपपत्तिरुक्तेत्यतः सौत्रचशब्दसमुच्चेयं दर्शयन्नुपपत्तिं विवृण्वन्सूत्रार्थमाह ॥ **न केवलमिति** ॥ यद्वोपपत्तेश्चेत्युक्त्या प्राचीना नोपपत्तिरिति भ्रमनिरासायाह ॥ **न केवलमिति** ॥ न हि सूर्यकान्तप्रतिबिम्बस्येत्यादिन्यायविवरणाशयं व्यनक्ति ॥ **स्यादेतदित्यादिना** ॥ **अत इति** ॥ स्थानगुणेन बिम्बसामर्थ्येन च प्रतिबिम्बवैचित्र्यस्योपपन्नत्वेन विष्ण्वानंदादेर्बिम्बभावस्योपपन्नत्वादित्यर्थः । बिम्बेत्यन्तमलौकिकगुणत्वे हेतुः ।

## वाक्यार्थमुक्तावली

**विशेषस्येत्यन्वेति** ॥ प्रतिबिम्बानन्दवैचित्र्यस्योपपत्त्यन्तरसिद्धत्वाच्चेत्यर्थः । भक्त्यादीनामनादित इत्येतत् चशब्दसमुच्चेयपूर्वयुक्तिप्रदर्शनार्थमिति भावेनाधिक्यमित्युक्तन्यायप्रदर्शकं भाष्यं व्याचष्टे ॥ **न केवलमिति** ॥ भाष्ये उभयसमुच्चयनिरूपणेनोभयं मिलितमेव साधकं नान्यतरपरित्यागेनेति भावेनान्यतरसूत्रवैय्यर्थ्यमाशङ्क्य निराकरोति ॥ **स्यादेतदिति** ॥ **तस्य सर्वत्रेति** ॥ बिम्बसामर्थ्यस्य सर्वत्र जलादौ विद्यमानत्वेऽपि तद्गतसूर्यकादेरग्निजनकत्वाभावादिति भावः । स्थानबिम्बसामर्थ्ययोः बिम्बसामर्थ्यस्य प्राबल्याद्वितीये तदुक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

भक्त्यादेरनादित्वं किमर्थमुच्यते इत्यत आह ॥ **पुरुपेति** ॥ उपयुज्यत इति । तथा च द्वितीयं सूत्रं व्यर्थमिति भावः । ननु तत्रापि स्थानगुण एव निमित्तमित्यत आह ॥ **स्थानेति** ॥ **तद्गतस्य** सूर्यकान्तगतस्य ॥ **उपयोगीति** ॥ तथा चाद्यं सूत्रं व्यर्थमिति भावः । तस्य सर्वत्रेति । तस्य सूर्यरूपबिम्बसामर्थ्यस्य सर्वत्र जलादौ विद्यमानत्वेऽपि तद्गतसूर्यकादेः अग्निजनकत्वाभावादिति भावः । अत्राद्ये सूत्रे स्थानसामर्थ्योक्तिः । द्वितीये बिम्बसामर्थ्योक्तिः ।

## वाक्यार्थविवरणम्

बिम्बसामर्थ्यस्योपयोगमुपपादयति ॥ **स्थानेति** ॥ **तद्गतस्य** सूर्यकान्तगतस्य ॥ **तस्येति** ॥ सूर्यरूपबिम्बसामर्थ्यस्य ॥ **सर्वत्र** जलादौ । तथा च बिम्बसामर्थ्यस्य सर्वत्र साम्येन जलादिगत-सूर्यकस्याप्यग्निजनकत्वापत्त्या स्थानगुणस्याप्यावश्यकत्वमित्याशयः ॥ **सूत्रद्वयम्** ॥ स्थानगुणस्य बिम्बसामर्थ्यस्य चावश्यकत्वप्रतिपादकं सूत्रद्वयमित्यर्थः ॥ **ब्रह्मादिगुणेति** ॥ ब्रह्मादिगुणान् प्रति बिम्बभूता येऽलौकिकगुणास्त इति हरावित्यर्थः ।

## वाक्यार्थमञ्जरी

बिम्बभूतेशसामर्थ्याच्चानन्दवैचित्र्योपपत्तेर्भवत्येवान्यानन्दादीश्वरानन्दप्रतिबिम्बमित्यर्थः ॥ **उपयुज्यत इति** ॥ तथा च द्वितीयसूत्रं व्यर्थमिति भावः ॥ **उपयोगीति** ॥ तथा चाद्यं सूत्रं व्यर्थमिति भावः ॥ **तस्य सर्वत्र साम्यादिति** ॥ तस्य सूर्यादिबिम्बसामर्थ्यस्य सर्वत्र जलादौ विद्यमानत्वेऽपि तद्गतसूर्यकादेरग्निजनकत्वाभावादिति भावः ।

॥ इति स्थानविशेपाधिकरणम् ॥ १७ ॥

## १८. प्रतिषेधाधिकरणम्

ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम् । अतः कथमव्यक्ततेत्यत आह—

**॥ ॐ तथाऽन्यत्प्रतिषेधात् ॐ ॥ ३७ ॥**

यथा जीवानन्दादेरन्यद् ब्रह्म तथोपासाकृतादपि ।

'यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (के. उ. १-६) इति प्रतिषेधात् ।

'पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् ।
उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः' इति ब्रह्मतर्के ॥ ३७ ॥

### तत्त्वप्रदीपिका

श्रवणमननध्यानाभ्यासात्प्रसन्नं ब्रह्म प्रकाशत इत्युक्तम् । तदयुक्तम् । ध्यानकाल एव ब्रह्मरूपस्य दृश्यमानत्वात् । अतः कथमव्यक्तत्वमित्यत आह– **तथाऽन्यत्प्रतिषेधात्** ॥ उपास्तिस्फुरिता-दप्याकारादन्यद् ब्रह्म । अन्तःकरणप्रविष्टपदार्थाकारस्फुरणं हि स्मृतिः । न च तत्र पदार्थो दृश्यते । तस्य विनाशेऽपि स्मृतिसम्भवात् । तस्यैवान्तःप्रवेशे बहुत्वप्रसङ्गाच्च । तदाकारस्फुरणमेव तत्स्मृति-रित्युच्यते । यथा प्रतिमायामित्थम्भूतो भगवानित्युपासनं तदुपासनं भवति । एवं प्रतिबिम्बेऽपि । अल्पा अपि पिशाचादयः स्वाकारस्मृतौ किञ्चित्फलं दद्युः किमुत सर्वज्ञं सर्वशक्तिकं ब्रह्मेति ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं पुनस्तस्याव्यक्तत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । व्यक्तत्वे तस्य भक्तिवैयर्थ्यापातात्तत्समर्थनीयम् । प्रकृतं ब्रह्मैवात्र विषयः । व्यक्तमव्यक्तं वेति सन्देहः । पदार्थ-द्वैविध्यदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **ध्यानेति** ॥ न ब्रह्माव्यक्तं तस्य ध्यानकाले चित्ते प्रतीयमानत्वात् । ध्यानकाले प्रतीतं न ब्रह्म तस्य ध्यातृबहुत्वेन बहुत्वापत्तेरिति चेन्न ।

(तत्त्वप्रकाशिका)

स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां नानात्वेन तदुपपत्तेः । अन्यथा ध्यानवैयर्थ्यात् । न हि यत्किञ्चिद्ध्यानेन ब्रह्म फलं ददातीति युक्तम् । अतो ध्यानकाले पुरुषप्रयत्नेन प्रतीतस्य ब्रह्मरूपत्वेनाव्यक्तत्वाभावाद्व्यर्था तद्भक्तिरिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ न ध्यानकाले प्रतीतत्वेन ब्रह्मणो व्यक्तत्वं मन्तव्यम् । ध्यानप्रतीतस्याब्रह्मत्वात् । तत्कुतः । 'यथा खलु जीवानन्दादीनामल्पत्वादिकारणेन ब्रह्मानन्दादितद्विलक्षणमेव तथोपासाकृतस्य दुर्लक्षणत्वादिना कारणेन ब्रह्मणस्ततो वैलक्षण्यात् । निर्दोषदोपिणोर्ब्रह्मोपासाकृतयोरैक्यानुपपत्तेरेव हि 'यन्मनसा' इति श्रुतिस्तस्य ब्रह्मत्वं प्रतिषेधतीति भावः । पुरुषो यद्वस्तु न मनुते । ध्यानकालप्रतीतस्याब्रह्मत्वे कथं ब्रह्म फलदं स्यादित्यत आह ॥ **पश्यन्तीति** ॥ स्थितिमात्रेण कथं फलदमनुपासितत्वादित्यत आह ॥ **तदिति** ॥ प्रतिविम्बोपासनमिति सम्बध्यते । ब्रह्मैव तत्कुतो नेत्यत आह ॥ **दृश्यत इति** ॥ तर्हि ज्ञानायैव प्रयतितव्यं किमुपासनयेत्यत आह ॥ **उपासनेति** ॥ अतो ध्यानप्रतीतस्याब्रह्मत्वेन तस्याव्यक्तत्वात्कर्तव्यैव तत्र भक्तिरिति सिद्धम् ।

## गुर्वर्थदीपिका

स्वरूपभेदाभावेऽपीत्यस्य ब्रह्मस्वरूपेषु भेदाभावेऽपि तेषां ब्रह्मरूपाणां नानात्वेन सिद्धान्तिनामिवानेकत्वेन तदुपपत्तेरित्यर्थः । ब्रह्मोपासाकृतयोरित्यस्य ब्रह्म चोपासार्थं कृतं रूपं च ब्रह्मोपासाकृते तयोरित्यर्थः । पश्यन्ति परमं ब्रह्मेति स्मृतेः परं ब्रह्मैव पश्यन्ति ध्यानानन्तरमापरोक्ष्येण पश्यन्ति यद्यस्मात्कारणात्प्रतिबिम्बे चित्तनिर्मितप्रतिमायां ब्रह्मैव वर्तते । अतः कारणाच्चित्ते प्रतिबिम्बितं यद्रूपं तदपि तेषां ध्यातॄणां फलप्रदम् । तदुपासनं प्रतिबिम्बोपासनं च प्रतिमोपासना शिलाकांस्यादिकृतप्रतिमोपासना यथा तथा तदुपासनं ब्रह्मोपासनं भवतीत्यावृत्या योजना ।

## भावबोधः

**प्रकृतमिति** । 'उपपत्तेश्च' इति सूत्रे प्रतिबिम्बवैचित्र्यघटकसामर्थ्यवत्त्वेन प्रकृतमित्यर्थः । तथा चात्र यथा जीवानन्दादेरन्यद् ब्रह्म तथोपासाकृतादपीति पूर्वाधिकरणभेदरूपसाध्यस्याधिक्यरूपसिद्धान्तन्यायस्य चातिदेशादनन्तरसङ्गतिरिति भावः । **व्यक्तमिति** ॥ अत्र ब्रह्म किं व्यक्तमव्यक्तं वेति चिन्ता । तदर्थमुपासाकृतेन चित्ते प्रतिबिम्बितेन ब्रह्माभिन्नमुत भिन्नमिति ।

(भावबोधः)

तदर्थमुपासाकृतं किं दुर्लक्षणत्वादिदोषोपेतं न भवत्युत भवतीति । तदर्थं भेदे ब्रह्म स्वभिन्नोपासने फलदं न भवत्युत भवतीति । तदर्थं स्वभिन्नोपासनाविषयो न भवत्युत भवतीति । तस्य ध्यानकाल इति । अनेन विष्णोश्चित्तप्रतिबिम्बरूपेति न्यायविवरणांशोऽपि व्याख्यातः । नानाभावाद्विष्णोरिति न्यायविवरणांशं तन्निवर्तनीयशङ्काप्रदर्शनपूर्वकं व्याचष्टे– ध्यानकाल इत्यादिना ॥ 'पश्यन्ति परमं ब्रह्म' इत्यादिस्मृतिनिवर्तनीयविपक्षबाधकतर्कमाह अन्यथेति ॥ चित्प्रतिबिम्बितस्य ब्रह्मरूपत्वाभाव इत्यर्थः । सौत्र'तथा'शब्दार्थतद्विरुद्धधर्माधिकरणत्वरूपहेतुप्रतिपादकमाधिक्यादेव प्रतिबिम्बे हि दोषाश्च प्रतीयन्त इति न्यायविवरणं मनसि निधाय यथेत्यादिभाष्यं व्याचष्टे– **यथा खल्वित्यादिना** ॥ अतो हि श्रुतिः प्रतिषेधति । नेदं यदिदमुपासत इति न्यायविवरणं व्याचष्टे– **निर्दोषदोषिणोरिति** ॥ 'यन्मनसा' इति श्रुतिप्रतीकग्रहणेन यन्मनसेत्यादिभाष्यमपि व्याख्यातं भवति । यदित्युक्तस्य ब्रह्मणः कर्तृत्वे येन ब्रह्मणा मनो मतमित्यनेन व्याघातप्रसङ्गात्कर्तृपदाध्याहारेण वाक्यं योजयति– **पुरुष इति** ॥ **स्थितिमात्रेणेति** ॥ अनेन प्रतिबिम्ब इत्यनन्तरं तिष्ठतीति शेष इत्युक्तं भवति । तथा च चित्ते यत्प्रतिबिम्बितं तत्परमं ब्रह्म पश्यन्तीति सामानाधिकरण्यं सादृश्याद्गौणमिति भावः । किं तु तदुपासनं भवतीति कर्तुरप्रतीतेराह– **प्रतिबिम्बोपासनमिति** ॥ **दृश्यत इतीति** ॥ परमं पदं ब्रह्मस्वरूपं ध्यानजज्ञानेनैवापरोक्ष्येण दृश्यते, न तु ध्यानकाले, अतो ध्यानकाले परोक्ष्येण चित्तप्रतिबिम्बितं न ब्रह्मेत्यर्थः ।

## भावदीपः

**पुनस्तस्याव्यक्तत्वेति** ॥ ध्यानप्रतीतादन्यत्वोक्त्येति भावः । अतो न पौनरुक्त्यम् । एतेन प्रागव्यक्तनये श्रवणाद्यभ्यासेन प्रसन्नं ब्रह्म व्यज्यत इत्युक्ते तदात्मनः प्रसादगुणस्य कथं तेन विशेषणविशेष्यभाव इत्याशङ्कानिरासाय तदुपलक्षिताशेषगुणानां तदात्मनामपि तद्धर्मत्वे विशेषबलात्समर्थिते अलौकिकत्वादुत्ताना वै देवगवा वहन्तीत्युत्तानानामेव देवगवानां भारवहनमिवालौकिकत्वादेवेशगुणानां तदात्मनामपि भावेन नयद्वयेनालौकिकत्वे समर्थिते सति प्रकृतमव्यक्तत्वमेव प्रकारान्तरेणाक्षिप्य समाधीयत इति वा विष्णोश्चित्तप्रतिबिम्बरूपत्वात्कथं बिम्बतेति ध्यातृपुरुषभेदेन ध्येयब्रह्मणोऽपि विचित्रत्वात्कथमविचित्रतेति च शङ्कानिरासाद्वा परमत इत्यत्रोक्तन्यायातिदेशाद्वा सङ्गतिः सूचिता । स्थानविशेषादित्यस्य सम्बन्धरूपहेतुसाधकत्वेनाव्यवधाय-

(भावदीपः)

कत्वात्। फलोक्तिपरत्वभ्रांतिं निराह ॥ **पूर्वपक्षयतीति** ॥ कथमित्यादिभाष्यं व्याचष्टे ॥ **न ब्रह्मेति** ॥ अत इत्यन्तपूर्ववाक्यार्थमाह ॥ **तस्येति** ॥ तदेव ब्रह्मरूपमित्युक्तितात्पर्यं नानाभावाद्विष्णोश्चित्तप्रतिबिम्बरूपतेत्यन्यत्रोक्तदिशा व्यनक्ति ॥ ध्यानेत्यादिना युक्तमित्यन्तेन ॥ अन्यथा ध्यानप्रतीतस्याब्रह्मत्व इत्यर्थः ॥ **अत इति** ॥ ध्यानवैयर्थ्यान्यथानुपपत्तिबलाद्रूपनानात्वेन ब्रह्मत्वोपपत्तिबलाच्चेत्यर्थः ।

पूर्वपक्षं प्रतिषिध्य तत्र हेतूपपादकतया सूत्रभाष्ये व्याचष्टे ॥ **न ध्यानेति** ॥ **अब्रह्मत्वादिति** ॥ श्रवणमननोत्पन्ननिर्णयजन्यवासनामयस्य वस्तुनोऽविच्छिन्नमानसावलोकनस्य ध्यानत्वात्तद्विषयस्य वासनापरिणामत्वादिति भावः । सूत्रे तथेत्यतिदेशः परमत इत्यत्रोक्तन्यायानुसन्धानार्थ इति भावेन प्रवृत्तं यथेति भाष्यमित्युपेत्याह ॥ **अल्पत्वादीति** ॥ सेतून्मानेत्युक्तोन्मानत्वादिप्रतिद्वन्द्विधर्मोक्तिरल्पत्वादीति । उपजीवकत्वमनोवाग्गोचरत्वादिपदार्थः । एतेन आधिक्यादेवेति न्यायविवरणोक्तमुपलक्षणमिति सूचितम् । प्रतिबिम्बे हि दोषाश्च प्रतीयन्त इत्यन्यत्रोक्तं हेतुमाह ॥ **दुर्लक्षणत्वादिनेति** ॥ अतो हि श्रुतिः प्रतिषेधति । 'नेदं यदिदमुपासत' इत्यन्यत्रोक्त्यनुरोधेन यदित्यादिभाष्यभावमाह ॥ **निर्दोषेति** ॥ एतेन प्रतिषेधादिति हेतोरन्यदित्युक्तसाध्यस्य च वह्निमत्त्वादेव हि धूमवत्त्वमितिवत्प्रयोज्यप्रयोजकभावः सूचितः । यदित्यस्य कर्तृत्वभ्रांतिं निराह ॥ **पुरुष इति** ॥ साकल्येनेत्यर्थः । अन्यथा मनसैवाऽनुद्रष्टव्यमित्यादिविरोधात् । ज्ञानमात्रनिषेधस्य व्याहतत्वाच्च । यदिदं वस्तूपासते ध्यायन्ति नेदं ब्रह्म । किं तु यन्न मनुते तदेव ब्रह्म त्वं विजानीहीत्यर्थो व्यक्त इति भावः । नेदं जीवस्वरूपं तद्ब्रह्म विष्ण्वाख्यमव्ययम् । किं तु यत्ते समीपस्थमासते विनियामकम् । तदेव ब्रह्म विद्धि त्वं विष्ण्वाख्यं परमव्ययमिति तलवकारभाष्ये तु आसेति भिन्नं पदमुपेत्याऽर्थान्तरमुक्तम् । (परमं ब्रह्मेति तदाश्रये तद्व्यपदेशः ।) उद्देश्याऽप्रतीतेराह ॥ **प्रतिबिम्बेति** ॥ यथा प्रतिमोपासनं तदुपासनं तथा प्रतिबिम्बोपासनमपि तदुपासनं ब्रह्मोपासनं भवतीत्यर्थः ॥ **दृश्यत इतीति** ॥ परं पदं ब्रह्मस्वरूपम् अपरोक्षेणैव ज्ञानेनोत्तमं ब्रह्मस्वरूपं दृश्यत इति स्मृतावित्यर्थः ॥ **अत इति** ॥ श्रुतौ ब्रह्मत्वप्रतिषेधादित्यर्थः । अत्र केनचिदुत्प्रेक्षितो दोषोऽस्माभिश्चन्द्रिकाप्रकाशे वाच्यत्वनये निरस्तो ध्येयः ॥

## अभिनवचन्द्रिका

**पुनस्तस्येति** ॥ 'तदव्यक्तमाह हि' इत्यादौ समर्थितत्वात्पुनरित्युक्तम् । पुनस्समर्थनं च तस्याऽव्यक्तत्वे अनुभवविरोध इत्यभ्यधिकाशङ्कानिरासायेति बोध्यम् । **ध्यातृबहुत्वेनेति** ॥ ध्यातारस्तावदेकस्मिन्काले, नानादेशस्था बहवः ध्यायन्ति च स्वहृदये सामस्त्येन । न च एकस्य वस्तुनः सामस्त्येनैकदैवाऽनेकदेशस्थता सम्भवतीत्यनेकमेव ध्येयम् । तस्य च ब्रह्मत्वे ब्रह्मणोऽप्यनेकत्वापत्त्या भेदः स्यादिति भावः ॥ **स्वरूपभेदाभावेऽपीति** ॥ स्वरूपभेदाभावेऽपि विशेषबलेनैव रामकृष्णादिरूपबहुत्वस्य प्रमाणसिद्धत्वेन तद्वत् ध्येयेऽपि विशेषबलेनैव तत्सिद्धेर्भेदसाधकत्वाभावात् ध्येयानेकत्वं नाऽनिष्टमिति भावः ॥ **अन्यथेति** ॥ ध्येयस्याऽब्रह्मत्व इत्यर्थः । भाष्ये **यन्मनसेति** ॥ पुरुषः यद्वस्तु मनसा न मनुते, येन परमात्मना मनो विज्ञतमाहुः, तदेव ब्रह्मत्वं विद्धि । जना **यदिदमुपासते** चित्ते प्रतिबिम्बितमुपासते, तद्ब्रह्म नेत्यर्थः । भाष्ये **पश्यन्ति परमं ब्रह्मेति** ॥ यस्य प्रतिबिम्बं चित्ते ध्याननिष्ठाः पश्यन्ति तद्बिम्बरूपमेव परमं ब्रह्म न तु ध्यानकाले प्रतीतम् । कथं तर्हि अब्रह्मणः प्रतिबिम्बस्य फलदत्वमित्यत उक्तम् **ब्रह्मैव प्रतिबिम्ब इति** ॥ प्रतिबिम्बे ब्रह्मणः सत्वात्तदेव फलप्रदमित्यर्थः । टीकायां प्रतिबिम्बोपासनमिति सम्बध्यत इति । अनेन यथा प्रतिमोपासनं न केवलं प्रतिमायाः, अपि तु ब्रह्मणोऽप्युपासनं भवति, तथा प्रतिबिम्बोपासनमपि न केवलं प्रतिबिम्बोपासनम् अपि तु तदुपासनं च भवतीति मूलवाक्यं योजितं भवति ॥ **भाष्ये दृश्यत इति** ॥ परं पदं परब्रह्मस्वरूपं ध्यान संज्ञाविधुरेणाऽपरोक्षज्ञानेनैव दृश्यते । इदं तु ध्यानसंज्ञकेनाऽपरोक्षेण दृश्यते, अतो न तयोरैक्यमिति भावः ।

पूर्वपक्षस्तु व्यक्तमेव ब्रह्म । ध्यानकाले प्रतीयमानत्वात् । न च ध्येयानां बहुत्वेन ब्रह्मभेदापत्तिः विशेषबलेनैव बहुत्वोपपत्तेः । ध्येयस्याब्रह्मत्वे च ब्रह्मध्यानाभावेन फलं न स्यात् । अतो ध्यानकाले प्रतीतस्य ब्रह्मत्वेनाऽव्यक्तत्वाभावाद्व्यर्था भक्तिरिति ।

सिद्धान्तस्तु अव्यक्तमेव ब्रह्म जीवानन्दाद्ब्रह्मानन्दस्य भिन्नत्ववत् ध्येयस्य दुर्लक्षणत्वेन ब्रह्मणस्तदन्यत्वात् । 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासत' इति ध्येयस्य ब्रह्मत्वनिषेधाच्च । न च ध्यानफलानुपपत्तिः प्रतिमोपासनवत् प्रतिबिम्बोपासनस्यापि ब्रह्मोपासनत्वात् । अतो ध्यानकाले प्रतीतस्याऽब्रह्मत्वेनाऽव्यक्तत्वात्, कर्तव्यैव तद्भक्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे तथेति पूर्वसिद्धान्तन्यायस्यातिदेशादनन्तरसङ्गतिः । अत्र ब्रह्म किं व्यक्तमुताव्यक्तमिति चिन्ता । तदर्थमुपासाकृतेनाभिन्नमुत भिन्नमिति चिन्ता । ध्यानकाले यच्चित्ते प्रदृश्यते अतः कथमव्यक्ततेति भाष्यान्वयमभिप्रेत्य व्याचष्टे ॥ **न ब्रह्माव्यक्तं तस्य ध्यानकाले चित्ते प्रतीयमानत्वादिति** ॥ ध्यानकाले यच्चित्ते प्रतीयते तद्ब्रह्म नेति भाष्यान्वयमभिप्रेत्य तद्व्यावर्त्यमाह ॥ **ध्यानकाल इति** ॥ कुतो नेत्यतो भाष्ये तद्ब्रह्मेति वक्तव्ये ब्रह्मरूपमिति रूपशब्दप्रयोगेन स्वरूपभेदाभावेऽपि विशेषकृतरूपनानात्वेन बहुत्वोपपत्तिरिति नानात्वमित्युक्तन्यायं प्रदर्शयितुं ब्रह्मणो रूपं ब्रह्मरूपमिति रूपपदं मत्वा व्याचष्टे ॥ **स्वरूपभेदाभावेऽपीति** ॥ सूत्रे तदव्यक्तमित्यस्ति । उपासाकृतादिति शेषः । यत उपासाकृतादन्यत् भिन्नमतस्तदव्यक्तमिति सूत्रार्थमाह ॥ **न ध्यानकाल इति** ॥ हेत्वसिद्धिमाशङ्क्य यतः तदुपासाकृतात् ततः ब्रह्मानन्दादेरिव अन्यद्विलक्षणम् । अतोऽन्यद्भिन्नमिति सूत्रार्थं मत्वा व्याचष्टे ॥ **यथा खल्विति** ॥ अन्यथात्वं तारतम्यं अव्यक्तत्वं वा ब्रह्मानन्दादितद्विलक्षणमेवेति भगवदानन्दादेर्निरवधिकतया नित्यव्यक्ततया चाधिक्यादिति भावः । एतेनाधिक्यमित्युक्तन्यायोऽपि दर्शितः ।

ननु प्रतिषेधादिति सौत्रो हेतुः किं भेदे उत वैलक्षण्ये । नाद्यः । तथात्वे वैलक्षण्यस्यापि तत्र हेतुत्वेन प्रतिषेधाच्चेति चशब्देन भवितव्यम् । न द्वितीयः । ऐक्यनिषेधे भेदस्यैव प्राप्तत्वेन भेदसाधकवैलक्षण्यादिति भवतु वैलक्षण्यं भेदो मास्तु ऐक्यमेवास्तु बाधकाभावात् अप्रयोजको हेतुरिति शङ्कायां वैलक्षण्यमङ्गीकृत्यैक्याङ्गीकारोऽनुपपन्नः । यन्मनसा न मनुत इति निरवधिकत्वे त्वज्ञेयत्वं, येनाहुर्मनो मतमिति मनसस्तद्विकारस्योपासाकृतस्य तदभिमानिदेवानां चात्यल्पत्वेन ज्ञेयत्वमिति निर्दोषित्वदोषित्वरूपवैलक्षण्यमुक्त्वा तदेव ब्रह्मेति निर्दोषस्य ब्रह्मत्वमुक्त्वा य उपासतेत्यल्पतयोपासया विषयीकुर्वन्तीदमिति इदमिदं ब्रह्म न भवतीति निर्दोषदोषिरूपितया विलक्षणयोरैक्यानुपपत्तेरेव हि यन्मनसेति श्रुतिस्तस्य ब्रह्मत्वं प्रतिषेधति । विलक्षणयोरैक्योपपत्तौ वैलक्षण्येन हेतुना ऐक्यप्रतिषेधः श्रौतो न स्यादिति बाधकोपन्यासाय प्रतिषेधादित्यस्य प्रवृत्तत्वादिति भावेन अतो हि श्रुतिः प्रतिषेधति 'नेदं यदिदमुपासत' इति न्यायविवरणं मनसि निधायाह ॥ **निर्दोषदोषरूपिणोरिति** ॥ 'पश्यन्ति परमं ब्रह्म' इति भाष्यास्यायमर्थः । इतरजिति सूत्रात् प्रतिबिम्बं सञ्जातमस्येत्यर्थे प्रतिबिम्बशब्दादितरच् प्रत्यये कृते निष्पन्नः प्रतिबिम्बितशब्दः वासनामयरूप-

**(वाक्यार्थमुक्तावली)**

प्रतिबिम्बोपेतमिति वक्ति । तथा च यद्वस्तु प्रतिबिम्बितं प्रतिबिम्बोपेतं तत्परमं ब्रह्म चित्ते पश्यन्ति । चित्ते यत्प्रतिबिम्बितं पश्यन्ति तत्र प्रतितिष्ठति ब्रह्मैव प्रतिबिम्बे यद्यस्मादस्ति अतस्तेषां तत्फलप्रदमिति ।

## तत्त्वसुबोधिनी

**प्रकृतमिति** ॥ उपपत्तेश्चेति सूत्रे प्रतिबिम्बसामर्थ्यवैचित्र्यघटकसामर्थ्यवत्वेन प्रकृतमित्यर्थः । तथा चात्र यथा जीवानन्दादेः ततमद्ब्रह्मततोपासाकृतादपीति पूर्वाधिकरणभेदरूपसाध्यस्याधिक्या-दपसिद्धान्तन्यायस्य चातिदेशादनन्तरसङ्गतिरिति भावः । तदुपपत्तेः । ब्रह्मत्वोपपत्तेरित्यर्थः ॥ **अन्यथेति** ॥ **चित्ते** प्रतिबिम्बितस्य ब्रह्मत्वाभाव इत्यर्थः । ननु न स्थानवैय्यर्थ्यम् । मोक्षरूप-फलार्थत्वादित्यत आह ॥ **न हीति** ॥ उपासाकृताद्ब्रह्मणो वैलक्षण्ये किं कारणमत्राह ॥ **तेष्विति** ॥ यदित्युक्तस्य ब्रह्मणः कर्तृत्वे येन ब्रह्मणो मतं इत्यनेन ध्यानप्रसङ्गात् कर्तृपदाध्याहारेण वाक्यं योजयति ॥ **पुरुष इति** ॥ येन ब्रह्मणा मनः मतं ज्ञातम् । स्थितिमात्रेणेति । अनेन प्रतिबिम्ब इत्यनन्तरं तिष्ठतीति शेष इत्युक्तं भवति । तथा च चित्ते यत्प्रतिबिम्बितं नान्यतमब्रह्म पश्यन्तीति सामानाधिकरण्यं सादृश्यात् गौणमिति भावः । किं तदुपासनं भवतीति कर्तृप्रतीतेराह ॥ **प्रतिबिम्बोपासनमिति** ॥ **दृश्यन्त इति** ॥ परमं पदं ब्रह्मस्वरूपं ध्यानजन्यज्ञानेनैवापरोक्ष्येण दृश्यते न तु ध्यानकाले । अतो ध्यानकाले आपरोक्ष्येण चित्तप्रतिबिम्बितं न ब्रह्मेत्यर्थः ।

## वाक्यार्थविवरणम्

**वहुत्वेति** ॥ तथा चैकमेवेति श्रुतिविरोध इति भावः ॥ **तदुपपत्तेः** ॥ तद्बहुत्वोपपत्तेः । तथा च ध्यानकाले चित्ते प्रतीयते यद्वासनामयं रूपं ब्रह्मेत्याशयः ॥ अन्यथा ध्यानकाले चित्ते प्रतीतस्याब्रह्मत्वे ॥ **ध्यानेति** ॥ चित्ते प्रतीतस्य ध्यानेत्यर्थः ॥ **यत्किञ्चिदिति** ॥ ब्रह्मेतरस्य ध्याने क्रियमाणे सतीत्यर्थः ॥ **पुरुषप्रयत्नेन** ध्यानाख्येन ॥ **ब्रह्मानन्दादीति** ॥ तथा च भाष्ये ब्रह्मेत्येतद्ब्रह्मानन्दादीति व्याख्यातं भवति । भाष्ये प्रतिबिम्बे ब्रह्मैव तिष्ठतीति शेषः ॥ **तदितीति** ॥ तथा च यथा प्रतिमोपासनं तदन्तस्स्थभगवदुपासनं भवति तथा चित्तप्रतिबिम्बितस्योपासनमपि तत्रस्थभगवदुपासनं यतोऽतस्तद्ब्रह्म तेषां फलप्रदमित्यर्थः ॥ **ब्रह्मैवेति** ॥ चित्तप्रतिबिम्बितं सत् ध्यानकाले यदपरोक्षतः प्रतीयते तदेव ब्रह्मेति कुतो नाङ्गीक्रियते । किं तत्रस्थत्ववचनेनेत्यर्थः ॥

(वाक्यार्थविवरणम्)

**दृश्यत इतीति** ॥ यत् परं सर्वोत्तमं पदं पद्यत इति व्युत्पत्त्या सर्वप्राप्यं ब्रह्म तज्ज्ञानेन परोक्षज्ञानेनैव दृश्यते विषयीक्रियते । प्रतिमादिकं त्वापरोक्ष्येण दृश्यतेऽतो ध्यानकाले आपरोक्ष्येण चित्त-प्रतिबिम्बततया दृश्यमानस्य न ब्रह्मत्वमित्यर्थः ॥ **तर्हीति** ॥ यदि ज्ञानेनैव परोक्षतया ब्रह्म दृश्यते नैवापरोक्षतया ब्रह्म दृश्यते तर्हीत्यर्थः ॥ **किमिति** ॥ तथा च तदुपासनमित्युक्तमयुक्तमिति भावः ॥ **उपासनेतीति** ॥ यस्मादुपासना । **तत्प्रसादतः** तत्प्रसादं जनयित्वा तद्वारेति यावत् ॥ **आपरोक्ष्यम्** ब्रह्मण अपरोक्षज्ञानविषयत्वम् ॥ **गमयेत्** प्रापयेत् ॥ अतोऽपरोक्षज्ञानसाधनत्वादुपासनाऽ-पेक्षितेत्यर्थः । तस्याव्यक्तत्वादेवेत्यन्वयः ।

## वाक्यार्थमञ्जरी

**अन्यथेति** ॥ चित्तप्रतिबिम्बितस्य ब्रह्मप्रतिबिम्बत्वाभाव इत्यर्थः । **यत्किञ्चिद्ध्याने** अन्यध्याने ॥ ॐ **तथान्यत्प्रतिषेधात्** ॐ ॥ यथा ब्रह्मण आनन्दादिकं लोकानन्दादेर्विलक्षणं तथा ब्रह्माप्यन्यत् चित्तप्रतीताद्विलक्षणमेव कुतः ? यन्मनसेति चित्तप्रतीतस्य ब्रह्मत्वप्रतिषेधादित्यर्थः । यदित्युक्तस्य ब्रह्मणः कर्तृत्वे येन ब्रह्मणा मनो मतमित्यनेन व्याहतिरित्यत आह ॥ **पुरुष इति** ॥ तदुपासनं किं भवतीत्यत आह ॥ **प्रतिबिम्बोपासनमिति** ॥ **दृश्यत इतीति** ॥ परं पदं ब्रह्मस्वरूपम् । ध्यानजन्यज्ञानेनैवापरोक्षेण दृश्यते न तु ध्यानकालीनापरोक्ष्येण । अतश्चित्त-प्रतिबिम्बितं न ब्रह्मेत्यर्थः ।

॥ इति प्रतिषेधाधिकरणम् (तथान्यत्वाधिकरणम्. पा) ॥ १८ ॥

## १९. सर्वगतत्वाधिकरणम्

देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्तेत्यतो ब्रूते—

**॥ ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३८ ॥**

सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते । 'एष सर्व एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परमः' इति भाल्लवेयश्रुतिः ।

'सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु ।
स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ॥
अतो मायामयं विष्णुं प्रवदन्ति सनातनम्' इति

चतुर्वेदशिखायाम् । आदिशब्दादन्यत्र प्रमाणाभावाच्च ।

### तत्त्वप्रदीपिका

यद्यपि सृष्टिस्थितिसंहारादिकर्ता स स्वयमेव । तथाऽपि कदाचित्कचित्किञ्चित्स्वकार्यं प्रत्यन्यं नियोजयिष्यति । स्वावतारादिकौतुकादित्यत आह– **अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥** अनेनैव सर्वं प्रवर्तते । अनन्तेष्वपि स्वकार्येषु नित्यशक्तिमत्त्वात् । तद्विरुद्धधर्माभावाच्च ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्यैव जगत्कर्तृत्वादिसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा तत्र निरतिशयभक्त्ययोगात्समर्थनीयमेव । प्रकृतः परमेश्वरो विषयः । किं सर्वदेशकालीन-सृष्ट्यादिकर्ता न वेति सन्देहः । प्राचीनोक्तेरुभयथा सम्भवः सन्देहबीजम् । पूर्वपक्षयति ॥ देशेति ॥ सर्वसृष्ट्यादि न ब्रह्मण एव किं तु देशकालान्तरेऽन्यतोऽपि । राजादीनां तथा दर्शनात् । न च विष्णोरन्यस्य स्वातन्त्र्याभावेन ततः सृष्ट्यादिक्रियाऽयुक्तेति युक्तम् । भगवतैवान्येभ्यः स्वस्वातन्त्र्यदानेनोपपत्तेः । न चैतदसम्भावितम् । तस्यावतारेषु विविधासम्भावितलीलादर्शनात् । अतोऽन्येषामपि स्वातन्त्र्यान्न विष्णावेव निरतिशयभक्तिर्युक्तेति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ भगवतैव सर्वदेशकालीनं सृष्ट्यादि न तु देशकालान्तरे अन्यस्य कल्पनीयम् । तथा हि । किं विष्णोः सर्वकर्तृत्वादौ प्रमाणाभावादेतत्कल्प्यते

(तत्त्वप्रकाशिका)

**अन्यत्र प्रमाणसद्भावाद्वा । उत सम्भावनामात्रात् । नाद्यः । श्रुतिसद्भावात् । न द्वितीयः । तदभावात् । नान्त्यः अप्रामाणिककल्पनस्य क्वाप्यनुपयोगित्वात् । न चावतारेषु विविधलीलादर्शनादेतत्कल्प्यम् । 'स्वातन्त्र्यात्क्रीडते विष्णुर्न हि स्वातन्त्र्यमन्यगम् । करोति क्वापि' इत्यादेरत्यक्तस्वातन्त्र्यस्यैव क्रीडावगमादिति भावः । सर्वगतत्वं च ब्रह्मणः सर्वसृष्ट्याद्यर्थमेव । 'अनुप्रविश्य नामरूपे व्याकरोद्' इत्यादेः । मायामयशब्दो मायामयशब्दं व्याकुर्वती श्रुतिः सर्ववस्तुषु सर्वं सर्ववस्तुविषयं सृष्ट्यादीत्यर्थः । इति सङ्गृहीतमिति शेषः । अतो ब्रह्मणि सर्वजगज्जन्मादिकर्तरि भक्तिः कार्येति सिद्धम् ।**

## गुर्वर्थदीपिका

'स एव च कर्मानुस्मृतिशब्दविधिभ्यः' इत्यधिकरणे सर्वत्र सर्वदा सर्वजीवानां जाग्रदाद्यवस्थाप्रेरकत्वमात्रं भगवत एवेति निर्णीतम् । 'सन्ध्ये सृष्टिराह ही'त्यादिना तस्यैव प्रस्तुतत्वात् । 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' इत्यधिकरणे तु सर्वदेशकालेषु चेतनाचेतनात्मकसकलजगत्सृष्ट्यादिकर्ता भगवानेवेति समर्थ्यते । अतो न गतार्थता । तदुक्तमणुभाष्ये 'सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् । सर्वदेशेषु कालेषु स एकः परमेश्वरः' इति । 'एष सर्वगत' इति भाल्लवेयश्रुत्या सर्वगतत्वमेव साक्षादुच्यते न तु सर्वप्रवर्तकत्वम् । सर्वप्रवर्तकत्वं त्वस्यैव सर्वगतत्वस्यावैयर्थ्यायाऽऽनीयते । मायामयश्रुतिस्तु सर्वगतत्वमार्थिकमभिसन्धाय साक्षात्सर्वत्र सर्वदा प्रवर्तकत्वमेवाह । अतः प्रमेयवैचित्र्यात् श्रुतिद्वयमसूत्रयत्सूत्रकारः । विविधासम्भावितलीलेत्यनेन स्वयं दासीभूयोग्रसेनस्य राज्यदानादिकं गृह्यते ।

## भावबोधः

**प्रकृत इति** ॥ 'तथान्यत्' इति पूर्वसूत्र इत्यर्थः । तथा च नानाभावरूपपूर्वाधिकरणीयपूर्वपक्षन्यायेनैवात्रापि पूर्वपक्ष इत्यनन्तरसङ्गतिति भावः ॥ **किं सर्वेति** ॥ अत्र परमेश्वरः किं सर्वदेशकालीनसृष्ट्यादिकर्ता न भवति, किं तु देशकालान्तरेऽन्योऽपि कर्ता उत स्वयमेव सर्वदेशकालीनसृष्ट्यादिकर्तेति चिन्ता । तदर्थं कदाचित् स्वातन्त्र्यमन्यस्मै ददात्युत नेति । तदर्थं तस्य स्वातन्त्र्यदानं किं सम्भावितमुतासम्भावितमिति ॥ **प्राचीनोक्तेरिति** ॥ 'जन्माद्यस्य यतः' इत्युक्तेरित्यर्थः । युक्तिमिति भाष्याभिप्रायमाह– **राजादीनामिति** ॥ नानावतारकौतुकदर्शना-

(भावबोधः)

द्विष्णोः क्वचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादिकर्म कुर्वन्नन्यमेव सामस्त्येन नियोजयतीति न्यायविवरणं व्याख्यातुमाह– **न चेति** ॥ कुतो नेत्यतः क्वचिद्देशकालान्तर इत्यादिन्यायविवरणांशं व्याख्याति– **भगवतैवेति** ॥ नानावतारकौतुकदर्शनाद्विष्णोरिति न्यायविवरणं तन्निवर्तनीयाशङ्का-प्रदर्शनपूर्वकं व्याचष्टे– **न चैतदसम्भावितमित्यादिना** ॥ **किं विष्णोरिति** ॥ अत्राद्यपक्षद्वयं भाष्यानुरोधेन । तृतीयस्तु न्यायविवरणानुरोधेनेति ज्ञातव्यम् ॥ **श्रुतिसद्भावादिति** ॥ 'एष सर्वः' इति 'सर्वत्र' इति च भाष्योदाहृतश्रुतिसद्भावादिति भावः । अनेन 'सर्वत्र सर्वमेतस्मात्' इति श्रुत्या क्रीडायामपि स्वातन्त्र्यावगमादिति न्यायविवरणमप्युक्तार्थं भवति ॥ **तदभावादिति** ॥ अनेनादिशब्दादन्यत्र प्रमाणाभावाच्चेति भाष्यमुक्तार्थं भवति । स्वातन्त्र्यात् क्रीडत इत्यादिन्याय-विवरणोदाहृतश्रुतिं संयोजयितुमाह– **न चावतारेष्विति** ॥ क्रीडावगमादित्यनेन न्यायविवरणे श्रुतेश्चेत्यनन्तरमत्यक्तस्वातन्त्र्यस्यैव क्रीडावगमादिति शेष इत्युक्तं भवति ।

ननु 'एष सर्वः' इति सर्वगतत्वप्रतिपादकश्रुत्या कथं विष्णोः सर्वदेशकालीनसृष्ट्यादि-सर्वकर्तृत्वसिद्धिरित्यत आह– **सर्वगतत्वं चेति** ॥ सर्ववस्तुविषयं सृष्ट्यादीत्यर्थ इति । अनेन सर्ववस्तुष्विति विषयसप्तमी सर्वशब्दश्च सृष्ट्याद्यष्टकपर इत्युक्तं भवति । इति सङ्गृहीतमिति शेष इति । प्रमाणाभावाच्चेत्यनन्तरमित्यर्थः ।

## भावदीपः

**तस्यैवेति** ॥ अन्यस्य स्वातन्त्र्यदाननिरासेनेति भावः । तेन तदनन्यत्वं तेजोऽतः स एव च कर्मानुस्मृतीत्यादिनयैर्न पौनरुक्त्यमिति ध्येयम् । एतेन पूर्वत्र ब्रह्मैव फलप्रदमित्युक्तम् । तर्हि स्वस्वातंत्र्यदात्रपि स्यादिति वा यथा ध्यानकृतादन्यद्ब्रह्म तथा देशकालान्तरकर्तृतोऽप्यन्यदिति वा शङ्कनात्सङ्गतिः सूचिता ॥ **प्राचीनोक्तेरिति** ॥ जन्माद्यस्य यत इत्युक्तेरित्यर्थः ॥ **उभयथेति** ॥ वक्ष्यमाणदिशेति भावः । तेनैकस्मादेव सृष्ट्यादीति जन्मादिसूत्रादावनेकन्यायनिर्णीतस्य कथमुभयथा सम्भव इति शङ्काऽपास्ता । फलोक्तिपरत्वभ्रान्तिं निराह ॥ **पूर्वपक्षयतीति** ॥ अन्यतोऽपीत्यपि पदव्यावर्त्यमाह ॥ **न ब्रह्मण एवेति** ॥ युक्तमित्युक्तेर्भावमाह ॥ **राजेति** ॥ नानावतारकौतुकदर्शनाद्विष्णोः क्वचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादिकर्म कुर्वन्नन्यमेव सामस्त्येन नियोजयतीत्यन्यत्रोक्तिं शङ्कापूर्वं सङ्गमयति ॥ **न च विष्णोरित्यादिना** ॥ एतेन

**(भावदीपः)**

तदनन्यत्वमित्यादिनयेषु विष्णोरेव सर्वस्वातन्त्र्यसिद्धेः कथमेषा शङ्केति प्रत्युक्तम् ॥ **अवतारेष्विति** ॥ कृष्णाद्यवतारेषु पार्थसारथ्यविप्रपादावनेजनविश्वामित्राद्यनु यायित्वस्त्रीविरहक्लेशदुःखादिप्रदर्शनरूपविविधलीलादर्शनादित्यर्थः ॥ **अत इति** ॥ अन्येषु स्वातन्त्र्यदानस्योपपन्नत्वादित्यर्थः ।

सर्वेत्यादिभाष्यं व्याचष्टे ॥ **भगवतैवेति** ॥ पूर्वत्रान्यदिति विशेष्यतया प्रकृतं ब्रह्मानेन परामृश्यत इति भावः । एवकारव्यावर्त्यं व्यनक्ति ॥ **न त्विति** ॥ न कल्प्यमित्येतद्विवरणपरतया सूत्रभाष्ये व्यनक्ति ॥ **तथा हीत्यादिना** ॥ पूर्वोक्तशङ्कामनूद्य तन्निवर्तकतया सर्वत्र सर्वमेतस्मादित्यादिश्रुत्या क्रीडायामपि स्वातन्त्र्यात्क्रीडत इत्यादिन्यायविवरणं संयोजयति ॥ **न चेत्यादिना** ॥ सर्वगतत्वश्रुत्युक्तेरुपयोगमाह ॥ **सर्वगतत्वं चेति** ॥ **अनुप्रविश्येति** ॥ ता इमास्तिस्रो देवता इति पूर्वप्रकृतदेवताशब्दिततेजोबन्नान्यनुप्रविश्येत्यर्थः । नामरूपे शब्दार्थप्रपञ्चौ । सर्वत्रेत्यादिश्रुत्युक्तेः सूत्राविसंवादायाह ॥ **मायामयशब्द इति** ॥ यद्वा सौत्रमायामयशब्दार्थमाह ॥ **मायामयशब्दं व्याकुर्वती श्रुतिरिति** ॥ सर्ववस्तुष्विति विषयसप्तमी । सर्वशब्दस्तु सृष्ट्याद्यष्टकपर इत्यभिप्रेत्याह ॥ **सर्ववस्तुषु सर्वमिति** ॥ प्रमेयभेदान्न पौनरुक्त्यम् ॥ **अत इति** ॥ विष्णोरेव सर्वदेशकालवस्तुविषयसृष्ट्यादिकर्तृत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**जगत्कर्तृत्वादिसमर्थनादिति** ॥ 'स इदं सर्वमसृजत' इत्यादीनाम्, इदं शब्दश्रवणेन वर्तमानकालीनजगत्कारणतापरत्वस्यैवोचितत्वात्, कालान्तरे पुनरस्यैव जगत्कारणत्वे प्रमाणाभावेन न कालान्तरीयजगत्कारणत्वमस्येत्यभ्यधिकाशङ्कानिरासेनेति शेषः ॥ **प्राचीनोक्तेरिति** ॥ 'यतो वा इमानि भूतानि जायन्त' इत्याद्युक्तेर्वर्तमानैतद्देशीयजगत्कारणतापरत्वेनेव सर्वदेशीय सर्वकालिकजगत्कारणतापरत्वेनापि सम्भवः सन्देहबीजमित्यर्थः । न सर्वदा ब्रह्मण एव जगत्कारणत्वम् अपि तु कल्पान्तरेषु अन्येषाम् । तथा हि कालान्तरे विष्णोर्जगत्कारणत्वे प्रमाणाभावात् । 'यतो वा इमानि भूतानि' इत्यादेश्च इमानीति विशेषणबलेन वर्तमानैतद्देशीय जगत्कारणतावादित्वात् । अन्यथा 'यतो वा भूतानि जायन्त' इत्येतावता पूर्णत्वात् इमानीति विशेषणं व्यर्थं स्यात् । किं च अस्ति तावत्सोमादीनामपि जगत्कारणत्वे 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता

(अभिनवचन्द्रिका)

पृथिव्या जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोऽथ विष्णोः' इत्यादिवाक्यम् । अस्ति च विष्णोर्जगत्कारणत्वे 'यतो वा इमानि भूतानि' इत्यादि वाक्यम् । न च अन्यतरबाधो युक्त इति व्रीहियवन्यायेन सर्वेषां कल्पभेदेन कारणत्वं युक्तम् । अपि च कालभेदेन राजानो विभिन्ना एव दृश्यन्ते । ततश्च कल्पभेदेन कर्तृभेद एव युक्त इति गूढाभिसन्धिः । पूर्वपक्षयति **न सर्वसृष्ट्यादीति** ॥

ननु इदानीमीश्वरस्य सर्वकारणत्वमभ्युपगच्छता ईश्वरस्वातन्त्र्यम्, अन्येषां तदधीनत्वमित्यभ्युपगन्तव्यम् । अन्यथा तन्नियमनाद्ययोगप्रसङ्गात् । न च अस्वतन्त्रस्वभावस्य कालान्तरे स्वातन्त्र्यमुपपद्यते । न च स्वातन्त्र्याभावे जगत्काणत्वमुपपद्यत इत्याशङ्क्य निषेधति **न च विष्णोरिति ॥ अवतारेष्विति ॥** कृष्णाद्यवतारेषु उग्रसेनादीनां राज्यं दत्वा स्वस्य तदाज्ञाधारित्वादिलीलादर्शनादित्यर्थः । नन्वीश्वरदत्तस्वातन्त्र्येणाऽन्येषां जगत्कारणत्वं नाऽनिष्टम् । ईश्वरजगत्कारणत्वाऽनपायादिति चेत्, न ब्रूमो वयमीश्वरः स्वस्वातन्त्र्यमवशिष्य परस्मै ददातीति, येनोक्तदोषः स्यात्, किं नाम अपहायैव स्वस्वातन्त्र्यं परस्मै ददातीति । दृश्यन्ते हि कृपालवो दधीच्याद्याः परार्थे स्वात्मानमपि त्यजन्तः । न चाऽस्मिन्पक्षे विष्णोरपि जगत्कारणत्वं सम्भवति त्यक्तस्वातन्त्र्यत्वात् । पूर्वपक्षिणो गूढाभिसन्धित्वाद्विकल्पेन पृच्छति **किं विष्णोरिति ॥ तदभावादिति ॥** 'सोमः पवत' इत्यादीनां विष्णुपरत्वादिति भावः । ननु न सम्भावनामात्रादेतत्कल्प्यते । किं नाम रामकृष्णाद्यवतारेषु स्वस्वातन्त्र्यदानस्य प्रमाणदृष्टत्वेन तद्दानस्य तत्स्वभावत्वात् यो यत्स्व भावस्स तत्करोत्येवेति नियमबलेनैव तत्कल्प्यत इत्यत आह– **न चेति** ॥ सूत्रे सर्वगतत्वोपन्यासो व्यर्थ इत्यत आह– **सर्वगतत्वमिति** ।

पूर्वपक्षस्तु अभिसन्धिवर्णनव्याजेन प्रागेव दर्शितः ।

सिद्धान्तस्तु भगवतैव सर्वदशेकालीनं सृष्ट्यादि, 'अनुप्रविश्यनामरूपे व्याकरोत्' इति श्रुति सिद्धसृष्ट्युपयोगिसर्वगतत्वस्य, 'एष सर्व एष सर्वगत' इति भाल्लवेयश्रुतौ विष्णोरभिधानात् । मायामयशब्दव्याख्यानरूप 'सर्वत्र सर्वमेतस्मात्' इति चतुर्वेदशिखोक्तेश्च । कालान्तरेऽन्यस्य जगत्कारणत्वे प्रमाणाभावाच्च । प्रमाणाभावे सम्भावनामात्रस्याऽप्रयोजकत्वात् । अतः सर्वजगज्जन्मादिकर्तरि ब्रह्मणि भक्तिः कार्येति सिद्धम् ।

## वाक्यार्थमुक्तावली

**तस्यैव तत्कर्तृत्व इति ।** अन्यथा पूर्वाधिकरणसिद्धान्तन्यायस्याधिक्यस्यानुपपत्तेरिति तदाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । नानाभाव इत्युक्तपूर्वपक्षन्यायेनैवात्रापि पूर्वपक्ष इति वक्ति ॥ **किं सर्वेति** ॥ अत्र किं परमेश्वरः सर्वदेशकालीनसृष्ट्यादिकर्ता न भवत्युत भवतीति चिन्ता । तदर्थं कदाचित्स्वातन्त्र्यमन्यस्मै सम्भावितमुत नेति । युक्तेति भाष्याभिप्रायमाह ॥ **राजादीनामिति** ॥ एतेन सृष्ट्यादिकं देशकालान्तरेऽन्यायत्तं कार्यत्वाद्राज्यपालनादिकार्यवदित्यनुमानमुक्तं भवति । नान्यो देशकालान्तरे सृष्ट्यादिकर्ता अस्वतन्त्रत्वादिति सत्प्रतिपक्षमाशङ्क्य सत्प्रतिपक्षस्यासिद्धिमाह ॥ **न चेति** ॥ एतेन देशकालान्तरे सृष्ट्यादिरन्यतो न युक्तिविरुद्धा, किन्त्वन्यस्य स्वातन्त्र्यदानेन प्रतिपक्षहेतोरसिद्ध्या युक्तैवेति व्याख्यातं भवति । कुतो नासम्भावितमित्यतो नानाभाव इति न्यायसिद्धत्वादिति भावेन प्रवृत्तं भाष्यमेव व्याचष्टे ॥ **तस्येति** ॥ सारथ्यपार्षदसुसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामादीश्वरासम्भाविताना नाविधलीलादर्शनादित्यर्थः । ननु 'स एव च कर्मानुस्मृतिशब्दविधिभ्य' इत्यधिकरणन्यायेनैतदधिकरणं गतार्थमिति चेन्न । तत्रैष ह्येव साधु कर्म कारयतीति श्रुतेर्वर्तमानविषयत्वसम्भवात् । प्रदर्शकश्च सर्वेषामिति श्रुतावपि वर्तमानकाल इत्यर्थोपपत्तेः । एष स्वप्नान्दर्शयतीति श्रुतावपि लट् प्रयोगो न सर्वकालविषयत्वाभावेन सावकाशत्वादतदारम्भसम्भवात् । ननु तर्ह्येतदेवाधिकरणमलं तद्व्यर्थमिति चेन्न स्वप्नाद्यवस्थाविषये विशेषप्रमाणोदाहरणाय तत्सार्थक्यादिति ज्ञेयः ।

सूत्रेऽनेनेति सावधारणम् । सृष्ट्यादिकमिति शेषः । शब्देत्येतदन्तं स्वपक्षे प्रमाणोक्तिपरम् । आदिशब्दस्तु परपक्षे प्रमाणाभावोक्त्यर्थः । सम्भावनामात्रस्यानुपयोगित्वं तन्मूलभूत-प्रमाणाभावादिति । मूलप्रमाणोक्त्यभावश्चेत्यभिप्रेत्य विकल्प्य दूषयति ॥ **तथा हीत्यादिना** ॥ भाष्येऽपि प्रमाणाभावश्चेत्यस्यान्यत्र प्रमाणाभावात् सम्भावनामूलप्रमाणाभावाच्चेत्यर्थः । अतः तृतीयो भाष्यारूढ इत्याह ॥ **नान्त्य इति** ॥ सम्भावकं प्रमाणं शङ्कते ॥ **न चेति** ॥ सम्भावकस्यान्यथासिद्धिं भाष्ये चशब्दसूचितं सौत्रस्वातन्त्र्यमित्युक्तन्यायापादनपूर्वमाह ॥ **न चावतारेष्विति** ॥ शेष इति प्रमाणाभावाच्चेत्यतः परमिति भावः ।

## तत्त्वसुबोधिनी

**प्रकृत इति** ॥ तथान्यदिति पूर्वसूत्रे इत्यर्थः । तथा च नानारूपेण भवनरूपपूर्वपक्ष-न्यायेनैवात्रापि पूर्वपक्षादनन्तरसङ्गतिरिति भावः ॥ **प्राचीनोक्तेरिति** ॥ जन्माद्यस्य यत इत्युक्ते-रित्यर्थः । युक्तमिति भाष्याभिप्रायमाह ॥ **राजादीनामिति** ॥ यथास्मिन् देशेऽस्मिन्काले एकः राजा देशान्तरे कालान्तरे अन्य एव तद्वत् प्रकृतेऽपीत्यर्थः । ननु विष्णोः स्वस्वातन्त्र्यदानम-सम्भावितमित्याह ॥ **न चेति** ॥ **श्रुतिसद्भावादिति** ॥ एषः सर्व इति सर्वत्रेति च भाष्यो-दाहृतश्रुतिसद्भावादिति भावः ॥ **तदभावादिति** ॥ अन्यत आह । सर्वस्य कर्तृत्वे प्रमाणा-भावादित्यर्थः । ननु एष सर्व इति सर्वगतत्वप्रतिपादकश्रुत्या कथं विष्णोः सर्वदेशकालीन-सृष्ट्यादिकर्तृत्वसिद्धिरित्यत आह ॥ **सर्वगतत्वं चेति** ॥ तत्र प्रमाणमाह ॥ **अनुप्रविश्येति** ॥ सर्ववस्तुविषयसृष्ट्यादीत्यर्थः । अनेन सर्ववस्तुष्विति विषयसप्तमी सर्वशब्दश्च सृष्ट्याद्यष्टकपर इत्युक्तं भवति ॥ **इति सङ्गृहीतमिति** ॥ प्रमाणाभावाच्चेत्यनन्तरमित्यर्थः ।

## वाक्यार्थविवरणम्

**प्राचीनोक्तेरिति** ॥ 'जन्माद्यस्य यत' इत्युक्तेरित्यर्थः । ब्रह्मणः सकाशात् ॥ **तथा दर्शनादिति** ॥ सर्वदेशकालीनाधिपत्याभावस्य दर्शनादित्यर्थः ॥ **असम्भावितलीलेति** ॥ कृष्णावतारे उग्रसेनाय राज्याधिपत्यं दत्वाऽभृत्यस्य स्वस्य सेवकत्वदर्शनादित्यर्थः । असम्भावितैतल्लीलावत्सृष्ट्यादि-कर्मण्यन्येभ्योऽपि स्वकीयस्वातन्त्र्यप्रदानरूपासम्भावितलीलाऽपि सम्भावितेत्याशयः ॥ **अन्यस्य** ॥ सकाशात् । भाष्ये सर्वस्मिन् देशे काले च सर्ववस्तुविषयकं सृष्ट्यादिकमनेनैव प्रवर्तत इत्यर्थः । प्रमाणे सर्वत्रेत्यस्य देश इत्यर्थः ॥ **सृष्ट्यादीति** ॥ हरिः करोतीति शेषः ।

## वाक्यार्थमञ्जरी

प्राचीनोक्तेः जन्माद्यस्य यत इत्यस्याः ॥ ॐ **अनेन सर्वगतत्वमायामयशब्दादिभ्यः** ॐ ॥ अनेनैव ब्रह्मणैव सर्वं सृष्ट्यादि । कुतः ? सर्वगतत्वात् । एष सर्वगत इति सर्वगतत्वश्रवणात् मायामयशब्दात् मायामयत्वव्याख्यायकश्रुतेः । अन्यकर्तृत्वे प्रमाणाभावाच्चेत्यर्थः । एत-त्स्वातन्त्र्यादानं सर्वगतोक्त्या कथं तस्य सर्वकर्तृत्वं प्राप्तमिति तत्राह ॥ **सर्वगतत्वं चेति** ॥ **सर्ववस्तुविषयमिति** ॥ सप्तमी विषयार्था । सर्वमित्येतत्सृष्ट्याद्यष्टकपरमिति भावः ॥ **इति सङ्गृहीतमिति शेष इति** ॥ प्रमाणाभावाच्चेत्यनन्तरमित्यर्थः ।

॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥

## २०. फलोपपत्त्यधिकरणम्

कर्माऽपेक्षत्वात्फलदानस्य तदेव ददातीति न वाच्यम् । कुतः?—

**॥ ॐ फलमत उपपत्तेः ॐ ॥ ३९ ॥**

अत एवेश्वरात्फलं भवति । न ह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ।

### तत्त्वप्रदीपिका

वैषम्यादिपरिहारार्थमीश्वरस्य फलदाने कर्मसापेक्षत्वमुक्तम् । अतस्तत्र कर्मणः प्राधान्यम् । तत्र कथमनेनैव सर्वं प्रवर्तत इत्यत आह– **फलमत उपपत्तेः ॥** अत एव 'सर्वत्र सर्वमेतस्मात्' इत्युक्तेरेव । तस्मादेवेश्वरात्फलं भवति तस्यैव सर्वेशितृत्वात् । चेतनस्याप्यन्यस्य स्वतः प्रवृत्तिर्नास्तीत्युक्तं किं पुनरचेतनस्येत्यर्थः ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य कर्मफलदातृत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । तदभावे निरतिशयैश्वर्यायोगेन तत्र निरतिशयभक्त्यनुदयात्तत्समर्थनीयम् । प्रकृतो हरिरेव विषयः । किं कर्मफलदाता न वेति सन्देहः । विप्रतिपत्तिः सन्देहबीजम् । पूर्वपक्षयति **॥ कर्मेति ॥** कर्मैव फलदातृ नेश्वरः । यैः फलदातृत्वमीश्वरस्योच्यते तैरपि तस्य कर्मापेक्षया फलदातृत्वस्यावश्यमङ्गीकार्यत्वात् । अन्यथा कर्मवैयर्थ्यापातात् । ततश्च वेदाप्रामाण्यप्रसङ्गाद्वैषम्यादिदोषानुषङ्गादकृतकर्मणः फलादर्शनाच्च । एवं च सति फलस्य कर्मान्वयव्यतिरेकित्वात्तदेव फलप्रदं नेश्वरः । अतो न तद्भक्तिः कार्येति भावः ।

सिद्धान्तयन्नेतत्प्रतिषेधति **॥ इति न वाच्यमिति ॥** हेतुं पृच्छति **॥ कुत इति ॥** तदुत्तरत्वेन सूत्रमुपन्यस्य व्याचष्टे **॥ फलमिति ॥** ईश्वर एव फलदाता न कर्म । तस्य चेतनत्वेन फलदानोपपत्तेः । इतरस्याचेतनत्वेनानुपपत्तेः । यत एवमतो न वाच्यमिति भावः ।

### भावबोधः

प्रकृतो हरिरेवेति । 'अनेन' इति पूर्वसूत्रे सर्वदेशकालीनसृष्ट्यादिकर्तृतया प्रकृत इत्यर्थः । तथा च फलदातृत्वाभावे पूर्वोक्तसकलसृष्ट्याद्यष्टककर्तृत्वासम्भव इति पूर्वाक्षेपेण प्रवृत्तेरनन्तर-

(भावबोधः)

सङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र कर्मैव फलदातृ उत हरिरेवेति चिन्ता । तदर्थं कर्मब्रह्मणोः फलदातृत्वे वा उपपत्त्यनुपपत्ती स्त उत ब्रह्मकर्मणोः फलदातृत्व इति । तदर्थम् 'रातिर्दातुः' इति विशेषश्रुतिः ब्रह्मणः फलदातृत्वसाधिका न भवत्युत भवतीति । तदर्थं फलस्य कर्मान्वय-व्यतिरेकानुविधायित्वं ब्रह्मणः फलदातृत्वविरोध्युत नेति । तदर्थं ब्रह्मकर्मणोः कर्तृकरणभावे हेतुर्नास्त्युतास्तीति ॥ **तदेवेति** ॥ भाष्यगतैवकारव्यावर्त्यमाह– **नेश्वर इति** ॥ अनेनेश्वरः फलदातेति प्रलोभमात्रमिति न्यायविवरणांशोऽपि व्याख्यातो भवति । फलस्य कर्मान्वयानु-विधायित्वप्रतिपादनपरतया कर्मापेक्षत्वात् फलदानस्येति भाष्यं व्याचष्टे– **यैरिति** ॥ अपेक्षापदोक्तमावश्यकत्वं विपक्षबाधकमुखेनोपपादयति– **अन्येथेति** ॥

'वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम्' ॥ इत्युक्तेरिति भावः ।

व्यतिरेकानुविधायित्वमाह– **अकृतकर्मण इति** ॥ फलितमाह– **एवं चेति** ॥ अनेन कर्मान्वयव्यतिरेकात् फलस्येति न्यायविवरणं व्याख्यातं भवति । भाष्ये सौत्र 'अतः' शब्दं सावधारणं व्याख्याय 'फलमतः' इत्यत्रोपपत्तेरिति हेतोः स्फुटप्रतिभासादवधारणव्यावर्त्य एव न हीत्यनेन हेतुरुक्तः । स्वयं त्वीश्वर एवेत्यादिना प्रतिज्ञाभागं व्याख्यायोपपत्तेः सौत्रहेतुव्याख्यान-पूर्वकं न हीत्यादिभाष्यं व्याचष्टे– **तस्य चेतनत्वेनेत्यादिना** । उपलक्षणमेतत् । तस्यैव स्वातन्त्र्यादिति न्यायविवरणानुसारेण स्वातन्त्र्यात् फलदानोपपत्तेरित्यपि ग्राह्यम् ।

## भावदीपः

**तस्य कर्मफलदातृत्वेति** ॥ कर्मणस्तत्कर्तृत्वनिरासेनेति भावः । तेन पूर्वत्र भगवतैव सर्वसृष्ट्यादीत्युक्तमयुक्तम् । कर्मफलसृष्ट्यादेः कर्माधीनत्वादिति शङ्कासमाधानात् पूर्वसङ्गति-स्सूचिता ॥ **विप्रतिपत्तिरिति** ॥ कर्मतः फलमिति निरीश्वरप्रभृतयः ब्रह्मतः फलमिति तत्वविदो वदन्तीति वादिविप्रतिपत्तिरित्यर्थः । बादरायणजैमिन्योर्वा विप्रतिपत्तिरित्यर्थः । तथात्वे आपातत इति ध्येयम् । वस्तुत एकार्थत्वेन विप्रतिपत्त्यभावात् । तदेव ददातीत्यंशं व्याचष्टे ॥ **कर्मैवेति** ॥ ईश्वरः फलदातेति प्रलोभमात्रमित्यन्यत्रोक्त्यनुरोधेनैवकारव्यावर्त्यमाह ॥ **नेश्वर इति** ॥ कर्मेत्यादि-पूर्वांशं व्याचष्टे ॥ **यैरिति** ॥ कर्मापेक्षत्वमेव विपक्षेऽनेकबाधकोक्त्या द्रढयति ॥ **अन्यथेति** ॥ कर्माभावेऽपि फलदान इत्यर्थः । प्राणिभिः क्रियमाणं कर्म व्यर्थमापद्येतेत्यर्थः । अस्त्वित्यत आह

(भावदीपः)

॥ **ततश्चेति** ॥ कर्मणो वैयर्थ्यतश्च स्वर्गादिफलोद्देशेन तद्विधायकवेदस्याप्रामाण्यप्रसङ्गादित्यर्थः । न च तदिष्टम् । अपौरुषेयतया प्राप्तप्रमाणभावस्य तदयोगात् ॥ **वैषम्येति** ॥ अन्यथेत्यनुकर्षः । वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यत्र कर्मसापेक्षत्वेनैव वैषम्यादिदोषपरिहारादिति भावः । दोषपद-प्रयोगेन वेदाप्रामाण्यानापादकस्य वैषम्यादेरदोषत्वस्योपपद्यते चाप्युपलभ्यते चेति सूत्रेणा-भ्युपेतत्वेऽपि तदापादकं वैषम्यादि तु दोष एवेति सूचयति । अत एवाप्रामाण्यापादनानन्तरं तदुक्तिः । कर्मापेक्षत्वादिति भाष्यं कर्मान्वयव्यतिरेकादिति न्यायविवरणं च हेतुहेतुमद्भावापन्नमिति भावेनान्यत्रोक्तं हेतुमपि संयोज्य भाष्यमुपसंहरति ॥ **एवं च सतीति** ॥ फलदानवेलायां सर्वदेश्वरस्य कर्मसापेक्षत्वे सतीत्यर्थः ॥ **तदेवेति** ॥ ईश्वरस्तु कर्मशेषत्वात्पुमर्थदातेत्युच्यत इति भावः । अतः फलदातृत्वाभावादित्यर्थः ॥ भाष्यं व्याचष्टे ॥ **ईश्वर एवेति** ॥ न हीत्यंशस्य न कर्मेत्यर्थमात्रोपपादकत्वेनेश्वरात्फलमित्यर्थोपपादकत्वाय मध्ये सौत्रहेतुमाह ॥ **तस्येति** ॥ उपपत्तेरित्युक्तिलब्धार्थमाह ॥ **इतरस्येति** ॥ यद्यप्युपपत्तेरित्यस्य तस्यैव स्वातन्त्र्यादित्यन्यत्रोक्त-दिशा ईश्वरस्यैव स्वातन्त्र्यादन्यस्यास्वातन्त्र्यादित्युपपत्तेरित्येवोपपत्तिपदं व्याख्यातुं शक्यम् । तथापि श्रुतत्वाच्चेत्युत्तरसूत्रस्वारस्याय तद्व्यावर्त्य शङ्कोत्थापनाय जीवसाधारणचेतनत्वरूपोपपत्ति-परत्वेन व्याचख्यौ ।

## अभिनवचन्द्रिका

भाष्ये 'कर्मापेक्षत्वात्फलदानस्य' इति सापेक्षफलदातृत्वं हेतूकृत्य तदेव फलं ददाती-तीश्वरस्य फलदातृत्वाभावसाधनमयुक्तं व्याहतत्वादित्यत आह– **यैरिति** ॥ लाघवात्कर्मण एव फलदातृत्वं न तु कर्मसापेक्षस्येश्वरस्य गौरवादिति भावः । एतेन व्याहतिः परास्ता । पूर्वपक्षिणा लाघवप्रदर्शनाय परोक्तसापेक्षफलदातृत्वानुवादमात्रस्य कृतत्वात् । ननु न मया कर्मसापेक्षस्येश्वरस्य फलदातृत्व-मुच्यते येन लाघवात्कर्मण एव फलदातृत्वं स्यात् । ईश्वर एव सुखदुःखदिकं ददाति । तच्च न कर्मफलमित्यत आह– **अन्यथेति** ॥ **नेश्वर इति** ॥ अन्यथासिद्धत्वादिति भावः । **इतरस्या-चेतनत्वेनेति** ॥ अवश्यक्लृप्तनियतपूर्ववर्तिनैव कार्यसम्भवे हि ईश्वरस्याऽन्यथासिद्धत्वं स्यात् । तदेव नास्तीति भावः । **यत एवमिति** ॥ यतः कर्मणैव फलसम्भवो नास्ति अतोऽन्यथा-सिद्धत्वरूपहेतोरसिद्धत्वादीश्वरो न फलदातेति न वाच्यमित्यर्थः । 'तिष्टमानस्य तद्विद' इति वाक्यशेषगत 'तिष्टमानस्य' इति पदमनूद्य व्याचष्टे **तिष्टमानस्येति** ॥ **द्विधा व्याख्यातमिति** ॥

(अभिनवचन्द्रिका)

**अतः** ईश्वराद्धर्ममेवेति, अतः='एष ह्येव' इति श्रुतेरेवेति, द्विधा व्याख्यातमित्यर्थः । ननु फलकारणं कर्म ईश्वराद्भवतीति वदता जैमिनिना ईश्वरस्य फलकारणत्वाभाव उक्तः । भगवता बादरायणेन तु ईश्वरस्यैव फलदातृत्वमुक्तम् । ततश्च विरोध इत्यत आह– **सामान्यत इति ॥** कर्मणः सामान्यतः दण्डादिसाधारण्येन कर्तृप्रयोज्यतया कारणत्वं जैमिनेरभिप्रेतम् । नन्वीश्वरस्या-कारणत्वं कर्तृप्रयोज्यताज्ञापनायेव 'यतः कर्मणः सकाशात् फलं भवति, तत्कर्म ईश्वराद्भवति' इत्यभिहितम् । नन्वीश्वरस्य फलहेतुत्वाभावाभिप्रायेण श्रुतिविरुद्धस्य मुनिमतत्वायोगात् एतत्सर्वं बादरायणेनाभ्युपगतमेवेति न विरोध इति भावः ।

पूर्वपक्षस्तु ईश्वरो न फलदाता अवश्यकॢप्तनियतपूर्ववर्तिना कर्मणैव फलसम्भवेनाऽन्यथा-सिद्धत्वात् । ततश्च न तद्भक्तिः कार्येति ।

सिद्धान्तस्तु अचेतनत्वात्कर्मणैव फलसम्भवाभावेन अन्यथासिद्धत्वहेतोरसिद्धत्वेन बाधका-भावात् । 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' इति फलदातृत्वस्य श्रुतत्वाच्च, ईश्वर एव फलदाता । ननु नैतच्छ्रुतिबलेनेश्वरस्य फलदातृत्वमभ्युपगन्तुं शक्यम् । फलकारणस्य कर्मण ईश्वरजन्यत्वेन श्रुतावीश्वरस्य फलदातृत्वस्योपचारेणैवोक्तत्वात् । किं च एवमाप्ततमो जैमिनिर्मन्यत इति चेत्, स्यादेतच्छ्रुतेरौपचारिकत्वकल्पनम्, यदीश्वरं विना केवलेन कर्मणा फलं भवेत् । न च तत्सम्भवति अचेतनस्य स्वतःप्रवृत्त्ययोगात् । एवं च श्रुत्यन्वयव्यतिरेकबलादुभयोरपि कारणत्वे सिद्धे कर्मैवेश्वरप्रयोज्यमित्यभ्युपगन्तव्यम् । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इति हेतुव्यपदेशात् जैमिनेरपि कर्मादेरीश्वराधीनकारणत्वमभिमतमिति न तन्मतमप्रमाणम् । अतः परमेश्वरस्यैव कर्मफलदातृत्वात् निरतिशयमहिम्नि तस्मिन् भक्तिः कर्तव्येति सिद्धम् ।

**॥ इति श्रीसत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥**

## वाक्यार्थमुक्तावली

ननु यदुक्तं सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुष्विति सर्ववस्तुविषयस्य सृष्ट्यादेः सर्वस्य भगवदायत्तत्वमिति । तदयुक्तम् । फलादानेऽस्य तदभावादित्याक्षिप्य पूर्वसिद्धान्तन्यायेनैव समाधानादाक्षेपिक्यातिदेशिक्यनन्तरसङ्गतिः ॥ **किमिति** ॥ अनेनेश्वरः कर्मफलदाता न भवत्युत

(वाक्यार्थमुक्तावली)

भवतीति चिन्ता । तदर्थं फलस्येशायत्तत्वप्रतिपादकश्रुतिः फलस्य कर्मान्वयव्यतिरेकित्वदर्शनात् फलकारणकर्मकारयितृत्वेनोपचरिता उत बाधिता । उपपत्तिबलादन्वयव्यतिरेकयोः करणत्वमात्रविषयत्वेनान्यथासिद्धत्वात् ॥ **मुख्येति** ॥ भाष्ये कर्मापेक्षत्वात्फलदानस्येति सापेक्षफलदातृत्वं हेतूकृत्य तदेव फलं ददातीतीश्वरस्य फलदातृत्वाभावसमर्थनमयुक्तं व्याहतत्वादनुवादोऽयमित्याह ॥ **यैरिति** ॥ अवर्जनीयसन्निधितया कर्म मयाङ्गीक्रियते । अतोऽन्वयोऽन्यथासिद्ध इत्यत उक्तमवश्यमिति । आवश्यकत्वं विपक्षे बाधकमुखेनोपपादयति । अन्यथेति ॥ अवर्जनीयसन्निधित्वपरिहाराय व्यतिरेकानुविधायित्वमप्याह ॥ **अकृतमिति** ॥ फलितमाह ॥ **एवं चेति** ॥ **तदेवेति** ॥ अवश्यमपेक्षणीयेनैव पूर्णत्वादीश्वरस्याप्यङ्गीकारे गौरवमिति भावः । धर्ममित्यागामिसूत्रादेवानुकृष्यत इति भावेनोक्तं भाष्ये ॥ **अत एवेति** ॥ **अचेतनत्वेति** ॥ अचेतनत्वेन फलदानकर्तृतानुपपत्तेरिति भावः । भाष्येऽपि स्वतः प्रवृत्तिरिति कर्तृतोच्यते ।

## तत्त्वसुबोधिनी

**प्रकृतो हरिरेवेति** ॥ अनेनेति पूर्वसूत्रे सर्वदेशकालीनसृष्ट्यादिकर्तृतया प्रकृत इत्यर्थः । तत्फलदातृत्वाभावे पूर्वोक्तसकलसृष्ट्याद्यकर्तृत्वसम्भव इति पूर्वाक्षेपेण प्रवृत्तेरनन्तरसङ्गतिरिति भावः । तदेवेति भाष्यगतैवकारव्यावर्त्यमाह ॥ **नेश्वर इति** ॥ कुत इत्यतः फलस्य कर्मान्वयव्यतिरेकित्वादित्याशयेनान्वयं तावदुपपादयति ॥ **यैरिति** ॥ अन्यथा कर्मापेक्षाभाव इत्यर्थः । अस्तु कर्मवैय्यर्थ्यं ततः किमित्यत आह ॥ **ततश्चेति** ॥ किञ्च कर्मानपेक्षयैवेश्वरः फलं ददाति चेत् तर्हि कारणमन्तरेण कस्यचित् सुखं कस्यचिद्दुःखं प्रयच्छतीति वैषम्यनैर्घृण्ये स्यातामित्याह ॥ **वैषम्यादीति** ॥ अन्वयानुविधायित्वमुक्त्वा व्यतिरेकानुविधायित्वमाह ॥ **अकृतेति** ॥ फलितमाह ॥ **एवं चेति** ॥ भाष्ये सौत्रातःशब्दं सावधारणं व्याख्याय फलमत इत्यत्रोपपत्तेरिति हेतोः स्फुटप्रतिभासादवधारणव्यावर्त्य एव न हीत्यनेन हेतुरुक्तः । स्वयमीश्वर एवेत्यादिना प्रतिज्ञाभागं व्याख्यायोपपत्तेरिति सौत्रहेतुव्याख्यानपूर्वकं न हीति भाष्यं व्याचष्टे ॥ **तस्य चेतनत्वेनेति** ॥

## वाक्यार्थविवरणम्

**वेदेति** ॥ पुण्येन पुण्यं लोकं नयतीत्यादिवेद इत्यर्थः । कर्मणो वैय्यर्थ्ये दोषान्तरमुच्यते । **वैषम्यादीत्यादिना** ॥ **अनुषङ्गात्** ॥ हरेरिति शेषः ।

## वाक्यार्थमञ्जरी

कुत इत्यतस्तदन्वयव्यतिरेकित्वादित्याशयेन तावदन्वयानुविधायित्वमाह ॥ **यैरिति** ॥ अपेक्षापदोक्तावश्यकत्वमेव विपक्षे बाधकत्वेनोपपादयति ॥ **अन्यथेत्यादिना** ॥ व्यतिरेकानुविधायित्वमाह ॥ **अकृतकर्मण इति** ॥ फलितमाह ॥ **एवमिति** ॥ **ॐ फलमत उपपत्तेः ॐ** ॥ अत:परमात्मन एव फलं भवति तस्य चेतनत्वेन फलदानोपपत्तिरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ श्रुतत्वाच्च ॐ ॥ ४० ॥**

**'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्'** (बृ. उ. ५-९-२७) इति ।

## तत्त्वप्रकाशिका

**नन्वीश्वरस्य चेतनत्वेन फलदातृत्वसम्भावनैव भवेन्न तु निश्चयः । अतः कुतोऽसावित्याशङ्कां परिहरत्सूत्रं पठित्वा तदुपात्तश्रुतिमुदाहरति ॥ श्रुतत्वाच्चेति ॥ दातुर्यजमानस्य तिष्ठमानस्य स्वस्मिन्मनसा वर्तमानस्य रातिः फलप्रदमित्यर्थः ।**

## भावबोधः

**सम्भावनैवेति** ॥ चेतनत्वस्य जीवेऽपि सत्त्वेन व्यभिचारान्न निश्चायकत्वमिति भावः । दानादिकर्ममात्रेण नेश्वरः फलदाता किन्तु स्वनिष्ठानादिपूर्वकर्मणेत्यभिप्रेत्य प्रवृत्तं तिष्ठमानस्येति श्रुतिशेषमनूद्य व्याचष्टे– **तिष्ठमानस्येति** ॥ स्थितिमात्रस्य सर्वसाधारण्यात् स्वस्मिन् मनसेत्युक्तम् । रातिरित्यस्य 'रा दाने' इति धातुजत्वमभिप्रेत्याह– **फलप्रदमिति** ॥

## भावदीपः

अत एव चेतनत्वेन फलदातृत्वसम्भावनैव भवेदित्याह ॥ उपपत्तिशब्दस्य स्वातन्त्र्यादिरूपोपपत्तिपरत्वे तु उपपत्त्येश्वरस्य फलदातृत्वं प्रसाध्य श्रुत्या च साधयतीत्युत्तरसूत्रमवतारणीयम् । अन्यथा फलमतः सम्भवादित्येव सूत्रं स्यात् । यदा तु अत एवेत्यस्य तत्वप्रदीपदिशा सर्वत्र सर्वमेतस्मादिति श्रुतेरेवेत्यप्यर्थः तदा विशेषश्रुत्या च साधयतीत्यवतारिका ध्येया । दातुरुत्तमर्णस्येति भ्रमं निराह ॥ **दातुरिति** ॥ यजमानमात्रस्य फलदातृत्वभ्रमनिरासाय तिष्ठमानस्य तद्विद इति

(भावदीपः)

शेषार्थमाह ॥ **स्वस्मिन्निति** ॥ प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदत्वादिति भावः ॥ **फलेति** ॥ रा दाने इति धातोः ।

## वाक्यार्थमुक्तावली

**न निश्चय इति** ॥ चेतनस्य व्यभिचारित्वादिति भावः । सूत्रार्थस्तु ज्ञानात्मकं ब्रह्म तद्विदो भगवत्सर्वोत्तमत्वविदः तिष्ठमानस्याध्यात्मचेतनसामान्यस्थारिबलकर्मणो यजमानस्य रातिं ददातीति स तथा । रा दान इति धातोः फलप्रदमिति चेतनत्वेन फलदातृत्वस्य श्रुतत्वाच्च फलमत एवेति ।

## तत्त्वसुबोधिनी

**सम्भावनेति** ॥ चेतनत्वस्य जीवेऽपि सत्वेन व्यभिचारान्न निश्चायकत्वमिति भावः । दानादिकर्ममात्रेण नेश्वरः फलदाता किन्तु स्वनिष्ठादिपूर्वकर्मणेत्यभिप्रेत्य प्रवृत्तं तिष्ठमानस्येति श्रुतिशेषममनूद्य व्याचष्टे ॥ **तिष्ठमानस्येति** ॥ स्थितिमात्रस्य सर्वसाधारण्यात् स्वस्मिन्मनसे-त्युक्तम् । रातीत्यस्य रा दान इति धातुजत्वमभिप्रेत्याह ॥ **फलप्रदमिति** ॥

## वाक्यार्थविवरणम्

**तिष्ठमानस्येति** ॥ तिष्ठमानस्य तद्विद इति श्रुतिशेषस्थतिष्ठमानपदव्याख्यानमिदम् ।

## वाक्यार्थमञ्जरी

**सम्भावनैवेति** ॥ चेतनत्वस्य जीवेऽपि सत्वादनिश्चायकत्वादिति भावः । असौ निश्चयः ॥ **ॐ श्रुतत्वाच्च ॐ** ॥ रातिर्दातुरिति श्रुत्युक्तत्वाच्च ब्रह्मैव फलदात्रित्यर्थः । दानादिकर्ममात्रेण नेश्वरः फलदाता किन्तु स्वनिष्ठादिपूर्वकर्मणैवेत्यभिप्रेत्य प्रवृत्तं तिष्ठमानस्येति श्रुतिशेषमनूद्य व्याचष्टे ॥ **तिष्ठमानस्येति** ॥ स्थितिमात्रस्य सर्वसाधारण्यात्स्वस्मिन्मनसेत्युक्तम् ॥ **फलप्रदमिति** ॥ रा दान इति धातोरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ धर्मं जैमिनिरत एव ॐ ॥ ४१ ॥**

**यतः फलं तदेव कर्मेश्वराद्भवति । 'एष ह्येव साधु कर्म कारयति' (कौ.उ.३-८) इति श्रुतेरिति जैमिनिः ।**

## तत्त्वप्रदीपिका

फलहेतोर्धर्मादेरेव कारणं ब्रह्मेति जैमिनिः । यतः फलं तस्मादेवेश्वरात् कर्म भवति । ततः फलमिति वाऽर्थः । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत' इत्यादिश्रुतेः । तत्तत्फलदित्सया तत्तत्कर्मकारकत्वात्कर्म कारयित्वैव फलं तदायत्तं ददातीत्यर्थः ।

## तत्त्वप्रकाशिका

उक्तमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ **धर्ममिति** ॥ यदुक्तमीश्वर एव फलदाता न कर्मेति तदयुक्तम् । फलस्य कर्मान्वयव्यतिरेकित्वात् । इदं तु न्याय्यं कर्मैव फलप्रदम् । तच्च कर्मेश्वराद्भवतीतीश्वरोऽपि फलदातृतयोपचर्यते 'रातिर्दातुः' इत्यादिश्रुताविति । कर्मकारणत्वं चेश्वरस्योपचारवीजम् 'एष ह्येव' इति श्रुतिसिद्धम् । न केवलं कर्मणः फलदातृत्वं न्यायप्राप्तं किं नाम जैमिनिराचार्योऽपि मन्यत इति भावः । धर्मपदमधर्मस्याप्युपलक्षणम् । अत्रात एवेति द्वेधा व्याख्यातं ज्ञेयम् ।

## गुर्वर्थदीपिका

द्वेधा व्याख्यातमित्यत्र द्वेधेत्युपलक्षणम् । यतो धर्मात्फलं भवति तं धर्ममतः परमात्मन एवाह । अतः फलजनकधर्मजनकत्वेन परम्पराकारणत्वात्फलमप्यतः परमात्मन आहेति त्रेधापि व्याख्यानमनुसन्धेयम् । यतः फलं तदेव कर्मेश्वराद्भवतीति वदता भाष्यकारेण एवकारस्य तदेव फलजनकमेवेति विशेषणे सङ्गमितत्वेन शङ्खः पाण्डुर एवेतिवत्फलायोगमात्रव्यवच्छेदात्फला-विनाभूतं कर्म अत ईश्वराद्भवतीति व्याख्यातत्वात्फलजनककर्मणः कर्ता ईश्वरः कर्मद्वारा स्वर्गस्यापि कारणमिति सूचितम् । अन्यथा कर्मैवातो भवतीति विशेष्ये सङ्गमयित्वाऽन्ययोग-व्यवच्छेदमपि कुर्यात् । तेन जैमिनिमतमपि कर्मकर्ता ईश्वरः कर्मद्वारा फलस्यापि कारणमित्येवेति सूचितम् । जैमिनिना स्पष्टमुभयकारणत्वस्येश्वरप्राधान्यस्य चानुक्तत्वाद्वचनप्रवृत्त्यैवोभयकारणत्वं प्राधान्यं च वक्तुमुत्तरसूत्रमसूत्रयत् । तेन भाष्यकारस्य जैमिनेर्व्यासस्य चैक एव पन्थाः । यद्वक्ष्यति टीकाकारोऽपि अत्रात एवेति द्वेधा व्याख्यातमिति ।

## भावबोधः

नन्वीश्वरात् फलमित्युक्ताक्षेपार्थं धर्मात् फलमिति सूत्रणीये 'धर्मं जैमिनिरत एव' इति किमर्थमित्यतो न केवलं प्रथमसूत्राक्षेपार्थं किं तु द्वितीयसूत्रोपात्तश्रुतिगतिप्रदर्शनार्थं चैवं सूत्रविन्यास

(भाववोधः)

इति प्रदर्शनाय यतः फलमित्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्य तद्भाष्याभिप्रायमाह– **इदं तु न्याय्यमिति** ॥ **उपचारबीजमिति** ॥ फलहेतुकर्मकरणेश्वरस्यापि फलप्रयोजकत्वरूपगुणयोगादिति भावः । भाष्ये 'एष ह्येव साधु कर्म कारयति' इति श्रुतिप्रतीकग्रहणम् । एष ह्येवा 'साधु कर्म कारयति' इति उत्तरवाक्यमपि विवक्षितम् । अत एवोभयसङ्ग्रहार्थं धर्ममिति पदं सामान्येन कर्मेति व्याख्यात-मित्यभिप्रेत्याह– **धर्मपदमधर्मस्यापीति** ॥ **द्वेधा व्याख्यातमिति** ॥ 'अत' ईश्वराद्धर्ममेवेति । 'अत' एष ह्येवेति श्रुतेरेवेति च द्वेधा व्याख्यातं ज्ञेयमित्यर्थः । कर्तृत्वव्यपदेशात् करणत्व-व्यपदेशादित्यनेन सूत्रभाष्ययोः हेतुशब्दो भावप्रधानः । स च द्वेधा व्याख्येय इत्युक्तं भवति ।

## भावदीपः

उक्ताक्षेपप्रकारं व्यञ्जयन्भाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ अन्यत्रोक्तं हेतुमाह ॥ **फलस्य कर्मान्वयेति** ॥ श्रुतिविरोध इत्यत आह ॥ **इदं त्विति** ॥ भाष्ये श्रुत्युक्तेरुपयोगमाह ॥ **कर्मकारणत्वं चेति** ॥ एतेन एष ह्येवासाधुकर्मेत्यपि श्रुतिर्भाष्ये ग्राह्येति सूचयति ॥ **न्यायेति** ॥ अन्वयव्यतिरेकरूपन्यायेत्यर्थः । कर्मेति भाषणस्य सूत्राविसंवादायाह ॥ **धर्मेति** ॥ भाष्यं सूत्रारूढं करोति ॥ **अत्रेति** ॥ **द्वेधेति** ॥ ईश्वरादिति श्रुतेरिति च द्वेधेत्यर्थः ।

## वाक्यार्थमुक्तावली

फलस्य कर्मान्वयव्यतिरेक्यनुमानं श्रुतिबाधितमित्यतः प्रलोभ इत्युक्तन्यायप्रदर्शकं सूत्रं सोपस्करं व्याकुर्वद्भाष्यं व्याचष्टे ॥ **इदन्त्विति** ॥ **उपचर्यत इति** ॥ कर्मकारणेश्वरस्यापि फलप्रयोजकत्वरूपगुणयोगादिति भावः ॥ **कर्मकारणत्वमिति** ॥ उपचारबीजं कर्मकारणत्वं चेत्यन्वयः । एतेन सूत्रे फलमतः श्रुतत्वमित्यस्ति । तथा चात एव एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत इत्यादिश्रुतेः अतः ईश्वरात् धर्मवन्न तु फलं अतो धर्मादेव फलं अतः परम्परया प्रयोजकत्वादुपचारेणेश्वरफलदानस्य श्रुतत्वमिति जैमिनिराहेति सूत्रार्थः । **न्यायप्राप्तमिति** ॥ ईश्वरस्यैव फलप्रदत्वे यमेभ्य उन्निनीषत ऊर्ध्वं लोकं नेतुमिच्छति तमेषः साधु कर्म कारयतीति फलदानाय कर्मानुसरणं व्यर्थं स्यादत ईश्वरस्य फलदातृत्वश्रुतेः प्रलोभशब्दितोप-चारमात्रत्वात् कर्मैव फलप्रदमिति न्यायप्राप्तमित्यर्थः । सूत्रे धर्ममिति विशेषग्रहणात्कथं भाष्ये कर्मेति सामान्यग्रहणमित्यत आह ॥ **धर्ममिति** ॥ **द्वेधेति** ॥ ईश्वरादिति श्रुतेरिति च द्वेधा व्याख्यातमिति भावः ।

## तत्त्वसुबोधिनी

ननु ईश्वरात्फलमित्युक्ताक्षेपार्थं धर्मात्फलमिति सूत्रणीये धर्मं जैमिनिरत एवेति किमर्थमित्यतो न केवलं प्रथमसूत्राक्षेपार्थं किन्तु द्वितीयसूत्रोपात्तश्रुतिगतिप्रदर्शनार्थं चैवं सूत्रविन्यास इति प्रदर्शनाय यतः फलमिति भाष्यं प्रवृत्तमित्यभिप्रेत्य तद्भाष्याभिप्रायमाह ॥ **इदं तु न्याय्यमिति** ॥ ननूपचारे किं बीजमित्यत आह ॥ **कार्येति** ॥ फलहेतुकर्मकारणेश्वरस्यापि फलप्रयोजकत्वरूपगुणयोगादिति भावः । भाष्ये एष ह्येवेति श्रुतिप्रतीकग्रहणेन एष एवासाधुकर्म कारयतीति उत्तरवाक्यमपि विवक्षितम् । अत एवोक्तसङ्ग्रहार्थं धर्ममिति पदं सामान्येन कर्मेति व्याख्यातमित्यभिप्रेत्याह ॥ **धर्मपदमिति** ॥ **द्वेधा व्याख्यातमिति** ॥ अतः ईश्वरात् धर्म एवेति एष ह्येवेति श्रुतेरेवेति च द्वेधा व्याख्यातम् ज्ञेयमित्यर्थः ।

## वाक्यार्थविवरणम्

भवतीत्यनन्तरं यतोऽतः फलदातृकर्मकारयितृत्वेनेत्येतावान् वाक्यशेषः ॥ **कर्मेति** ॥ ईश्वरस्य फलदातृत्वोपचारे बीजभूतं यत्कर्मकारणत्वं तत् 'एष ह्येव' श्रुतिसिद्धमिति योज्यम् । सुधोक्त-रीत्योपचारे प्रयोजनं तत्स्तुतिरेवेति ज्ञातव्यम् ॥ **द्वेधेति** ॥ यतः फलं तं धर्ममेवात ईश्वराज्जातं जैमिनिराह । अस्मिन् पक्षे तदेव कर्मेति तात्पर्यतो व्याख्यानमिति ध्येयम् । अत एव ह्येष एवेति श्रुतेरेवेति द्वेधेत्यर्थः । यद्वा छन्दस्त्वाद्धर्ममिति नपुंसकं प्रथमैकवचनम् । तथा चात ईश्वराद्धर्ममेव कर्मैव भवतीति जैमिनिराह इत्यर्थः । अस्मिन् पक्षे तदेव कर्मेति भाष्यं स्वरसम् ॥ **उपचारः** ॥ तत्स्तुतय इति शेषः ।

## वाक्यार्थमञ्जरी

जैमिनिः धर्मं पुण्यादिकर्म अत एव परमात्मन एव जातमाह कुतः ? अत एव एष ह्येवेति श्रुतेरेवेत्यर्थः । तर्हि रातिर्दातुरिति श्रुतिविरोध इत्यत आह ॥ **इदन्तु न्याय्यमिति** ॥ द्वेधा ब्रह्मश्रुतिरूपोभयपरतया ।

## सूत्रभाष्यम्

**॥ ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ ४२ ॥**

**परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम् । पर एव कर्मणः प्रवर्तकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र.उ.३-२) इति हेतुव्यपदेशात् । 'द्रव्यं कर्म च कालश्च' इति च ।**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥

## तत्त्वप्रदीपिका

भगवांस्त्वेवमाह । उभयोश्च फलकारणत्वेऽपि तत्र भेदः परस्य स्वातन्त्र्येण कर्मणोऽस्वातन्त्र्येणेति । कर्म परप्रवर्तितमेव फलदायि । न च फले देशकालनियतिरपि तदधीना । फलदाने परेच्छया पूर्वापरीभावदृष्टेः । न च फलदानशक्तिः पराधीनाऽपि नियताऽस्ति, भगवदनभिज्ञस्य पुण्यानामल्पफलत्वात् । तद्द्वेषिकृतानां पुण्यानां निष्फलत्वात् । तद्दर्शिनः पूर्वपापानां फलमदत्त्वैव विनाशित्वादुत्तरेषां चाश्लेषात् । उत्तरेषां पुण्यानामनन्तफलत्वात् । अतः कर्मणस्सर्वत्र पारतन्त्र्यमेव । परमस्तु स्वेच्छयैकैकश एवानन्तकर्मणामनन्तजीवराशीनां तदेकैककर्माभिमानिनां चानन्तकर्मणामित्येवमनन्तानन्तसन्ता नानां तत्तत्कर्म प्रवर्तयति निवर्तयति । पुण्येन च ज्ञानमुत्पाद्य पापं विनाश्य तस्य पुण्यपापरहितस्य ज्ञानिनः प्रसन्नः स्वयमेव फलमनन्तं ददातीत्यहो भगवतो नारायणस्याऽश्चर्यरूपोऽयं महिमेत्यभिप्रायः । अतः पूर्वं तु बादरायण इत्यसूत्रयत् । भाष्येऽप्युभयोः फलकारणत्वेऽपीत्यपिशब्देनारुचिमसूचयत् ।

> 'कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव ।
> क्वचिद्ददाति क्व च नो ददाति न ह्यानन्त्यात्कर्मणां भोगनाशः ॥
> स्वातन्त्र्यं चेत्कर्मणां सर्वभोगः स्यान्न ह्येवं क्वापि तत्केनचित्स्यात् ।
> अतोऽपि स स्वेच्छया किञ्चिदेव फलं कुर्याद्विफलं प्रायशश्च ॥
> क्वचिज्ज्ञानं जनयन्भस्म कुर्यात् स्वेच्छावृत्तिस्तस्य विष्णोस्सदैव'
>
> इत्यादि ब्रह्माण्डे ॥

॥ इति तत्त्वदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥

## तत्त्वप्रकाशिका

एतत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ **पूर्वं त्विति** ॥ कर्मैव फलप्रदमीश्वरे तूपचार इत्युक्तं न युक्तम् । किं तु कर्मान्वयव्यतिरेकित्वात्फलदानक्रियायामेकं कर्त्रन्यत्कारणम् । तत्रापि न कर्म कर्तृ सत्कारणमीश्वरं प्रयोजयति किं नाम फलदाने पूर्वोक्तं ब्रह्मैव कर्तृ करणभूतं कर्म प्रवर्तयति । करणत्वेऽपि कर्मणोऽन्वयव्यतिरेकाविरोधात् । कुत एतत् । चेतनस्य कर्तृत्वमचेतनस्य करणत्वमिति लोके दर्शनात् पुण्येनेति श्रुतौ ब्रह्मणः कर्तृत्वव्यपदेशात् कर्मणः करणत्वव्यपदेशाच्चेति भगवान् वादरायणो मन्यत इति भावः । सामान्यतः कर्मणः कारणत्वं जैमिनेरभिप्रेतम् । तच्चाभ्युपगतमिति न विरोधः । न केवलं फलदानक्रियायां कर्म परप्रेरितं किन्तु तत्सत्तापीश्वराधीनेति न तत्कर्त्रीति

(तत्त्वप्रकाशिका)

**भावेनाह ॥ द्रव्यमिति ॥** अतः परमेश्वरस्यैव कर्मफलदातृत्वान्निरतिशयमहिम्नि तस्मिन्भक्तिः कर्तव्येति सिद्धम् ।

## गुर्वर्थदीपिका

सामान्यतः कर्मणः कारणत्वं जैमिनेरभिप्रेतमिति च । सामान्यतः कारणत्वं नामेश्वरस्य स्वर्गकारणत्वमनिषिद्धकर्मकारणत्वम् । अतष्टीकाकारस्यापीदमेव मतम् । एवं स्थिते सति यज्जैमिनिसूत्रभाष्यकारंमन्यो भास्करः ईश्वरः कर्मणः कर्ता फलदायकं तु कर्मैव । क्वचिदीश्वरस्य फलदायकत्ववचनं फलदायककर्मकर्तृत्वादुपचरितमित्याह । तन्मतं च प्रतिषेद्धुमुत्तरसूत्रमिति भावेनोक्तं टीकाकृता फलदातृतयोपचर्यत इति । तत्परिहाराय सूत्रमिति च । ब्रह्मकर्मणोर्मध्ये पूर्वं ब्रह्म तु विशेषेण पूर्वं कारणं कर्मणीव फलेऽपि कर्तृत्वेन पूर्वं प्रधानं कारणमिति भावेन सूत्रं योजयति परस्य कर्मणश्चोभयोरिति ।

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तत्त्वप्रकाशिकाटिप्पण्यां तृतीयाध्यायस्य द्वितीयः पादः ॥**

## भावबोधः

**सामान्यतः कर्मकारणत्वमिति ।** कारणत्वमात्रं तु कर्मणः फलं प्रति करणत्वेऽप्युपपन्नमिति भावः । सूत्रभाष्ये तु जैमिनिमतावष्टम्भेन पूर्वपक्षयितुरेवाभिप्रायवर्णनपरे; न तु जैमिन्याचार्याभिप्रायवर्णनपरे इति ज्ञातव्यम् । सूत्रक्रमस्तु । अत्राद्ये ईश्वरस्य फलदातृत्वे उपपत्तिरूपप्रमाणोक्तिः । द्वितीये– तदुपोद्बलकप्रबलविशेषश्रुतिरूपप्रमाणोक्तिः । तृतीये तदुभयाक्षेपः । चतुर्थे– **तत्समाधानमिति ॥**

अत्राद्यमधिकरणसप्तकमवस्थानां भगवदधीनत्वप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– स्वप्नावस्थाया भगवदधीनत्वसमर्थम् । द्वितीये तत्तिरोधानस्य भगवदधीनत्वसमर्थनम् । तृतीये– जागरावस्थायाः तदधीनत्वनिरूपणम् । चतुर्थे सुप्त्यवस्थायां भगवतो जीवप्राप्यत्वसमर्थनम् । पञ्चमे सुप्तिप्रबोधस्य तदधीनत्वसाधनम् । षष्ठे सार्वकालीनसर्वावस्थानां भगवदधीनत्ववर्णनम् । सप्तमे मोहावस्थायां भगवतो जीवप्राप्यत्वसमर्थनमिति । अष्टमे विश्वादिरूपाणामभेदोक्तिः । नवमे प्राकृतरूपराहित्यसमर्थनम् । दशमे जीवाभेदनिरासः । एकादशद्वादशयोः भक्तिरूपैकार्थ-

(भावबोधः)

विषयकत्वेन तदधिकरणद्वयमेका पेटिका । तत्राद्ये भक्तेर्मौक्तानन्दानुभवफलकत्वसाधनम् । द्वितीये वृद्धिह्रासभाक्त्वसमर्थनम् । त्रयोदशे विश्वपालकत्वसमर्थनम् । चतुर्दशे जीवशक्त्योपलब्ध्ययोग्यत्व-वर्णनम् । पञ्चदशषोडशसप्तदशानाम् आनन्दादिगुणरूपैकविषयत्वेन तदधिकरणत्रयमेका पेटिका । तत्राद्ये गुणस्वरूपस्य गुणित्वसमर्थनम् । द्वितीये तद्गुणजातस्यालौकिकत्वसमर्थनम् । तृतीये विचित्रब्रह्मानन्दादिबिम्बभूतस्यापि तस्यावैचित्र्यसमर्थनम् । अष्टादशे भगवतोऽव्यक्तत्वसमर्थनम् । एकोनविंशतिविंशत्योःसकलजगज्जन्माद्यष्टककर्तृत्वप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका । तत्राद्ये– सार्वकालिकसार्वदेशिकसृष्ट्याद्यष्टककर्तृत्वसमर्थनम् । द्वितीये तन्मध्यपतितकर्म-फलदातृत्वस्य समर्थनमिति ।

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते**
**श्रीमज्जयतीर्थ पूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे तृतीयाध्यायस्य द्वितीयः पादः ॥**

## भावदीपः

शङ्कानिरासपूर्वं परस्येत्यादिभाष्यं व्याचष्टे ॥ **कर्मैवेति** ॥ अन्यत्रोक्तं हेतुमाह ॥ **कर्मेति** ॥ तेनैवालमित्यत आह ॥ **श्रुतीति** ॥ श्रुतत्वाच्चेत्यत्रोक्तश्रुतिबलाच्चेत्यर्थः । भाष्यस्थापिपदार्थमाह ॥ **तत्रापीति** ॥ द्वयोः कारणत्वेऽपीत्यर्थः । भाष्ये न कर्मेति विशेषोक्त्याक्षिप्तसामान्यं तावदाह ॥ **नोभयोरित्यादि** ॥ एतेनोभयोः कारणत्वेऽपीत्यस्य कर्तृकारणरूपकारणत्वेऽपीत्यप्यर्थो ध्येयः । न कर्मेत्यादि व्याचष्टे ॥ **न कर्मकर्तृ सदिति** ॥ पर एवेत्यादिभाष्यं सूत्रविवृतिरिति भावेन तत्सूत्रारूढं कर्तुं सूत्रं योजयति ॥ **पूर्वोक्तमिति** ॥ फलमत इत्याद्यसूत्रोक्तं ब्रह्मैवेत्यर्थः । एतेन सौत्रस्तुरेवार्थ इति दर्शितम् । प्रागुक्तयुक्तिविरोधं निराह ॥ **करणत्वेऽपीति** ॥ **एतदिति** ॥ ब्रह्म कर्तृ कर्म तु करणमित्येतदित्यर्थः । न ह्यचेतनस्येत्यादिना प्रागुक्तोपपत्तिं चात्र संयोजयति ॥ **चेतनस्येति** ॥ एतच्च प्राक्तनयुक्त्यनुसन्धानं सौत्रपूर्वपदप्रयोगबललब्धमित्याहुः । सूत्रादौ चशब्दाभावेऽपि व्यपदेशा-च्चेति चशब्दोक्तिः प्रागुक्तोपपत्तिसमुच्चयाभिप्राया । सोपपत्तिकजैमिनिमतस्य का गतिरित्यत आह ॥ **सामान्यत इति** ॥ **अभ्युपगतमिति** ॥ करणत्वेऽपि तस्योपपत्तेरिति भावः । सूत्रार्थान् हेतूकृत्य फलोक्त्याऽधिकरणार्थमुपसंहरति ॥ **अत इति** ॥ ईशस्यैव फलदातृत्वं कर्मणः करणत्वमित्यस्य श्रुत्युपपत्तिप्रमितत्वादित्यर्थः ।

**॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते तृतीयाध्यायस्य द्वितीयः पादः ॥**

## वाक्यार्थमुक्तावली

**सूत्रे धर्ममित्यस्ति ॥** तुशब्दश्चशब्दार्थे अवधारणे च । हेत्विति भावप्रधानम् । फलमत इति पूर्वोक्तं ब्रह्म धर्मं च फलहेतुं बादरायणो मन्यते । तत्रापि नोभयोः समप्रधानभावः । किन्त्वेकं कर्तृ अन्यत्करणमिति विशेषः । तत्रापि पूर्वोक्तं ब्रह्मैव धर्मं प्रयोजयति न धर्मो ब्रह्म प्रयोजयति । कुतः । पुण्येन पुण्यमिति ब्रह्मकर्मणोः कर्तृत्वकरणत्वरूपहेतुत्वव्यपदेशादिति सूत्रार्थमभिप्रेत्य व्याचष्टे । **किन्तु कर्मान्वयेत्यादिना ॥** ब्रह्मेति वक्तव्ये पूर्वोक्तमित्युक्तिः आद्यसूत्रे उपपत्तेरित्यनेन फलदानोपपत्तेरुक्तत्वात् ईश्वरः कर्ता चेतनत्वाद्देवदत्तवदिति युक्तिसमुच्चयार्थेति भावेनोक्तं चेतनस्येति । एवं पूर्वपदेन युक्तिसूचनं हेतुव्यपदेशादिति हेत्वन्तरपर्यवसितमिति भावेनोक्तं व्यपदेशश्चेति । अत्राद्ये ईश्वरस्य फलदातृत्वे सम्भावनोक्तिः । द्वितीये श्रुत्युपन्यासः । तृतीये श्रुतेरुपचरितत्वशङ्का । चतुर्थे तत्परिहार इति सूत्रक्रमः ।

अत्राद्याधिकरणसप्तकमवस्थानां भगवदधीनत्वसमर्थकम् अष्टमनवमयोः अवस्थाप्रेरकविश्वादीनामभेदप्राकृतरूपराहित्यजीवभेदसमर्थनम् । दशमे भक्तिस्वरूपसमर्थनम् । एकादशद्वादशयोः भक्तेःसफलत्वफलतारतम्ययोः समर्थनम् । त्रयोदशे विश्वपालकत्वसमर्थनम् । चतुर्दशे तस्योपलब्ध्ययोग्यत्वसमर्थनम् । पञ्चदशषोडशसप्तदशेषु आनन्दादिगुणवत्त्वं गुणानामलौकिकत्वं विचित्रब्रह्मानन्दबिम्बभूतानामप्यविचित्रत्वमित्येतेषां समर्थनम् । अष्टादशेऽव्यक्तत्वसमर्थनम् । एकोनविंशतिविंशत्योः सृष्ट्याद्यष्टकर्तृत्वसमर्थनमिति पेटिका द्रष्टव्या ।

**॥ इति श्रीतत्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य द्वितीयः पादः ॥**

## तत्त्वसुबोधिनी

तर्हि किं साहाय्येन कारणत्वं नेत्याह ॥ **तत्रापीति** ॥ उभयोःकारणत्वेऽपीत्यर्थः ॥ **न कर्मेति** ॥ कर्तृत्वस्य बुद्धिघटितत्वेन जडस्य तदसम्भवादिति भावः । तर्ह्यन्वयव्यतिरेकविरोध इत्यत आह ॥ **करणत्वेऽपीति** ॥ कर्तृत्वव्यपदेशात् करणत्वव्यपदेशादित्यनेन सूत्रभाष्ययोः हेतुशब्दः भावप्रधानः । स च द्वेधा व्याख्येय इत्युक्तं भवति । तर्हि बादरायणजैमिनिमतयोः विरोध इत्यत आह ॥ **सामान्यत इति** ॥ कारणत्वमात्रं तु कर्मणः फलं प्रति कारणत्वेऽप्युपपन्नमिति भावः । अत्राद्ये सूत्रे ईश्वरस्य फलदातृत्वे उपपत्तिरूपप्रमाणोक्तिः । द्वितीये तदुपोद्बलकप्रबलश्रुतिरूपप्रमाणोक्तिः । तृतीये तदुभयाक्षेपः । चतुर्थे तत्साधनमिति सूत्रक्रमः ।

**॥ इति श्रीतत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां तृतीयाध्यायस्य द्वितीयः पादः ॥**

## वाक्यार्थविवरणम्

**श्रुतिबलात्** ।। रातिर्दातुरिति श्रुतिबलात् ।। **तदिति** ।। फलेत्यर्थः । करणकर्तृप्रयोज्यमिति वक्तव्यमित्यर्थः ।। **कर्तृ सत्** ।। कर्तृभूतं सत् । पूर्वपदं व्याख्याति ।। **फलदाने पूर्वोक्तमिति** ।। 'फलमत उपपत्तेः' इति पूर्वसूत्रे फलदातृत्वेनोक्तमित्यर्थः ।। **तत्कर्तृ** ।। फलदाने कर्तृ । ननु कर्मणः फलदातृत्वानङ्गीकारे फलस्य कर्मान्वयव्यतिरेकविरोध इत्यतस्तयोरन्यथासिद्धिमाह ।। **करणत्वेऽपीति** ।। हेतुव्यपदेशादित्यत्र हेतुत्वेति भावप्रधानत्वमित्यभिप्रेत्य द्वेधा व्याचष्टे । ब्रह्मणः कर्तृत्वेत्यादिना ।। **करणत्वेनेति** ।। पुण्येनेति तृतीययेति शेषः । तर्हि जैमिनिमतविरोध इत्यत आह ।। **सामान्य इति** ।। **तच्चाभ्युपगतमिति** ।। तदुक्तं कर्मणः फलकारणत्वमङ्गीकृतं करणत्वाङ्गीकारात् । करणत्वस्यापि कारणविशेषत्वादिति भावः ।। **प्रेरितमिति** ।। कर्तृप्रयोज्यत्वरूपकरणत्वाङ्गीकारादिति भावः ।

।। इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासवर्यकृते तृतीयाध्यायस्य द्वितीयः पादः ।।

## वाक्यार्थमञ्जरी

पूर्वं पूर्वोक्तं ब्रह्म तु कर्तृत्वरूपविशेषेण कारणम् कुतः ? हेतुव्यपदेशात् । पुण्येनेति ब्रह्मणः कर्तृत्वेन कारणत्वव्यपदेशादिति बादरायणो मन्यत इत्यर्थः । समप्रधानभावः प्रधानत्वसाम्यम् । तर्ह्यन्वयव्यतिरेकानुविधायित्वन्यायविरोध इत्यत आह ।। **करणत्वेऽपीति** ।। **सामान्यत इति** ।। कर्तृकरणत्वविशेषं विहायेत्यर्थः । कारणत्वमात्रं तु कर्मणः फलं प्रति करणत्वेऽप्युपपन्नमिति भावः ।। **तत्सत्ता** कर्मसत्ता ।।

।। इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायान्तृतीयाध्यायस्य द्वितीयः पादः ।।

### ।। इति तृतीयाध्यायस्य द्वितीयः पादः ।।

# Brahmasūtra Bhāṣya of Śrī Ānandatīrtha

Brahmasūtras constitute the central text of Vedānta Philosophy. The philosophical thoughts of Vedas, Upaniṣads, Bhagavadgita and the allied sacred literature are systematised in these Sūtras.

In spite of such a systematic presentation of Vedānta thought a number of schools have developed within Vedānta Philosophy. This is partly due to the influence of the other systems of philosophy such as Sānkhya, Vaiśeṣika, Buddhism etc. and also due to different theologies such as Vaiṣṇavism and Śaivism prevailent in India.

All these schools claim that they faithfully represent the Vedānta thought enshrined in Vedānta Sūtras. Consiquently, these schools not only present their doctrines by interpreting these sūtras but review the interpretations of the other schools and doctrines. This has given rise to a rich interpretational and polemical literature of Vedānta thought. The commentators have developed new dimensions of epistemology, logic, hermeneutics and the canons of interpretation.

In the Dvaita school of Vedānta propounded by Śrī Ānandatīrtha alias Śrī Madhvāchārya such a rich literature of commentaries on Brahmasūtras is developed. Śrī Padmanābhatīrtha, Śrī Trivikrama Paṇḍitāchārya, Śrī Jayatīrtha, Śrī Vyāsatīrtha, Śrī Raghūttamatīrtha, Śrī Rāghavendratīrtha Śrī Satyanāthatīrtha and a host of other distinguished sholars have commented upon Śrī Madhvāchārya's Brahmasūtrabhāṣya. Śrī Madhvāchārya has developed Mono-theism and realism as the philosophy of Brahmasūtras. He rejects the concepts of adhyāsa, Vivartavāda, Mithyātva and Nirguṇa Brahman. These have no room in Brahmasūtras. In his Bhāṣya he profusely quotes the source passages on which Brahmasūtras are built. There are sixteen commentaries on his bhāṣya and Śrī Jayatīrtha's commentory on it. In this volume eleven 11 commentaries are included to enable the scholars to have an idea of the historical development of the interpretation and the review of the other schools. It is hoped that this volume will inspire the young scholars to probe deeper into Vedānta thought.